# काशिका/प्रथमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pb3

< काशिका | प्रथमोऽध्यायः

अथ काशिकावृत्तिः

अथ प्रथामाध्याये प्रथमः पादः

वृद्धिरादैच् ।। <1-1-1> ।।

`वृद्धि-शब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानाञ्च । तपरकरणमैजर्थम्--`तादपि परस्तपरःइति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये । आश्वलायनः । ऐतिकायनः । औपगवः । औपमन्यवः । शालीयः, मालीयः। वृद्धिप्रदेशाः--सिचि वृद्धिः परस्मैपदेषु(7-2-1/2297) इत्येवमादयः ।।

</1-1-1>

अदेङ्गुणः ।। <1-1-2> ।।

`गुण शब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानां च । तपरकरणं त्विह सर्वार्थम् । तरिता । चेता । स्तोता । पचन्ति । जयन्ति । अहं पचे ।

गुणप्रदेशाः--मिदेर्गुणः(7-3-82/2346) इत्येवमादयः ।।

</1-1-2>

इको गुणवृद्धी ।। <1-1-3>।।

परिभाषेयं स्थानिनियमार्था । अनियमप्रसङ्गे नियमो विधीयते । वृद्धिगुणौ स्वसंज्ञया शिष्यमाणाविक एव स्थाने वेदितव्यौ ।। वक्ष्यति सार्वधातुकार्धधातुकयोः(7-3-84/2168) अङ्गस्य गुण इति । स इक एव स्थाने वेदितव्यः । तरति । नयति । वृद्धिः खल्वपि--अकार्षीत् । अहार्षीत् । अचैषीत् । अनैषीत् । अलावीत् । अस्तावीत् । *गुणवृद्धी स्वसंज्ञया विधीयेते, तत्र `इकः इति एतदुपस्थितं द्रष्टव्यम् । किं कृतं भवति ? द्वितीयया षष्ठी प्रादुर्भाव्यते । *(म.भा.1.46) * मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वङ्गेन इग् विशेष्यते * (म.भा.1.44)जुसि सार्वधातुकादिगुणेष्विकाङ्गं विशेष्यते । मेद्यते । अबिभयुः ।

इक इति किम् ? आत्सन्ध्यक्षरव्यञ्जनानां मा भूत् । यानम् । ग्लायति । उम्भिता । पुनर्गुणवृद्धिग्रहणं स्वसंज्ञया विधाने नियमार्थम् । इह मा भूत्--द्यौः । पन्थाः । सः इममिति ।।

</1-1-3>

न धातुलोप आर्धधातुके ।। <1-1-4> ।।

धात्वेकदेशो धातुः, तस्य लोपो यस्मिन्नार्द्धधातुके तदार्धधातुकं धातुलोपं तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः । लोलुवः पोपुवः, मरीमृजः । लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि (3-1-134/2896) विहिते यङोऽचि च (2-4-74/2650) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः ।

धातुग्रहणं किम् ? लूञ्- लविता । रेडसि । पर्णं न वेः । अनुबन्धप्रत्ययलोपे मा भूत् । रिषेर्हिंसार्थस्य विच्प्रत्ययलोप उदाहरणं रेडिति ।

आर्धधातुक इति किम् ? त्रिधा बद्धो वृषभो रोरवीति । सार्वधातुके मा भूत् । इक इत्येव- अभाजि, रागः ।।

बहुव्रीहिसमाश्रयणं किम् ? क्नोपयति, प्रेद्धम् ।

</1-1-4>

क्ङिति च ।। <1-1-5> ।।

निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः । चितः, चितवान् । स्तुतः, स्तुतवान् । भिन्नः, भिन्नवान् । मृष्टः, मृष्टवान् । ङिति खल्वपि--चिनुतः, चिन्वन्ति । मृष्टः,मृजन्ति । गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते । ग्लाजिस्थश्च ग्स्नुः(3-2-139/3119) जिष्णुः, भूष्णुः । इक इत्येव--कामयते, लैगवायनः ।

* मृजेरजादौ संक्रमेविभाषा वृद्धिरिष्यते * (म.भा.1.48) संक्रमो नाम गुणवृद्धिः प्रतिषेधविषयः । परिमृजन्ति, परिमार्जन्ति;परिमृजन्तु, परिमार्जन्तु । लघूपधगुणस्याप्यत्र प्रतिषेधः । अचिनवम्, असुनवमित्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकम्--`ङिति यत्कार्यं तल्लकारे ङिति न भवति इति ।।

</1-1-5>

दीधीवेवीटाम् ।। <1-1-6> ।।

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः । आदीध्यनम्,आदीध्यकः । आवेव्यनम्, आवेव्यकः । इटः खल्वपि--कणिता श्वः, रणिता श्वः । वृद्धिरिटो न संभवतीति लघूपधगुणस्यात्र प्रतिषेधः ।।

</1-1-6>

हलोऽनन्तराः संयोगः ।। <1-1-7>।।

भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता हलः संयोगसंज्ञा भवन्ति । समुदायः संज्ञी । जातौ चेदं बहुवचनम्, तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति । अग्निरिति ग-नौ । अश्व इति श-वौ । कर्ण इति र-णौ । इन्द्रश्चन्द्रो मन्द्र इति न-द-राः । उष्ट्रो राष्ट्रं भ्राष्ट्रमिति ष-ट-राः ।

तिलान्स्त्र्यावपतीति न-स-त-र-याः, न-त-स-त-र-या वा ।
</1-1-7>
हल इति किम् `तितउच्छत्रम्(नि.<4-9-10>) । संयोगान्तस्य लोपः(8-2-23/54) स्यात् । अनन्तरा इति किम् पचति पनसम् । स्कोः संयोगाद्योरन्ते च(8-2-29/380) इति लोपः स्यात् ।
संयोगप्रदेशाः--संयोगान्तस्य लोपः(8-2-23/54) इत्येवमादयः ।।
</4-9-10>
मुखनासिकावचनोऽनुनासिकः ।। <1-1-8>।।
मुखसहिता नासिका मुखनासिका, तया य उच्चार्यते वर्णः सोऽनुनासिकसंज्ञो भवति । आङोनुनासिकश्छन्दसि(6-1-126/3525)अभ्रआँ अपः, गभीरआँ उग्रपुत्रे । चनआँ इन्द्रः ।
मुखग्रहणं किम् ? अनुस्वारस्यैव हि स्यात् । नासिकाग्रहणं किम् ? कचटतपानां मा भूत् । अनुनासिकप्रदेशाः-आङोऽनुनासिकश्छन्दसि(6-1-126/3525) इत्येवमादयः ।

</1-1-8>
तुल्यास्यप्रयत्नं सवर्णम् ।। <1-1-9> ।।
`तुल्य शब्दः सदृशपर्यायः, आस्ये भवमास्यं ताल्वादिस्थानम्,प्रयतनं प्रयत्नः-स्पृष्टतादिर्वर्णगुणः । तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति ।
चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते-स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति । ` अ अ अ इति त्रयोऽकारा उदात्तानुदात्तस्वरिताः, प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते । तथेवर्णः, तथोवर्णः, तथा ऋवर्णः । `लृवर्णस्य दीर्घा न सन्ति(आपि.शि.6.4) तं द्वादशप्रभेदमाचक्षते । सन्ध्यक्षराणां ह्रस्वा न सन्ति, तान्यपि द्वादशप्रभेदानि । अन्तःस्था द्विप्रभेदाः, रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । रेफोष्मणां सवर्णा न सन्ति ।
`वर्ग्यो वर्ग्येण सवर्णः(आपि.शि.6.11/13) । दण्डाग्रम् । खट्वाग्रम् ।
आस्यग्रहणं किम् कचटतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत् । किं च स्यात् ? तर्प्ता तर्प्तुमित्यत्र झरो झरि सवर्णे(8-4-65/71) इति पकारस्य तकारे लोपः स्यात् ।
प्रयत्नग्रहणं किम् ? इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत् । किं च स्यात् ? अरुश्च्योततीत्यत्र झरो झरि सवर्णे(8-4-65/71) इति शकारस्य चकारे लोपः स्यात् ।।
* ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या *(म.भा.1.62) । होत्लृकारः । होतॄकारः । उभयोर्ऋवर्णस्य चान्तरतमः सवर्णो दीर्घो नास्तीति ऋकार एव दीर्घो भवति ।
सवर्णप्रदेशाः अकः सवर्णे दीर्घः(6-1-101/85) इत्येवमादयः ।।
</1-1-9>
नाज्झलौ ।। <1-1-10> ।।
अच्च हल् च अज्झलौ । तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं सवर्णसंज्ञौ न भवतः ।
अवर्णहकारौ-दण्डहस्तः । इवर्णशकारौ-दधि शीतम्, सवर्णदीर्घत्वं न भवति । वैपाशो मत्स्यः, आनडुहं चर्मेति-यस्येति च(6-4-148/311) इति लोपो न भवति ।
</1-1-10>
ईदूदेद्विवचनं प्रगृह्यम् ।। <1-1-11> ।।
ईद्, ऊद्, एद्, इत्येवमन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति । अग्नी इति । माले इति । पचेते इति । यजेते इति ।
ईदूदेदिति किम् ? वृक्षावत्र । प्लक्षावत्र ।
द्विवचनमिति किम् ? कुमार्यत्र । किशोर्यत्र ।
तपरकरणमसन्देहार्थम् ।
प्रगृह्यप्रदेशाः--प्लुतप्रगृह्या अचि नित्यम्(6-1-125/90) इत्येवमादयः । ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः ।
`मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मममहाभारते (12-172-12>) ।
दम्पतीव, जम्पतीव, रोदसीव ।।
</1-1-11>
अदसो मात् ।। <1-1-12> ।।
अदसः संबन्धी यो मकारस्तस्मात्परे ईदूदेतः प्रगृह्यसंज्ञा भवन्ति । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते ।
एकारस्य नास्त्युदाहरणम् ।
अदस इति किम् ? शम्यत्र । दाडिम्यत्र । मादिति किम् ? अमुकेऽत्र ।।
</1-1-12>
शे ।। <1-1-13> ।।

</1-1-13>
`शे इत्येतत्प्रगृह्यसंज्ञं भवति । किमिदं शे इति ? सुपामादेशश्छन्दसि । `न युष्मे वाजबन्धवः(ऋ.<8-68-19>) । `अस्मे इन्द्राबृहस्पती(ऋ.<4-49-4>) । युष्मे इति । अस्मे इति । `त्वे रायः(तै.सं.<3-2-5>.2) । `मे रायः(वा.सं.4.22) । त्वे इति । मे इति ।
</8-68-19>
छान्दसमेतदेवैकमुदाहरणम्-`अस्मे इन्द्राबृहस्पती(ऋ.<4-49-4>) इति; तत्र तथा पाठात् । इतरत्तु लौकिकमनुकरणम्--युष्मे इति । अस्मे इति । त्वे इति । मे इति ।।
</4-49-4>
निपात एकाजनाङ् ।। <1-1-14> ।।
एकश्चासावच्च एकाच्, निपातो य एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति । अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तत् ।
</1-1-14>
निपात इति किम् ? चकारात्र । एकारात्र । एकाजिति किम् ? `प्राग्नये वाचमीरय(ऋ.<10-187-1>) । अनाङिति किम् ? आ उदकान्तात् ओदकान्तात् ।
*ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ।।*
</10-187-1>
ओत् ।। <1-1-15> ।।
`निपातः इति वर्त्तते । तस्यौकारेण तदन्तविधिः । ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति । आहो
इति । `उताहो इति(म.भा.1.71) ।।
</1-1-15>
संबुद्धौ शाकल्यस्येतावनार्षे ।। <1-1-16> ।।
`ओत् इति वर्त्तते । संबुद्धिनिमित्तो य ओकारः स शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञो भवति, `इति शब्देऽनार्षे = अवैदिके परतः । वायो इति, वायविति । भानो इति, भानविति ।
संबुद्धाविति किम् ? गवित्ययमाह । अत्रानुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात् । असत्यर्थवत्त्वे विभक्तिर्न भवति । शाकल्यग्रहणं विभाषार्थम् । इताविति किम् ? वायोऽत्र । अनार्ष इति किम् ? `एता गा ब्रह्मबन्धवित्यब्रवीत्(का.सं.10.6) ।
</1-1-16>
उञः ।। <1-1-17> ।।
`शाकल्यस्येतौ इति वर्तते । उञः प्रगृह्यसंज्ञा भवति, इतौ शाकल्यस्याचार्यस्य मतेन । शाकल्यस्येति विभाषार्थम् । उ इति, विति ।।
</1-1-17>
ऊँ ।। <1-1-18> ।।
`उञ इति वर्त्तते । उञ इतावनार्षे ऊँ इत्ययमादेशो भवति दीर्घोऽनुनासिकः, शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्च । शाकल्यस्य ग्रहणं विभाषार्थमिहाप्यनुवर्तते, तेन त्रीणि रूपाणि भवन्ति - उ इति, विति, ऊँ इति ।।
</1-1-18>
ईदूतौ च सप्तम्यर्थे ।। <1-1-19>।।
</1-1-19>
`शाकल्यस्येतावनार्षे इति निवृत्तम् । ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यसंज्ञं भवति । `अध्यस्यां मामकी तनू(पै.<1-6-8>) । मामक्यां तन्वामिति प्राप्ते । मामक्याम्, मामकी इति । तन्वाम्, तनू इति । `सोमो गौरी अधिश्रितः(ऋ.<9-12-3>) ।
</1-6-8>
ईदूताविति किम् ? `प्रियः सूर्ये प्रियो अग्ना भवाति(ऋ.<5-37-5>) । अग्निशब्दात्परस्याः सप्तम्या डादेशः ।
सप्तमीग्रहणं किम् ? धीती, मती, सुष्टुती । धीत्या, मत्या, सुष्टुत्या इति प्राप्ते ।
अर्थग्रहणं किम् ? वाप्यश्वः, नद्यातिः ।
तपरकरणमसन्देहार्थम् ।
*ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ।। 1 ।।
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् * ।। 2 ।।(म.भा.1.73)
</5-37-5>
दाधा घ्वदाप् ।। <1-1-20> ।।
दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति । `डु दाञ्(धा.पा.1091)-- प्रणिददाति । `दाण् दाने(धा.पा.930)-

प्रणिदाता । `दो(धा.पा.1148)-प्रणिद्यते । `देङ्(धा.पा.962)-प्रणिदयते । `डु धाञ्(धा.पा.1092)- प्रणिदधाति । `धेट्(धा.पा.902)-प्रणिधयति वत्सो मातरम् ।
अदाबिति किम् ? `दाप् लवने(धा.पा.1059)-दातं बर्हिः । `दैप् शोधने(धा.पा.924)-अवदातं मुखम् ।
घुप्रदेशाः घुमास्थागापाजहातिसां हलि(6-4-66/2462) इत्येवमादयः ।।
आद्यन्तवदेकस्मिन् ।। 1.1. 21 ।।
असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिद्ध्यन्तीत्ययमतिदेश आरभ्यते । सप्तम्यर्थे वतिः । आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति । यथा कर्तव्यमित्यत्र प्रत्ययाद्युदात्तत्वं भवति,एवमौपगवमित्यत्रापि यथा स्यात् । यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वम्, एवम् `आभ्याम् इत्यत्रापि यथा स्यात् ।
एकस्मिन्निति किम् ? सभासन्नयने भवः साभासन्नयनः, आकारमाश्रित्य वृद्धसंज्ञा न भवति ।।
</1-1-20>
तरप्तमपौ घः ।। <1-1-22> ।।
`तरप् तमप्- इत्येतौ प्रत्ययौ घसंज्ञौ भवतः । कुमारितरा । कुमारितमा । ब्राह्मणितरा । ब्राह्मणितमा ।
घप्रदेशाः घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः(6-3-43/985) इत्येवमादयः ।।
बहुगणवतुडति संख्या ।। 1.1. 23 ।।
`बहुगणवतुडतिइत्येते संख्यासंज्ञा भवन्ति । बहुकृत्वः । बहुधा । बहुकः । बहुशः । गणकृत्वः । गणधा । गणकः । गणशः । तावत्कृत्वः । तावद्धा । तावत्कः । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः ।
बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति, संख्यावाचिनोरेव । भूर्यादीनां निवृत्त्यर्थं संख्या-संज्ञा विधीयते ।।
*अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यं समासकन्विध्यर्थम् * (म.भा.1.82)।। अर्धपञ्चमशूर्पः । अर्धं पञ्चमं येषामिति बहुव्रीहौ कृतेऽर्धपञ्चमैः शूर्पैः क्रीतः । तद्धितार्थोत्तरपदसमाहारे च(2-1-51/728) इति समासः । तत्र दिक्संख्ये संज्ञायाम्(2-1-50/727) इत्यनुवृत्तेस्ततः संख्यापूर्वस्य द्विगुसंज्ञायां शूर्पादञन्यतरस्याम्(5-1-26/1691) इत्यञ्, ठञ्च । अध्यर्धपूर्वद्विगोः(5-1-28/1693) इति लुक् । अर्धपञ्चमकः ।
संख्याप्रदेशाः-संख्या वंश्येन(2-1-19/673) इत्येवमादयः ।।
</1-1-22>
ष्णान्ता षट् ।। <1-1-24> ।।
स्त्रीलिङ्गनिर्देशात् `संख्या इति सम्बध्यते । षकारान्ता नकारान्ता च या संख्या सा षट्संज्ञा भवति । षकारान्तास्तावत्--षट् तिष्ठन्ति, षट् पश्य । नकारान्ताः--पञ्च, सप्त, नव, दश ।
अन्तग्रहणमौपदेशिकार्थम्, तेनेह न भवति--शतानि, सहस्राणि । अष्टानामित्यत्र नुड् भवति।
षट्प्रदेशाः-`षड्भ्यो लुक्(7-1-22/261) इत्येवमादयः ।।
</1-1-24>
डति च ।। <1-1-25> ।।
डत्यन्ता च या संख्या सा षट्संज्ञा भवति । कति तिष्ठन्ति । कति पश्य ।।
</1-1-25>
क्तक्तवतू निष्ठा ।। <1-1-26> ।।
क्तश्च क्तवतुश्च = क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ भवतः । कृतः । कृतवान् । भुक्तः । भुक्तवान् । ककारः कित्कार्यार्थः । उकार उगित्कार्यार्थः ।
निष्ठाप्रदेशाः-श्वीदितो निष्ठायाम्(7-2-14/3039) इत्येवमादयः ।
</1-1-26>
सर्वादीनि सर्वनामानि ।। <1-1-27> ।।
सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वः, सर्वौ, सर्वे । सर्वस्मै । सर्वस्मात् । सर्वेषाम् । सर्वस्मिन् । सर्वकः । विश्वः, विश्वौ, विश्वे । विश्वस्मै । विश्वस्मात् । विश्वेषाम् ।
विश्वस्मिन् । विश्वकः ।
उभ । उभय । उभशब्दस्य सर्वनामत्वे प्रयोजनम्--सर्वनाम्नस्तृतीया च(2-3-27/608) इति । उभाभ्यां हेतुभ्यां वसति, उभयोः हेत्वोः वसति। उभये । उभयस्मै । उभयस्मात् । उभयेषाम् । उभयस्मिन् । डतर । डतम । कतर । कतम । कतरस्मै, कतमस्मै । इतर । अन्य । अन्यतर । इतरस्मै । अन्यस्मै । अन्यतरस्मै ।
त्वशब्दोऽन्यवाची, स्वरभेदाद् द्विः पठितः। एक उदात्तः, द्वितीयोऽनुदात्तः । केचित्तकारान्तमेकं पठन्ति । त्व-त्वदिति द्वावपि चानुदात्ताविति स्मरन्ति ।
नेम । नेमस्मै । वक्ष्यमाणेन जसि विभाषा भवति । नेमे, नेमा इति ।
सम। समस्मै । कथं यथासंख्यमनुदेशः समानाम्(1-3-10/128) समे देशे यजेतेति ? समस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञेष्यते, न सर्वत्र । सिम । सिमस्मै ।
पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्(1-1-34/218)(ग.सू.1) । स्वमज्ञातिधनाख्यायाम्(1-1-35>)(ग.सू.2) । अन्तरं

बहिर्योगोपसंव्यानयोः(1-1-36/220)(ग.सू.3) । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि,युष्मद्, अस्मद्, भवतु किम् । सर्वादिः ।।
सर्वनामप्रदेशाः--सर्वनाम्नः स्मै(7-1-14/215) इत्येवमादयः ।।
</1-1-27>
विभाषा दिक्समासे बहुव्रीहौ ।। <1-1-27> ।।
न बहुव्रीहौ(1-1-29/222)इति प्रतिषेधं वक्ष्यति । तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते । दिशां समासो दिक्समासः, दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति । उत्तरपूर्वस्यै, उत्तरपूर्वायै । दक्षिणपूर्वस्यै, दक्षिणपूर्वायै ।
दिग्ग्रहणं किम् ? न बहुव्रीहौ(1-1-29/222) इति । प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते- क्व विभाषा, क्व प्रतिषेध इति । दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते-दिगुपदिष्टसमासे विभाषा, अन्यत्र प्रतिषेध इति ।
समासग्रहणं किम् ? समास एव यो बहुव्रीहिस्तत्र विभाषा यथा स्यात् ; बहुव्रीहिवद्भावेन यो बहुव्रीहिः, तत्र मा भूत् । दक्षिणदक्षिणस्यै देहि ।
बहुव्रीहाविति किम् ? द्वन्द्वे विभाषा मा भूत् । दक्षिणोत्तरपूर्वाणामिति । द्वन्द्वे च(1-1-31/224) इति नित्यं प्रतिषेधो भवति ।।
</1-1-27>
न बहुव्रीहौ ।। <1-1-29> ।।
सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमाद्बहुव्रीहेरपि सर्वाद्यन्तस्य संज्ञा स्यादिति प्रतिषेध आरभ्यते । बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति - प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय । इह च त्वत्कपितृकः, मत्कपितृक इत्यकज्न भवति ।
बहुव्रीहाविति वर्त्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रेऽपि प्रतिषेधो यथा स्यात् । `वस्त्रान्तरवसनान्तरा इति(म.भा.1.90) ।।
</1-1-29>
तृतीयासमासे ।। <1-1-30> ।।
तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय, संवत्सरपूर्वाय, द्व्यहपूर्वाय, त्र्यहपूर्वाय । `समासे इति वर्त्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात् - मासेन पूर्वाय । पूर्वसदृशसमोनार्थ(2-1-31/693) इति तृतीयासमासं प्रतिपदं वक्ष्यति, तस्येदं ग्रहणम् ; न यस्य कस्यचित्तृतीयासमासस्य-कर्तृकरणे कृता बहुलम्(2-1-32/694) इति । त्वयका कृतम्, मयका कृतम् ।।
</1-1-30>
द्वन्द्वे च ।। <1-1-31> ।।
द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । पूर्वापराणाम् । कतरकतमानाम् ।
</1-1-31>
विभाषा जसि ।। <1-1-32> ।।
पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषाऽऽरभ्यते । द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । कतरकतमे कतरकतमाः । जसः कार्यं प्रति विभाषाऽकज् हि न भवति-कतरकतमकाः ।।
</1-1-32>
प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।। <1-1-33> ।।
विभाषा जसि(1-1-32/225) इति वर्त्तते । `द्वन्द्वे इति निवृत्तम् । प्रथम, चरम, तय, अल्प, अर्ध, कतिपय, नेम - इत्येते जसि विभाषा सर्वनामसंज्ञा भवन्ति । प्रथमे, प्रथमाः । चरमे, चरमाः । द्वितये, द्वितयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । कतिपये, कतिपयाः । नेमे, नेमाः ।
`तयइति तयप्प्रत्ययः। शिष्टानि प्रातिपदिकानि ।
तत्र `नेम इति सर्वादिषु पठ्यते; तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते । उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या सर्वनामसंज्ञा इहापि जस्कार्यं प्रति विभाषा । काकचोर्यर्थायोगं वृत्तिः ।।
</1-1-33>
पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।। <1-1-34> ।।
पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर-इत्येतेषां गणे पाठात्पूर्वेण नित्यायां प्राप्तायां जसि विभाषाऽऽरभ्यते । पूर्वादीनि विभाषा जसि सर्वनामसंज्ञानि भवन्ति व्यवस्थायामसंज्ञायाम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । पूर्वे, पूर्वाः । परे, पराः । अवरे, अवराः । दक्षिणे, दक्षिणाः । उत्तरे, उत्तराः । अपरे, अपराः । अधरे, अधराः ।
व्यवस्थायामिति किम् ? दक्षिणा इमे गाथकाः । प्रवीणा इत्यर्थः । असंज्ञायामिति किम् ? उत्तराः कुरवः । सत्यामेव व्यवस्थायामियं तेषां संज्ञा ।
</1-1-34>
स्वमज्ञातिधनाख्यायाम् ।। <1-1-35>।।
अत्रापि नित्या सर्वनामसंज्ञा प्राप्ता जसि विभाष्यते । स्वमित्येतच्छब्दरूपं जसि विभाषा सर्वनामसंज्ञं भवति, न चेज्ज्ञातिधनयोस्संज्ञारूपेण वर्तते । स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, स्वा गावः । आत्मीया इत्यर्थः ।
ज्ञातिप्रतिषेधः इति किम् ?
`धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः ।
</1-1-35>
उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ।।(महाभारते <5-36-38>)
अधनाख्यायामिति किम् ? प्रभूताः स्वा न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते । प्रभूतानि धनानीत्यर्थः ।।

</5-36-38>
अन्तरं बहिर्योगोपसंव्यानयोः ।। <1-1-36> ।।
अत्रापि पूर्वेण नित्या सर्वनामसंज्ञा प्राप्ता सा जसि विभाष्यते । अन्तरमित्येतच्छब्दरूपं विभाषा जसि सर्वनामसंज्ञं भवति बहिर्योगे उपसंव्याने च गम्यमाने । अन्तरे गृहाः, अन्तरा गृहाः । नगरबाह्याश्चण्डालादिगृहा उच्यन्ते । (उपसंव्याने) अन्तरे शाटकाः, अन्तराः शाटकाः । उपसंव्यानं परिधानीयमुच्यते, न प्रावरणीयम् । बहिर्योगोपसंव्यानयोरिति किम् ? अनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति । तस्मिन्नन्तरे शीतान्युदकानि । मध्यप्रदेशवचनोऽन्तरशब्दः । गणसूत्रस्य चेदं प्रत्युदाहरणम् ।।
*अपुरीति च वक्तव्यम् *।।(म.भा.1.93) अन्तरायां पुरि वसति ।
*विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्*(म.भा.1.93)द्वितीयाय, द्वितीयस्मै । तृतीयाय, तृतीयस्मै ।।
</1-1-36>
स्वरादिनिपातमव्ययम् ।। <1-1-37> ।।
स्वरादीनि शब्दरूपाणि निपाताश्चाव्ययसंज्ञानि भवन्ति । स्वर्, अन्तर्, प्रातर्-एते अन्तोदात्ताः पठ्यन्ते । पुनर् आद्युदात्तः । सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्,ऋते, युगपत्,पृथक्-एतेऽपि सनुतर्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हेतौ, अद्धा, इद्धा, सामि-एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । वत्, वदन्तमव्ययसंज्ञं भवति-ब्राह्मणवत्, क्षत्रियवत् । सन्, सनात्, सनत्, तिरस्-एते आद्युदात्ताः पठ्यन्ते । अन्तरा-अयमन्तोदात्तः । अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या । क्त्वातोसुन्कसुनः-कृन्मकारान्तः, सन्ध्यक्षरान्तोऽव्ययीभावश्च । पुरा, मिथो, मिथस्, प्रबाहुकम्, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्द्धम्, समम्, नमस्, हिरुक् । तसिलादिस्तद्धित एधाच्पर्यन्तः, शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्च, अम्, आम्, प्रतान्, प्रशान् । स्वरादिः ।
निपाता वक्ष्यन्ते-प्राग्रीश्वरान्निपाताः(1-4-56/19) इति । च, वा ह,अह,एव, एवमित्यादयः ।
अव्ययप्रदेशाः अव्ययादाप्सुपः(2-4-82/452) इत्येवमादयः । `अव्ययम् इत्यन्वर्थसंज्ञा ।
`सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
</1-1-37>
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।।(गो.ब्रा.<1-1-26>)
</1-1-26>
तद्धितश्चासर्वविभक्तिः ।। <1-1-38> ।।
तद्धितान्तः शब्दोऽसर्वविभक्तिरव्ययसंज्ञो भवति । यस्मान्न सर्वविभक्तेरुत्पत्तिः, सोऽसर्वविभक्तिः । ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा ।
तद्धित इति किम् ? एकः, द्वौ, बहवः । असर्वविभक्तिरिति किम् ? औपगवः, औपगवौ, औपगवाः ।।
</1-1-38>
कृन्मेजन्तः ।। <1-1-39> ।।
</1-1-39>
कृद्यो मकारान्त एजन्तश्च तदन्तं शब्दरूपमव्ययसंज्ञं भवति । स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते । एजन्तः-वक्षे रायः । `ता वामेषे रथानाम्(ऋ<5-66-3>) । `क्रत्वे दक्षाय जीवसे(ऋ.<5-57-4>) । `ज्योक्च सूर्यं दृशे(ऋ<10-57-4>) । `वक्षे इति वचेः,तुमर्थेसेसेन्(3-4-9/3436) इति सेप्रत्यये कुत्वे षत्वे च कृते रूपम् । `एषे इति इणः सेप्रत्यये गुणे षत्वे च कृते रूपम् । `जीवसे इति जीवेरसे प्रत्यये रूपम् । `दृशे इति दृशेः केन्प्रत्ययो निपात्यते--दृशे विख्ये च(3-4-11/3438) इति ।
अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । इह मा भूत्--आधये, चिकीर्षवे, कुम्भकारेभ्य इति ।।
</5-66-3>
क्त्वातोसुन्कसुनः ।। <1-1-40> ।।
</1-1-40>
क्त्वा-तोसुन्-कसुन्-इत्येवमन्तं शब्दरूपमव्ययसंज्ञं भवति । कृत्वा, हृत्वा । तोसुन्-`पुरा सूर्यस्योदेतोराधेयः(का.सं.8.3), `पुरा वत्सानामपाकर्तोः(का.सं.31.15) । भावलक्षणे स्थेण्कृञ्वदि(3-4-16/3443) इति इणः, कृञश्च तोसुन्प्रत्ययः । कसुन्-सृपितृदोः कसुन्(3-4-17/3444) । `पुरा क्रूरस्य विसृपो विरप्शिन्(तै.सं.<1-1-9>.3), `पुरा जर्तुभ्य आतृदः(ऋ.<8-1-12>) ।।
</1-1-9>
अव्ययीभावश्च ।। <1-1-41> ।।
अव्ययीभावसमासोऽव्ययसंज्ञो भवति । किं प्रयोजनम् ? लुङ्मुखस्वरोपचाराः । लुक्--उपाग्नि, प्रत्यग्नि शलभाः पतन्ति । मुखस्वरः--उपाग्निमुखः, प्रत्यग्निमुखः । मुखं स्वाङ्गम्(6-2-167/3901) इत्युत्तरपदान्तोदात्तत्वं प्राप्तम् नाव्ययदिक्छब्द(6-2-168/3902) इति प्रतिषिध्यते । तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति । उपचारः--उपपयःकारः, उपपयःकामः । विसर्जनीयस्थानिकस्य सकारस्य `उपचार इति संज्ञा, तत्राव्ययीभावस्याव्ययत्वे अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य(8-3-46/160) इति पर्युदासः सिद्धो भवति । सर्वमिदं काण्डं स्वरादावपि पठ्यते ।

पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेनायं कार्यनियमः सिद्धो भवति । इह च--पुरा सूर्यस्योदेतोराधेयः, पुरा क्रूरस्य विसप इति न लोकाव्ययनिष्ठा(2-3-69/627) इति षष्ठीप्रतिषेधो न भवति ।।
</1-1-41>
शि सर्वनामस्थानम् ।। <1-1-42> ।।
`शि इत्येतत्सर्वनामस्थानसंज्ञं भवति । किमिदं शि इति ? जश्शसोः शिः(7-1-20/312)आदेशः । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य । दधीनि, मधूनि । त्रपूणि, जतूनि ।
सर्वनामस्थानप्रदेशाः--सर्वनामस्थाने चासंबुद्धौ(6-4-8/250) इत्येवमादयः ।।
</1-1-42>
सुडनपुंसकस्य ।। <1-1-43>।।
सुट् इति पञ्च वचनानि सर्वनामस्थानसंज्ञानि भवन्ति नपुंसकादन्यत्र । नपुंसके न विधिर्न प्रतिषेधः, तेन जसंशे सर्वनामस्थानसंज्ञा पूर्वेण भवत्येव । राजा, राजानौ, राजानः, राजानम्, राजानौ। सुडिति किम् ? राज्ञः पश्य । अनपुंसकस्येति किम् ? सामनी, वेमनी ।।
</1-1-43>
न-वेति विभाषा ।। <1-1-44> ।।
नेति प्रतिषेधः, वेति विकल्पः, तयोः प्रतिषेधविकल्पयोर्विभाषेति संज्ञा भवति । इतिकरणोऽर्थनिर्देशार्थः । विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते । उभयत्रविभाषाः प्रयोजयन्ति । विभाषा श्वेः(6-1-30/2420)--शुशाव, शिश्वाय; शुशुवतुः, शिश्वियतुः ।
विभाषाप्रदेशाः--विभाषा श्वेः(6-1-30/2420) इत्येवमादयः ।।
</1-1-44>
इग्यणः सम्प्रसारणम् ।। <1-1-45>।।
इग्यो यणः स्थाने भूतो भावी वा तस्य संप्रसारणम् इत्येषा संज्ञा भवति । यज्-इष्टम् । वप्-उप्तम् । ग्रह-गृहीतम् ।
केचिदुभयथा सूत्रमिदं व्याचक्षते-वाक्यार्थः सज्ञी, वर्णश्चेति । इग्यण इति यो वाक्यार्थः स्थान्यादेशसंबन्धलक्षणः स संप्रसारणसंज्ञो भवति; यण्स्थानिक इग्वर्णः स संप्रसारणसंज्ञो भवतीति । तत्र विधौ वाक्यार्थ उपतिष्ठते-ष्यङः संप्रसारणम्(6-1-13/1003),वसोः संप्रसारणम्(6-4-131/435) इति । अनुवादे वर्णः-संप्रसारणाच्च(6-1-108/330) इति । संख्यातानुदेशादिह न भवति- अदुहितरामिति । द्युभ्यामित्यादौ दिव उत्(6-1-131/337) इति तपरकरणात् दीर्घो न भवति।
संप्रसारणप्रदेशाः--वसोः संप्रसारणम्(6-4-131/435) इत्येवमादयः ।।
</1-1-45>
आद्यन्तौ टकितौ ।। <1-1-46>।।
आदिष्टिद्भवति, अन्तः किद्भवति षष्ठीनिर्दिष्टस्य । लविता, मुण्डो भीषयते । टित्प्रदेशाः--आर्धधातुकस्येड्वलादेः(7-2-35/2984) इत्येवमादयः ।
कित्प्रदेशाः-भियो हेतुभये षुक्(7-3-40/2595) इत्येवमादयः ।।
</1-1-46>
मिदचोऽन्त्यात्परः ।। <1-1-47>।।
`अचः इति निर्धारणे षष्ठी । जातौ चेदमेकवचनम् । अचां संनिविष्टानामन्त्यादचः परो मिद्भवति । स्थानेयोगप्रत्ययपरत्वस्यायमपवादः । विरुणद्धि, मुञ्चति, पयांसि ।
मित्प्रदेशाः-रुधादिभ्यः श्नम्(3-1-78/2543) इत्येवमादयः ।।
* मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम् * (म.भा.1.115)।।
मग्नः, मग्नवान् । मङ्क्ता, मङ्क्तुम् ।।
</1-1-47>
एच इग्घ्रस्वादेशे ।। <1-1-48>।।
एचो ह्रस्वादेशे कर्तव्य इगेव ह्रस्वो भवति, नान्यः । रै-अतिरि । नौ--अतिनु । गो--उपगु ।
एच इति किम् ? अतिखट्वः, अतिमालः । ह्रस्वादेश इति किम् ? दे3वदत्त । देवद3त्त ।।
</1-1-48>
षष्ठी स्थानेयोगा ।। <1-1-49> ।।
परिभाषेयं योगनियमार्था । इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थानेयोगैव भवति, नान्ययोगा । स्थानेयोगस्य निमित्तभूते सति सा प्रतिपत्तव्या । स्थानशब्दश्च प्रसङ्गवाची, यथा--दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रसङ्ग इति गम्यते; एवमिहापि अस्तेः स्थाने= प्रसङ्गे भूर्भवति--भविता, भवितुम्, भवितव्यम् । ब्रुवः प्रसङ्गे वचिर्भवति-वक्ता, वक्तुम्, वक्तव्यम् । प्रसङ्गे संबन्धस्य निमित्तभूते ब्रुवः इति षष्ठी ।
बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः, तत्र यावन्तः शब्दे संभवन्ति तेषु सर्वेषु प्राप्तेषु नियमः क्रियते । षष्ठी स्थानेयोगेति-स्थाने योगोऽस्या इति व्यधिकरणो बहुव्रीहिः । अत एव निपातनाच्च सप्तम्या अलुक् ।।
</1-1-49>

स्थानेऽन्तरतमः ।। <1-1-50> ।।
स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति सदृशतमः । कुतश्च शब्दस्यान्तर्यम् ? स्थानार्थगुणप्रमाणतः ।
स्थानतः--अकः सवर्णे दीर्घः(6-1-101/85) । दण्डाग्रम्, यूपाग्रम्। द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति ।
अर्थतः--वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः । पुंवद्भावेनान्तरतमः पुंशब्दोऽतिदिश्यते । गुणतः--पाकः, त्याग, रागः । चजोः कुघिण्ण्यतोः(7-3-52/2863) इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारो भवति । जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः ।
प्रमाणतः--अमुष्मै, अमूभ्याम् । अदसोसेर्दादु दो मः(8-2-80/419) इति ह्रसल्वस्य ह्रस्वः, दीर्घस्य दीर्घः ।
`स्थाने इति वर्त्तमाने पुनः स्थानेग्रहणं किम् ? यत्रानेकमान्तर्यं संभवति तत्र स्थानत एवान्तर्य बलीयो यथा स्यात् । चेता, स्तोता । प्रमाणतोऽकारो गुणः प्राप्तस्तत्र स्थानत आन्तर्यादेकारौकारौ भवतः ।
तमब्ग्रहणं किम् ? वाग्घसति, त्रिष्टुब्भसति । झयो होऽन्यतरस्याम्(8-4-62/119) इति हकारस्य पूर्वसवर्णे क्रियमाणे सोष्मणः सोष्माणः इति द्वितीयाः प्रसक्ताः, नादवतो नादवन्त इति तृतीयाः, तमब्ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः ।।
</1-1-50>
उरण् रपरः ।। <1-1-51>।।
उः स्थानेऽण् प्रसज्यमान एव रपरो वेदितव्यः । कर्त्ता, हर्त्ता । किरति, गिरति । द्वैमातुरः, त्रैमातुरः ।
उरिति किम् ? खेयम्, गेयम् ।
अण्ग्रहणं किम् ? सुधातुरकङ् च(4-1-17/1017)--सौधातकिः ।।
</1-1-51>
अलोऽन्त्यस्य ।। <1-1-52>।।
षष्ठीनिर्दिष्टस्य य उच्यते आदेशः सोऽन्त्यस्यालः स्थाने वेदितव्यः । इद्गोण्याः(1-2-50/1703)-- पञ्चगोणिः, दशगोणिः ।।
</1-1-52>
ङिच्च ।। <1-1-53>।।
ङिच्च य आदेशः सोऽनेकालपि अलोऽन्त्यस्य भवति । आनङृतो द्वन्द्वे(6-3-25/921)-होतापोतारौ, मातापितरौ । तातङि ङित्करणस्य सावकाशत्वाद् गुणवृद्धिप्रतिषेधार्थत्वात् सर्वादेशस्तातङ् भवति--जीवताद्भवान् । जीवतात्त्वम् ।।
</1-1-53>
आदेः परस्य ।। <1-1-54> ।।
परस्य कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम् । क्व च परस्य कार्य शिष्यते ? यत्र पञ्चमीनिर्देशः । तद्यथा--ईदासः(7-2-83/3104)आसीनो यजते । द्व्यन्तरुपसर्गेभ्योऽप ईत्(6-3-77/941), द्वीपम्, तअन्तरीपम्, समीपम् ।।
</1-1-54>
अनेकाल्शित्सर्वस्य ।। <1-1-55> ।।
अनेकाल् य आदेशः शिच्च स सर्वस्य षष्ठीनिर्द्दिष्टस्य स्थाने भवति । अस्तेर्भूः(2-4-52/2470)--भविता, भवितुम्, भवितव्यम् ।
शित्खल्वपि-जश्शसोः शिः(7-1-20/312) । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य ।।
</1-1-55>
स्थानिवदादेशोऽनल्विधौ ।। <1-1-56> ।।
स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते । स्थानिना तुल्यं वर्त्तत इति स्थानिवत् । स्थानिवदादेशो भवति, स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा । न अल्विधिरनल्विधिरित्यर्थः । किमुदाहरणम् ? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः ।
धात्वादेशो धातुवद्भवति--अस्तेर्भूः(2-4-52/2470), ब्रुवो वचिः(2-4-53/2453), आर्धधातु-के विषये प्रागेवादेशेषु कृतेषु धातोरिति तव्यादयो भवन्ति-भविता, भवितुम्, भवितव्यम्; वक्ता, वक्तुम्, वक्तव्यम् ।
अङ्गादेशोऽङ्गवद्भवति--केन, काभ्याम्, कैः। किमः कादेशे कृतेऽङ्गाश्रया इनदीर्घत्वैस्भावा भवन्ति ।
कृदादेशः कृद्वद्भवति-प्रकृत्य, प्रहृत्य । ल्यबादेशे कृते ह्रस्वस्य पिति कृति तुक्(6-1-71/2858) इति तुग्भवति ।
तद्धितादेशस्तद्धितवद्भवति-दाधिकम्, अद्यतनम् । कृत्तद्धितसमासाश्च(1-2-46/179) इति प्रापतिपदिकसंज्ञा भवति ।
अव्ययादेशोऽव्ययवद्भवति--प्रस्तुत्य, प्रहृत्य, उपस्तुत्य । अव्ययात्(2-4-82/452) इति सुब्लुग् भवति ।
सुबादेशः सुब्वद्भवति-वृक्षाय, प्लक्षाय । सुपि च(7-3-102/202) इति दीर्घत्वं भवति ।
तिङादेशस्तिङ्वद्भवति-अकुरुताम्, अकुरुतम् । सुप्तिङन्तं पदम्(1-4-14/29) इति पदसंज्ञा भवति ।
पदादेशः पदवद्भवति--ग्रामो वः स्वम्, जनपदो नः स्वम् । पदस्य(8-1-16/401) इति रुत्वं भवति ।
वत्करणं किम् ? स्थाने आदेशस्य संज्ञा मा विज्ञायीति । स्वाश्रयमपि यथा स्यात् । आङो यमहनः(1-3-28/2695)--आहत, आवधिष्टेति । आत्मनेपदमुभयत्रापि भवति ।
आदेशग्रहणं किम् ? आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्--पचतु । एरुः।
अनल्विधाविति किम् ? द्युपथितदादेशा न स्थानिवद्भवन्ति द्यौः पन्थाः, स इति । हल्ङ्याब(6-1-68/252) इति सुलोपो न भवति ।
</1-1-56>

अचः परस्मिन्पूर्वविधौ ।। <1-1-57>।।
पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदमारभ्यते । आदेशः स्थानिवदिति वर्तते । अच इति स्थानिनिर्देशः । परस्मिन्निति निमित्तसप्तमी । पूर्वविधाविति विषयसप्तमी । अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवद्भवति । पटयति । अवधीत् । बहुखट्वकः । पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिवद्भावाद् अत उपधायाः(7-2-116/2282) इति वृद्धिर्न भवति । अवधीत्--अतो लोपस्य स्थानिवद्भावाद् अतो हलादेर्लघोः(7-2-7/2284) इति हलन्तलक्षणा वृद्धिर्न भवति । बहुखट्वक इति--आपोऽन्यतरस्याम्(7-4-15>) इति ह्रस्वस्य स्थानिवद्भावाद् ह्रस्वान्तेऽन्त्यात्पूर्वम्(6-2-174/3908) इति स्वरो न भवति । अच इति किम् ? प्रश्नः । आक्राष्टाम् । आगत्य । प्रश्न इति --प्रच्छेर्नङ्प्रत्यये च्छ्वोः शूडनुनासिके च(6-4-19/2561) इति छकारस्य शकारः परनिमित्तकस्तुकि कर्तव्ये न स्थानिवद्भवति । आक्राष्टामिति--झलो झलि(8-2-26/2281) इति सिचो लोपः परनिमित्तकः कृषेः षकारस्य षढोः कः सि(8-2-41/295) इति ककारे कर्तव्ये न स्थानिवद्भवति । आगत्येति--वा ल्यपि(6-4-38/3334) इति अनुनासिकलोपः परनिमित्तकस्तुकि कर्तव्ये न स्थानिवद्भवति ।
परस्मिन्निति किम् ? युवजानिः । वधूटीजानिः । वैयाघ्रपद्यः । आदीध्ये । युवजानिरिति--जायाया निङ्(5-4-134/872) न परनिमित्तकः, तेन यलोपे न स्थानिवद्भवति । वैयाघ्रपद्य इति- न परनिमित्तकः पादस्यान्तलोपः पद्भावं न प्रतिबध्नाति । आदीध्ये इति-दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् यीवर्णयोर्दीधीवेव्योः(7-4-53/2488) इति लोपो न भवति ।
पूर्वविधाविति किम् ? हे गौः । बाभ्रवीयाः । नैधेयः । हे गौरिति वृद्धिरजादेशः संबुद्धिलोपे कर्त्तव्ये न स्थानिवद्भवति । बाभ्रवीया इति-बाभ्रव्यस्यामी च्छात्रा इति वृद्धाच्छः(4-2-114/1337) इति छः, हलस्तद्धितस्य(6-4-150/472) इति यकारलोपे कर्त्तव्येऽवादेशो न स्थानिवद्भवति । नैधेयः- आतो लोप इटि च (6-4-64/2372) इत्याकारलोपः, इतश्चानिञः(4-1-122/1125) इति द्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवद्भवति ।।
</1-1-57>
न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।। <1-1-57> ।।
पूर्वेणातिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते । पदान्तविधिं प्रत्यजादेशो न स्थानिवद्भवति-कौ स्तः, यौ स्तः । तानि सन्ति, यानि सन्ति । श्नसोरल्लोपः(6-4-111/2469) क्ङिति सार्वधातुके इति परनिमित्तकः, स पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत् स्यात्, अस्माद्वचनान्न भवति ।
द्विर्वचनविधिं प्रति न स्थानिवद्भवति-दद्ध्यत्र । मद्ध्वत्र । यणादेशः परनिमित्तकस्तस्य स्थानिवद्भावाद् अनचि च(8-4-47/48) इति धकारस्य द्विर्वचनं न स्यादस्माद्वचनाद्भवति ।
वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद्भवति-अप्सु यायावरः प्रवपेत पिण्डान् । यातेर्यङन्ताद् यश्च यङः(3-2-176/3156) इति वरचि कृते अतो लोपः(6-4-48/2308) परनिमित्तकः, तस्य स्थानिवत्त्वाद् आतो लोप इटि च(6-4-64/3156) इत्याकारलोपः स्यादस्माद्वचनान्न भवति ।
यलोप । यलोपविधिं प्रत्यजादेशो न स्थानिवद्भवति-कण्डूतिः । कण्डूयतेः क्तिनि कृते, अतो लोपः परनिमित्तकः, लोपो व्योर्वलि(6-1-66/873) इति यलोपे स्थानिवत् स्यादस्माद्वचनान्न भवति ।
स्वर । स्वरविधिं प्रति अजादेशो न स्थानिवद्भवति --चिकीर्षकः, जिहीर्षकः । ण्वुलि कृते अतो लोपः(6-4-48/2308) परनिमित्तको लिति(6-1-193/3676) प्रत्ययात्पूर्वमुदात्तमिति स्वरे कर्त्तव्ये न स्थानिवद् भवतीति ।
सवर्ण । सवर्णविधिं प्रति अजादेशो न स्थानिवद् भवति--शिण्ढि, पिण्ढि । शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने, रुधादिभ्यः श्नम्(3-1-78/3676) हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु, श्नसोरल्लोपः(6-4-111/2469) क्ङिति सार्वधातुके परनिमित्तकोऽनुस्वारस्य ययि परसवर्णे कर्त्तव्ये न स्थानिवद् भवति ।
अनुस्वार । अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद् भवति-शिंषन्ति, पिंषन्ति । नश्चापदान्तस्य झलि(8-3-24/123) इति अनुस्वारे कर्त्तव्ये श्नसोरल्लोपो न स्थानिवद् भवति।
दीर्घ । दीर्घविधिं प्रति अजादेशो न स्थानिवद् भवति- प्रतिदीव्ना, प्रतिदीव्ने । प्रतिदिवन्नित्येतस्य भस्य(6-4-129/233)इत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च अल्लोपोऽनः(6-4-134/234) इति अकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् हलि च(8-2-77/354) इति दीर्घत्वं न स्यात्, न ह्ययं वकारो हल्पर इति, अस्माद्वचनाद् भवति ।
जश् । जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति--सग्धिश्च मे,सपीतिश्च मे । बब्धान्ते हरी धानाः । अदेः क्तिनि बहुलं छन्दसि(8-4-39/3398) इति घस्लादेशःघसिभसोर्हलि च(6-4-100/3550) इति उपधालोपः, झलो झलि(8-2-26/2281) इति सलोपः, झषस्तथोर्धोऽधः(8-2-40/2280) इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात् । झलां जश् झशि(8-4-53/52) इति धकारस्य जश्त्वं न स्यादस्माद्वचनाद् भवति । समाना ग्धिः, समानस्य सभावः--सग्धिः । बब्धामिति-भसेर्लोड्द्विवचने शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, घसिभसोर्हलि च(6-4-100/3550) इति उपधालोपः, झलो झलि(8-2-26/2281) इति सलोपः, झषस्तथोर्धोऽध(8-2-40/2280) इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात् झलां जश् झशि जश्त्वं न स्यादस्माद्वचनाद् भवति ।
चर् । चर्विधिं प्रत्यजादेशो न स्थानिवद् भवति--जक्षतुः, जक्षुः । `अक्षन्नमीमदन्त पितरः(वा.सं.19.36) । लिड्द्विवचनबहुवचनयोरदेर्घस्लादेशः, गमहनजनखनघसाम्(6-4-98/2363) इत्युपधालोपः, द्विर्वचनम्, अभ्यासकार्यम् । तत्रोपधालोपस्य स्थानिवत्त्वात् खरि च(8-4-55/121) इति घकारस्य चर्त्वं न स्यादस्माद्वचनाद् भवति । शासिवसिघसीनां च(8-3-60/2410) इति षत्वम् । अक्षन्नित्यदेर्लुङ्बहुवचने घस्लादेशश्च्लेरागतस्य मन्त्रे घसह्वर(2-4-80/3402) इति लुक्, गमहनजनखनघसाम्(6.498/2363) इत्युपधालोपः, तस्य स्थानिवत्त्वात् खरि च(8-4-55/121)इति चर्त्वं न स्यादस्माद्वचनाद् भवति । स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्भवति, अन्यत्र तु स्थानिवदेव । तेन बहुखट्वकः, किर्योः गिर्योः, वाय्वोरिति स्थानिवत्वात् स्वर-दीर्घ-यलोपा न भवन्ति ।।
</1-1-57>

द्विर्वचनेऽचि ।। <1-1-59> ।।
द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव कर्तव्ये । रूपातिदेशश्चायं नियतकालः, तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते ।
आल्लोपोपधालोपणिलोपयणवायावादेशाः प्रयोजनम् ।
आल्लोपः--पपतुः, पपुः । आतो लोप इटि च(6-4-64/2372) इत्याकारलोपे कृते तस्य स्थानिवद्भावाद् एकाचः(6-1-1/2175) इति द्विर्वचनं भवति ।
उपधालोपः-- जघ्नतुः। जघ्नुः। गमहनजनखनघसां लोपः क्ङित्यनङि(6-4-98/2363)इत्युपधालोपे कृते अनच्कत्वाद् द्विर्वचनं न स्यादस्माद्वचनाद्भवति। णिलोपः-- आटिटत् । अटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वाद् अजादेर्द्वितीयस्य(6-1-2/2176) इति टिशब्दस्य द्विर्वचनं भवति ।
यण्--चक्रतुः, चक्रुः । करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवत्त्वाद्भवति ।
अयवायावादेशाः--निनय, निनाय। लुलव, लुलाव । नयतेर्लुनातेश्चोत्तमे णलि गुणे कृते वृद्धौ
चायवायावादेशास्तेषां स्थानिवत्त्वान् नेनैलोलाविति द्विर्वचनं भवति ।
द्विर्वचन इति किम् ? जग्ले । मम्ले । श्रवणमाकारस्य न भवति ।
द्विर्वचननिमित्त इति किम् ? दुद्युषति । ऊठि यणादेशो न स्थानिवद्भवभति ।
अचीति किम् ? जेघ्रीयते, देध्मीयते । ई घ्राध्मोः(7-4-31/2648) यङि च(7-4-30/2633) इति ईकारादेशस्तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात् । अज्ग्रहणान्न भवति ।।
</1-1-59>
अदर्शनं लोपः ।। <1-1-60> ।।
अदर्शनमश्रवणमनुच्चारणमुनपलब्धिरभावो वर्णविनाशः--इत्यनर्थान्तरम् । एतैः शब्दैर्योऽभिधीयते तस्य लोप इतीयं संज्ञा भवति । अर्थस्येयं संज्ञा; न शब्दस्य । प्रसक्तस्यादर्शनं लोपसंज्ञं भवति ।
गोधाया ढ्रक्(4-1-129/1135)-गौधेरः । पचेरन् । जीवेरदानुक्(उणादि.1.163)-जीरदानुः । स्रिवेर्मनिन्-आस्रेमाणम् । यकारवकारयोरदर्शनमिहोदाहरणम् । अपरस्यानुबन्धादेः प्रसक्तस्य ।
लोपप्रदेशाः-लोपो व्योर्वलि(6-1-66/873) इत्येवमादयः ।।
प्रत्ययस्य लुक्श्लुलुपः ।। 1.1. 61 ।।
अदर्शनम् इति वर्त्तते । प्रत्ययादर्शनस्य लुक्-श्लु-लुप्-इत्येताः संज्ञा भवन्ति । अनेकसंज्ञाविधानाच्च तद्भावितग्रहणमिह विज्ञायते । लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञं भवति, श्लुसंज्ञाभावितं श्लुसंज्ञं भवति, लुप्संज्ञाभावितं लुप्संज्ञं भवति । तेन संज्ञानां सङ्करो न भवति । विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते । अत्ति । जुहोति । वरणाः ।
प्रत्ययग्रहणं किम् ? अगस्तयः । कुण्डिनाः ।
लुक्श्लुलुप्प्रदेशाः--लुक्तद्धितलुकि(1-2-49/1408),जुहोत्यादितभ्यः श्लुः(2-4-75/2489),जनपदे लुप्(4-2-81/1293) इत्येवमादयः ।।
</1-1-60>
प्रत्ययलोपे प्रत्ययलक्षणम् ।। <1-1-62> ।।
प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं तु नाम स्यादिति सूत्रमिदमारभ्यते । प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कार्यं भवति । अग्निचित्, सोमसुत्, अधोगित्यत्र सुप्तिङोर्लुप्तयोः सुप्तिङन्तं पदम्(1-4-14/29) इति पदसंज्ञा भवति । अधोगिति दुहेर्लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम् ।
प्रत्यय इति वर्त्तमाने पुनः प्रत्ययग्रहणं किम् ? कृत्स्नप्रत्ययलोपे यथा स्यात् । इह मा भूत्--आघ्नीय, सङ्ग्मीय । हनिगम्योर्लिङात्मनेपदे लिङः सलोपोऽनन्त्यस्य(7-2-79/2211) इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपस्तत्र प्रत्ययलक्षणेन झलीत्यनुनासिकलोपो न भवति ।
प्रत्ययलक्षणमिति किम् ? रायः कुलं रैकुलम्, गवे हितं गोहितम्-आयवादेशौ न भवतः वर्णाश्रयत्वात् ।।
</1-1-62>
न लुमताङ्गस्य ।। <1-1-63> ।।
पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते । लुमता शब्देन लुप्ते प्रत्यये यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न भवति । गर्गाः । मृष्टः । जुहुतः । यञ्शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः ।
लुमतेति किम् ? कार्यते । हार्यते । अङ्गस्येति किम् ? पञ्च । सप्त । पयः । साम।।
</1-1-63>
अचोऽन्त्यादि टि ।। <1-1-64>।।
अचः इति निर्धारणे षष्ठी । जातावेकवचनम् । अचां संनिविष्टानां योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति । अग्निचित्-इच्छब्दः । सोमसुत्-उच्छब्दः । आताम्, आथाम्--आम्शब्द । पचेते, पचेथे ।
टिप्रदेशाः--टित आत्मनेपदानां टेरे(3-4-79/2233) इत्येवमादयः ।
</1-1-64>
अलोऽन्त्यात्पूर्व उपधा ।। <1-1-65>।।
धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्वो यो वर्णः सोऽलेवोपधासंज्ञो भवति । पच् पठ्--अकारः । भिद्, छिद्-इकारः । बुध्, युध्-उकारः । वृत्, वृध्-

ॠकारः।
अल इति किम्? शिष्टः, शिष्टवान्। समुदायात्पूर्वस्य मा भूत्।
उपधाप्रदेशाः-अत उपधायाः(7-2-115/2282) इत्येवमादयः।।
</1-1-65>
तस्मिन्निति निर्दिष्टे पूर्वस्य।। <1-1-66>।।
तस्मिन् इति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य। इको यणचि(6-1-77/47)--दध्युदकम्, मध्विदम्, पचत्योदनम्। निर्दिष्टग्रहणमानन्तर्यार्थम्। अग्निचिदत्रेति व्यवहितस्य मा भूत्।।
</1-1-66>
तस्मादित्युत्तरस्य।। <1-1-67>।।
निर्दिष्टग्रहणमनुवर्तते। `तस्माद् इति पञ्चम्यर्थनिर्देशः। उत्तरस्यैव कार्य भवति, न पूर्वस्य। तिङ्ङतिङः(8-1-28/3935)--ओदनं पचति। इह न भवति - पचत्योदनमिति।
</1-1-67>
स्वं रूपं शब्दस्याशब्दसंज्ञा।। <1-1-68>।।
शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति, न बाह्योऽर्थः, शब्दसंज्ञं वर्जयित्वा। शब्देनार्थावगतेरर्थे कार्यस्यासम्भवात् तद्वाचिनां शब्दानां संप्रत्ययो मा भूदिति सूत्रमिदमारभ्यते। अग्नेर्ढक्(4-2-33/1236)-`आग्नेयमष्टाकपालं निर्वपेत्(वै.श्रौ.सू.1.19)। अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः पावको धूमकेतुरिति; नातः प्रत्ययो भवति।
उदश्वितोऽन्यतरस्याम्(4-2-19/1220)-औदश्वित्कम्। औदश्वितम्। तक्रम् = अरिष्टं कालशेपं दण्डाहतं मथितमिति, नातः प्रत्ययो भवति।
अशब्दसंज्ञेति किम्? दाधा घ्वदाप्(1-1-20/2373) ,तरप्तमपौ घः(1-1-23/2003)-घुग्रहणेषु घग्रहणेषु च संज्ञिनां ग्रहणम्, न संज्ञायाः।।
* सित्तद्विशेषाणां वृक्षाद्यर्थम् * (म.भा.1.176)।। सिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्-तद्विशेषाणां ग्रहणं भवतीति। किं प्रयोजनम्? वृक्षाद्यर्थम्। विभाषा वृक्षमृगतृण(2-4-12/916) इति--प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः।
*पित्पर्यायवचनस्य च स्वाद्यर्थम् *।।(म.भा.1.177) पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्-पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां चेति। किं प्रयोजनम्? स्वाद्यर्थम्। स्वे पुषः(3-4-40/3361)-स्वपोषं पुष्टः। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्।
* जित्पर्यायवचनस्यैव राजाद्यर्थम् *।।(म.भा.1.177) जिन्निर्देशः कर्तव्यः। ततो वक्त्व्यम्-पर्यायवचनस्यैव ग्रहणं भवतीति, न स्वरूपस्य, नापि तद्विशेषाणाम्। किं प्रयोजनम्? राजाद्यर्थम्। सभाराजाऽमनुष्यपूर्वा(2-4-23/826)-इनसभम्; ईश्वरसभम्। तस्यैव न भवति-राजसभा। तद्विशेषाणां च न भवति-पुष्यमित्रसभा, चन्द्रगुप्तसभा।
*झित्तद्विशेषाणां च मत्स्याद्यर्थम् *।।(म.भा.1.177) झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्--तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम् मत्स्याद्यर्थम्।पक्षिमत्स्यमृगान् हन्ति(4-4-35>./1585) इति ठक्। पाक्षिकः, मात्स्यिकः। तद्विशेषाणाम्-शाकुनिकः। पर्यायाणां न भवति-अजिह्मान् हन्ति, अनिमिषान् हन्तीति। *अथैकस्येष्यते-मीनान् हन्तीति मैनिकः।
</1-1-68>
अणुदित्सवर्णस्य चाप्रत्ययः।। <1-1-69>।।
परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य; प्रत्ययं वर्जयित्वा। आद् गुणः(6-1-87/69), अस्य च्वौ(7-4-32/2118),यस्येति च(6-4-148/34)। स्वरानुनासिक्यकालभिन्नस्य ग्रहणं भवति। उदित्खल्वपि-चुटू(1-3-7/189),लशक्वतद्धिते(1-3-8/195)। चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति।
अप्रत्यय इति किम्? सनाशंसभिक्ष उः(3-2-168/3148) , अ सांप्रतिके(4-3-9/1379)-दीर्घो न भवति।।
</1-1-69>
तपरस्तत्कालस्य।। <1-1-70>।।
तः परो यस्मात्सोऽयं तपरः,तादपि परस्तपरः, तपरो वर्णस्तत्कालस्यात्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति, स्वस्य च रूपस्य। विध्यर्थमिदम्। अण् इति नानुवर्तने। अणामन्येषां च तपराणाम् इदमेव ग्रहणकशास्त्रम्। अतो भिस ऐस्(7-1-9/203) इत्येवमादिषु पूर्वग्रहणकशास्त्रं न प्रवर्तत एव। अतपरा अणस्तस्यावकाशः।
किमुदाहरणम्?अतो भिस ऐस्(7-1-9/203)--वृक्षैः, प्लक्षैः। विड्वनोरनुनासिकस्यात्(6-4-41/2982)--अब्जाः, गोजाः।
तत्कालस्येति किम्? खट्वाभिः, मालाभिः।।
</1-1-70>
आदिरन्त्येन सहेता।। <1-1-71>।।
आदिरन्त्यनेत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य। अण्। अक्। अच्। हल्। सुप्। तिङ्।
अन्त्येनेति किम्? सुडिति तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत्।।
</1-1-71>
येन विधिस्तदन्तस्य।। <1-1-72>।।
येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य समुदायस्य ग्राहको भवति, स्वस्य च रूपस्य। एरच्(3-3-56/3231)--इवर्णान्तादच्प्रत्ययो भवति--चयः,जयः, अयः। ओरावश्यके(3-1-125/2886) उवर्णान्ताद् ण्यद्भवति--अवश्यलाव्यम्, अवश्यपाव्यम्।।

*समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः *।।(म.भा.1.184) द्वितीयान्तं श्रितादिभिः सह समस्यते--कष्टश्रितः । इह मा भूत्-कष्टं परमश्रित इति । प्रत्ययविधौ-नडादिभ्यः फक्(4-1-99/1101), नडस्यापत्यं नाडायनः । इह मा भूत्--सूत्रनडस्यापत्यं सौत्रनाडिः ।
किमविशेषेण ? नेत्याह ।।
* उगिद्विर्णग्रहणवर्जमित वाच्यम् *।।(म.भा.1.185) उगितश्च(4-1-6/455) इति ङीप्प्रत्ययस्तदन्तादपि भवति । भवती, अतिभवती । वर्णग्रहणम्-अत इञ्(4-1-95/1095) । दाक्षिः, प्लाक्षिः।।
*यस्मिन्विधिस्तदादावल्ग्रहणे*।।(म.भा.1.188) अल्ग्रहणेषु यस्मिंन्विधिस्तदादाविति वक्तव्यम् । अचि श्नुधातुभ्रुवां य्वोरियङुवङौ(6-4-77/271) इति--श्रियः, भ्रुवः ।।
</1-1-72>
वृद्धिर्यस्याचामादिस्तद् वृद्धम् ।।<1-1-73>।।
यस्येति समुदाय उच्यते । अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतस्तच्छब्दरूपं वृद्धसंज्ञं भवति । अचाम् इति जातौ बहुवचनम् । शालीयः, मालीयः, औपगवीयः, कापटवीयः।
आदिरिति किम् ? सभासन्नयने भवः साभासन्नयनः ।
*वा नामधेयस्य वृद्धसंज्ञा वक्तव्या*। (म.भा.1.189)देवदत्तीयाः, दैवदत्ताः ।
*गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम् *।(म.भा.1.190) घृतप्रधानो रौढिः = घृतरौढिः, तस्य छात्रा घृतरौढीयाः । ओदनप्रधानः पाणिनिः = ओदनपाणिनिः, तस्य छात्रा ओदनपाणिनीयाः, वृद्धाम्भीयाः, वृद्धकाश्यपीयाः ।

- जिह्वाकात्यहरितकात्यवर्जम्*।(म.भा.1.190) जैह्वाकाताः, हारितकाताः ।।

</1-1-73>
त्यदादीनि च ।। <1-1-74>।।
यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते । इह तु न सम्बध्यते । त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति । त्यदीयम्, तदीयम्, एतदीयम्, इदमीयम्, अदसीयम्; त्वदीयम्, त्वादायनिः, मदीयम्, मादायनिः, भवदीयम्, किमीयम् ।।
</1-1-74>
एङ् प्राचां देशे ।। <1-1-75>।।
यस्याचामादिग्रहणमनुवर्त्तते । एङ् यस्याचामादिस्तत्प्राचां देशाभिधाने वृद्धसंज्ञं भवति । एणीपचनीयः, भोजकटीयः, गोनर्दीयः ।
एङिति किम् ? आहिच्छत्रः, कान्यकुब्जः । प्राचामिति किम् ? देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो दैवदत्तः ।
देश इति किम् ? गोमत्यां भवा मत्स्या गौमताः ।
प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमाध्यायस्य प्रथमः पादः
</1-1-75>

# काशिका/प्रथमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pb4
< काशिका | प्रथमोऽध्यायः
अथ प्रथमाध्याये द्वितीयः पादः

गाङ्कुटादिभ्योऽञ्णिन्ङित् ।। <1-2-1> ।।
अतिदेशोऽयम् । `गाङ् इति इङादेशो गृह्यते, न `गाङ् गातौ(धा.पा.950) इति; ङकारस्यानन्यार्थत्वात् । कुटादायोऽपि--`कुट कौटिल्ये(धा.पा.1367)इत्येतदारभ्य यावत् `कुङ् शब्दे(धा.पा.1402) इति । एभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्ययाः ङितो भवन्ति । ङिद्वद्भवन्तीत्यर्थः । गाङः--अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । कुटादीभ्यः--कुटिता, कुटितुम्, कुटितव्यम् । उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम् ।
अञ्णिदिति किम् ? उत्कोटयति, उच्चुकोट, उत्कोटकः, उत्कोटो वर्तते ।
*व्यचेः कुटादित्वमनसीति वक्तव्यम् *। विचिता, विचितुम्, विचितव्यम् । अनसीति किम् ? उरुव्यचाः ।
</1-2-1>
विज इट् ।। <1-2-2> ।।
`ओविजी भयचलनयोः(धा.पा.1290),अस्मात्परः इडादिः प्रत्ययो ङिद्वद्भवति । उद्विजिता, उद्विजितुम्, उद्विजितव्यम् ।
इडिति किम् ? उद्वेजनम्, उद्वेजनीयम् ।
</1-2-2>
विभाषोर्णोः ।। <1-2-3> ।।
`इट् इति वर्तते । `ऊर्णुञ् आच्छादने(धा.पा.1039), अस्मात्पर इडादिः प्रत्ययो विभाषा ङिद्वद्भवति । प्रोर्णुविता, प्रोर्णविता । इडित्येव-प्रोर्णवनम्, प्रोर्णवनीयम् ।
</1-2-3>
सार्वधातुकमपित् ।। <1-2-4> ।।
सार्वधातुकं यदपित् तन्ङिद्वद्भवति । कुरुतः, कुर्वन्ति । चिनुतः, चिन्वन्ति ।
सार्वधातुकमिति किम् ? कर्ता, कर्तुम्, कर्तव्यम् । अपिदिति किम् ? करोति, करोषि, करोमि ।
</1-2-4>
असंयोगाल्लिट् कित् ।। <1-2-5> ।।
`अपित् इति वर्तते । असंयोगान्ताद्धातोः परो लिट् प्रत्ययोऽपित् किद्भवति । बिभिदतुः, बिभिदुः । चिच्छिदतुः, चिच्छिदुः । ईजतुः, ईजुः ।
असंयोगादिति किम् ?सस्रंसे, दध्वंसे । अपिदित्येव--बिभेदिथ।
</1-2-5>
इन्धिभवतिभ्यां च ।। <1-2-6> ।।
</1-2-6>
`इन्धि-भवति इत्येताभ्यां परो लिट्प्रत्ययः किद्भवति । `समीधे दस्युहन्तमम्(ऋ.<6-16-15>), `पुत्र ईधे अथर्वणः(ऋ.<6-16-14>) । भवतेः खल्वपि-बभूव। बभूविथ ।
इन्धेः संयोगार्थं ग्रहणम् । भवतेः पिदर्थम् । अत्रेष्टिः-* श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम् * ।। श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुः । देभतुः, देभुः । परिषस्वजे, परिषस्वजाते ।।
</6-16-15>
मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।। <1-2-7> ।।
मृड,मृद, गुध, कुष, क्लिश, वद, वस्--इत्येतेभ्यः परः क्त्वाप्रत्ययः किद्भवति । नक्त्वा सेट्(1-2-18/3322) इति कित्त्वप्रतिषेधं वक्ष्यति, तस्यायं पुरस्तादपकर्षः । गुध-कुष-क्लिशीनां तु रलो व्युपधाद्(1-2-26/2617) इति विकल्पे प्राप्ते नित्यार्थ वचनम् । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा ।।
</1-2-7>
रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।। <1-2-8>।।
रुद, विद, मुष, ग्रहि, स्वपि, प्रच्छ-- इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः । रुद-विद-मुषीणां रलो व्युपधाद्(1-2-26/2617) इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम् । ग्रहेर्विध्यर्थमेव । स्वपिप्रच्छयोः सन्नर्थं ग्रहणम् । किदेव हि क्त्वा । रुदित्वा, रुरुदिषति । विदित्वा, विविदिषति । मुषित्वा, मुमुषिषति । गृहीत्वा, जिघृक्षति । सुप्त्वा, सुषुप्सति । पृष्ट्वा, पिपृच्छिषति । ग्रहादीनां कित्त्वात्संप्रसारणं भवति । किरश्च पञ्चभ्यः (7-2-75/2611) इति प्रच्छेरिडागमः ।
</1-2-8>

इको झल् ।। <1-2-9> ।।
`सन् इत्यनुवर्तते । `क्त्वा इति निवृत्तम् । इगन्ताद्धातोः परो झलादिः सन् किद्भवति । चिचीषति । तुष्टूषति । चिकीर्षति ।
इक इति किम्? पिपासति । तिष्ठासति । झलिति किम् ? शिशयिषते ।
किमर्थमिदमुच्यते ? गुणो मा भूदिति । अज्झनगमां सनि(6-4-16/2614) इति दीर्घत्वं गुणस्य बाधकं भविष्यति ? यथैव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बाधेत । तस्माद्दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते । चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाद् णिलोपेन बाध्यते- ज्ञीप्सति ।।
`इकः कित्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ।।
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ।।(म.भा.1.19)
</1-2-9>
हलन्ताच्च ।। <1-2-10> ।।
`इकः सन् झल्कित् इति वर्तते । समीपवचनोऽन्तशब्दः । हल् चासावन्तश्च हलन्तः । इगन्तादिक्समीपाद्धलः परः सन् झलादिः किद्भवति । बिभित्सति । बुभुत्सते । इक इत्येव-- यियक्षते । झलित्येव--विवर्त्तिषते ।
दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् । धिप्सति । धीप्सति ।।
</1-2-10>
लिङ्सिचावात्मनेपदेषु ।। <1-2-11> ।।
`हलन्तादिको झल्कित् इति वर्तते । `सन् इति निवृत्तम् । इगन्तादिक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः । भित्सीष्ट, भुत्सीष्ट । सिचि खल्वपि--अभित्त, अबुद्ध । इक इत्येव--यक्षीष्ट, अयष्ट । संप्रसारणं हि स्यात् ।
आत्मनेपदेष्विति किम् ? अस्राक्षीत्, अद्राक्षीत् । सृजिदृशोझल्यमकिति(6-1-58/2405) इत्यमागमो न स्यात् । हलन्तादित्येव--चेषीष्ट, अचेष्ट । गुणो न स्यात् । झलित्येव--वर्तिषीष्ट, अवर्त्तिष्ट । गुणो न स्यात् ।
लिङ्सिचाविति किम् ? द्वेष्टा, द्वेक्ष्यति ।।
</1-2-11>
उश्च ।। <1-2-12> ।।
ऋवर्णान्ताद्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः । कृषीष्ट । हृषीष्ट । सिचः खल्वपि--अकृत । अहृत । झलित्येव--वरिषीष्ट । अवरिष्ट । वृतो वा (7-2-38/2391) । अवरीष्ट ।।
</1-2-12>
वा गमः ।। <1-2-13> ।।
लिङ्सिचावात्मनेपदेषु इति वर्तते । गमेर्धातोः परौ लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः ।
संगंसीष्ट, संगसीष्ट । सिचः खल्वपि-- समगत, समगंस्त । कित्वपक्षे अनुनासिकलोपो भवति अनुदात्तोपदेशवनतितनोत्यादीनाम्(6-4-37/2428) इति ।।
</1-2-13>
हनः सिच् ।। <1-2-14> ।।
हन्तेर्धातोः परः सिच् किद्भवति । आहत । आहसाताम् । आहसत । सिचः कित्वादनुनासिकलोपः ।
सिज्ग्रहणं लिङ्निवृत्त्यर्थम्, उत्तरत्रानुवृत्तिर्मा भूत् ।
आत्मनेपदग्रहणमुत्तरार्थमनुवर्तते । इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात्कित्त्वस्य प्रयोजनं नास्ति ।।
</1-2-14>
यमो गन्धने ।। <1-2-15> ।।
`सिच्, आत्मनेपदेषु इति वर्तते । यमेर्धातोर्गन्धने वर्तमानात्परः सिच् प्रत्ययः किद्भवति आत्मनेपदेषु परतः । गन्धनम् = सूचनम्, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम् । अनेकार्थत्वाद्धातूनां यमिस्तत्र वर्तते । उदायत । उदायसाताम् । उदायसत । सूचितवानित्यर्थः । सिचः कित्वादनुनासिकलोपः । आङो यमहनः (1-3-28/2695) इत्यात्मनेपदम् ।
गन्धन इति किम् ? उदायंस्त पादम् । उदायंस्त कूपादुदकम् । उद्धृतवानित्यर्थः । सकर्मकत्वेऽपि समुदाङ्भ्यो यमोऽग्रन्थे(1-3-75/2742)इत्यात्मनेपदम् ।।
</1-2-15>
विभाषोपयमने ।। <1-2-16> ।।
`यमः सिच्, आत्मनेपदेषु इति वर्तते । यमेर्धातोरुपयमने वर्तमानात् परः सिच्प्रत्ययो विभाषा किद्भवति, आत्मनेपदेषु परतः । उपायत कन्याम्, उपायंस्त कन्याम् । उपायत भार्याम्, उपायंस्त भार्याम् ।
उपयमनम् = स्वीकरणम्, विवाहः, दारकर्म, पाणिग्रहणमित्यर्थः । उपाद्यमः स्वकरणे (1-3-56/2729)इत्यात्मनेपदम् ।।
</1-2-16>

स्थाध्वोरिच्च ।। <1-2-17> ।।
`सिच्`आत्मनेपदेषु इति वर्तते । तिष्ठतेर्धातोः घुसंज्ञकानां च इकारश्चान्तादेशः सिच्च किद्भवाति आत्मनेपदेषु परतः । उपास्थित, उपास्थिषाताम्, उपास्थिषत । घुसंज्ञकानाम्- अदित, अधित ।।
`इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः ।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ।।(म.भा.1.199)
</1-2-17>
न क्त्वा सेट् ।। <1-2-18> ।।
क्त्वाप्रत्ययः सेण्न किद्भवति । देवित्वा, वर्त्तित्वा ।
सेडिति किम् ? कृत्वा, हुत्वा । क्त्वाग्रहणं किम् ? निगृहीतिः । उपस्निहितिः । निकुचितिः ।।
`न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ।।
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशान्निगृहीतिः प्रयोजनम् ।।
</1-2-18>
निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।। <1-2-19>।।
`न सेट् इति वर्तते । शीङ्-स्विदि-मिदि-क्ष्विदि-धृष्--इत्येतेभ्यः परो निष्ठाप्रत्ययः सेण्न किद्भवति । शयितः, शयितवान् । प्रस्वेदितः, प्रस्वेदितवान् । प्रमेदितः, प्रमेदितवान् । प्रक्ष्वेदितः, प्रक्ष्वेदितवान् । प्रधर्षितः,
प्रधर्षितवान् । सेडित्येव-स्विन्नः, स्विन्नवान् । स्विदादीनाम् आदितश्च(7-2-16/3036) इति निष्ठायामिट् प्रतिषिध्यते । विभाषा भावादि कर्मणोः(7-2-17/3054) इति पक्षेऽभ्यनुज्ञायते, स विषयः कित्त्वप्रतिषेधस्य ।।
</1-2-19>
मृषस्तितिक्षायाम् ।। <1-2-20> ।।
मृषेर्धातोः तितिक्षायामर्थे निष्ठा सेण्न किद्भवति । तितिक्षा ।। क्षमा । मर्षितः, मर्षितवान् ।
तितिक्षायामिति किम् ? अपमृषितं वाक्यमाह ।।
</1-2-20>
उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।। <1-2-21> ।।
`निष्ठा, सेण्न, कित् इति वर्तते । उदुपधाद्धातोः परो भावे आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययः सेडन्यतरस्यां न किद्भवति । द्युतितमनेन, द्योतितमनेन । प्रद्योतितः, प्रद्युतितः । मुदितमनेन, मोदितमनेन । प्रमुदितः, प्रमोदितः ।
उदुपधादिति किम् ? लिखितमनेन । भावादिकर्मणोरिति किम् ? रुचितं कार्षापणं ददाति । सेडित्येव--प्रभुक्त ओदनः ।
व्यवस्थितविभाषा चेयम् । तेन शब्विकरणानामेव भवति । `गुध परिवेष्टने(धा.पा.1120), गुधितमित्यत्र न भवति ।।
</1-2-21>
पूङः क्त्वा च ।। <1-2-22> ।।
`अन्यतरस्याम् इति न स्वर्यते; उत्तरसूत्रे पुनर्वावचनात् । `न सेट् इति वर्तते । पूङश्च इड्विहितः क्लिशः क्त्वानिष्ठयोः(7-2-50/3049),पूङश्च(7-2-51/3050) इति । पूङ परो निष्ठाप्रत्ययः क्त्वा च सेण्न किद्भवति । पवितः, पवितवान् ।
क्त्वाप्रत्ययस्य नक्त्वा सेट्(1-2-18/3322) इति सिद्ध एव प्रतिषेधः । तस्य ग्रहणमुत्तरार्थम् । तथा चोक्तम्--`नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः क्त्वाग्रहणमुत्तरार्थम् इति ।(म.भा.1.201)।।
</1-2-22>
नोपधात् थफान्ताद्वा ।। <1-2-23> ।।
निष्ठा इति निवृत्तम् । नकारोपधाद्धातोस्थकारान्तात्फकारान्ताच्च परः क्त्वाप्रत्ययः सेड् वा न किद्भवति । ग्रथित्वा, ग्रन्थित्वा । श्रथित्वा, श्रन्थित्वा । गुफित्वा, गुम्फित्वा ।
नोपधादिति किम् । रेफित्वा । गोफित्वा । थफान्तादिति किम् ? सित्वा । ध्वंसित्वा ।।
</1-2-23>
वञ्चिलुञ्च्यृतश्च ।। <1-2-24> ।।
वञ्चि-लुञ्चि-ऋत्-इत्येतेभ्यः परः क्त्वाप्रत्ययः सेड् वा न किद्भवति । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । ऋतित्वा, अर्तित्वा । ऋतेरीयङ्(3-1-29/2422) आर्धधातुके विकल्पितः । स यत्र पक्षे नास्ति तत्रेदमुदाहरणम् । सेडित्येव--वक्त्वा ।।
</1-2-24>
तृषिमृषिकृशेः काश्यपस्य ।। <1-2-25> ।।
न क्त्वा सेट्(1-2-18/3322) इति प्रतिषेधे प्राप्ते विकल्प्यते । तृषि,मृषि,कृशि--इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्याचार्यस्य मते वा न किद्भवति । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृशित्वा, कर्शित्वा । काश्यपग्रहणं पूजार्थम्, वेत्येव हि वर्तते ।।
</1-2-25>

रलो व्युपधाद्धलादेः संश्च।। <1-2-26> ।।
`वा इति वर्तते, `सेट् इति च । उश्च इश्च वी,वी उपधे यस्य स व्युपधः । उकारोपधादिकारोपधाच्च
धातो रलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः । द्युतित्वा, द्योतित्वा । दिद्युतिषते, दिद्योतिषते । लिखित्वा, लेखित्वा । लिलिखिषति, लिलेखिषति ।
रल इति किम् ? देवित्वा, दिदेविषति व्युपधादिति किम्? वर्त्तित्वा, विवर्त्तिषते । हलादेरिति किम् ? एषित्वा, एषिषिषति । सेडित्येव--भुक्त्वा, बुभुक्षते ।।
</1-2-26>
ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।। <1-2-27> ।।
`ऊ इति त्रयाणामयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देशः । ह्रस्वदीर्घप्लुतः इति द्वन्द्वैकवद्भावे पुंल्लिङ्गनिर्देशः । उ ऊ ऊ3-इत्येवंकालोऽज् यथाक्रमं ह्रस्वदीर्घप्लुत--इत्येवंसंज्ञो भवति । उकालो ह्रस्वः--दधि, मधु । ऊकालो दीर्घः--कुमारी, गौरी । ऊ3कालः प्लुतः--देवदत्ता 3 अत्र न्वसि । कालग्रहणं परिमाणार्थम् ; दीर्घप्लुतयोः ह्रस्वसंज्ञा मा भूत् ।
आलूय, प्रलूय--ह्रस्वस्य पिति कृति तुक्(6-1-71/2858) इति तुङ् न भवति ।
अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम्--प्रतक्ष्य, प्ररक्ष्य । ह्रस्वाश्रयस्तुङ् मा भूत्-तितउच्छत्रम् । दीर्घात्(6-1-75/148) पदान्ताद्वा(6-1-76/149)इति वाभाषा तुङ् मा भूत् ।
ह्रस्वदीर्घप्लुतप्रदेशाः-ह्रस्वोनपुंसके प्रातिपदिकस्य(1-2-47/318),अकृत्सार्वधातुकयोर्दीर्घः(7-4-25/2298),वाक्यस्य टेः प्लुत उदात्तः(8-2-82/93) ।।
</1-2-27>
अचश्च ।। <1-2-28>।।
परिभाषेयं स्थानिनियमार्था । ह्रस्वदीर्घप्लुताः स्वसंज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः । वक्ष्यति--ह्रस्वो नपुंसके प्रातिपदिकस्य(1-2-47/318) । रै-अतिरि । नौ-अतिनु । गो-उपगु ।
अच इति किम्? सुवाग् ब्राह्मणकुलम् । अकृत्सार्वधातुकयोर्दीर्घः(7-4-25/2298)--चीयते, श्रूयते । अच इति किम् ? भिद्यते । छिद्यते । वाक्यस्य टेः प्लुत उदात्तः(8-2-82/93) देवदत्ता3, यज्ञदत्ता3 । अच इति किम् ? अग्निची3त्, सोमसू3त्--तकारस्य मा भूत् ।
स्वसंज्ञया विधाने नियमः । अजिति वर्तते, तइह मा भूत्-- द्यौः, पन्थाः, सः । द्युभ्याम्, द्युभिः । अत्र नियमो नास्ति ।।
</1-2-28>
उच्चैरुदात्तः ।। <1-2-29> ।।
`अच् इति वर्तते । उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव, त इह तद्गुणेऽचि परिभाष्यन्ते । उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति ।
उच्चैरिति च श्रुतिप्रकर्षो न गृह्यते--उच्चैर्भाषते, उच्चैः पठतीति; किं तर्हि? स्थानकृतमुच्चत्वं संज्ञिनो विशेषणम् । ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते, तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवति । यस्मिन्नुच्चार्यमाणे गात्राणामायामः = निग्रहो भवति, रूक्षता = अस्निग्धता स्वरस्य, संवृतता कण्ठविवरस्य । ये, ते,के ।
उदात्तप्रदेशाः--आद्युदात्तश्च(3-1-3/3708)इत्येवमादयः ।।
</1-2-29>
नीचैरनुदात्तः ।। <1-2-30> ।।
`अच् इति वर्तते । नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो भवति । समाने स्थाने नीचभागे निष्पन्नोऽच् अनुदात्तः । यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गः = मार्दवम् भवति, स्वरस्य मृदुता = स्निग्धता, कण्ठविवरस्योरुता = महत्ता । त्व-सम-सिम-नेमेत्यनुच्चानि । नमस्ते रुद्र नीलकण्ठ सहस्राक्ष ।
अनुदात्तप्रदेशाः-अनुदात्तौ सुप्पितौ(3-1-4/3709) इत्येवमादयः ।।
</1-2-30>
समाहारः स्वरितः ।। <1-2-31> ।।
`अच् इति वर्तते । उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरितसंज्ञो भवति । सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाचौ । तौ समाह्रियेते यस्मिन्नचि तस्य स्वरितःइत्येषा संज्ञा विधीयते । शिक्यम्, कन्या, सामन्यः, क्व ।
स्वरितप्रदेशाः-तित्स्वरितम्(6-1-185/3729)इत्येवमादयः ।।
</1-2-31>
तस्यादित उदात्तमर्धह्रस्वम् ।। <1-2-32> ।।
उदात्तानुदात्तस्वरसमाहारः स्वरितिः इत्युक्तम् । तत्र न ज्ञायते-कस्मिन्नंशे उदात्तः ? कस्मिन्नंशेऽनुदात्तः ? कियान्वा उदात्तः ? कियान्वा अनुदात्तः इति ? तदुभयमनेनाख्यायते । तस्य स्वरितस्य आदावर्धह्रस्वमुदात्तम्, परिशिष्टमनुदात्तम् । अर्धह्रस्वम् इति चार्धमात्रोपलक्ष्यते ।
ह्रस्वग्रहणमतन्त्रम् । सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः । शिक्यमित्यत्रार्द्धमात्रा आदित उदात्ता, अपरार्धमात्रा अनुदात्ता, एकश्रुतिर्वा । कन्या इत्यत्रार्द्धमात्राऽऽदित उदात्ता,अध्यर्धमात्रा अनुदात्ता । माणवका3 माणवकेत्यत्रार्धमात्राऽऽदित उदात्ता, अर्धतृतीयमात्रा अनुदात्ता ।।

</1-2-32>
एकश्रुति दूरात्संबुद्धौ ।। <1-2-33> ।।
त्रैस्वर्ये पदानां प्राप्ते दूरात्संबुद्धावैकश्रुत्यं विधीयते । एका श्रुतिर्यस्य तदिदमेकश्रुति । एकश्रुति वाक्यं भवति । दूरात्संबोधयति येन वाक्येन तत्संबोधनं संबुद्धिः, नैकवचनं संबुद्धिः । स्वराणामुदात्तादीनामविभागो भेदतिरोधानमेकश्रुतिः । आगच्छ भो माणवक देवदत्ता3 ।
दूरादिति किम् ? आगच्छ भो माणवक देवदत्त।।
</1-2-33>
यज्ञकर्मण्यजपन्यूङ्खसामसु ।। <1-2-34> ।।
</1-2-34>
त्रैस्वर्येण वेदे मन्त्राः पठ्यन्त, तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते, जपन्यूङ्खसामानि वर्जायित्वा । यज्ञकर्मणि मन्त्राणामैकश्रुत्यं भवति । अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । `अपां रेतांसि जिन्वतो3म्(ऋ.<8-44-16>) ।
</8-44-16>
यज्ञकर्मणीति किम् ? संपाठे मा भूत् । अजपेष्विति किम् ? `ममाग्ने वर्चो विहवेष्वस्तु(ऋ.<10-128-1>) । जपः = अनुकरणमन्त्रः, उपांशुप्रयोगः ।
अन्यूङ्खेति किम् ? न्यूङ्खा ओकाराः षोडश;तेषु केचिदुदात्ताः, केचिदनुदात्ताः ।
असामस्विति किम् ? ए3 विश्वं समत्रिणं दहा3 । सामानि वाक्यविशेषस्था गीतय उच्यन्ते । तत्रैकश्रुतिर्न भवति ।।
</10-128-1>
उच्चैस्तरां वा वषट्कारः ।। <1-2-35>।।
`यज्ञकर्मणि इति वर्तते । यज्ञकर्मणि वषट्कारः उच्चैस्तरां वा भवति, एकश्रुतिर्वा । `वषट् शब्देनात्र `वौषट् शब्दो लक्ष्यते, `वौषट्-इत्यस्यैवेदं स्वरविधानम् ।
यद्येवम्, वौषड्ग्रहणमेव कस्मान्न कृतम् ? वैचित्र्यार्थम् । विचित्रा हि सूत्रस्य कृतिः पाणिनेः ।
</1-2-35>
सोमस्याग्ने वीही3 वौ3षट् । सोमस्याग्ने वीही3 वौ3 षट् ।।(ऐ.ब्रा.<3-5-4>.6)
</3-5-4>
विभाषा छन्दसि ।। <1-2-36> ।।
</1-2-36>
छन्दसि विषये विभाषा एकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव भवति । वेति प्रकृते विभाषाग्रहणं `यज्ञकर्मणि इत्यस्य निवृत्त्यर्थम् । तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति । `इषे त्वोर्जे त्वा । इषे त्वोर्जेत्वा (वा.सं.<1-1-1>)। `अग्न आयाहि वीतये । अग्न आयाहि वीतये(ऋ.<6-16-10>) । `अग्निमीळे पुरोहितम् । अग्निमीळे पुरोहितम्(ऋ.<1-1-1>) । `शन्नो देवीरभिष्टये । शन्नो देवोरभिष्टये(ऋ<10-9-4>) । व्यवस्थितविकल्पोऽयमिति केचित् । व्यवस्था च वेदे मन्त्रदले नित्यं त्रेस्वर्यम्, ब्राह्मणदले नित्यमैकश्रुत्यमिति ।।
इच्छासंहितयोरार्षे छन्दो वेदे च छन्दसि ।
इति नानार्थकोशात् छन्दसि वर्णसंहितायामिति भट्टाचार्यचरणा इति । भाषायामप्येकश्रुतिर्विभाषा भवतीति सिद्धम् ।।
</1-1-1>
न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।। <1-2-37> ।।
सुब्रह्मण्या नाम निगदः, तत्र `यज्ञकर्मणि इति विभाषा छन्दसि(1-2-36/3665) इति च एकश्रुतिः प्राप्ता प्रतिषिध्यते । सुब्रह्मण्यायामेकश्रुतिर्न भवति । यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति ।
</1-2-37>
सुब्रह्मण्यो3 मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्(श.ब्रा.<3-3-1>.19)।
अत्र सुब्रह्मण्योमित्योकारस्तित्स्वरेण स्वरितः, तस्योदात्तो विधीयते ।
इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः । उदात्तादनुदात्तस्य स्वरितः(8-4-66/3660) इति स्वरितः प्रसक्तः, तस्यानेनोदात्तः क्रियते; तेन द्वावप्युदात्तौ संपन्नौ । आगच्छेत्याकार उदात्तः । ततः परोऽनुदात्तः स्वरितः, तस्यानेनोदात्तः क्रियते । तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः । पश्चिम एकोऽनुदात्तः ।
हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ताः, द्वावनुदात्तौ ।
मेधातिथेरिति षष्ठ्यन्ते परमामन्त्रितमनुप्रविशति सुबामन्त्रिते पराङ्गवत्स्वरे(2-1-2/3656) इति । ततः सकलस्यामन्त्रिताद्युदात्तत्वे कृते द्वितीयमक्षरमनुदात्तम् । तस्य उदात्तादनुदात्तस्य स्वरितः(8-4-66/3660) इति स्वरितत्वे प्राप्ते इदमुदात्तत्वं विधीयते । तेन द्वावप्युदात्तौ भवतः । शेषमनुदात्तम् ।
`वृषणश्वस्य मेने इति समानं पूर्वेण । गौरावस्कन्दिन्निति तथैव द्वे आद्ये अक्षरे उदात्ते, शेषमनुदात्तम् । अहल्यायै जारेति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः । द्वावुदात्तौ । शेषमनुदात्तम् ।
कौशिकब्राह्मणेति समस्तमामन्त्रितमाद्युदात्तम् । तत्र पूर्ववद् द्वावुदात्तौ । शेषमनुदात्तम् ।

एवं गौतमब्रुवाणेति द्वावुदात्तौ । शेषमनुदात्तम् ।
श्वः सुत्यामागच्छ मघवन्निति श्वःशब्द उदात्तः, सुत्यामित्यन्तोदात्तः । संज्ञायां समजनिपद(3-3-99/3276) इति क्यपो विधाने `उदात्तः इति वर्तते । आगच्छेति द्वावुदात्तौ । अन्त्योऽनुदात्तः । मघवन्निति पदात्परमामन्त्रितं निहन्यते ।।
</3-3-1>
देवब्रह्मणोरनुदात्तः ।। <1-2-38> ।।
सुब्रह्मण्यायामेव देवा ब्रह्माणः इति पठ्यते, तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते । देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति । देवा ब्रह्माण आगच्छत । द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतः, तस्यानुदात्तो भवति ।।
</1-2-38>
स्वरितात्संहितायामनुदात्तानाम् ।। <1-2-39> ।।
</1-2-39>
`एकश्रुतिः इति वर्तते । संहितायां विषये स्वरितात्परेषामनुदात्तानामेकश्रुतिर्भवति । `इमं मे गङे यमुने सरस्वति शुतिद्रि(ऋ.<10-75-5>) । माणवक जटचिलकाध्यापक क्व गमिष्यसि । इममित्यन्तोदात्तम्, मे इति अनुदात्तम्; विधिकाल एव निघातविधानात् । तत्पुनः उदात्तादनुदात्तस्य स्वरितः(8-4-66/3660) इति स्वरितं संपद्यते । तस्मात्स्वरितात्परेषामनुदात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति । सर्व एते आमन्त्रितनिघातेनानुदात्ताः । माणवक जटिलकेति प्रथममामन्त्रितमाद्युदात्तम्, तस्य द्वितीयमक्षरं स्वरितम्, ततः परेषामनुदात्तानामेकश्रुतिर्भवति ।
संहिताग्रहणं किम् ? अवग्रहे मा भूत् । इमं मे गङ्गे यमुने सरस्वति ।।
</10-75-5>
उदात्तस्वरितपरस्य सन्नतरः ।। <1-2-40> ।।
</1-2-40>
अनुदात्तग्रहणमनुवर्तते । उदात्तः परो यस्मात्स उदात्तपरः, स्वरितः परो यस्मात्स स्वरितपरः, उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति । अनुदात्ततर इत्यर्थः । `देवा मरुतः पृश्निमातरोऽपः(पै.<3-31-1>) । मातर इत्यनुदात्तः । अप इत्यन्तोदात्तः--ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः(6-1-171>य3717)इति । तत्रानुदात्तयोरेकादेश ओकारोऽनुदात्तः । तस्योदात्ते परभूते सन्नतर आदेशो भवति । इमं मे गङ्गे यमुने सरस्वति शुतिद्रि । इकारोऽनुदात्तः । शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान्न निहन्यते, अनुदात्तं सर्वमपादादौ(8-1-18/403) इति । तस्य प्रथममक्षरमुदात्तम्, तस्मिन्परभूते पूर्वस्य सरस्वतीकारस्य सन्नतर आदेशो भवति । माणवक जटिलकाध्यापक क्व गमिष्यसि । क्व इति स्वरितः, तस्मिन्परभूते क इति अनुदात्तस्तस्य सन्नतर आदेशो भवति ।।
</3-31-1>
अपृक्त एकाल्प्रत्ययः ।। <1-2-41> ।।
`अपृक्त इतीयं संज्ञा भवति, एकाल् यः प्रत्ययस्तस्य । असहायवाची एकशब्दः । स्पृशोऽनुदके क्विन्(3-2-58/432)-घृतस्पृक् । भजो ण्विः(3-2-62/2976)-अर्धभाक्, पादभाक् ।
एकालिति किम् ? दर्विः, जागृविः । प्रत्यय इति किम् ? सुराः ।
अपृक्तप्रदेशाः--वेरपृक्तस्य(6-1-67/375)इत्येवमादयः ।।
</1-2-41>
<K.1.330>
तत्पुरुषः समानाधिकरणः कर्मधारयः ।। <1-2-42> ।।
`तत्पुरुष इति समासविशेषस्य संज्ञां वक्ष्यति । स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवति । अधिकरणशब्दोऽभिधेयवाची <K.1.331> । समानाधिकरणः = समानाभिधेयः । परमराज्यम्, उत्तमराज्यम् । अकर्मधारये राज्यम् इत्युत्तरपदाद्युदात्तं न भवति । पाचकवृन्दारिका । <K.1.332> तत्पुरुष इति किम् ? पाचिकाभार्यः । समानाधिकरण इति किम् ? ब्राह्मणराज्यम् । कर्मधारयप्रदेशाः --कर्मधारये निष्ठा इत्येवमादयः ।।
</1-2-42>
प्रथमानिर्दिष्टं समास उपसर्जनम् ।। <1-2-43> ।।
<K.1.333>
प्रथमया विभक्त्या यन्निर्द्दिश्यते समासशास्त्रे तदुपसर्जनसंज्ञं भवति । समासे इति समासविधायि शास्त्रं गृह्यते । वक्ष्यति -- <K.1.334> द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इति द्वितीयासमासे द्वितीयेत्येतत्प्रथमानिर्दिष्टम् । तृतीयासमासे तृतीयेति, चतुर्थीसमासे चतुर्थीति, पञ्चमीसमासे पञ्चमीति, षष्ठीसमासे, षष्ठीति, सप्तमीसमासे सप्तमीति । कष्टश्रितः । शङ्कुलाखण्डः । यूपदारु । वृकभयम् ।
राजपरुषः । अक्षशौण्डः ।
उपसर्जनप्रदेशाः उपसर्जनं पूर्वम् इत्येवमादयः ।।
</1-2-43>
<K.1.335>
एकविभक्ति चापूर्वनिपाते ।। <1-2-44> ।।

एका विभक्तिर्यस्य तदिदमेकविभक्ति, समासे विधीयमाने यन्नियतविभक्तिकं द्वितीये सम्बन्धिनि बहुभिर्विभक्तभिर्युज्यमानेऽप्येकयैव <K.1.336> विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवति अपूर्वनिपाते। पूर्वनिपातं पूर्वनिपाताख्यमुपसर्जनकार्यं वर्जयित्वा।
निरादयः क्रान्ताद्यर्थे पञ्चम्या। पूर्वपदे नानाविभक्तिकेऽप्युत्तरपदं पञ्चम्यन्तमेव भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्क्रान्तं कौशाम्ब्या निष्क्रौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्याः निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। एवं निर्वाराणसिः।
एकविभक्तीति किम्? राजकुमारी। अपूर्वनिपात इति किम्? न हि भवति कौशाम्बीनिरिति।।
</1-2-44>
अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।। <1-2-45>।।
अभिधेयवचनोऽर्थशब्दः। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा। डित्थः। कपित्थः। कुण्डम्। पीठम्।
अर्थवदिति किम्? वनम्, धनमिति नान्तस्यावधेर्मा भूत्। न-लोपो हि स्यात्। अधातुरिति किम्? हन्तेर्लङ्, अहन्--नलोपो हि स्यात्। अप्रत्यय इति किम्? काण्डे, कुड्ये--ह्रस्वो नपुंसके प्रतिपदिकस्य(1-2-47/318) इति ह्रस्वः स्यात्।
*अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते *।।(म.भा.1.220) अध्यागच्छति। प्रलम्बते।
प्रातिपदिकप्रदेशाः--ह्रस्वो नपुंसके प्रातिपदिकस्य(1-2-47/318) इत्येवमादयः।।
कृत्तद्धितसमासाश्च।। 1 2 46।।
कृतस्तद्धिताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। `अप्रत्ययः इति पूर्वसूत्रे पर्युदासात्कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयते। अर्थवत्समुदायानां समासग्रहणं नियमार्थम्। कृत्-कारकः हारकः, कर्त्ता, हर्त्ता। तद्धितः-औपगवः, कापटवः। समासः-राजपुरुषः, ब्राह्मणकम्बलः। समासग्रहणस्य नियमार्थत्वाद्वाक्यस्यार्थवतः संज्ञा न भवति।।
</1-2-45>
ह्रस्वो नपुंसके प्रातिपदिकस्य।।<1-2-47>।।
नपुंसकलिङ्गेऽर्थे यत्प्रातिपदिकं वर्तते तस्य ह्रस्वो भवति आदेशोऽलोन्त्यस्याचः। अतिरि कुलम्, अतिनु कुलम्।
नपुंसक इति किम्? ग्रामणीः। सेनानीः। प्रातिपदिकस्येति <K.1.347> किम्? काण्डे तिष्ठतः। कुड्ये तिष्ठतः। प्रातिपदिकग्रहणसामर्थ्यादेकादेशः पूर्वस्यान्तवन्न भवति।।
</1-2-47>
गोस्त्रियोरुपसर्जनस्य।। <1-2-48>।।
`प्रातिपदिकस्य इति वर्तते। `गो इति स्वरूपग्रहणम्, `स्त्री इति प्रत्ययग्रहणम्; स्वरितत्वात्। उपसर्जनग्रहणं तयोर्विशेषणम् --गोरुपसर्जनस्य, स्त्रीप्रत्ययान्तस्योपसर्जनस्येति। ताभ्यां प्रातिपदिकस्य तदन्तविधिः। उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तस्य च <K.1.348> प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। शबलगुः। स्त्रियाः -- निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः।
उपसर्जनस्येति किम्? राजकुमारी। स्वरितत्वं किम्? अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः।
<K.1.349> * ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः *।। बहुश्रेयसी। विद्यमानश्रेयसी।।
</1-2-48>
लुक्तद्धितलुकि।। <1-2-49>।।
स्त्रीग्रहणमनुवर्त्तते,उपसर्जनस्य इति च। पूर्वेण ह्रस्वत्वे प्राप्ते लुग्विधीयते। तद्धितलुकि सति स्त्रीप्रत्ययस्य उपसर्जनस्य लुग्भवति। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। दशेन्द्रः। पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलिः। आमलक्याः फलमामलकम्। बदरम्। कुवलम्।
तद्धितग्रहणं किम्? गार्ग्याः कुलं गार्गीकुलम्। लुकीति किम्? गार्गीत्वम्। उपसर्जनस्येत्येव-अवन्ती, कुन्ती, कुरूः।।
</1-2-49>
इद् गोण्याः।। <1-2-50>।।
पूर्वेण लुकि प्राप्ते इकारो विधीयते। गोण्यास्तद्धितलुकि सति इकारादेशो भवति। पञ्चभिर्गोणीभिः क्रीतः पटढ पञ्चगोणिः। दशगोणिः।
इत् इति योगविभागः। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः। दशसूचिः। स च एवंविषय एव।।
</1-2-50>
लुपि युक्तवद्व्यक्तिवचने।। <1-2-51>।।
`लुपि इति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते। तत्र लुपि युक्तवद्व्यक्तिवचने भवतः। युक्तवन् इति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते। स हि प्रत्ययार्थमात्मना युनक्ति, तस्य युक्तवतो व्यक्तिवचने लुबर्थे विधीयेते।
अथ वा-युक्तः प्रकृत्यर्थः प्रत्ययार्थेन संबद्धः, तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे वतिः। व्यक्तिवचने इति च लिङ्ग संख्ययोः पूर्वाचार्यनिर्द्देशः, तदीयमेवेदं सूत्रम्। तथा चास्य प्रत्याख्यानं भविष्यति--तदशिष्यं संज्ञाप्रमाणत्वात्(1-2-53/1295)इति।
व्यक्तिः--स्त्रीपुंनपुंसकानि, वचनम्--एकत्व-द्वित्व-बहुत्वानि। पञ्चालाः क्षत्रियाः, पुंलिङ्गाः बहुवचनविषयाः। तेषां निवासो जनपदः। यथा तेषु क्षत्रियेषु व्यक्तिवचने, तद्वज्जनपदे भवतः-पञ्चालाः, मगधाः, मत्स्याः, अङ्गाः, सुह्माः, पुण्ड्राः।
लुपीति किम्? लुकि मा भूत्। लवणः सूपः, लवणा यवागूः, लवणं शाकम्। व्यक्तिवचने इति किम्? शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनम्--विभाषौषधिवनस्पतिभ्यः(8-4-6/1051)इति णत्वं न भवति।

- हरीतक्यादिषु व्यक्तिः*।(म.भा.1.228) हरीतक्याः फलानि हरीतक्यः फलानि। *खलतिकादिषु वचनम् *।(म.भा.1.229) खलतिकस्य पर्वतस्यादूरभवानिवनानि खलतिकं वनानि ।।

</1-2-51>

विशेषणानां चाजातेः ।। <1-2-52> ।।

`लुपि इति वर्तते । लुबर्थस्य यानि विशेषणानि तेषामपि व्यक्तिवचने भवतः,जातिं वर्जयित्वा । पञ्चालाः रमणीयाः, बह्वन्नाः,बहुक्षीरघृताः, बहुमाल्यफलाः। गोदौ रमणीयौ, बह्वन्नौ, बहुक्षीरघृतौ, बहुमाल्यफलौ।

अजातेरिति किम् ?पञ्चलाः जनपदः। गौदौ ग्रामः।

जात्यर्थस्य चायं युक्तवद्भावप्रतिषेधः । तेन जातिद्वारेण यानि विशेषणानि तेषामपि युक्तवद्भावो न भवति--पञ्चालाः जनपदो रमणीयो बह्वन्नः,गोदौ ग्रामो रमणीयो बह्ववन्न इति।

*मनुष्यलुपि प्रतिषेधो वक्तव्यः* (म.भा.1.229)। चञ्चाभिरूपः। वर्ध्रिकादर्शनीयः ।।

</1-2-52>

तदशिष्यं संज्ञाप्रमाणत्वात् ।। <1-2-53> ।।

तदिति प्रकृतं युक्तवद्भावलक्षणं निर्दिश्यते। तदशिष्यं न वक्तव्यम्, कस्मात् ? संज्ञाप्रमाणत्वात्।

संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम्। पञ्चाला वरणा इति च नैते योगशब्दाः, किं तर्हि ? जनपदादीनां संज्ञा एताः।

तत्र लिङ्गं वचनं च स्वभावसिद्धमेव, न यत्नप्रतिपाद्यम्;यथा--आपः, दाराः, गृहाः, सिकताः, वर्षा इति ।।

</1-2-53>

लुब्योगाप्रख्यानात् ।। <1-2-54> ।।

लुबप्यशिष्यः । योऽयम् जनपदे लुप्(4-2-81/1293), वरणादिभ्यश्च (4-2-82/1301) इति लुबुच्यते, अयं न वक्तव्यः, किं कारणम् ? योगाप्रख्यानात्। न हि पञ्चाला वरणा इति योगः =संबन्धः प्रख्यायते। नैतदुपलभामहे--वृक्षयोगान्नगरे वरणा इति, किं तर्हि ? संज्ञा एताः। तस्मादत्र तस्य निवासः(4-2-69/1281),अदूरभवश्च(4-2-70/1282) इति तद्धितो नैवोत्पद्यते, किं लुपो विधानेन ।।

</1-2-54>

योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।। <1-2-55> ।।

`पञ्चालादयः संज्ञाशब्दाः, न योगनिमित्ताः इत्युक्तम् । तच्चावश्यमेवाभ्युपगन्तव्यम्, योगप्रमाणे हि तदभावेऽदर्शनं स्यात् । यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात्, ततस्तदभावेऽदर्शनम् =अप्रयोगः स्यात्। दृश्यते च संप्रति विनैव क्षत्रियसम्बन्धेन जनपदेषु पञ्चालादिशब्दः, ततोऽवसीयते-नायं योगनिमित्तकः, किं तर्हि ? रूढिरूपेणैव तत्र प्रवृत्त इति ।।

</1-2-55>

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।। <1-2-56> ।।

`अशिष्यम् इति वर्तते। प्रधानं समासे किञ्चित्पदम्, प्रत्ययः तव्यदादिः, ताभ्यामर्थवचनम् = अर्थाभिधानमनेन प्रकारेण भवतीति पूर्वाचार्यैः परिभाषितम् । * प्रधानोपसर्जने च प्रधानार्थं सह ब्रूतः, *प्रकृतिप्रत्ययो सहार्थं ब्रूतः इति । तत्पाणिनिराचार्यः प्रत्याचष्टे--अशिष्यमेतत्, अर्थस्यान्यप्रमाणत्वादिति । अन्य इति शास्त्रापेक्षया लोको व्यपदिश्यते । शब्दैरर्थाभिधानं स्वाभाविकम्, न पारिभाषिकम्; अशक्यत्वात्, लोकत एवार्थावगतेः ।

यैरपि व्याकरणं न श्रुतम्, तेऽपि राजपुरुषमानय इत्युक्ते राजविशिष्टं पुरुषमानयन्ति; न राजानम्, नापि पुरुषमात्रम्। औपगवमानय इत्युक्ते उपगुविशिष्टमपत्यमानयन्ति; नोपगुम्, नाप्यपत्यमात्रम्, नोभौ। यश्च लोकतोऽर्थः सिद्धः, किं तत्र यत्नेन !।।

</1-2-56>

कालोपसर्जने च तुल्यम् ।। <1-2-57> ।।

`अशिष्यम् इति वर्तते। कालोपसर्जने चाशिष्ये। कस्मात् ? अर्थस्यान्यप्रमाणत्वात्। तुल्यशब्दो हेत्वनुकर्षणार्थः। अशिष्यविशेषणं चैतत्। कालोपसर्जने च तुल्यमशिष्ये भवतः।

इहान्ये वैयाकरणाः कालोपसर्जनयोः परिभाषां कुर्वन्ति । आन्याय्यादुत्थानादान्याय्याच्च संवेशनात्-एषोऽद्यतनः कालः । अपरे पुनराहुः-अहरुभयतोर्द्धरात्रम्-एषोऽद्यतनः काल इति। तथोपसर्जनपरिभाषां कुर्वन्ति-अप्रधानमुपसर्जनमिति।

तत्पाणिनिराचार्यः प्रत्याचष्टे-लोकतोऽर्थावगतेः । यैरपि व्याकरणं न श्रुतं तेऽप्याहुः-इदमस्माभिरद्य कर्तव्यम्, इदं श्वः कर्तव्यम्, इदम् ह्यः कृतमिति; नैवं व्युत्पाद्यन्ते ! तथोपसर्जनम्-वयमत्र गृहे ग्रामे वा उपसर्जनमप्रधानमिति गम्यते। यश्च लोकतोऽर्थः सिद्धः, किं तत्र यत्नेन !

यद्येवम्, पूर्वसूत्र एव कालोपसर्जनग्रहणं कस्मान्न क्रियते, किमर्थो योगविभागः ? प्रदर्शनार्थः।

अन्यदप्येवञ्जातीयकमशिष्यमिति । तथा च पूर्वाचार्याः परिभाषन्ते-मत्वर्थे बहुव्रीहिः,पूर्वपदार्थप्रधानोऽव्ययीभावः, उभयपदार्थप्रधानो द्वन्द्वः इत्येवमादि; तदशिष्यमिति ।।

</1-2-57>

<K.1.364>

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ।। <1-2-58>।।

`अशिष्यम् इति निवृत्तम्। जातिर्नामायमेकोऽर्थः, तदभिधाने <K.1.365> एकवचनमेव प्राप्तम्, अत इदमुच्यते। जातेराख्या जात्याख्या, जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति। जात्यर्थो बहुवद् भवतीति यावत्। तेन तद्विशेषणानामजातिशब्दानामपि संपन्नादीनां

बहुवचनमुपपद्यते । सम्पन्नः यवः, सम्पन्नाः यवाः । सम्पन्नः व्रीहिः, सम्पन्नाः व्रीहयः । पूर्ववयाः ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसः ब्राह्मणाः प्रत्युत्थेयाः ।
जातिग्रहणं किम् ? देवदत्तः, यज्ञदत्तः । आख्यायामिति किम् ? <K.1.366> काश्यपप्रतिकृतिः काश्यपः । भवत्ययं जातिशब्दः, न त्वनेन जातिराख्यायते, किं तर्हि ? प्रतिकृतिः । एकस्मिन्निति किम् ? व्रीहियवौ ।
* संख्याप्रयोगे प्रतिषेधो वक्तव्यः * ।। एको व्रीहिः सम्पन्नः सुभिक्षं करोति ।।
</1-2-58>
<K.1.367>
अस्मदो द्वयोश्च ।। <1-2-59>।।
अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति । अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूवः, वयं ब्रूमः ।।
<K.1.368> * सविशेषणस्य प्रतिषेधो वक्तव्यः * । अहं देवदेत्तो ब्रवीमि । अहं गार्ग्यः ब्रवीमि । अहं पटुः ब्रवीमि ।
* युष्मदि गुरावेकेषाम् *। त्वं मे गुरुः, यूयं मे गुरवः ।।
</1-2-59>
फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।। <1-2-60> ।।
चकारः द्वयोः इत्यनुकर्षणार्थः । फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च <K.1.369> द्वयोर्नक्षत्रयोर्बहुवचनमन्यतरस्यां भवति । कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः ।
नक्षत्र इति किम् ? फल्गुन्यौ माणविके ।।
</1-2-60>
छन्दसि पुनर्वस्वोरेकवचनम् ।। <1-2-61> ।।
</1-2-61>
`अन्यतरस्याम्इत्युनुवर्त्तते । द्वयोर्द्विवचने प्राप्ते पुनर्वस्वोश्छन्दसि <K.1.370> विषये एकवचनमन्यतरस्यां भवति । `पुनर्वसुर्नक्षत्रमदितिर्देवता(मै.स.<2-13-2>) ।` पुनर्वसू नक्षत्रमदितिर्देवता(तै.सं.<4-4-10>) । नक्षत्र इत्येव-पुनर्वसू माणवकौ ।
छन्दसीति किम् ? पुनर्वसू इति ।।
</2-13-2>
विशाखयोश्च ।। <1-2-62> ।।
</1-2-62>
`छन्दसि इति वर्तते । द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनमन्यतस्यां भवति । `विशाखं नक्षत्रमिन्द्राग्नी देवता(मै.सं.<2-13-20>) । `विशाखं नक्षत्रमिन्द्राग्नी देवता(तै.सं.<4-4-10>.2) ।
</2-13-20>
तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।। <1-2-63>।। छन्दसि इति निवृत्तम्। तिष्य एकः पुनर्वसू द्वौ तेषां द्वन्द्वो बह्वर्थः । तत्र बहुवचने प्राप्ते द्विवचनं विधीयते । तिष्यपुनर्वस्वोर्नक्षत्रविषये द्वन्द्वे बहुवचनप्रसङ्गे नित्यं द्विवचनं भवति । उदितौ तिष्यपुनर्वसू दृश्यते ।
<K.1.371> तिष्यपुनर्वस्वोरिति किम् ? विशाखानुराधाः ।
नक्षत्रेति किम् ? तिष्यश्च माणवकः पुनर्वसू माणवकौ = तिष्यपुनर्वसवः माणवकाः । ननु च प्रकृतमेव नक्षत्रग्रहणं किमर्थं पुनरुच्यते ? पर्यायाणामपि यथा स्यात् - तिष्यपुनर्वसू, सिद्ध्यपुनर्वसू ।
द्वन्द्व इति किम् ? यस्तिष्यस्तौ पुनर्वसू येषां त इमे `तिष्यपुनर्वसवः, उन्मुग्धाः । तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणा उच्यन्ते । तेन नक्षत्रसमास एवायम् ।
<K.1.372> बहुवचनस्येति किम् ? एकवचनस्य मा भूत् - तिष्यपुनर्वसु इदमिति ।
`सर्वो द्वन्द्वो विभाषया एकवद्भवति इत्यस्यैतदेव ज्ञापकम् । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ।।
</1-2-63>
सरूपाणामेकशेष एकविभक्तौ ।। <1-2-64> ।।

समानं रूपमेषामिति सरूपाः । सरूपाणां शब्दानां एवविभक्तौ परत एकशेषो भवति । एकः शिष्यते, इतरे निवर्तन्ते । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः ।

प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्तम्, तस्मादेकशेषः ।
सरूपाणामिति किम् ? प्लक्षन्यग्रोधाः । रूपग्रहणं किम् ? भिन्नोऽप्यर्थे यथा स्यात्-अक्षाः, पादाः, माषा । एकग्रहणं किम् ? द्विबह्वोः शेषो मा भूत् । शेषग्रहणं किम् ? आदेशो मा भूत् ।
<K.1.379> एकविभक्ताविति किम् ? पयः पयो जरयति । ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि ।।
</1-2-64>
वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।। <1-2-65> ।।

<K.1.380> `शेष इति वर्त्तते । `यूना इति सहयोगे तृतीया । वृद्धो यूना सहवचने शिष्यते, युवा निवर्त्तते । वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य । अपत्यमन्तर्हितं वृद्धमिति । वृद्धयूनोः सहवचने वृद्धः शिष्यते तल्लक्षणश्चेदेव विशेषः । तदिति वृद्धियूनोर्निर्देशः, लक्षणशब्दो निमित्तपर्यायः, चेच्छब्दो यद्यर्थे, एवकारोऽवधारणे, विशेषो वैरूप्यम् । वृद्धयुवनिमित्तकमेव यदि वैरूप्यं भवति ततो वृद्धः शिष्यते, युवा निवर्तते । समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वात्स्यश्च वात्स्यायनश्च वात्स्यौ ।
<K.1.381> वृद्ध इति किम् ? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ । यूनेति किम् ? गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ । तल्लक्षण इति किम् ? गार्ग्यवात्स्यायनौ । एवकारः किमर्थः ? भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ । कुत्सा सौवीरत्वं च भागवित्तिकस्यापरो विशेषो विद्यते ।।
</1-2-65>
<K.1.382>
स्त्री पुंवच्च ।। <1-2-66> ।।
शेषः इति वर्त्तते, वृद्धो यूना इति च सर्वम् । स्त्री वृद्धा यूना सहवचने शिष्यते तल्लक्षणश्चेदेव विशेषो भवति । पुंस इवास्याः कार्यं भवति । स्त्र्यर्थः पुमर्थवद्भवति । गार्गी च गार्ग्यायणश्च गार्ग्यौ । वात्सी च वात्स्यायनश्च वात्स्यौ । दाक्षी च दाक्षायणश्च दाक्षी ।।
</1-2-66>
<K.1.383>
पुमान् स्त्रिया ।। <1-2-67> ।।
तल्लक्षणश्चेदेव विशेष इति वर्त्तते । वृद्धो यूना इति निवृत्तम् । स्त्रिया सहवचने पुमान् शिष्यते, स्त्री निवर्त्तते । स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च कुक्कुटौ । तल्लक्षणश्चेदेव विशेष इत्येव - कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ ।
<K.1.384> एवकारः किमर्थः ? इन्द्रश्च इन्द्राणी च इन्द्रेन्द्राण्यौ । पुंयोगादाख्यायाम् इत्यपरो विशेषः । पुमानिति किम् ? प्राक्च प्राची च प्राक्प्राच्यौ । `प्राक् इत्यव्ययमलिङ्गम् ।।
</1-2-67>
भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।। <1-2-68> ।।
यथासंख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम् । स्वस्रा सहवचने भ्रातृशब्दः शिष्यते - भ्राता च स्वसा च भ्रातरौ । दुहित्रा सहवचने पुत्रशब्दः शिष्यते - पुत्रश्च दुहिता च पुत्रौ ।।
</1-2-68>
नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।। <1-2-69> ।।
`तल्लक्षणश्चेदेव विशेषः इति वर्त्तते । नपुंसकानपुंसकमात्रकृते <K.1.385> विशेषेऽनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच्चास्य कार्यं भवति अन्यतरस्याम् । शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तद् इदं शुक्लम्, तानि इमानि शुक्लानि ।
अनपुंसकेनेति किम् ? शुल्कं च शुक्लं च शुक्लं च शुक्लानि । `एकवच्च इति न भवति ।।
</1-2-69>
पिता मात्रा ।। <1-2-70> ।।
<K.1.386> `अन्यतरस्याम् इति वर्त्तते, न `एकवत् इति । मात्रा सहवचने पितृशब्दः शिष्यते अन्यतरस्याम् । माता च पिता च पितरौ । मातापितरौ इति वा ।।
</1-2-70>
श्वशुरः श्वश्र्वा ।। <1-2-71> ।।
`अन्यतरस्याम् इति वर्तते । श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यते अन्यतरस्याम् । श्वशुरश्च श्वश्रूश्च श्वशुरौ । श्वश्रूश्वशुरौ इति वा ।।
</1-2-71>
त्यदादीनि सर्वैर्नित्यम् ।। <1-2-72>।।
त्यदादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च । सर्वग्रहणं साकल्यार्थम् । नित्यग्रहणं विकल्पनिवृत्यर्थम् । स च देवदत्तश्च तौ । यश्च देवदत्तश्च यौ ।
<K.1.387> * त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते *। स च यश्च यौ । यश्च कश्च कौ ।।
</1-2-72>
ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ।। <1-2-73> ।।
ग्राम्याणां पशूनां संघाः ग्राम्यपशुसंघाः, एतेषु सहविवक्षायां स्त्री शिष्यते । पुमान् स्त्रिया इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते । अतरुणग्रहणं सामर्थ्यात्पशुविशेषणम् । गावः इमाः । अजाः इमाः ।
<K.1.388> ग्राम्यग्रहणं किम् ? रुरवः इमे । पृषताः इमे । पशुष्विति किम् ? ब्राह्मणाः, क्षत्रियाः । संघेष्विति किम् ? एतौ गावौ चरतः । अतरुणेष्विति किम् ? वत्साः इमे । बर्कराः इमे ।
* अनेकशफेष्विति वक्तव्यम् * । इह मा भूत् - अश्वाः इमे ।।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमाध्यायस्य द्वितीयः पादः ।।
</1-2-73>

# काशिका/प्रथमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pb5

< काशिका | प्रथमोऽध्यायः

अथ प्रथमाध्याये तृतीयः पादः

भूवादयो धातवः ।। <1-3-1> ।।

भू इत्येवमादयः शब्दाः क्रियावचना धातुसंज्ञा भवन्ति । भू(धा.पा.1)-भवति । एध(धा.पा.2)-एधते । स्पर्द्ध(धा.पा.3)-स्पर्द्धते । धातु शब्दः पूर्वाचार्य संज्ञा । ते क्रियावचनानां संज्ञां कृतवन्तः । तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावाचिनामेव भूवादीनां धातुसंज्ञा विधीयते ।।

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।

भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ।।

धातुप्रदेशाः-धातोः(3-1-91/2829) इत्येवमादयः ।।

</1-3-1>

उपदेशेऽजनुनासिक इत् ।। <1-3-2> ।।

उपदिश्यतेऽनेनेत्युपदेशः = शास्त्रवाक्यानि ; सूत्रपाठः, खिलपाठश्च । तत्र योऽनुनासिकः स इत्संज्ञो भवति । एध । स्पर्द्ध । प्रतिज्ञानुनासिक्याः पाणिनीयाः(व्या.प.121) ।

</1-3-2>

उपदेश इति किम् ? अभ्र आँ अपः(ऋ.<5-48-1>) । अजिति किम् ? आतो मनिन्क्वनिब्वनिपश्च(3-2-74/3418) । अनुनासिक इति किम् ? सर्वस्याचो मा भूत् ।

इत्प्रदेशाः-आदितश्च(7-2-16/3036) इत्येवमादयः ।।

</5-48-1>

हलन्त्यम् ।। <1-3-3> ।।

उपदेशे इति वर्त्तते । अन्ते भवमन्त्यम् । धात्वादेः समुदायस्य यदन्त्यं हल् तदित्संज्ञं भवति । अ इ उ ण्-णकारः । ऋ लृ क् - ककारः । ए ओ ङ्-ङकारः । ऐ औ च् - चकारः ।

उपदेश इत्येव--अग्निचित् । सोमसुत् । हस्य ल् हलिति द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं द्रष्टव्यम्, तेन प्रत्याहारपाठे हल् इत्यत्र लकारस्य इत्संज्ञा क्रियते । तथा च सति, हलन्त्यम् इत्यत्र प्रत्याहारे नेतरेतराश्रयदोषो भवति ।।

</1-3-3>

न विभक्तौ तुस्माः ।। <1-3-4> ।।

पूर्वेण प्राप्तायामित्संज्ञायां विभक्तौ वर्तमानानां तवर्गसकारमकाराणां प्रतिषेध उच्यते । तवर्गः, टाङसिङसामिनात्स्याः(7-1-12/201)-वृक्षात्, प्लक्षात् । सकारः, जस्-ब्राह्मणाः । तस्, थस्-पचतः पचथः । मकारः-अपचताम्, अपचतम् ।

विभक्ताविति किम् ? अचो यत्(3-1-97/2842),ऊर्णाया युस्(5-2-123/1929), रुधादिभ्यः श्नम्(3-1-78/2543) । किमोऽत्(5-3-12/1959), इटोऽत्(3-4-106/2257) इत्यत्र प्रतिषेधो न भवति; अनित्यत्वादस्य प्रतिषेधस्य । इदमस्थमुः(5-3-24/1972) इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते ।।

</1-3-4>

आदिर्ञिटुडवः ।। <1-3-5> ।।

इत् इति वर्तते । आदिशब्दः प्रत्येकमभिसंबध्यते । ञि, टु, डु इत्येतेषां समुदायानामादितो वर्तमानानामित्संज्ञा भवति । ञिमिदा(धा.पा.743)-मिन्नः । ञिधृषा(धा.पा.1270)-धृष्टः । ञिक्ष्विदा(धा.पा.740)-क्ष्विण्णः । ञि इन्धी(धा.पा.1449)-इद्धः । टुवेवृ(धा.पा.367)-वेपथुः । टुओश्वि(धा.पा.1010)-श्वयथुः । डुपचष्(धा.पा.996)- पक्त्रिमम् । डुवप्(धा.पा.1003)-उप्त्रिमम् । डुकृञ्(धा.पा.1473)-कृत्रिमम् ।

आदिरिति किम् ? पटूयति, कण्डूयति । उपदेशे इत्येव-ञिकारीयति ।।

</1-3-5>

षः प्रत्ययस्य ।। <1-3-6> ।।

षकारः प्रत्ययस्यादिरित्संज्ञो भवति । शिल्पिनि ष्वुन्(3-1-145/2907)--नर्तकी, रजकी ।

प्रत्ययस्येति किम् ? षोडः । षण्डः । षडिकः । आदिरित्येव-अविमह्योष्टिषच्(उणादि.1.45)-अविषः, महिषः ।।

</1-3-6>

चुटू ।। <1-3-7> ।।

चवर्गटवर्गौ प्रत्ययस्यादी इत्संज्ञौ भवतः । गोत्रे कुञ्जादिभ्यश्च्फञ्(4-1-98/1099)-कौञ्चायन्यः । छस्य ईयादेशं वक्ष्यति । जस्-ब्राह्मणाः । झस्यान्तादेशं वक्ष्यति । शण्डिकादिभ्यो ञ्यः(4-3-92/1472)-शाण्डिक्यः । टवर्गः,चरेष्टः(3-2-16/2930)-कुरुचरी, मद्रचरी । ठस्य इकादेशं वक्ष्यति । सप्तम्यां जनेर्डः(3-2-97/3007)- उपसरजः, मन्दुरजः । ढस्यैयादेशं वक्ष्यति । अन्नाण्णः(4-4-85/1637)-आन्नः ।

पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम् । तेन वित्तश्चुञ्चुप्चणपौ(5-2-26/1827)-केशचुञ्चुः, केशचणः । अवात्कुटारच्च(5-2-30/1831) । नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः(5-2-31/1832)-अवटीटः । आदिरित्येव-कर्मणि घटोऽठच्(5-2-35/1836)-कर्मठः ।।
</1-3-7>
लशक्वतद्धिते ।। <1-3-8> ।।
तद्धितवर्जितस्य प्रत्ययस्यादितो वर्तमाना लकारशकारकवर्गा इत्संज्ञा भवन्ति । लकारः, ल्युट् च(3-3-115>.3290)-चयनम्, जयनम् । शकारः-कर्त्तरि शप्(3-1-68/2167)-भवति, पचति । कवर्गः, क्तक्तवतू निष्ठा(1-1-26/3012)-भुक्तः, भुक्तवान् ।प्रियवशे वदः खच्(3-2-38/2953)-प्रियंवदः, वशंवदः । ग्लाजिस्थश्चग्स्नुः(3-2-139/3119)-ग्लास्नुः । जिष्णुः । भूष्णुः । भञ्जभासमिदो घुरच्(3-2-161/3141)-भङ्गुरम् ।टाङसिङसामिनात्स्याः(7-1-12/201)- वृक्षात् । वृक्षस्य ।
अतद्धित इति किम् ? चूडालः । लोमशः । कर्णिका ।।
</1-3-8>
तस्य लोपः ।। <1-3-9> ।।
तस्येत्संज्ञकस्य लोपो भवति । तथा चैवोदाहृतम् । तस्य ग्रहणं सर्वलोपार्थम् । अलोऽन्त्यस्य मा भूत्-आदिर्ञिटुडवः (1-3-5/2289) इति ।।
</1-3-9>
यथासंख्यमनुदेशः समानाम् ।। <1-3-10> ।।
संख्याशब्देनात्र क्रमो लक्ष्यते । यथासंख्यं यथाक्रममनुदेशो भवति । अनुदिश्यत इत्यनुदेशः । पश्चादुच्चार्यत इत्यर्थः । समानाम् = समसंख्यानां समं परिपठितानामुद्देशिनामनुदेशिनां च यथाक्रममुद्देशिभिरनुदेशिनः संबध्यन्ते । तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः(4-3-94/1474) । प्रथमात् प्रथमः, द्वितीयाद् द्वितीय इत्यादि । तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ।
समानामिति किम् ? लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः(1-4-90/552) । लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्त्रयः;सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा भवति ।
इह कस्मान्न भवति-वेशोयशआदेर्भगाद्यल् ख च(4-4-131/3477) इति ? स्वरितेन लिङ्गेन यथासंख्यम् । यत्र नेष्यते, तत्र स्वरितत्वं न प्रतिज्ञायते । स्वरितेनाधिकारः(1-3-11/46) इति स्वरितग्रहणं पूर्वेणापि संबध्यते ।
</1-3-10>
स्वरितेनाधिकारः ।। <1-3-11> ।।
स्वरितेन इति इत्थम्भूतलक्षणे तृतीया । स्वरितो नाम स्वरविशेषो वर्णधर्मः, तेन चिह्नेनाधिकारो वेदितव्यः । अधिकारः = विनियोगः । स्वरितगुणयुक्तं शब्दरूपमधिकृतत्वादुत्तरत्रोपतिष्ठते ।
प्रतिज्ञास्वरिताः पाणिनीयाः-प्रत्ययः(3-1-1/180),धातोः(3-1-91/2829), ङ्याप्प्रातिपदिकात्(4-1-1/182),अङ्गस्य(6-4-1/200), भस्य,पदस्य ।।
</1-3-11>
अनुदात्तङित आत्मनेपदम् ।। <1-3-12> ।।
अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते, तत्रायं नियमः क्रियते-अनुदात्तेतो ये धातवो ङितश्च तेभ्य एव आत्मनेपदं भवति, नान्येभ्यः । अनुदात्तेद्भ्यः-आस(धा.पा.1922), आस्ते । वस(धा.पा.1024), वस्ते । ङिद्भ्यः खल्वपि-षूङ्(धा.पा.1032), सूते । शीङ्(धा.पा.1033), शेते ।।
</1-3-12>
भावकर्मणोः ।। <1-3-13> ।।
लः कर्मणि च भावे चाकर्मकेभ्यः(3-4-69/2152)इति भावकर्मणोर्विहितस्य लस्य तिबादयः सामान्येन वक्ष्यन्ते, तत्रेदमुच्यते-भावे कर्मणि चात्मनेपदं भवति । भावे- ग्लायते भवता, सुप्यते भवता, आस्यते भवता । कर्मणि- क्रियते कटः, ह्रियते भारः । कर्मकर्तरि- लूयते केदारः स्वयमेवेति, परस्मैपदं न भवति । तस्य विधाने द्वितीयं कर्तृग्रहणमनुवर्तते, तेन कर्तैव यः कर्ता तत्र परस्मैपदं भवति ।।
</1-3-13>
कर्त्तरि कर्मव्यतिहारे ।। <1-3-14> ।।
कर्मशब्दः क्रियावाची, व्यतिहारो विनिमयः । यत्रान्यसंबन्धिनीं क्रियामन्यः करोति इतरसंबन्धिनीं चेतरः, स कर्मव्यतिहारः । तद्विशिष्टक्रियावचनाद्धातोरात्मनेपदं भवति । व्यतिलुनते, व्यतिपुनते ।
कर्मव्यतिहारे इति किम्? लुनन्ति ।
कर्तृग्रहणमुत्तरार्थम्-शेषात्कर्त्तरि परस्मैपदम्(1-3-78/2159) इति ।
</1-3-14>
न गतिहिंसार्थेभ्यः ।। <1-3-15> ।।
पूर्वेणात्मनेपदं प्राप्तं प्रतिषिध्यते । गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे आत्मनेपदं न भवति । व्यतिगच्छन्ति, व्यतिसर्पन्ति । हिंसार्थेभ्यः- व्यतिहिंसन्ति, व्यतिघ्नन्ति ।

- प्रतिषेधे हसादीनामनुपसंख्यानम् *(म.भा.त1.278) व्यतिहसन्ति, व्यतिजल्पन्ति, व्यतिपठन्ति ।
- हरतेरप्रतिषेधः * । (म.भा.1.279) सम्प्रहरन्ते राजानः ।

</1-3-15>
इतरेतरान्योऽन्योपपदाच्च ।। <1-3-16> ।।
इतरेतरः, अन्योऽन्यः- इत्येवमुपपदाद्धातोः कर्मव्यतिहारे आत्मनेपदं न भवति । इतरेतरस्य व्यतिलुनन्ति, अन्योऽन्यस्य व्यतिलुनन्ति ।

- परस्परोपपदाच्चेति वक्तव्यम् * (म.भा.1.279)। परस्परस्य व्यलुनन्ति ।।

</1-3-16>
नेर्विशः ।। <1-3-17> ।।
शेषात्कर्तरि इति परस्मैपदे प्राप्ते, निपूर्वाद्विश आत्मनेपदं विधीयते । नेः परस्माद्विश आत्मनेपदं भवति । निविशते, निविशन्ते ।
नेरिति किम् ? प्रविशति । यदागमास्तद्ग्रहणेन गृह्यन्ते(प.11), तेनाटा नास्ति व्यवधानम् । न्यविशत । नेरुपसर्गस्य ग्रहणम्- अर्थवद्ग्रहणे नानर्थकस्य (व्या.प.1) इति, तस्मादिह न भवति- मधुनि विशन्ति भ्रमराः ।।
</1-3-17>
परिव्यवेभ्यः क्रियः ।। <1-3-18> ।।
डुक्रीञ् द्रव्यविनिमये(धा.पा.1474) ञित्वात्कर्त्रभिप्राये क्रियाफले सिद्धमात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति । परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।
पर्यादय उपसर्गा गृह्यन्ते, तेनेह न भवति- बहुविक्रीणाति वनम् ।।
</1-3-18>
विपराभ्यां जेः ।। <1-3-19> ।।
शेषात्कर्त्तरि परस्मैपदम् (1-3-78/2159) इत्यस्यापवादः । विपरापूर्वाज्जयतेर्धातोरात्मनेपदं भवति । विजयते, पराजयते । विपराशब्दावुपसर्गौ गृह्येते; साहचर्यात् । तेनेह न भवति- बहुवि जयति वनम् । परा जयति सेनेति ।।
</1-3-19>
आङो दोऽनास्यविहरणे ।। <1-3-20> ।।
अकर्त्रभिप्रायार्थोऽयमारम्भः । आङ्पूर्वाद्ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति । विद्यामादत्ते ।
अनास्यविहरण इति किम् ? आस्यं व्याददाति ।।
* आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः * (म.भा.1.279)। विपादिकां व्याददाति । कूलं व्याददाति ।

- स्वाङ्गकर्मकाच्चेति * (म.भा.1.279)। इह मा भूत्- व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।।

</1-3-20>
क्रीडोऽनुसंपरिभ्यश्च ।। <1-3-21>।।
क्रीड़ृ विहारे (धा.पा.350)- एतस्माद् अनु, सम्, परि- इत्येवंपूर्वाद् आङ्पूर्वाच्च आत्मनेपदं भवति । अनुक्रीडते, संक्रीडते, परिक्रीडते । आङः खल्वपि- आक्रीडते ।
समा साहचर्यादन्वादिरुपसर्गो गृह्यते, तेनेह कर्मप्रवचनीयप्रयोगे न भवति- माणवकमनुक्रीडति ।

- समोऽकूजने इति वक्तव्यम् *(म.भा.1.280) । संक्रीडन्ति शकटानि ।
- आगमेः क्षमायामात्मनेपदं वक्तव्यम् *(म.भा.1.280) । क्षमा = उपेक्षा, कालहरणमिति यावत् । आगमयस्व तावन्माणवकम् ।
- शिक्षेर्जिज्ञासायाम् * (म.भा.1.280)। विद्यासु शिक्षते ।
- आशिषि नाथः * (म.भा.1.280)। सर्पिषो नाथते । मधुनो नाथते । आशिषीति किम् ? माणवकमनुनाथति ।
- हरतेर्गतिताच्छील्ये *(म.भा.1.280) । पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते । गतिताच्छील्य इति किम् ? मातुरनुहरति, पितुरनुहरति ।
- किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् * (म.भा.1.280)। अपस्किरते वृषभो हृष्टः । जीविकायाम्- अपस्किरते कुक्कुटो भक्षार्थी । कुलायकरणे- अपस्किरते श्वाऽऽश्रयार्थी । हर्षादिष्विति किम् ? अपकिरति कुसुमम् ।
- आङि नुप्रच्छ्योरुपसंख्यानम् * (म.भा.1.280)। आनुते श्रृगालः, आपृच्छते गुरुम् ।
- शप उपलम्भन इति वक्तव्यम् * (म.भा.1.280)। वाचा शरीरस्पर्शनम् = उपलम्भनम् । देवदत्ताय शपते, यज्ञदत्ताय शपते । उपलम्भन इति किम् ? शपति ।।

</1-3-21>
समवप्रविभ्यः स्थः ।। <1-3-22> ।।
सम्,अव, प्र,वि- इत्येवं पूर्वात् तिष्ठतेरात्मनेपदं भवति । संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ।।

- आङः स्थः प्रतिज्ञाने इति वक्तव्यम् * (म.भा.1.280)। अस्तिं सकारमात्रमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते

।।

</1-3-22>

प्रकाशनस्थेयाख्ययोश्च।। <1-3-23> ।।

स्वाभिप्रायकथनं प्रकाशनम् । स्थेयस्याख्या स्थेयाख्या । तिष्ठन्त्यस्मिन्निति स्थेयः, विवादपदनिर्णेता लोके स्थेय इति प्रसिद्धः, तस्य प्रतिपत्त्यर्थमाख्याग्रहणम् । प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति । प्रकाशने तावत्-- तिष्ठते कन्या छात्रेभ्यः । तिष्ठते वृषली ग्रामपुत्रेभ्यः । प्रकाशयत्यात्मानमित्यर्थः । स्थेयाख्यायाम्- त्वयि तिष्ठते, मयि तिष्ठते, संशय्य कर्णादिषु तिष्ठते यः(कि.3.14) ।।

</1-3-23>

उदोऽनूर्ध्वकर्मणि ।। <1-3-24> ।।

उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्तमानादात्मनेपदं भवति । कर्मशब्दः क्रियावाची । अनूर्ध्वकर्मविशिष्टात्क्रियावचनात्तिष्ठतेरात्मनेपदं भवति । गेहे उत्तिष्ठते। कुटुम्बे उत्तिष्ठते। तदर्थं यतत इत्यर्थः ।

- उद ईहायामिति वक्तव्यम् *(म.भा.1.281) । इह मा भूत्- अस्माद् ग्रामात् शतमुत्तिष्ठति । शतमुत्पद्यते इत्यर्थः । ईहाग्रहणमनूर्ध्वकर्मण एव विशेषणम् , नापवादः ।

अनूर्ध्वकर्मणीति किम् ? आसनादुत्तिष्ठति ।।

</1-3-24>

उपान्मन्त्रकरणे ।। <1-3-25>।।

उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्तमानादात्मनेपदं भवति । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । आग्नेय्या आग्नीध्रमुपतिष्ठते ।

मन्त्रकरण इति किम् ? भर्तारमुपतिष्ठति यौवनेन ।

- उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् *(म.भा.1.281) । देवपूजायाम्-- आदित्यमुपतिष्ठते । सङ्गतिकरणे- रथिकानुपतिष्ठते । मित्रकरणे- महामात्रानुपतिष्ठते । मित्रकरणसंगतिकरणयोः को विशेषः ? संगतिकरणमुपश्लेषः, तद्यथा- गङ्गा यमुनामुपतिष्ठते; मित्रकरणं तु--विनाप्युपश्लेषेण मैत्रीसंबन्धः । पथि- अयं पन्थाः स्रुघ्नमुपतिष्ठते ।
- वा लिप्सायामिति वक्तव्यम् * (म.भा.1.281)। भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा ।

</1-3-25>

अकर्मकाच्च ।। <1-3-26> ।।

उपात् इति वर्तते । उपपूर्वात् तिष्ठतेरकर्मकक्रियावचनादात्मनेपदं भवति । यावद्भुक्तमुपतिष्ठते । भुक्तमिति इति भोजने भोजने सन्निधीयत इत्यर्थः । भावे क्तप्रत्ययः ।

अकर्मकादिति किम् ? राजानमुपतिष्ठति ।।

</1-3-26>

उद्विभ्यां तपः ।। <1-3-27> ।।

अकर्मकात् इति वर्तते । उत्, वि- इत्येवम्पूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति । उत्तपते, वितपते । दीप्यत इत्यर्थः । अकर्मकादित्येव- उत्तपति सुवर्णं सुवर्णकारः । वितपति पृष्ठं सविता ।

- स्वाङ्गकर्मकाच्चेति वक्तव्यम्* (म.भा.1.281) । उत्तपते पाणिम्, उत्तपते पृष्ठम्; वितपते पाणिम्, वितपते पृष्ठम् । स्वाङ्गं चेह न पारिभाषिकं गृह्यते- अद्रवं मूर्त्तिमत् स्वाङ्गम् इति, किं तर्हि ? स्वमङ्गं स्वाङ्गम् । तेनेह न भवति-- देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति ।

उद्विभ्यामिति किम् ? निष्टपति ।।

</1-3-27>

आङो यमहनः ।। <1-3-28> ।।

अकर्मकात् इति वर्तते । यम उपरमे (धा.पा.984), हन हिंसागत्योः(धा.पा.1092) इति परस्मैपदिनौ

। ताभ्यामकर्मकक्रियावचनाभ्यामाङ्पूर्वाभ्यामात्मनेपदं भवति । आयच्छते, आयच्छेते, आयच्छन्ते । हनः खल्वपि- आहते, आघ्नाते, आघ्नते । अकर्मकादित्येव- आयच्छति कूपाद्रज्जुम्, आहन्ति वृषलं पादेन (म.भा.1.282)।

- स्वाङ्गकर्मकाच्चेति वक्तव्यम् *(म.भा.1.282) । आयच्छते पाणिम् । आहते शिरः । स्वाङ्गं चेह न पारिभाषिकं गृह्यते, किं तर्हि ? स्वमङ्गं स्वाङ्गम्, तेनेह न भवति-- आहन्ति शिरः परकीयमिति ।।

</1-3-28>

समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ।। <1-3-29> ।।

अकर्मकात् इति वर्त्तते । शेषात् कर्त्तरि परस्मैपदे प्राप्ते, संपूर्वेभ्यो गमि - ऋच्छि- प्रच्छि- स्वरति- अर्ति- श्रु- विदि-इत्येतेभ्योऽकर्मकेभ्यो धातुभ्य

आत्मनेपदं भवति । संगच्छते । संपृच्छते । संस्वरते । संकल्पा अस्य समरन्त ।
अर्तेर्लुङि च्लेः सर्तिशास्त्यर्तिभ्यश्च(3-1-56/2382) इत्यङादेशः । तत्र परस्मैपदेषु इत्येतन्नाश्रीयते, बहुलं छन्दस्यमाङ्योगेऽपि(6-4-75/3546) इत्याट् प्रतिषिध्यते । ऋदृशोऽङि गुणः(7-4-16/3406) इति गुणः । समरन्त । संश्रृणुते । संवित्ते ।
ऋच्छेरनादेशस्य ग्रहणम्- समृच्छिष्यते । अर्त्यादेशस्य त्वर्तीत्येव सिद्धमात्मनेपदम् । अर्तिरुभयत्र पठ्यते- ऋ गतिप्रापणयो(धा.पा.936) इति भ्वादौ,ऋ सृ गतौ(धा.पा.1098/1099) इति जुहोत्यादौ; विशेषाभावाद् द्वयोरपि ग्रहणम् ।
विदेर्ज्ञानार्थस्य ग्रहणम्, परस्मैपदिभिर्गमादिभिः साहचर्यान्न लाभार्थस्य । स्वरितेत्वादुभयतो भाषस्य ।

- दृशेश्चेति वक्तव्यम् *(म.भा.1.282) । संपश्यते । अकर्मकादित्येव- ग्रामं संपश्यति ।

</1-3-29>
निसमुपविभ्यो ह्वः ।। <1-3-30> ।।
अकर्मकात् इति निवृत्तम् । अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम् । नि, सम्, उप, वि- इत्येवम्पूर्वाद् ह्वयतेर्धातोरात्मनेपदं भवति । निह्वयते, संह्वयते, उपह्वयते, विह्वयते । अकर्त्रभिप्रायार्थोऽयमारम्भः । अन्यत्र हि ञित्वात्सिद्धमेवात्मनेपदम् ।।

- उपसर्गादस्यत्यूह्योर्वा वचनम्* (म.भा.1.282)। निरस्यति, निरस्यते । समूहति, समूहते ।।

</1-3-30>
स्पर्धायामाङः ।। <1-3-31> ।।
अकर्त्रभिप्रायार्थोऽयमारम्भः । स्पर्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति । स्पर्धा = संघर्षः, पराभिभवेच्छा, स विषयो धात्वर्थस्य । धातुस्तु शब्दक्रिय एव । मल्लो मल्लमाह्वयते, छात्रश्छात्रमाह्वयते । स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः ।
स्पर्धायामिति किम् ? गामाह्वयति गोपालः ।।
</1-3-31>
गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।। <1-3-32> ।।
कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । गन्धनादिष्वर्थेषु वर्तमानात्करोतेरात्मनेपदं भवति । गन्धनम् = अपकारप्रयुक्तं हिंसात्मकं सूचनम् । तथा हि-वस्त गन्ध अर्दने(धा.पा.1684/1685),अर्द हिसायाम्(धा.पा.1829), इति चुरादौ पठ्यते । अवक्षेपणम् = भर्त्सनम् । सेवनम् = अनुवृत्तिः । साहसिक्यम् = साहसिकं कर्म । प्रतियत्नः = सतो गुणान्तराधानम् । प्रकथनम् = प्रकर्षेण कथनम् । उपयोगः = धर्मादिप्रयोजनो विनियोगः ।
गन्धने तावत्--उत्कुरुते । उदाकुरुते । सूचयतीत्यर्थः । अवक्षेपणे- श्येनो वर्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः । सेवने- गणकानुपकुरुते, महामात्रानुपकुरुते । सेवत इत्यर्थः । साहसिक्ये- परदारान्प्रकुरुते । तेषु सहसा प्रवर्तत इत्यर्थः । प्रतियत्ने- एधो दकस्योपस्कुरुते । काण्डं गुडस्योपस्कुरुते । तस्य सतो गुणान्तराधानं करोतीत्यर्थः ।

- षष्ठीसुटौ करोतिः प्रतियत्न एव विधीयते * (2-3-53/614)। प्रकथने- गाथाः प्रकुरुते । जनापवादान्प्रकुरुते । प्रकर्षेण कथयतीत्यर्थः ।
  उपयोगे- शतं प्रकुरुते, सहस्रं प्रकुरुते । धर्मार्थं शतं विनियुङ्क्त इत्यर्थः ।

एतेष्विति किम् ? कटं करोति ।
</1-3-32>
अधेः प्रसहने ।। <1-3-33> ।।
अकर्त्रभिप्रायार्थोऽयमारम्भः। अधिपूर्वात् करोतेः प्रसहने वर्तमानात् आत्मनेपदं भवति। प्रसहनमभिभवः अपराजयो वा। तमधिचक्रे। तमभिबभूव, न तेन पराजित इति वा। प्रसहने इति किम् ? अर्थमधिकरोति। पृथग्योगकरणमुपसर्गविशेषणार्थम्।।
</1-3-33>
वेः शब्दकर्मणः ।। <1-3-34> ।।
कृञः इत्यनुवर्तते । विपूर्वात्करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति । कर्मशब्द इह कारकाभिधायी, न क्रियावचनः । क्रोष्टा विकुरुते स्वरान् । ध्वाङ्क्षो विकुरुते स्वरान् ।
शब्दकर्मण इति किम् ? विकरोति पयः ।।
</1-3-34>
अकर्मकाच्च ।। <1-3-35> ।।
वेः कृञः इत्यनुवर्त्तते । विपूर्वात्करोतेरकर्मकक्रियावचनादात्मनेपदं भवति । विकुर्वन्ते सैन्धवाः । साधु दान्ताः शोभनं वल्गन्तीत्यर्थः । ओदनस्य पूर्णाश्छात्रा विकुर्वते । निष्फलं चेष्टन्त इत्यर्थः ।।
</1-3-35>
सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।। <1-3-36> ।।
णीञ् प्रापणे- अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । णीञ् प्रापणे- इत्येतस्माद्धातोरात्मनेपदं भवति सम्माननादिषु विशेषणेषु सत्सु ।
सम्माननम् = पूजनम् । नयते चार्वी लोकायते । चार्वी = बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान्नयते, उपपत्तिभिः

स्थिरीकृत्य शिष्येभ्यः प्रापयति, ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति ।
उत्सञ्जनम् = उत्क्षेपणम् । माणवकमुपनयते । उत्क्षिपतीत्यर्थः ।
आचार्यकरणम् = आचार्यक्रिया । माणवकमीदृशेन विधिनाऽऽत्मसमीपं प्रापयति,यथा स उपनेता स्वयमाचार्यः संपद्यते माणवकमुपनयते । आत्मानमाचार्यीकुर्वन्माणवकमात्मसमीपं प्रापयतीत्यर्थः ।
ज्ञानम् = प्रमेयनिश्चयः । नयते चार्वी लोकायते । तत्र प्रमेयं निश्चिनोतीत्यर्थः ।
भृतिः = वेतनम् । कर्मकरानुपनयते । भृतिदानेन समीपं करोतीत्यर्थः ।
विगणनम् = ऋणादेर्निर्यातनम् । मद्राः करं विनयन्ते । निर्यातयन्तीत्यर्थः ।
व्ययः = धर्मादिषु विनियोगः । शतं विनयते, सहस्रं विनयते । धर्माद्यर्थं शतं विनियुङ्क्त इत्यर्थः ।
एतेष्विति किम् ? अजां नयति ग्रामम् ।।
</1-3-36>
कर्तृस्थे चाशरीरे कर्मणि ।। <1-3-37> ।।
नयतेः कर्ता देवदत्तादिर्लकारवाच्यः । कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मने पदं भवति । शरीरम् = प्राणिकायः, तदेकदेशोऽपि शरीरम् । क्रोधं विनयते, मन्युं विनयते ।
कर्तृस्थ इति किम् ? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति । अशरीर इति किम् ? गडुं विनयति । घाटां विनयति । कर्मणीति किम् ? बुद्ध्या विनयति । प्रज्ञया विनयति ।।
</1-3-37>
वृत्तिसर्गतायनेषु क्रमः ।। <1-3-38> ।।
शेषात्कर्तरि परस्मैपदे(1-2-78/2159) प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति । वृत्तिः = अप्रतिबन्धः । सर्गः = उत्साहः । तायनम् = स्फीतता । वृत्तौ तावत्- ऋक्ष्वस्य क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । यजुःष्वस्य क्रमते बुद्धिः । सर्गे- व्याकरणाध्ययनाय क्रमते । उत्सहत इत्यर्थः । तायने- अस्मिन् शास्त्राणि क्रमन्ते । स्फीतीभवन्तीत्यर्थः ।
एतेष्विति किम् ? अपक्रामति ।।
</1-3-38>
उपपराभ्याम् ।। <1-3-39> ।।
वृत्तिसर्गतायेनेषु इति वर्त्तते । उपपरापूर्वात्क्रमतेर्वृत्त्यादिष्वर्थेषु वर्तमानादात्मनेपदं भवति । किमर्थं तर्हीदमुच्यते ? उपसर्गनियमार्थम् - सोपसर्गादुपपरापूर्वादेव, नान्यपूर्वादिति । उपक्रमते, पराक्रमते ।
उपपराभ्यामिति किम् ? संक्रामति । वृत्त्यादिष्वित्येव-- उपक्रामति, पराक्रामति ।।
</1-3-39>
आङ उद्गमने ।। <1-3-40> ।।
आङ्पूर्वात् क्रमतेरुद्गमने वर्त्तमानादात्मनेपदं भवति । आक्रमते आदित्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि ।
उद्गमन इति किम् ? आक्रामति माणवकः कुतुपम् ।

- ज्योतिरुद्गमन इति वक्तव्यम् *(म.भा.1.282) । इह मा भूत्- आक्रामति धूमो हर्म्यतलात् ।।

</1-3-40>
वेः पादविहरणे ।। <1-3-41> ।।
विपूर्वात्क्रमतेः पादविहरणेऽर्थे वर्तमानादात्मनेपदं भवति । विहरणम् = विक्षेपः । सुष्ठु विक्रमते, साधु विक्रमते । अश्वादीनां गतिविशेषो विक्रमणमुच्यते । यद्यपि क्रमिः पादविहरण एव पठ्यते--क्रमु पादविक्षेपे (धा.पा.473) इति, तथाप्यनेकार्थत्वाद्धातूनामेवमुक्तम् ।
पादविहरण इति किम् ? विक्रामत्यजिनसन्धिः ।।
</1-3-41>
प्रोपाभ्यां समर्थाभ्याम् ।। <1-3-42> ।।
प्र उप इत्येताभ्यामुपसर्गाभ्यां परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ तुल्यार्थौ भवतः । क्व चानयोस्तुल्यार्थता ? आदिकर्मणि । प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम् ।
समर्थाभ्यामिति किम् ? पूर्वेद्युः प्रक्रामति । गच्छतीत्यर्थः । अपरेद्युरुपक्रामति । आगच्छतीत्यर्थः । अथ उपपराभ्याम्(1-3-39/2712) इत्यनेनात्मनेपदमत्र कस्मान्न भवति ? वृत्त्यादिग्रहणं तत्रानुवर्तते, ततोऽन्यत्रेदं प्रत्युदाहरणम् ।।
</1-3-42>
अनुपसर्गाद्वा ।। <1-3-43> ।।
क्रम इति वर्त्तते । अप्राप्तविभाषेयम् । उपसर्गवियुक्तात्क्रमतेरात्मनेपदं वा भवति । क्रमते । क्रमति ।
अनुपसर्गादिति किम् ? संक्रामति ।।
</1-3-43>
अपह्नवे ज्ञः ।। <1-3-44> ।।

शेषात्कर्त्तरि परस्मैपदे प्राप्ते जानातेरपह्नवे वर्त्तमानाद् आत्मनेपदं भवति । अपह्नवः = अपह्नुतिः अपलापः । सोपसर्गश्चायमपह्नवे वर्त्तते, न केवलः । शतमपजानीते, सहस्रमपजानीते । अपलपतीत्यर्थः ।
अपह्नव इति किम् ? न त्वं किञ्चिदपि जानासि ।।
</1-3-44>
अकर्मकाच्च ।। <1-3-45> ।।
अकर्त्रभिप्रायार्थमिदम्, कर्त्रभिप्राये हि अनुपसर्गाज्ज्ञः(1-3-76/2743) वक्ष्यति। जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति । सर्पिषो जानीते, मधुनो जानीते । कथं चायमकर्मकः ? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्, किं तर्हि ? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन । तथा च -ज्ञोऽविदर्थस्य करणे(2-3-51/612) इति षष्ठी विधीयते । सर्पिषो जानीते, मधुनो जानीते । सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः ।
अकर्मकादिति किम् ? स्वरेण पुत्रं जानाति ।।
</1-3-45>
संप्रतिभ्यामनाध्याने ।। <1-3-46>।।
ज्ञः इति वर्त्तते । सकर्मकार्थमिदम् । सं प्रति इत्येवं पूर्वात् जानातेरनाध्याने वर्त्तमानादात्मनेपदं भवति । आध्यानम् = उत्कण्ठास्मरणम् । शतं सञ्जानीते । सहस्रं सञ्जानीते । शतं प्रतिजानीते, सहस्रं प्रतिजानीते ।
अनाध्याने इति किम् ? मातुः सञ्जानाति, पितुः संजानाति । उत्कण्ठते इत्यर्थः।
</1-3-46>
भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।। <1-3-47>।।
शेषात्कर्त्तरि परस्मैपदे(1-3-78/2159) प्राप्ते भासनादिषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति । भासनम् = दीप्तिः । वदते चार्वी लोकायते । भासमानो दीप्यमानस्तत्र पदार्थान् व्यक्तीकरोतीत्यर्थः । उपसंभाषा = उपसान्त्वनम् । कर्मकरानुपवदते । उपसान्त्वयतीत्यर्थः । ज्ञानम् = सम्यगवबोधः । वदते चार्वी लोकायते । जानाति वदितुमित्यर्थः । यत्नः = उत्साहः । क्षेत्रे वदते, गेहे वदते । तद्विषयमुत्साहमाविष्करोतीत्यर्थः । विमतिः = नानामतिः । क्षेत्रे विवदन्ते, गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्त इत्यर्थ । उपमन्त्रणम् = रहस्युपच्छन्दनम् । कुलभार्यामुपवदते । परदारानुपवदते । उपच्छन्दयतीत्यर्थः ।
एतेष्विति किम् ? यत्किञ्चिद्वदति ।।
</1-3-47>
व्यक्तवाचां समुच्चारणे ।। <1-3-48> ।।
वदः इति वर्त्तते । व्यक्तवाचां समुच्चारणं सहोच्चारणम्, तत्र वर्तमानाद्वदतेरात्मनेपदं भवति । ननु वद व्यक्तायां वाचि(धा.पा.1009) इत्येव पठ्यते, तत्र किं व्यक्तवाचामिति विशेषणेन ? प्रसिद्ध्युपसङ्ग्रहार्थमेतत् । व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः, तेषां समुच्चारणे यथा स्यात् । संप्रवदन्ते ब्राह्मणाः । संप्रवदन्ते क्षत्रियाः ।
व्यक्तवाचामिति किम् ? संप्रवदन्ति कुक्कुटाः(म.भा.1.283) । समुच्चारण इति किम् ? ब्राह्मणो वदति । क्षत्रियो वदति ।।
</1-3-48>
अनोरकर्मकात् ।। <1-3-49> ।।
वदः इति व्यक्तवाचाम् इति च वर्त्तते । अनुपूर्वाद्वदतेरकर्मकाद्व्यक्तवाग्विषयादात्मनेपदं भवति । अनुवदते कठः कलापस्य । अनुवदते मौद्गः पैप्पलादस्य । अनुः सादृश्ये । यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः ।
अकर्मकादिति किम् ? पूर्वमेव यजुरुदितमनुवदति । व्यक्तवाचामित्येव- अनुवदति वीणा ।।
</1-3-49>
विभाषा विप्रलापे ।। <1-3-50> ।।
वद इति वर्त्तते,व्यक्तवाचां समुच्चारणे इति च । विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्तमानाद्वदतेरात्मनेपदं भवति विभाषा । प्राप्तविभाषेयम् । विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः । विप्रवदन्ते मौहूर्त्ताः, विप्रवदन्ति मौहूर्त्ताः । युगपत्परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ।
विप्रलाप इति किम् ? संप्रवदन्ते ब्राह्मणाः । व्यक्तवाचामित्येव- विप्रवदन्ति शकुनयः । समुच्चारण इत्येव- क्रमेण मौहूर्ता मौहूर्तेन सह विप्रवदन्ति ।।
</1-3-50>
अवाद् ग्रः ।। <1-3-51> ।।
गॄ निगरणे(धा.पा.1410) इति तुदादौ पठ्यते, तस्येदं ग्रहणम्; न तु गॄ शब्दे(धा.पा.1498) इति क्र्यादिपठितस्य । तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति । शेषात्(1-3-78/2159) इति परस्मैपदे प्राप्ते; अवपूर्वाद्गिरतेरात्मनेपदं भवति । अवगिरते, अवगिरेते, अवगिरन्ते ।
अवादिति किम् ? गिरति ।।
</1-3-51>
समः प्रतिज्ञाने ।। <1-3-52> ।।
ग्रः इति वर्त्तते । संपूर्वाद् गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति । प्रतिज्ञानम् = अभ्युपगमः । शतं संगिरते, नित्यं शब्दं संगिरते ।
प्रतिज्ञान इति किम् ? संगिरति ग्रासम् ।।
</1-3-52>

उदश्चः सकर्मकात् ।। <1-3-53> ।।

शेषात्कर्तरि(1-3-78>य2159)इति परस्मैपदे प्राप्ते उत्पूर्वाच्चरतेः सकर्मकक्रियावचनादात्मनेपदं भवति। गेहमुच्चरते। कुटुम्बमुच्चरते। गुरुवचनमुच्चरते। उत्क्रम्य गच्छति इत्यर्थः। सकर्मकात् इति किम् ? बाष्पमुच्चरति।

</1-3-53>

समस्तृतीयायुक्तात्।। <1-3-53> ।।

सम्पूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपदं भवति । तृतीया इति तृतीयाविभक्तिर्गृह्यते, तया चरतेरर्थद्वारको योगः । अश्वेन संचरते ।

तृतीयायुक्तादिति किम् ? उभौ लोकौ संचरसि इमं चामुं च देवल (म.भा.1.283)। यद्यप्यत्र तदर्थयोगः संभवति, तृतीया तु न श्रूयत इति प्रत्युदाहरणं भवति ।।

</1-3-53>

दाणश्च सा चेच्चतुर्थ्यर्थे ।। <1-3-55> ।।

दाण् दाने (धा.पा.930) परस्मैपदी । ततः संपूर्वात्तृतीयायुक्तादात्मनेपदं भवति, सा चेत्तृतीया चतुर्थ्यर्थे भवति ।

कथं पुनस्तृतीया चतुर्थ्यर्थे स्यात् ? वक्तव्यमेवैतत्-* अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् * (म.भा.1.284)। दास्या मालां संप्रयच्छते । कामुकः सन् दास्यै ददातीत्यर्थः ।

चतुर्थ्यर्थे इति किम् ? पाणिना संप्रयच्छति । समः प्रशब्देन व्यवधाने कथमात्मनेपदं भवति ? समः इति विशेषणे षष्ठी, न पञ्चमी ।।

</1-3-55>

उपाद्यमः स्वकरणे ।। <1-3-56> ।।

शेषात्कर्त्तरि परस्मैपदे(1-2-78/2159) प्राप्ते उपपूर्वाद् यमः स्वकरणे वर्तमानादात्मनेपदं भवति । पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम् । भार्यामुपयच्छते ।

स्वकरण इति किम् ? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति ।।

</1-3-56>

ज्ञाश्रुस्मृदृशां सनः ।। <1-3-57> ।।

ज्ञा, श्रु, स्मृ, दृश्-इत्येतेषां सन्नन्तानामात्मनेपदं भवति । तत्र जानातेःअपह्नवे ज्ञः(1-3-44/2717) इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि समो गम्यृच्छि(1-3-29/2699) इत्यत्र विहितम्; तस्मिन्विषये पूर्ववत्सनः(1-3-62/2734) इत्येव सिद्धमात्मनेपदम्। ततोऽन्यत्रानेन विधीयते । स्मरतेः पुनरप्राप्त एव

विधानम् । धर्मं जिज्ञासते । गुरुं शुश्रूषते । नष्टं सुस्मूर्षते । नृपं दिदृक्षते ।

सन इति किम् ? जानाति, श्रृणोति, स्मरति, पश्यति ।

</1-3-57>

नानोर्ज्ञः ।। <1-3-58> ।।

पूर्वेण योगेन प्राप्तमात्मनेपदं प्रतिषिध्यते । अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न भवति । तथा च सति सकर्मकस्यैवायं प्रतिषेधः सम्पद्यते । पुत्रमनुजिज्ञासति ।

अनोरिति किम् ? धर्मं जिज्ञासते ।।

</1-3-58>

प्रत्याङ्भ्यां श्रुवः ।। <1-3-59> ।।

प्रति, आङ् इत्येवम्पूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति । प्रतिशुश्रूषति । आशुश्रूषति । उपसर्गग्रहणं चेदम्, तस्मादिह प्रतिषेधो न भवति-देवदत्तं प्रति शुश्रूषते ।।

</1-3-59>

शदेः शितः ।। <1-3-60> ।।

शद्लृ शातने(धा.पा.1855) परस्मैपदी, तस्मादात्मनेपदं विधीयते । शदिर्यः शित्, शिद्भावी शितो वा सम्बन्धी तस्मादात्मनेपदं भवति । शीयते, शीयेते, शीयन्ते ।

शित इति किम् ? अशत्स्यत् । शत्स्यति । शिशत्सति ।।

</1-3-60>

म्रियतेर्लुङ्लिङोश्च ।। <1-3-61> ।।

मृङ् प्राणत्यागे(धा.पा.1404), ङित्वादात्मनेपदमत्र सिद्धमेवेति नियमार्थमिदं वचनम्-म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति । अमृत । मृषीष्ट । शितः खल्वपि-म्रियते, म्रियेते, म्रियन्ते ।

नियमः किमर्थः ? मरिष्यति । अमरिष्यत् ।।

</1-3-61>

पूर्ववत्सनः ।। <1-3-62> ।।

सनः पूर्वो यो धातुः आत्मनेपदी तद्वत्सन्नन्तादात्मनेपदं भवति । येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सनन्तादपि भवति । अनुदात्तङित आत्मनेपदम्(1-3-12/2157)- आस्ते, शेते । सनन्तादपि तदेव निमित्तम्-- आसिसिषते, शिषयिषते । नेर्विशः(1-3-17/2683)-

निविशते, निविविक्षते । आङ उद्गमने (1-3-40/2713)--आक्रमते, आचिक्रंसते ।
इह न भवति- शिसत्सति । मुमूर्षति । न हि शदिम्रियतिमात्रमात्मनेपदनिमित्तम्, किं तर्हि ? शिदाद्यपि, तच्चेह नास्ति ।
यस्य च पूर्वत्रैव निमित्तभावः प्रतिषिध्यते, तत्सन्नन्तेऽप्यनिमित्तम्- अनुचिकीर्षति । पराचिकीर्षति ।
इह जुगुप्सते, मीमांसते इति ? अनुदात्त ङित(1-3-12/2157) इत्येव सिद्धमात्मनेपदम्। अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति(म.भा.1.289)इति ।।
</1-3-62>
आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।। <1-3-63> ।।
अकर्त्रभिप्रायार्थोऽयमारम्भः । आम् प्रत्ययो यस्मात्सोऽयमाम्प्रत्ययः । आम्प्रत्ययस्यैव धातोः कृञोऽनुप्रयोगस्यात्मनेपदं भवति । ईक्षाञ्चक्रे, ईहाञ्चक्रे । यदि विध्यर्थमेतत्, तर्हि उदुब्जाञ्चकार, उदुम्भाञ्चकारेति कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्नोति ? नैष दोषः, उभयमनेन क्रियते-विधिः, नियमश्च । कथम् ? पूर्ववदिति वर्तते । स द्वितीयो यत्नो नियमार्थो भविष्यति ।
कृञ इति किम् ? ईक्षामास, ईक्षाम्बभूव । कथं पुनरस्यानुप्रयोगः, यावताकृञ्चानुप्रयुज्यते लिटि(3-1-40/2239) इत्युच्यते ? कृञ् इति प्रत्याहारग्रहणं तत्र विज्ञायते । क्व संनिविष्टानां प्रत्याहारः ?
अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः(5-4-50/2129)इति कृशब्दादारभ्य यावत् कृञो द्वितीयतृतीयशम्बबीजात्कृषौ(5-4-58/2129) इति ञकारम् ।।
</1-3-63>
प्रोपाभ्यां युजेरयज्ञपात्रेषु ।। <1-3-64> ।।
युजिर् योगे स्वरितेत् । तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । प्र, उप-इत्येवम्पूर्वाद् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति । प्रयुङ्क्ते ।
</1-3-64>
अयज्ञपात्रेष्विति किम् ? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति (आप.गृ.<1-1-16>)।
* स्वराद्यन्तोपसृष्टादिति वक्तव्यम् *(म.भा.1.290) । उद्युङ्क्ते, नियुङ्क्ते ।
स्वराद्यन्तोपसृष्टादिति किम् ? संयुनक्ति ।।
</1-1-16>
समः क्ष्णुवः ।। <1-3-65> ।।
क्ष्णु तेजने(धा.पा.1037) परस्मैपदी । ततः सम्पूर्वादात्मनेपदं भवति । समो गम्यृच्छि (1-3-29/2699) इत्यत्रैव कस्मान्न पठितः ? अकर्मकादिति तत्र वर्तते । संक्ष्णुते शस्त्रम्, संक्ष्णवाते, संक्ष्णुवते ।
</1-3-65>
भुजोऽनवने ।। <1-3-66> ।।
भुज पालनाभ्यवहारयोः(धा.पा.1455) इति रुधादौ पठ्यते । तस्मादनवने = अपालने वर्तमानादात्मनेपदं भवति । भुङ्क्ते, भुञ्जाते ।
अनवन इति किम् ? भुनक्त्येनमग्निराहितः । अनवनप्रतिषेधेन रौधादिकस्यैव ग्रहणं विज्ञायते, न तौदादिकस्य-भुजो कौटिल्ये(धा.पा.1418) इत्यस्य । तेनेह न भवति--विभुजति पाणिम् ।।
</1-3-66>
णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने ।। <1-3-67> ।।
णिचश्च(1-3-74/2564) इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तादात्मनेपदं भवति, कथम् ? अणौ यत्कर्मणौ चेत्तदेव कर्म, स एव कर्त्ता भवति, अनाध्याने = आध्यानं वर्जयित्वा । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव । उपसिञ्चन्ति हस्तिनं हस्तिपकाः । उपसेचयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम् । दर्शयते राजा स्वयमेव ।
णेरिति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति ।
अणाविति किम् ? गणयति गणं गोपालकः, गणयति गणः स्वयमेव । कर्मग्रहणं किम् ? लुनाति दात्रेण, लावयति दात्रं स्वयमेव ।
णौ चेद् ग्रहणं समानक्रियार्थम् । आरोहन्ति हस्तिनं हस्तिपकः, आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेण ।
यत्सग्रहणमनन्यकर्मार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ।
कर्त्तरि किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्रः । अनाध्यान इति किम् ? स्मरति वनगुल्मस्य कोकिलः, स्मरयत्येनं वनगुल्मः स्वयमेव ।
ननु चात्र कर्मकर्त्तरि मूलोदाहरणानि, तत्र कर्मवद्भावेनैव सिद्धमात्मनेपदम्, किमर्थमिदमुच्यते ? कर्मस्थभावकानां कर्मस्थक्रियाणां च क्रमवदतिदेशो विज्ञायते । कर्तृस्थार्थोऽयमारम्भः ।
तथा च रुहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावक उदाहृतः ।
</1-3-67>
भीस्म्योर्हेतुभये ।। <1-3-68> ।।
णेः इति वर्त्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये । हेतुः प्रयोजकः कर्त्ता लकारवाच्यः, ततश्चेद्भयं भवति । भयग्रहणमुपलक्षणार्थम्, विस्मयोऽपि तत एव । जटिलो भीषयते । मुण्डो भीषयते । जटिलो विस्मापयते ।

हेतुभय इति किम् ? कुञ्चिकयैनं भाययति । रूपेण विस्माययति । अत्र कुञ्चिका भयस्य करणम्, न हेतुः ।।
</1-3-68>
गृधिवञ्च्योः प्रलम्भने ।। <1-3-69> ।।
णेः इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । गृधु अभिकाङ्क्षायाम्(धा.पा.1247) वञ्चु गतौ(धा.पा.181) इत्येतयोर्ण्यन्तयोः प्रलम्भने वर्त्तमानयोरात्मनेपदं भवति । प्रलम्भनम् = विसंवादनम्, मिथ्याफलाख्यानम् । माणवकं गर्धयते । माणवकं वञ्चयते ।
प्रलम्भन इति किम् ? श्वानं गर्धयति । गर्धनमस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । परिहरतीत्यर्थः।
</1-3-69>
लियः सम्माननशालीनीकरणयोश्च ।। <1-3-70> ।।
णे इति वर्त्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । लीङ् श्लेषणे(धा.पा.1139) इति दिवादौ पठ्यते, ली श्लेषणे(धा.पा.1501) इति च क्र्यादौ; विशेषाभावाद् द्वयोरपि ग्रहणम् । लियो ण्यन्तात्सम्मानने शालीनीकरणे च वर्त्तमानादात्मनेपदं भवति, च शब्दात् प्रलम्भने च । संमाननम् = पूजनम् । शालीनीकरणम् = न्यग्भावनम् । जटाभिरालापयते । पूजां समधिगच्छतीत्यर्थः । श्येनो वर्त्तिकामुल्लापयते । न्यक्करोतीत्यर्थः । प्रलम्भने- कस्त्वामुल्लापयते । विसंवादयतीत्यर्थः । विभाषा लीयतेः(6-1-51/2509) इति वाऽऽत्वं विधीयते । तदस्मिन्विषये नित्यमन्यत्र विकल्पः । व्यवस्थितविभाषा हि सा ।
सम्माननादिष्विति किम् ? बालकमुल्लापयति ।
</1-3-70>
मिथ्योपपदात्कृञोऽभ्यासे ।। <1-3-71> ।।
णेः इति वर्त्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तात्करोतेर्मिथ्योपदादात्मनेपदं भवति अभ्यासे । अभ्यासः = पुनः पुनः करणम् , आवृत्तिः । पदं मिथ्या कारयते । सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः ।
मिथ्योपपदादिति किम् ? पदं सुष्ठु कारयति । कृञ इति किम् ? पदं मिथ्या वाचयति । अभ्यास इति किम् ? पदं मिथ्या कारयति । सकृदुच्चारयति ।।
</1-3-71>
स्वरितञितः कर्त्रभिप्राये क्रियाफले ।। <1-3-72> ।।
णेः इति निवृत्तम् । शेषात्कर्त्तरि परस्मैपदे(1-3-78/2159) प्राप्ते स्वरितेतो ये धातवो ञितश्च तेभ्य आत्मनेपदं भवति, कर्त्तारं चेत्क्रियाफलमभिप्रैति । क्रियायाः फलं क्रियाफलं प्रधानभूतं यदर्थमसौ क्रिया आरभ्यते तच्चेत् कर्तुर्लकारवाच्यस्य भवति । यजते । पचते । ञितः खल्वपि--सुनुते । कुरुते । स्वर्गादि प्रधानफलमिह कर्त्तारमभिप्रैति ।
कर्त्रभिप्राये इति किम् ? यजन्ति याजकाः । पचन्ति पाचकाः । कुर्वन्ति कर्मकराः । यद्यपि दक्षिणा भृतिश्च कर्तुः फलमिहास्ति, तथापि न तदर्थः क्रियारम्भः ।।
</1-3-72>
अपाद्वदः ।। <1-3-73> ।।
कर्त्रभिप्राये इति वर्त्तते । अपपूर्वाद्वदतेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति । धनकामो न्यायमपवदते । न्यायापवादेन धनमर्जयिष्यामि इति मन्यते ।
कर्त्रभिप्राये क्रियाफले इत्येव- अपवदति ।।
</1-3-73>
णिचश्च ।। <1-3-74>।।
कर्त्रभिप्राये क्रियाफले इति वर्त्तते । णिजन्तादात्मनेपदं भवति, कर्त्रभिप्राये क्रियाफले । कटं कारयते । ओदनं पाचयते ।
कर्त्रभिप्राय इत्येव-कटं कारयति परस्य ।।
</1-3-74>
समुदाङ्भ्यो यमोऽग्रन्थे ।। <1-3-75> ।।
कर्त्रभिप्राये इति वर्त्तते । सम्, उद्, आङ्-इत्येवम्पूर्वाद्यमेः कर्त्रभिप्रये क्रियाफले आत्मनेपदं भवति, ग्रन्थविषयश्चेत्प्रयोगो न भवति। व्रीहीन् संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । आङ्पूर्वादकर्मकाद् आङो यमहनः(1-3-28/2695) इति सिद्धमेवात्मनेपदम्। सकर्मकार्थमिदं पुनर्ग्रहणम् ।
अग्रन्थ इति किम् ? उद्यच्छति चिकित्सां वैद्यः ।
कर्त्रभिप्राय इत्येव- संयच्छति, उद्यच्छति, आयच्छति ।।
</1-3-75>
अनुपसर्गाज्ज्ञः ।। <1-3-76> ।।
कर्त्रभिप्राय इति वर्त्तते । अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति । गां जानीते, अश्वं जानीते ।
अनुपसर्गादिति किम् ? स्वर्गं लोकं न प्रजानाति मूढः ।
कर्त्रभिप्रायः इत्येव- देवदत्तस्य गां जानाति ।।
</1-3-76>

विभाषोपपदेन प्रतीयमाने ।। <1-3-77> ।।
स्वरितञितः(1-3-72/2358) इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले द्योतिते विहितम्, तदुपपदेन द्योतिते न प्राप्नोतीति वचनमारभ्यते । समीपे श्रूयमाणं शब्दान्तरम् = उपपदम्, तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषाऽऽत्मनेपदं भवति । स्वं यज्ञं यजति, स्वं यज्ञं यजते । स्वं कटं करोति, स्वं कटं कुरुते । स्वं पुत्रमपवदति, स्वं पुत्रमपवदते । एवं पञ्चसूत्र्यामुदाहार्यम् ।।
</1-3-77>
शेषात्कर्तरि परस्मैपदम् ।। <1-3-78> ।।
पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न परस्मैपदनियमः, तत्सर्वतः प्राप्नोति, तदर्थमिदमुच्यते । येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत्स शेषः । शेषात्कर्तरि परस्मैपदं भवति शेषादेव नान्यस्मात् । अनुदात्तङित आत्मनेपदम्(1-3-12/2157) उक्तम्-आस्ते, शेते । ततोऽन्यत्र परस्मैपदं भवति-याति, वाति । नेर्विशः(1-3-17/2683) आत्मनेपदमुक्तम्-निविशते । ततोऽन्यत्र परस्मैपदम्-आविशति, प्रविशति ।

कर्तरीति किम् ? पच्यते, गम्यते ।
कर्मकर्तरि कस्मात्परस्मैपदं न भवति-पच्यते ओदनः स्वयमेव ? कर्त्तरि कर्मव्यतिहारे(1-3-14/2680) इति द्वितीयं कर्तृग्रहणमनुवर्त्तते; तेन कर्त्तैव यः कर्त्ता, तत्र परस्मैपदं कर्मकर्त्तरि न भवति ।।
</1-3-78>
अनुपरभ्यां कृञः ।। <1-3-79> ।।
कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम्, तदपवादः परस्मैपदं विधीयते । अनु, परा-इत्येवम्पूर्वात्करोतेः परस्मैपदं भवति । अनुकरोति, पराकरोति ।।
</1-3-79>
अभिप्रत्यतिभ्यः क्षिपः ।। <1-3-80> ।।
क्षिप प्रेरणे(धा.पा.1286) स्वरितेत्, ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । अभि, प्रति,- इत्येवम्पूर्वात् क्षिपः परस्मैपदं भवति । अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति ।
अभिप्रत्यतिभ्य इति किम् ? आक्षिपते ।
द्वितीयमपि कर्तृग्रहणमनुवर्त्तते, तेनेह न भवति--अभिक्षिप्यते स्वयमेव ।।
</1-3-80>
प्राद्वहः ।। <1-3-81> ।।
वह प्रापणे(धा.पा.1004) स्वरितेत्, तत्र कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । प्रवूर्वाद्वहतेः परस्मैपदं भवति । प्रवहति, प्रवहतः, प्रवहन्ति ।
प्रादिति किम् ? आवहते ।।
</1-3-81>
परेर्मृषः ।। <1-3-82> ।।
मृष तितिक्षायाम्(धा.पा.1165)स्वरितेत्, ततस्तथैवात्मनेपदे प्राप्ते परस्मैपदं विधीयते । परिपूर्वाद् मृष्यतेः परस्मैपदं भवति । परिमृष्यति, परिमृष्यतः,परिमृष्यन्ति ।
परेरिति किम् ? आमृष्यते ।
वहतिमपि केचिदत्रानुवर्त्तयन्ति- परिवहति ।।
</1-3-82>
व्याङ्परिभ्यो रमः ।। <1-3-83> ।।
रमु क्रीडायाम(धा.पा.854), अनुदात्तेत्त्वादात्मनेपदे प्राप्ते परस्मैपदं विधीयते । वि, आङ्, परि-- इत्येवम्पूर्वाद्रमतेः परस्मैपदं भवति । विरमति,आरमति, परिरमति ।
एतेभ्य इति किम् ? अभिरमते ।।
</1-3-83>
उपाच्च ।। <1-3-84> ।।
रमः इत्येव। उपपूर्वाद्रमतेः परस्मैपदं भवति। देवदत्तमुपरमति । यज्ञदत्तमुपरमति । उपरमयतीति यावत् । अन्तर्भावितण्यर्थोऽत्र रमिः ।
पृथग्योगकरणमुत्तरार्थम् । अकर्मकाद्विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात् ।।
</1-3-84>
विभाषाऽकर्मकात् ।। <1-3-85> ।।
रमउपात् इति च वर्त्तते । पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते । उपपूर्वाद्रमतेरकर्मकाद्विभाषा परस्मैपदं भवति । यावद्भुक्तमुपरमति, यावद्भुक्तमुपरमते । निवर्तत इत्यर्थः ।।
</1-3-85>
बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।। <1-3-86> ।।

णिचश्च(1-3-74/2564)इति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । बुध, युध, नश, जन, इङ्, प्रु,द्रु,स्रु-- इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्रावयति ।
येऽत्राकर्मकास्तेषाम् अणावकर्मकाच्चित्तवत्कर्तृकात्(1-3-88/2754) इत्येवं सिद्धे वचनमिदमचित्तवत्कर्तृकार्थम् । बोधयति पद्मम् । योधयन्ति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् ।
येऽत्र चलनार्था अपि तेषां निगरणचलनार्थेभ्यश्च(1-3-87/2753) इति सिद्धे यदा न चलनार्थास्तदर्थं वचनम्- प्रवते । प्राप्नोतीति गम्यते । अयो द्रवति । विलीयत इत्यर्थः । कुण्डिका स्रवति । स्यन्दत इत्यर्थः । तद्विषयाण्युदाहरणानि ।।
</1-3-86>
निगरणचलनार्थेभ्यश्च ।। <1-3-87> ।।
णेः इति वर्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते । निगरणम् =
अभ्यवहारः । चलनम् = कम्पनम् । निगरणार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । निगारयति । आशयति । भोजयति । चलनार्थेभ्यः- चलयति, चोपयति, कम्पयति ।
अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्च ।
*अदेः प्रतिषेधो वक्तव्यः * । अत्ति देवदत्तः । आदयते देवदत्तेन ।।
</1-3-87>
अणावकर्मकाच्चित्तवत्कर्तृकात् ।। <1-3-88> ।।
णेः इति वर्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते । अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात्परस्मैपदं भवति । आस्ते देवदत्तः, आसयति देवदत्तम् । शेते देवदत्तः शाययति देवदत्तम् ।
अणाविति किम् ? चेतयमानं प्रयोजयति चेतयते इति केचित्प्रत्युदाहरन्ति, तदयुक्तम्; हेतुमण्णिचो विधिः, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तस्मादिह चेतयतीति परस्मैपदेनैव भवितव्यम् । इदं तु प्रत्युदाहरणम्- आरोहयमाणं प्रयुङ्क्ते, आरोहयते ।
अकर्मकादिति किम् ? कटं कुर्वाणं प्रयोजयति, कारयते । चित्तवत्कर्तृकादिति किम् ? शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः ।
</1-3-88>
न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।। <1-3-89> ।।
पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विहितम्, तस्य प्रतिषेधोऽयमुच्यते । यत्कर्त्रभिप्रायविषयमात्मनेपदं तदवस्थितमेव न प्रतिषिध्यते । पा, दमि, आङ्यम्, आङ्यस, परिमुह, रुचि, नृति, वद, वस-इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति । णिचश्च(1-3-74/2564) इत्यात्मनेपदं भवति । तत्र पिबतिर्निगरणार्थः । दमिप्रभृतयश्चित्तवत्कर्तृकाः । नृतिश्चलनार्थोऽपि । एषां परस्मैपदं न भवति । पा-पाययते । दमि-दमयते । आङ्यम-आयामयते । यमोऽपरिवेषणे(ग.सू.193) इति मित्संज्ञा प्रतिषिध्यते । आङ्यस-आयासयते । परिमुह-परिमोहयते । रुचि-रोचयते । नृति-नर्तयते । वद-वादयते । वस-वासयते ।
</1-3-89>

- पादिषु धेट उपसंख्यानम् * (म.भा.1.295)। धापयेते शिशुमेकं समीची(ऋ.<1-196-5>) ।।

</1-196-5>
वा क्यषः ।। <1-3-90> ।।
लोहितादिडाज्भ्यः क्यष्(3-1-13/2668) इति वक्ष्यति, तदन्ताद्धातोर्वा परस्मैपदं भवति । लोहितायति, लोहितायते । पटपटायति, पटपटायते । अथात्र परस्मैपदेन मुक्ते कथमात्मनेपदं लभ्यते, यावता अनुदात्तङितः(1-3-12/2157) इत्येवमादिना प्रकरणेन तन्नियतम् ? एवं तर्हि आत्मनेपदमेवात्र विकल्पितं विधीयते,तच्चानन्तरं परस्मैपदप्रतिषेधेन सन्निधापितमिह संबध्यते । तेन मुक्ते शेषात्कर्त्तरि परस्मैपदं भवति ।।
</1-3-90>
द्युद्भ्यो लुङि ।। <1-3-91> ।।
वेत्येव । द्युत दीप्तौ(धा.पा.741),तत्साहचर्याद् लुठादयोऽपि कृपू(धा.पा.762)पर्यन्तास्तथैव व्यपदिश्यन्ते । बहुवचननिर्देशादाद्यर्थो भवति । अनुदात्तेत्वान्नित्यमेवात्मनेपदे प्राप्ते द्युतादिभ्यो लुङि वा परस्मैपदं भवति ।
व्यद्युतत्, व्यद्योतिष्ट । अलुठत्, अलोठिष्ट ।
लुङीति किम् ? द्योतते ।।
</1-3-91>
वृद्भ्यः स्यसनोः ।। <1-3-92> ।।
द्युतादिष्वेव वृतादयः पठ्यन्ते । वृतु वर्तते(धा.पा.758), वृधु वृद्धौ()धा.पा.759),श्रृधु शब्दकुत्सायाम्(धा.पा.760),स्यन्दू प्रस्रवणे(धा.पा.761), कृपू सामर्थ्ये(धा.पा.762)-- एतेभ्यो धातुभ्यः स्ये, सनि च परतो वा परस्मैपदं भवति । वृत्--वर्त्स्यति, अवर्त्स्यत्, विवृत्सति; वर्तिष्यते, अवर्तिष्यत, विवर्तिषते । वृध्--वर्त्स्यति, अवर्त्स्यत्, विवृत्सति; वर्द्धिष्यते,अवर्धिष्यत, विवर्धिषते ।
स्यसनोरिति किम् ? वर्तते ।।
</1-3-92>
लुटि च क्लृपः ।। <1-3-93> ।।

वृतादित्वादेव स्यनोर्विकल्पः सिद्धः, लुटि विधीयते । चकारस्तर्हि स्यसनोरनुकर्षणार्थो न वक्तव्यः । एवं तर्हीयं प्राप्तिः पूर्वां प्राप्तिं बाधेत, तस्माच्चकारः स्यसनोरनुकर्षणार्थः क्रियते । लुटि च स्यसनोश्च कृपेः परस्मैपदं वा भवति । कल्प्ता, कल्प्तारौ, कल्प्तारः । कल्प्स्यति, अकल्प्स्यत्, चिक्लृप्सति । कल्पिता, कल्पिष्यते, अकल्पिष्यत, चिकल्पिषते ।।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमस्याध्यायस्य तृतीयः पादः ।।

</1-3-93>

# काशिका/प्रथमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/pb6

< काशिका | प्रथमोऽध्यायः

अथ प्रथमाध्याये चतुर्थः पादः

आ कडारादेका संज्ञा ।। <1-4-1> ।।

कडाराः कर्मधारये(2-2-38/751) इति वक्ष्यति । आ एतस्मात्सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र एका संज्ञा भवतीति वेदितव्यम् । का पुनरसौ ? या पराऽनवकाशा च । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनमेकैव संज्ञा भवतीति । वक्ष्यति--ह्रस्वं लघु(1-4-10/31), भिदि, छिदि- भेत्ता, छेत्ता । संयोगे गुरु(1-4-11/32), शिक्षा, भिक्षा-संयोगे परस्य ह्रस्वस्य लघुसंज्ञा प्राप्नोति, गुरुसंज्ञा च; `एका संज्ञा इति वचनाद् गुरु संज्ञैव भवति-अततक्षत्, अररक्षत् । सन्वल्लुघुनि(7-4-93/2316) इत्येष विधिर्न भवति ।।

</1-4-1>

विप्रतिषेधे परं कार्यम् ।। <1-4-2> ।।

(तुल्यबल) विरोधः = विप्रतिषेधः । `यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन्युगपत्प्राप्नुतः, स तुल्यबलविरोधो विप्रतिषेधः(म.भा.1.300) । तस्मिन्विप्रतिषेधे परं कार्यं भवति ।

उत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गेषु तुल्यबलता नास्तीति योगस्य विषयः, बलवतैव तत्र भवितव्यम् । अप्रवृत्तौ, पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनमारभ्यते । अतो दीर्घो यञि(7-3-101/2170) सुपि च (7-3-102/202) इत्यस्यावकाशः--वृक्षाभ्याम्, प्लक्षाभ्याम् ; बहुवचने झल्येत्(7-3-103/205) इत्यस्यावकाशः-वृक्षेषु, प्लक्षेषु; इहोभयं प्राप्नोति-वृक्षेभ्यः, प्लक्षेभ्यः इति । परं भवति विप्रतिषेधेन ।।

</1-4-2>

यू स्त्र्याख्यौ नदी ।। <1-4-3>।।

ई च ऊ च = यू । अविभक्तिको निर्देशः । स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादिदर्शनात्कप्रत्ययः । ईकारान्तमूकारान्तं च रत्र्याख्यं शब्दरूपं नदीसंज्ञं भवति । ईकारान्तम्--कुमारी, गौरी, लक्ष्मीः, शार्ङ्गरवी । ऊकारान्तम्--ब्रह्मबन्धूः, यवागूः ।

यू इति किम् । मात्रे, दुहित्रे । स्त्र्याख्याविति किम् ? ग्रामणीः, सेनानीः, खलपूः । आख्याग्रहणं किम् ? शब्दार्थे स्त्रीत्व एव यथा स्यात्, पदान्तराख्ये मा भूत्-ग्रामण्ये स्त्रियै, खलप्वे स्त्रियै ।

नदीप्रदेशाः--आण्नद्याः(7-3-112/268) इत्येवमादयः ।।

</1-4-3>

नेयङुवङ्स्थानावस्त्री ।। <1-4-4> ।।

पूर्वेणातिप्रसक्ता नदीसंज्ञा प्रतिषिध्यते । स्थितिः = स्थानम् । इयङुवङोः स्थानमनयोरितीयङुवङ्स्थानौ यौ यू, तौ नदीसंज्ञौ न भवतः, स्त्रीशब्दं वर्जयित्वा । हे श्रीः । हे भ्रूः ।

अस्त्रीति किम् ? हे स्त्रि ।।

</1-4-4>

वाऽऽमि ।। <1-4-5> ।।

पूर्वेण नित्ये प्रतिषेधे प्राप्ते आमि विकल्पः क्रियते । इयङुवङ्--स्थानौ यू आमि परतौ वा नदीसंज्ञौ न भवतः । श्रियाम्, श्रीणाम् । भ्रुवाम्, भ्रूणाम् । अस्त्रीत्येव-स्त्रीणाम् ।।

</1-4-5>

ङिति ह्रस्वश्च ।। <1-4-6> ।।

दीर्घस्य नदीसंज्ञा विहिता ह्रस्वस्य न प्राप्नोति इयङुवङ्स्थानयोश्च प्रतिषिद्धा । तस्माण्ङिति वा विधीयते । ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी यः स्त्राख्यः । स्त्र्याख्यौ इयङुवङस्थानौ च यू वा नदीसंज्ञौ भवतः । कृत्यै, कृतये । धेन्वै धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे ।

अस्त्रीत्येव--स्त्रियै । स्त्र्याख्यावित्येव-अग्नये, वायवे, भानवे ।।

</1-4-6>

शेषो घ्यसखि ।। <1-4-7> ।।

`ह्रस्वः इति वर्तते । शेषोऽत्र घिसंज्ञो भवति, सखिशब्दं वर्जयित्वा । कश्च शेषः ? ह्रस्वमिवर्णोवणान्तं यन्न स्त्र्याख्यम्, स्त्र्याख्यं च यन्न नदीसंज्ञकम्, स शेषः । अग्नये, वायवे, कृतये, धेनवे ।

असखीति किम् ? सख्या । सख्ये । सख्युः । सख्यौ ।

घिप्रदेशाः-द्वन्द्वे घि(2-2-32/903) इत्येवमादयः ।।

</1-4-7>

पतिः समास एव ।। <1-4-8> ।।

पतिशब्दस्य घिसंज्ञायां सिद्धायामयं नियमः क्रियते-पतिशब्दः समास एव घिसंज्ञो भवति । प्रजापतिना । प्रजापतये ।

समास इति किम् ? पत्या । पत्ये ।
एवकार इष्टतोऽवधारणार्थः । दृढमुष्टिना । दृढमुष्टये ।।
</1-4-8>
षष्ठीयुक्तश्छन्दसि वा ।। <1-4-9> ।।
</1-4-9>
`पतिः इति वर्तते । पूर्वेण नियमेनासमासे न प्राप्नोतीति वचनमारभ्यते । षष्ठ्यन्तेन शब्देन युक्तः पतिशब्दः छन्दसि विषये वा घिसंज्ञो भवति ।
`कुलुञ्चानां पतये नमः(तै.सं<4-5-37>), कुलुञ्चानां पत्ये नमः ।
</4-5-37>
षष्ठीग्रहणं किम् ? `मया पत्या जरदष्टिर्यथासः(ऋ.<10-86-36>) । छन्दसीति किम् ? ग्रामस्य पत्ये ।।
</10-86-36>
ह्रस्वं लघु ।। <1-4-10> ।।
मात्रिकस्य ह्रस्वसंज्ञा कृता, तस्यानेन लघुसंज्ञा विधीयते । ह्रस्वमक्षरं लघुसंज्ञं भवति । भेत्ता, छेत्ता, अचीकरत्, अजीहरत् ।
लघुप्रदेशाः--पुगन्तलघूपधस्य च(7-3-86/2189) इत्येवमादयः ।।
</1-4-10>
संयोगे गुरु ।। <1-4-11> ।।
`ह्रस्वम् इति वर्तते । पूर्वेण लघुसंज्ञायां प्राप्तायां गुरुसंज्ञा विधीयते । संयोगे परतो ह्रस्वमक्षरं गुरुसंज्ञं भवति । कुण्डा । हुण्डा । शिक्षा । भिक्षा ।
गुरुप्रदेशाः-गुरोश्च हलः(3-3-103/3280) इत्येवमादयः ।।
</1-4-11>
दीर्घं च ।। <1-4-12> ।।
`संयोगे इति नानुवर्तते । सामान्येन संज्ञाविधानम् । दीर्घं चाक्षरं गुरुसंज्ञं भवति । ईहाञ्चक्रे । ईक्षाञ्चक्रे ।।
</1-4-12>
यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।। <1-4-13> ।।
यस्मात्प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तदादिशब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति । कर्त्ता, हर्त्ता । करिष्यति, हरिष्यति । अकरिष्यत् ।
औपगवः, कापटवः । यस्मादिति संज्ञिनिर्देशार्थम्, तदादीतिसंबन्धात् ।
प्रत्ययग्रहणं किम् ? न्यविशत, व्यक्रीणीत । नेर्विशः(1-3-17/2683) इत्युपसर्गाद्विधिरस्ति,
तदादेरङ्गसंज्ञा स्यात् ।
विधिग्रहणं किम् ? प्रत्ययपरत्वमात्रे मा भूत् । स्त्री इयती ।
* तदादिवचनं स्यादिनुमर्थम् *(म.भा.1.316) । करिष्यावः, करिष्यामः । कुण्डानि ।
पुनः प्रत्ययग्रहणं किमर्थम् ? लुप्तप्रत्यये मा भूत् । श्र्यर्थम् । भ्रव्यर्थम् ।
अङ्गप्रदेशाः--अङ्गस्य(6-4-1/200) इत्येवमादयः ।।
</1-4-13>
सुप्तिङन्तं पदम् ।। <1-4-14> ।।
`सुप्तिङ् इति प्रत्याहारग्रहणम् । सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति । ब्राह्मणाः पचन्ति ।
पदसंज्ञायामन्तग्रहणमन्यत्र `संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः(म.भा.1.318) प्रतिषेधार्थम् । गौरीब्राह्मणितरा ।
प्रदप्रदेशाः-पदस्य(8-1-16/401),पदात्(8-1-17/402) इत्येवमादयः ।।
</1-4-14>
नः क्ये ।। <1-4-15> ।।
`क्ये इति क्यच्क्यङ्क्यषां सामान्यग्रहणम् । नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति । क्यच्- राजीयति । क्यङ्-- राजायते । क्यष्- वर्मायति, वर्मायते ।
`सिद्धे सत्यारम्भो नियमार्थः(का.प.59)- नान्तमेव क्ये परतः पदसंज्ञं भवति, नान्यत् । वाच्यति । स्रुच्यति ।।
</1-4-15>
सिति च ।। <1-4-16> ।।
यचि भम्(1-4-18/231) इति वक्ष्यति, तस्यायं पुरस्तादपवादः । सिति प्रत्यये परः पूर्वं पदसंज्ञं भवति । भवतष्ठक्छसौ(4-2-115/1339)- भवदीयः । ऊर्णाया युस्(5-2-123/1929)-ऊर्णायुः ।ऋतोरण्(5-1-105/1769),छन्दसि घस्(5-1-106/3495)--ऋत्वियः ।।
</1-4-16>
स्वादिष्वसर्वनामस्थाने ।। <1-4-17> ।।
`स्वादिषु इति सुशब्दादेकवचनादारभ्य आ कपः प्रत्यया गृह्यन्ते । स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवति । राजभ्याम्, राजभिः । राजत्वम्, राजता । राजतरः, राजतमः ।
असर्वनामस्थाने इति किम् ? राजानौ, राजानः ।।

</1-4-17>
यचि भम् ।। <1-4-18> ।।
`स्वादिष्वसर्वनामस्थाने इति वर्तते । पूर्वेण पदसंज्ञायां प्राप्तायां तदपवादो भसंज्ञा विधीयते । यकारादावजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परतः पूर्वं भसंज्ञं भवति । यकारादौ--गार्ग्यः, वात्स्यः । अजादौ--दाक्षिः, प्लाक्षिः ।।
* नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् *(म.भा.1.320) । नभ इव नभस्वत् । अङ्गिरस्वत् । मनुरिव मनुष्वत् ।
</1-4-18>
* वृषण्वस्वश्वयोः*(म.भा.1य320) । वृषन्नित्येतत् वस्वश्वयोः परतो भसंज्ञं भवति छन्दसि विषये । `वृषण्वसुः(ऋ.<1-111-1>) । `वृषणश्वस्य मेने(मै.<2-5-5>) ।
भप्रदेशाः-भस्य(6-4-129/233) इत्येवमादयः ।।
</1-111-1>
तसौ मत्वर्थे ।। <1-4-19> ।।
`भम् इति वर्तते । तकारान्तं सकारान्तं शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति । उदश्वित्वान् घोषः विद्युत्वान् बलाहकः । सकारान्तम्--पयस्वी, यशस्वी ।
तसाविति किम् ? तक्षवान् ग्रामः ।।
</1-4-19>
अयस्मयादीनिच्छन्दसि ।। <1-4-20> ।।
</1-4-20>
अयस्मयादीनि शब्दरूपाणि छन्दसि विषये साधूनि भवन्ति । भपदसंज्ञाधिकारे विधानात्तेन मुखेन साधुत्वमयस्मयादीनां विधीयते । `अयस्मयं वर्म(पै.<1-37-5>) । `अयस्मयानि पात्राणि(कौ.सू.8118) । क्वचिदुभयमपि भवति--स सुष्टुभा सऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति ।
छन्दसीति किम् ? अयोमयं वर्म । आकृतिगणोऽयम् ।।
</1-37-5>
बहुषु बहुवचनम् ।। <1-4-21> ।।
ङ्याप्प्रातिपदिकात्स्वादयः, लस्य तिबादय इति सामान्येन बहुवचनं विहितम्, तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयते । बहुषु बहुवचनं भवति । बहुत्वमस्य वाच्यं भवतीति यावत् ।
कर्मादयोऽप्यपरे विभक्तीनामर्था वाच्याः, तदीये बहुत्वे बहुवचनम्, कर्मादिषु बहुषु बहुवचनमित्यर्थः । ब्राह्मणाः पठन्ति ।
यत्र च संख्या सम्भवति, तत्रायमुपदेशः । अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव ।।
</1-4-21>
द्व्येकयोर्द्विवचनैकवचने ।। <1-4-22> ।।
द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः । एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम् । द्वित्वे द्विवचनं भवति, एकत्वे एकवचनं भवति । ब्राह्मणौ पचतः । ब्राह्मणः पचति ।।
</1-4-22>
कारके ।। <1-4-23> ।।
`कारके इति विशेषणमपादानादिसंज्ञाविषयमधिक्रियते । `कारके इत्यधिकारो वेदितव्यः-यदित ऊर्ध्वमनुक्रमिष्यामः कारके इत्येवं तद्वेदितव्यम् ।
कारकशब्दश्च निमित्तपर्यायः । कारकम्, हेतुरित्यनर्थान्तरम् । कस्य हेतुः ? क्रियायाः । वक्ष्यति-ध्रुवमपायेऽपादानम्(1-4-24/586), ग्रामादागच्छति । पर्वतादवरोहति ।
कारक इति किम् ? वृक्षस्य पर्णं पतति । कुड्यस्य पिण्डः पतति ।
`अकथितं च(1-4-51/539) । अकथितं च कारकं कर्मसंज्ञं भवति । माणवकं पन्थानं पृच्छति ।
कारक इति किम् ? माणवकं पन्थानं पृच्छति ।
कारक इति किम् ? माणवकस्य पितरं पन्थानं पृच्छति ।
कारकसंशब्दनेषु चानेनैव विशेषणेन व्यवहारो विज्ञायते ।।
</1-4-23>
ध्रुवमपायेऽपादानम् ।। <1-4-24> ।।
ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं भवति । ग्रामादागच्छति । पर्वतादवरोहति । सार्थाद्धीनः । रथात्पतितः ।
* जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् *(म.भा.1.326) । अधर्माज्जुगुप्सते । अधर्माद्विरमति । धर्मात्प्रमाद्यति ।
अपादानप्रदेशाः-अपादाने पञ्चमी(2-3-28/587) इत्येवमादयः ।।
</1-4-24>
भीत्रार्थानां भयहेतुः ।। <1-4-25> ।।

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादानसंज्ञं भवति । चौरेभ्यो बिभेति । चौरेभ्य उद्विजते । त्रायत्यर्थानाम्--चौरेभ्यस्त्रायते । चौरेभ्यो रक्षति ।
भयहेतुरिति किम् ? अरण्ये बिभेति । अरण्ये त्रायते ।।
</1-4-25>
पराजेरसोढः ।। <1-4-26> ।।
परापूर्वस्य जयतेः प्रयोगेऽसोढो योऽर्थः-सोढुं न शक्यते, तत्कारकमपादानसंज्ञं भवति । अध्ययनात्पराजयते ।
असोढ इति किम् ? शत्रून्पराजयते ।।
</1-4-26>
वारणार्थानामीप्सितः ।। <1-4-27> ।।
वारणार्थानां धतूनां प्रयोगे य ईप्सितोऽर्थः तत्कारकमपादानसंज्ञं भवति । प्रवृत्तिविघातः = वारणम् । यवेभ्यो गां वारयति । यवेभ्यो गा निवर्तयति ।
ईप्सित इति किम् ? यवेभ्यो गां वारयति क्षेत्रे ।।
</1-4-27>
अन्तर्द्धौ येनादर्शनमिच्छति ।। <1-4-28> ।।
व्यवधानम् = अन्तर्द्धिः । अन्तर्द्धिनिमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं भवति । उपाध्यायादन्तर्द्धत्ते । उपाध्यायान्निलीयते । मा मामुपाध्यायो द्राक्षीदिति निलीयते ।
अन्तर्द्धाविति किम् ? चौरान्न दिदृक्षते । इच्छतिग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ।।
</1-4-28>
आख्यातोपयोगे ।। <1-4-29> ।।
आख्याता = प्रतिपादयिता । उपयोगः = नियमपूर्वकं विद्याग्रहणम् । उपयोगे साध्ये य आख्याता तत्कारकमपादानसंज्ञं भवति । उपाध्यायादधीते । उपाध्यायादागमयति ।
उपयोग इति किम् ? नटस्य गाथां श्रृणोति ।।
</1-4-29>
जनिकर्तुः प्रकृतिः ।। <1-4-30> ।।
जनेः कर्ता जनिकर्ता । जन्यर्थस्य जन्मनः कर्ता जायमानः, तस्य या प्रकृतिः कारणम्, हेतुः, तत् कारकमपादानसंज्ञं भवति । श्रृङ्गाच्छरो जायते । गोमयाद् वृश्चिको जायते ।।
</1-4-30>
भुवः प्रभवः ।। <1-4-31> ।।
`कर्तुः इति वर्तते । भवनं भूः । भवत्यस्मादिति प्रभवः । भूकर्तुः प्रभवो यस्तत्कारकमपादानसंज्ञं भवति । हिमवतो गङ्गा प्रभवति । काश्मीरेभ्यो वितस्ता प्रभवति । प्रथमत उपलभ्यत इत्यर्थः ।।
</1-4-31>
कर्मणा यमभिप्रैति स संप्रदानम् ।। <1-4-32> ।।
कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवति । अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति ।
* क्रियाग्रहणमपि कर्तव्यम् *(म.भा.1.330) । क्रिययापि यमभिप्रैति स सम्प्रदानम् । श्राद्धाय निगल्हते । युद्धाय सन्नह्यते । पत्ये शेते ।
सम्प्रदानप्रदेशाः-चतुर्थी सम्प्रदाने(2-3-13/570) इत्येवमादयः ।।
* कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा *(म.भा.1.331) । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।।
</1-4-32>
रुच्यर्थानां प्रीयमाणः ।। <1-4-33> ।।
रुचिना समानार्था रुच्यर्थाः । अन्यकर्तृकोऽभिलाषः = रुचिः । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । देवदत्ताय रोचते मोदकः । यज्ञदत्ताय स्वदतेऽपूपः । देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता ।
प्रीयमाण इति किम् ? देवदत्ताय रोचते मोदकः पथि ।।
</1-4-33>
श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।। <1-4-34> ।।
श्लाघ-ह्नुङ्-स्था-शप--इत्येतेषां ज्ञीप्स्यमानो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । ज्ञीप्स्यमानः - ज्ञपयितुमिष्यमाणः, बोधयितुमभिप्रेतः । देवदत्ताय श्लाघते । देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः । एवं देवदत्ताय ह्नुते । देवदत्ताय तिष्ठते, यज्ञदत्ताय तिष्ठते । देवदत्ताय शपते, यज्ञदत्ताय शपते ।
ज्ञीप्स्यमान इति किम् ? देवदत्तः श्लाघते ।।
</1-4-34>

धारेरुत्तमर्णः ।। <1-4-35> ।।
धारयतेः प्रयोगे उत्तमर्णो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । उत्तममृणं यस्य स उत्तमर्णः । कस्य चोत्तममृणम् ? यदीयं धनम्। धनस्वामी प्रयोक्ता उत्तमर्णः, स संप्रदासंज्ञो भवति । देवदत्ताय शतं धारयति । यज्ञदत्ताय शतं धारयति ।
उत्तमर्ण इति किम् ? देवदत्ताय शतं धारयति ग्रामे ।।
</1-4-35>
स्पृहेरीप्सितः ।। <1-4-36> ।।
`स्पृह ईप्सायाम्(धा.पा.1872) चुरादावदन्तः पठ्यते । तस्य ईप्सितो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । `ईप्सितः इत्यभिप्रेत उच्यते । पुष्पेभ्यः स्पृहयति । फलेभ्यः स्पृहयति ।
ईप्सित इति किम् ? पुष्पेभ्यो वने स्पृहयति ।।
</1-4-36>
क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।। <1-4-37> ।।
अमर्षः = क्रोधः । अपकारः = द्रोहः । अक्षमा = ईर्ष्या । गुणेषु दोषाविष्करणम् = असूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवति । क्रोधस्तावत्कोप एव, द्रोहादयोऽपि कोपप्रभावा एव गृह्यन्ते । तस्मात्सामन्येन विशेषणम्-यं प्रति कोप इति । देवदत्ताय क्रुद्ध्यति । देवदत्ताय द्रुह्यति । देवदत्तायेर्ष्यति । देवदत्तायासूयति ।
यं प्रति कोप इति किम् ? भार्यामीर्ष्यति-मैनामन्यो द्राक्षीदिति ।।
</1-4-37>
क्रुधद्रुहोरुपसृष्टयोः कर्मः ।। <1-4-38> ।।
पूर्वेण संप्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । क्रुधद्रुहोरुपसृष्टयोरुपसर्गसम्बद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति । देवत्तमभिक्रुध्यति। देवदत्तमभिद्रुह्यति ।
उपसृष्टयोरिति किम् ? देवदत्ताय क्रुध्यति । यज्ञदत्ताय द्रुह्यति ।।
</1-4-38>
राधीक्ष्योर्यस्य विप्रश्नः ।। <1-4-39> ।।
राधेरीक्षेश्च कारकं संप्रदानसंज्ञं भवति । कीदृशम् ? यस्य विप्रश्नः । विविधः प्रश्नः = विप्रश्नः । स कस्य भवति ? यस्य शुभाशुभं पृच्छ्यते । देवदत्ताय राध्यति । देवदत्तायेक्षते । नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः ।।
</1-4-39>
प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।। <1-4-40> ।।
प्रति-आङ्-इत्येवम्पूर्वस्य शृणोतेः कारकं संप्रदानसंज्ञं भवति, कीदृशम् ? पूर्वस्य कर्त्ता । प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे = प्रतिज्ञाने वर्त्तते । स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति । तत्र प्रयोक्ता पर्वस्याः क्रियायाः कर्त्ता सगंप्रदानसंज्ञो भवति । देवदत्ताय गां प्रतिशृणोति, देवदत्ताय गामाशृणोति । प्रतिजानीत इत्यर्थः ।।
</1-4-40>
अनुप्रतिगृणश्च ।। <1-4-41> ।।
`पूर्वस्य कर्ता इति वर्त्तते । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति । होत्रेऽनुगृणाति । होता प्रथमं शंसति तमन्यः प्रोत्साहति । अनुगरः, प्रतिगरः इति हि शंसितुः प्रोत्साहने वर्त्ते । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ।।
</1-4-41>
साधकतमं करणम् ।। <1-4-42> ।।
क्रियासिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसंज्ञं भवति । दात्रेण लुनाति । परशुना छिनत्ति ।
तमब्ग्रहणं किम् ? गङ्गायां घोषः । कूपे गर्गकुलम् ।
करणप्रदेषाः -कर्तृकरणयोस्तृतीया(2-3-18/561) इत्येवमादयः ।।
</1-4-42>
दिवः कर्म च ।। <1-4-43> ।।
पूर्वेण करणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । दिवः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति, चकारात्करणसंज्ञं च । अक्षान्दीव्यति, अक्षैर्दीव्यति ।।
</1-4-43>
परिक्रयणे संप्रदानमन्यतरस्याम् ।। <1-4-44> ।।
`साधकतमम् इति वर्तते । पूर्वेण करणसंज्ञायां प्राप्तायां संप्रदानसंज्ञा पक्षे विधीयते । परिक्रयणे साधकतमं कारकमन्यतरस्यां संप्रदानसंज्ञं भवति । परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्, नात्यन्तिकः क्रय एव । शतेन परिक्रीतोऽनुब्रूहि । शताय परिक्रीतोऽनुब्रूहि । सहस्रेण परिक्रीतोऽनुब्रूहि । सहस्राय परिक्रीतोऽनुब्रूहि ।
</1-4-44>
आधारोऽधिकरणम् ।। <1-4-45> ।।

आध्रियन्तेऽस्मिन् क्रिया इत्याधारः । कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणसंज्ञं भवति । कटे आस्ते । कटे शेते । स्थाल्यां पचति ।
अधिकरणप्रदेशाः-सप्तम्यधिकरणे च(2-3-36/633) इत्येवमादयः ।।
</1-4-45>
अधिशीङ्स्थासां कर्म ।। <1-4-46> ।।
पूर्वेणाधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । अधिपूर्वाणां शीङ् स्था-आस्-इत्येतेषामाधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते । ग्राममधितिष्ठति । पर्वतमध्यास्ते ।।
</1-4-46>
अभिनिविशश्च ।। <1-4-47> ।।
अभि-निपूर्वस्य विशतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते ।
कथं कल्याणेऽभिनिवेशः, पापेभिनिवेशः, या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशत इति । `अन्यतरस्याम् इति वर्तते, परिक्रयणे सम्प्रदानमन्यतरस्याम्(1-4-44/580) इत्यतः । सा च व्यस्थितविभाषा विज्ञायते ।।
</1-4-47>
उपान्वध्याङ्वसः ।। <1-4-48> ।।
उप-अनु-अधि-आङ्-इत्येवम्पूर्वस्य वसतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना, पर्वतमुपवसति । ग्राममनुवसति सेना, ग्राममधिवसति, ग्राममावसति ।।

- वसेरश्यर्थस्य प्रतिषेधो वक्तव्य *(म.भा.1.332) । ग्रामे उपवसति । भोजननिवृत्तिं करोतीत्यर्थः ।।

</1-4-48>
कर्तुरीप्सिततमं कर्म ।। <1-4-49> ।।
कर्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति ।
कर्तुरिति किम् ? माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न कर्तुः । तमब्ग्रहणं किम् ? पयसौदनं भुङ्क्ते ।
कर्मेत्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । इतरथा आधारस्यैव हि स्यात्--गेहं प्रविशतीति; ओदनं पचति, सक्तून्पिबतीत्यादिषु न स्यात् । पुनः कर्मग्रहणात् सर्वत्र सिद्धं भवति ।
कर्मप्रदेशाः--कर्मणि द्वितीया(2-3-2/537) इत्येवमादयः ।।
</1-4-49>
तथायुक्तं चानीप्सितम् ।। <1-4-50> ।।
येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत्प्रकारेण यदनीप्सितं युक्तं भवति तस्य कर्मसंज्ञा विधीयते ।
ईप्सितादन्यत्सर्वमनीप्सितम्-द्वेष्यम्, इतरच्च । विषं भक्षयति । चौरान्पश्यति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ।।
</1-4-50>
अकथितं च ।। <1-4-51> ।।
अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति । केनाकथितम् ? अपादानादिविशेषकथाभिः । परिगणर्न कर्त्तव्यम्--
`दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ।।(म.भा.1.334)
उपयुज्यत इत्युपयोगः = पयः प्रभृति, तस्य निमित्तं गवादि, तस्योपयुज्यमानपयः प्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते । पाणिना कांस्यपात्र्यां गां दोग्धि पयः । पाण्यादिकमप्युपयोगनिमित्तं तस्य कस्मान्न भवति ? नैतदस्ति; विहिता हि तत्र करणादिसंज्ञा, तदर्थमाह--अपूर्वविधाविति ।
ब्रुविशासिगुणेन च यत्सचते । ब्रुविशास्योर्गुणः साधनं प्रधानं कर्म धर्मादिकम्, तेन यत्संबध्यते, तदकीर्तितमाचरितं कविना = तदकथितमुक्तं सूत्रकारेण ।
दुहि-गां दोग्धि पयः । याचि-पौरवं गां याचते । रुधि-गामवरुणद्धि व्रजम् । प्रच्छि-माणवकं पन्थानं पृच्छति । भिक्षि-पौरवं गां भिक्षते । चिञ्-वृक्षमवचिनोति फलानि । ब्रुवि - माणवकं धर्मं ब्रूते । शासि-माणवकं धर्ममनुशास्ति ।।
</1-4-51>
गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।। <1-4-52> ।।
अर्थशब्दः प्रत्येकमभिसम्बध्यते । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां तथा शब्दकर्मकाणामकर्मकाणां च अण्यन्तानां यः कर्ता स ण्यन्तानां कर्मसंज्ञो भवति । गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम् । याति माणवको ग्रामम्, यापयति माणवकं ग्रामम् ।
* गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः * (म.भा.1.335)। नयति भारं देवदत्तः । नाययति भारं देवदत्तेन । वहति भारं देवदत्तः, वाहयति भारं देदत्तेन ।।
* वहेरनियन्तृकर्तृकस्येति वक्तव्यम् *(म.भा.1.337) । इह प्रतिषेधो मा भूत्-वहन्ति यवान् बलीवर्दाः, वाहयति यवान् बलीवर्दानिति । बुद्धि--बुध्यते माणवको धर्मम्, बोधयति माणवकं धर्मम् । वेत्ति माणवको धर्मम्, वेदयति माणवको धर्मम् । प्रत्यवसानम् = अभ्यवहारः -भुङ्क्ते

माणवक ओदनम्, भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम्, आशयति माणवकमोदनम् ।।
* आदिखाद्योः प्रतिषेधो वक्तव्यः *(म.भा.1.337) । अत्ति माणवक ओदनम्, आदयते माणवकेनौदनम् । खादति माणवकः, खादयति माणवकेन ।

* भिक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः *(म.भा.1.337) । भक्षयति पिण्डीं देवदत्तः, भक्षयति पिण्डीं देवदत्तेनेति ।
अहिंसार्थस्येति किम् ? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति बलीवर्दान्सस्यम् ।
शब्दकर्मणाम्--अधीते माणवको वेदम्, अध्यापयति माणवकं वेदम् । पठति माणवको वेदम्, पाठयति माणवकं वेदम् । अकर्मकाणाम्--आस्ते देवदत्तः, आसयति देवदत्तम् । शेते देवदत्तः, शाययति देवदत्तम् ।
एतेषामिति किम् ? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेनेति । अण्यन्तानामिति किम् ? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः ।।
</1-4-52>
हृक्रोरन्यतरस्याम् ।। <1-4-53> ।।
`अणि कर्ता स णौ इति वर्तते । हरतेः करोतेश्चाण्यन्तयोर्यः कर्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति । हरति भारं माणवकः, हारयति भारं माणवकं माणवकेनेति वा । करोति कटं देवदत्तः, कारयति कटं देवदत्तं देवदत्तेनेति वा ।
* अभिवादिदृशेरात्मनेपद उपसंख्यानम् *(म.भा.1.338) । अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तम्, देवदत्तेनेति वा । पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजानम्, भृत्यैरिति वा ।
आत्मनेपद इति किम् ? दर्शयति चैत्रं मैत्रमपरः--प्राप्तविकल्पत्वाद् द्वितीयैव । अभिवादयति गुरुं माणवकेन पिता-अप्राप्तविकल्पत्वात्तृतीयैव ।।
</1-4-53>
स्वतन्त्रः कर्ता ।। <1-4-54> ।।
`स्वतन्त्रः इति प्रधानभूत उच्यते । अगुणभूतो यः क्रियासिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति । देवदत्तः पचति । स्थाली पचति ।
कर्तृप्रदेशाः--कर्तृकरणयोस्तृतीया(2-3-18/561) इत्येवमादयः ।।
</1-4-54>
तत्प्रयोजको हेतुश्च ।। <1-4-55> ।।
तदिति अनन्तरः कर्ता परामृश्यते । तस्य प्रयोजकः = तत्प्रयोजकः निपातनात्समासः । स्वतन्त्रस्य प्रयोजको योऽर्थः तत्कारकं हेतुसंज्ञं भवति, चकारात्कर्तृसंज्ञं च ।
संज्ञासमावेशार्थश्चकारः । कुर्वाणं प्रयुङ्क्ते, कारयति । हारयति । हेतुत्वाद् णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते ।
हेतुप्रदेशाः-हेतुमति च(3-1-26/2576) इत्येवमादयः ।।
</1-4-55>
प्रागीश्वरान्निपाताः ।। <1-4-56> ।।
अधिरीश्वरे(1-4-97/644) इति वक्ष्यति । प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामः, निपातसंज्ञास्ते वेदितव्याः । वक्ष्यति--चादयोऽसत्त्वे(1-4-57/20) च, वा, ह, अह ।
प्राग्वचनं संज्ञासमावेशार्थम् । गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिस्सह निपातसंज्ञा समाविशति । रेफोच्चारणम् ईश्वरे तोसुन्कसुनौ(3-4-13/3440) इत्ययमवधिर्मा विज्ञायीति ।।
`रीश्वराद्वीश्वरान्मा भूत् कृन्मेजन्तः परोऽपि सः ।
समासेष्वव्ययीभावो लौकिकं चातिवर्तते ।।(म.भा.1.340)
</1-4-56>
चादयोऽसत्त्वे ।। <1-4-57> ।।
चादयो निपातसंज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते । प्रसज्यप्रतिषेधोऽयम् । `सत्त्वम् इति द्रव्यमुच्यते ।
च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । सूपत् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिम् । नकिम् । माङ् । माङो ङकारो विशेषणार्थः--माङि लुङ्(3-3-175/2219) इति, इह न भवति-मा भवतु, मा भविष्यति । नञ् । यावत् । तावत् । त्वा । त्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । वषट् । स्वधा । ओम् । किल । तथा । अथ । सु । स्म । अस्मि । अ । इ । उ । ऋ । लृ । ए । ए । ओ । औ । अम् । तक् । उञ् । उकञ् । वेलायाम् । मात्रायाम् । यथा । यत् । यम् । तत् । किम् । पुरा । अद्धा । धिक् । हाहा । हे । है । प्याट् । पाट् । थाट् । अहो । उताहो । हो । तुम् । तथाहि । खलु । आम् । आहो । अथो । ननु । मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चन । बत । इह । आम् । शम् । कम् । अनुकम् । नहिकम् । हिकम् । सुकम् । सत्यम् । ऋतम् । श्रद्धा । इद्धा । मुधा । नोचेत् । नचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव । अनु । हाहौ । हैहा । ईहा । आहोस्वित् । छम्बट् । खम् । दिष्ट्या । पशु । वट् । सह । आनुषक् । अङ्ग । फट् । ताजक् । अये । अरे । चटु । बाट् । कुम् । खुम् । घुम् । हुम् । आईम् । शीम् । सीम् । वै ।
उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः(ग.सू.16) । उपसर्गप्रतिरूपकाः-
अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ।।

अच उपसर्गात्तः(7-4-48/3078) इति तत्वं न भवति । दुर्नीतम् । दुर्नयः । दुर्निर्णयः । उपसर्गात्(8-4-14/2287) इति णत्वं न भवति ।
असत्त्व इति किम् ? पशुर्वै पुरुषः । पशुः पुरोडाशः ।
निपातप्रदेशाः-स्वरादिनिपातमव्ययम्(1.137/447) इत्येवमादयः ।।
</1-4-57>
प्रादयः ।। <1-4-58> ।।
प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति ।
प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप ।
पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम् । उपसर्गाः क्रियायोगे(1-4-59/22) इति चादीनामुपसर्गसंज्ञा मा भूत् । असत्त्व इत्येव-परा जयन्ति सेनाः ।।
</1-4-58>
उपसर्गाः क्रियायोगे ।। <1-4-59> ।।
प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति । प्रणयति, परिणयति । प्रणायकः, परिणायकः ।
क्रियायोग इति किम् ? प्रगतो नायकोऽस्माद्देशात् प्रनायको देशः ।
* मरुच्छब्दस्य चोपसंख्यानं कर्तव्यम् *(म.भा.1.341) । मरुद्भिर्दत्तो मरुत्तः । संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि अच उपसर्गात्तः(7-4-47/3078) इति तत्त्वं भवति ।

- श्रच्छब्दस्योपसंख्यानम् * (म.भा.1.341)। आतश्चोपसर्गे(3-3-106/3283) इत्यङ् भवति--श्रद्धा ।

उपसर्गप्रदेशाः--उपसर्गे घोः किः(3-3-93/3270) इत्येवमादयः ।।
</1-4-59>
गतिश्च ।। <1-4-60> ।।
गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे । प्रकृत्य । प्रकृतम् । यत्प्रकरोति ।
योगविभाग उत्तरार्थः । उत्तरत्र गतिसंज्ञैव यथा स्यात्, उपसर्गसंज्ञा मा भूत् । ऊरीस्यादित्यत्र उपसर्गप्रादुर्भ्यामस्तिर्यच्परः(8-3-87/2472) इति षत्वं प्रसज्येत ।
चकारः संज्ञासमावेशार्थः । प्रणीतम् । अभिषिक्तम् । गतिरनन्तरः(6-2-49/3783) इति स्वरः, उपसर्गात्(8-4-14/2287)(8-3-65/2270) इति णत्वषत्वे च भवतः ।
* कारिकाशब्दस्योपसख्यानम् * ()। कारिकाकृत्य । कारिकाकृतम् । यत्कारिकाकरोति ।
</1-4-60>
<K.1.598> * पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम् *(म.भा.1.342) । पनरुत्स्यूतं वासो देयम् (मै.<1-7-2>)। गतिर्गतौ(8-1-70/3977) इति निघातो भवति । `चनोहितः(ऋ.<3-11-2>) । गतिरनन्तरः(6-2-49/3783) इति स्वरः ।
गतिप्रदेशाः-कुगतिप्रादयः(2-2-18/761) इत्येवमादयः ।।
</1-7-2>
ऊर्यादिच्विडाचश्च ।। <1-4-61> ।।
ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति । च्विडाचोः कृभ्वस्तियोगे विधानम्, तत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते ।
<K.1.599> ऊरीउररीशब्दावङ्गीकरणे विस्तारे च । ऊरीकृत्य, ऊरीकृतम्, यदूरीकरोति । उररीकृत्य, उररीकृतम्, यदुररीकरोति ।
पापी । ताली । आताली । वेताली । धूसी । शकला । संशकला । ध्वंसकला । भ्रंशकला । एते शकलादयो हिंसायाम् । शकलाकृत्य । संशकलाकृत्य । ध्वंसकलाकृत्य । भ्रंशकलाकृत्य ।
गुलुगुधा पीडार्थे । गुलुगुधाकृत्य ।
सजूः सहार्थे । सजूःकृत्य ।
फलू, फली, विक्ली, आक्ली - इति विकारे । फलूकृत्य । फलीकृत्य । विक्लीकृत्य । आक्लीकृत्य ।
आलोष्टी, कराली, केवाली, शेवाली, वर्षाली, मस्मसा, मसमसा - एते हिंसायाम् ।
वषट् । वौषट् । श्रौषट् । स्वाहा । स्वधा । बन्धा । प्रादुस् । श्रुत् । आविस् । <K.1.600> च्व्यन्ताः खल्वपि -- शुक्लीकृत्य । शुक्लीकृतम् । यच्छुक्लीकरोति । डाच् -- पटपटाकृत्य । पटपटाकृतम् । यत्पटपटाकरोति ।।
</1-4-61>
अनुकरणं चानितिपरम् ।। <1-4-62> ।।
इतिः परो यस्मादिति बहुव्रीहिः । अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति । खाट्कृत्य । खाट्कृतम् । यत्खाट्करोति ।
अनितिपरमिति किम् ? खाडिति कृत्वा निरष्ठीवत् ।।
</1-4-62>
आदरानादरयोः सदसती ।। <1-4-63> ।।

प्रीत्यतिशयः = आदरः । परिभवौदासीन्यम् = अनादरः । <K.1.602> आदरानादरयोर्यथाक्रमं
सदसच्छब्दौ गतिसंज्ञौ भवतः । सत्कृत्य, सत्कृतम्, यत्सत्करोति । असत्कृत्य, असत्कृतम्, यदसत्करोति ।
आदरानादरयोरिति किम् ? सत्कृत्वा काण्डं गतः । असत्कृत्वा काण्डं गतः ।।
</1-4-63>
भूषणेऽलम् ।। <1-4-64> ।।
<K.1.603> `अलम् इति प्रतिषेधे सामर्थ्ये पर्याप्तौ भूषणे चेति विशेषणमुपादीयते । भूषणे योऽलंशब्दः स गतिसंज्ञो भवति । अलंकृत्य, अङ्लकृतम्, यदलङ्करोति ।
भूषण इति किम् ? अलं भुक्त्वा ओदनं गतः ।।
</1-4-64>
अन्तरपरिग्रहे ।। <1-4-65> ।।
अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञो भवति । परिग्रहः = स्वीकरणम्, तदभावे गतिसंज्ञा विधीयते । अन्तर्हत्य, अन्तर्हतम्, यदन्तर्हन्ति ।
अपरिग्रह इति किम् ? अन्तर्हत्वा मूषिकां श्येनो गतः । परिगृह्य गत इत्यर्थः ।
* अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या *। अन्तर्द्धा । अन्तर्द्धिः । अन्तर्णयति ।।
</1-4-65>
कणेमनसी श्रद्धाप्रतीघाते ।। <1-4-66> ।।
<K.1.604>
कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत्पिबति यावदस्याभिलाषो निवृत्तः । श्रद्धा प्रतिहतेत्यर्थः ।
श्रद्धाप्रतीघात इति किम् ? कणे हत्वा गतः । मनो हत्वा गतः ।।
</1-4-66>
पुरोऽव्ययम् ।। <1-4-67> ।।
असिप्रत्ययान्तः पुरःशब्दोऽव्ययम् । स गतिसंज्ञो भवति । समासस्वरोपचाराः प्रयोजनम् । पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति ।
अव्ययमिति किम् ? पूः पुरौ, पुरः कृत्वा काण्डं गतः ।।
</1-4-67>
<K.1.605>
अस्तं च ।। <1-4-68> ।।
अस्तंशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्त्तते । स गतिसंज्ञो भवति । अस्तंगत्य सविता पुनरुदेति । अस्तंगतानि धनानि । यदस्तं गच्छति ।
अव्ययमित्येव -- अस्तं काण्डम् । क्षिप्तमित्यर्थः ।।
</1-4-68>
अच्छ गत्यर्थवदेषु ।। <1-4-69> ।।
अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्त्तते । स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति । अच्छगत्य, अच्छगतम्, यदच्छगच्छति । वदतौ -- अच्छोद्य, अच्छोदितम्, यदच्छवदति । अव्ययमित्येव -- उदकमच्छं गच्छति ।।
</1-4-69>
<K.1.606>
अदोऽनुपदेशे ।। <1-4-70> ।।
अदःशब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गतिसंज्ञो भवति । उपदेशः = परार्थः प्रयोगः । स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषयः । अदःकृत्य, अदःकृतम्, यददःकरोति ।
अनुपदेश इति किम् ? अदः कृत्वा काण्डं गत इति परस्य कथयति ।।
</1-4-70>
तिरोऽन्तर्धौ ।। <1-4-71> ।।
अन्तर्धिः = व्यवधानम् । तत्र तिरःशब्दो गतिसंज्ञो भवति । तिरोभूय, तिरोभूतम्, यत्तिरोभवति ।
अन्तर्धाविति किम् ? तिरो भूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः ।।
</1-4-71>
विभाषा कृञि ।। <1-4-72> ।।
`अन्तर्धौ इति वर्तते । प्राप्तविभाषेयम् । तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति । तिरःकृत्य, तिरस्कृत्य । तिरस्कृतम् । यत्तिरस्करोति । तिरः कृत्वा, तिरस्कृत्वा । अन्तर्धावित्येव -- तिरः कृत्वा काष्ठं तिष्ठति ।।
</1-4-72>
<K.1.607>
उपाजेऽन्वाजे ।। <1-4-73> ।।

`विभाषा कृञि इति वर्तते । उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । तौ कृञि विभाषा गतिसंज्ञौ भवतः । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा ।।
</1-4-73>
साक्षात्प्रभृतीनि च ।। <1-4-74> ।।
`विभाषा कृञि इति वर्तते । साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति ।
* साक्षात्प्रभृतिषु च्व्यर्थवचनम् * । साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य, मिथ्या कृत्वा । साक्षात् । मिथ्या । चिन्ता । भद्रा । लोचना । विभाषा । संपत्का । आस्था । अमा । श्रद्धा । प्राजर्या । प्राजरुहा । वीजर्या । वीजरुहा । संसर्या । अर्थे । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते । अग्नौ । वशे । विकम्पने । विहसने । प्रहसने । प्रतपने । प्रादुस् । नमस् । आविस् ।।
</1-4-74>
<K.1.608>
अनत्याधान उरसिमनसी ।। <1-4-75> ।।
`विभाषा कृञि इति वर्तते । अत्याधानम् = उपश्लेषणम्, तदभावेऽनत्याधाने उरसिमनसी शब्दौ विबाषा कृञि गतिसंज्ञौ भवतः । उरसिकृत्य, उरसि कृत्वा । मनसिकृत्य, मनसि कृत्वा ।
अनत्याधान इति किम् ? उरसि कृत्वा पाणिं शेते ।।
</1-4-75>
<K.1.609>
मध्ये पदे निवचने च ।। <1-4-76> ।।
`विभाषा कृञि इति वर्तते । चकाराद् `अनत्याधाने इति च । मध्ये, पदे, निवचने -- इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनम् = वचनाभावः । निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः । अनत्याधान इत्येव -- हस्तिनः पदे कृत्वा शिरः शेते ।।
</1-4-76>
नित्यं हस्ते पाणावुपयमने ।। <1-4-77> ।।
`कृञि इति वर्तते । `हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने । उपयमनम् = दारकर्म। पाणौकृत्य । हस्तेकृत्य । दारकर्म कृत्वेत्यर्थः ।
उपयमने इति किम् ? हस्ते कृत्वा कार्षापणं गतः ।।
</1-4-77>
प्राध्वं बन्धने ।। <1-4-78> ।।
`कृञि इति वर्तते । `प्राध्वम् इति मकारान्तमव्ययमानुकूल्ये वर्तते, तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञो भवति । प्राध्वंकृत्य ।
<K.1.610> बन्धन इति किम् ? प्राध्वं कृत्वा शकटं गतः ।।
</1-4-78>
जीविकोपनिषदावौपम्ये ।। <1-4-79> ।।
`कृञि इति वर्तते । जीविका, उपनिषत् -- इत्येतौ शब्दौ औपम्ये विषये कृञि गतिसंज्ञौ भवतः । जीविकाकृत्य । उपनिषत्कृत्य ।
<K.1.611> औपम्य इति किम् ? जीविकां कृत्वा गतः ।।
</1-4-79>
ते प्राग्धातोः ।। <1-4-80> ।।
ते गत्युपसर्गसंज्ञकाः धातोः प्राक् प्रयोक्तव्याः । तथा चैवोदाहृताः । `ते ग्रहणमुपसर्गार्थम् । गतयो ह्यनन्तराः ।।
</1-4-80>
छन्दसि परेऽपि ।। <1-4-81> ।।
प्राक् प्रयोगे प्राप्ते छन्दसि परेऽभ्यनुज्ञायन्ते । छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः । न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति । केवलं परप्रयोगेऽपि क्रियायोग एषामस्तीति ज्ञाप्यते । याति नि हस्तिना । नियाति हस्तिना । हन्ति नि मुष्टिना । निहन्ति मुष्टिना ।।
</1-4-81>
व्यवहिताश्च ।। <1-4-82> ।।
</1-4-82>
व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि दृश्यन्ते । आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः (ऋ.<3-45-1>)। आ याहि (ऋ.<6-16-10>)।।
</3-45-1>
कर्मप्रवचनीयाः ।। <1-4-83> ।।

`कर्मप्रवचनीयाः इत्यधिकारो वेदितव्याः । यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः । अधिरीश्वरे(1-4-97/644) इति यावद्वक्ष्यति ।
कर्मप्रवचनीयप्रदेशाः-कर्मप्रवचनीययुक्ते द्वितीया(2-3-8/548) इत्येवमादयः ।।
</1-4-83>
अनुर्लक्षणे ।। <1-4-84> ।।
अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । `शाकल्यस्य संहितामनु प्रावर्षत्(म.भा.1.346) । अनडुद्यज्ञमन्वसिञ्चत् । अगस्त्यमन्वसिञ्चन्प्रजाः ।
किमर्थमिदमुच्यते, यावता लक्षणेत्थम्भूताख्यान(1-4-90/552) इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा ? हेत्वर्थं तु वचनम्, हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यात् ।।
</1-4-84>
तृतीयार्थे ।। <1-4-85> ।।
अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । नदीमन्ववसिता सेना । पर्वतमन्ववसिता सेना । पर्वतेन सम्बद्धेत्यर्थः ।।
</1-4-85>
हीने ।। <1-4-86> ।।
`हीनः इति न्यून उच्यते, स चोत्कृष्टापेक्षः । तेनेयं हीनोत्कृष्टसम्बन्धे संज्ञा विज्ञायते । हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति । अनुशाकटायनं वैयाकरणाः । अन्वर्जुनं योद्धारः ।।
</1-4-86>
उपोऽधिके च ।। <1-4-87> ।।
उपशब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । हीने--उपशाकटायनं वैयाकरणाः ।।
</1-4-87>
अपपरी वर्जने ।। <1-4-88> ।।
अप-परी--शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः । प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धः = वर्जनम् । अप त्रिगर्त्तेभ्यो वृष्टो देवः । परि परि त्रिगर्त्तेभ्यो वृष्टो देवः ।
वर्जन इति किम् ? ओदनं परिषिञ्चति ।।
</1-4-88>
आङ् मर्यादावचने ।। <1-4-89> ।।
`आङ् इत्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति । अवधिः-- मर्यादा । वचनग्रहणादभिविधिरपि गृह्यते । आ पाटलिपुत्राद् वृष्टो देवः । आकुमारं यशः पाणिनेः । आ सांकाश्यात् । आ मथुरायाः ।
मर्यादावचने इति किम् ? ईषदर्थे क्रियायोगे च मा भूत् ।।
</1-4-89>
लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ।। <1-4-90> ।।
लक्षणे, इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायाम्-प्रति, परि, अनु-इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति । लक्षणे तावत्-वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि । वृक्षमनु । इत्थम्भूताख्याने--साधुर्देवदत्तो मातरं प्रति । मातरं परि । मातरमनु । भागे--यदत्र मां प्रति स्यात् । मां परि स्यात् । मामनु स्यात् । वीप्सायाम्--वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनु सिञ्चति ।
लक्षणादिष्विति किम् ? ओदनं परिषिञ्चति ।
अथ परिशब्दयोगे पञ्चमी कस्मान्न भवति--पञ्चम्यपाङ्परिभिः(2-3-10/598) इति ? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात् ।
</1-4-90>
अभिरभागे ।। <1-4-91> ।।
लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति । वृक्षमभि विद्योतते । साधुर्देवदत्तो मातरमभि । वृक्षमभि सिञ्चति ।
अभागा इति किम् ? भागः स्वीक्रियमाणोंऽशः । यदत्र ममाभिष्यात् तद्दीयताम् । यदत्र मम भवति तद्दीयतामित्यर्थः ।।
</1-4-91>
प्रतिः प्रतिनिधिप्रतिदानयोः ।। <1-4-92> ।।
मुख्यसदृशः = प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनम् = प्रतिदानम् । प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति । अभिमन्युरर्जुनतः प्रति । माषानस्मै तिलेभ्यः प्रति यच्छति ।।
</1-4-92>
अधिपरी अनर्थकौ ।। <1-4-93> ।।
अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति ।
गत्युपसर्गसंज्ञाबाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते ।।
</1-4-93>

सुः पूजायाम् ।। <1-4-94> ।।
सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति । सुसिक्तं भवता । सु स्तुतं भवता । धात्वर्थः स्तूयते । उपसर्गसंज्ञाश्रयं षत्वं न भवति ।
पूजायामिति किम् ? सुषिक्तं किं तवात्र ।।
</1-4-94>
अतिरतिक्रमणे च ।। <1-4-95> ।।
अतिशब्दः अतिक्रमणे चकारात्पूजायां च कर्मप्रवचनीयसंज्ञो भवति । निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिः = अतिक्रमणम् । अति सिक्तमेव भवता, अति स्तुतमेव भवता । पूजायाम्-अति सिक्तं भवता । अति स्तुतं भवता । शोभनं कृतमित्यर्थः ।
</1-4-95>
अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ।। <1-4-96> ।।
पदार्थे, सम्भावने, अन्ववसर्गे, गर्हायाम्, समुच्चये च वर्तमानः अपिः कर्मप्रवचनीयसंज्ञो भवति । पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः । सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । मात्रा, बिन्दुः; स्तोकमित्यस्यार्थेऽपिशब्दो वर्तते । संभावनम् = अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणम् । अपि सिञ्चेन्मूलकसहस्रम् । अपि स्तुयाद्राजानम् । अन्ववसर्गः = कामचाराभ्यनुज्ञानम्-अपि सिञ्च, अपि स्तुहि । गर्हा = निन्दा-धिग्जाल्मं देवदत्तम्, अपि सिञ्चेत्पलाण्डुम्, अपि स्तुयाद् वृषलम् । समुच्चये--अपि सिञ्च । अपि स्तुहि । सिञ्च च स्तुहि च । उपसर्गसंज्ञाबाधनात् षत्वं न भवति ।।
</1-4-96>
अधिरीश्वरे ।। <1-4-97> ।।
ईश्वरः = स्वामी, स च स्वमपेक्षते । तदयं स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञो भवति । तत्र कदाचित्स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति, कदाचित्स्वात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ।।
</1-4-97>
विभाषा कृञि ।। <1-4-98> ।।
अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति । यदत्र मामधिकरिष्यति । कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् तिङि चोदात्तवति(8-1-71/3978) इति निघातो न भवति ।।
</1-4-98>
लः परस्मैपदम् ।। <1-4-99> ।।
`लः इति षष्ठी आदेशापेक्षा । लादेशाः परस्मैपदसंज्ञा भवन्ति । तिप्, तस्, झि । सिप्, थस्, थ । मिप्, वस्, मस् । शतृक्वसू च ।
परस्मैपदप्रदेशाः--सिचि वृद्धिः परस्मैपदेषु(7-2-1/2297) इत्येवमादयः ।।
</1-4-99>
तङानावात्मनेपदम् ।। <1-4-100> ।।
`तङ् इति प्रत्याहारो नवानां वचनानाम् । `आन इति शानच्कानचोर्ग्रहणम् । पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते । त, आताम्,झ । थास्, आथाम्, ध्वम् । इट्, वहि, महिङ् । आनः खल्वपि--शानच्कानचौ । `लः इत्येव--कतीह निघ्नानाः ।
आत्मनेपदप्रदेशाः--अनुदात्तङित आत्मनेपदम्(1-3-12/2157) इत्येवमादयः ।।
</1-4-100>
तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।। <1-4-101> ।।
तिङोऽष्टादश प्रत्ययाः-नव परस्मैपदसंज्ञकाः, नवात्मनेपदसंज्ञकाः । तत्र परस्मैपदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति ।
तिप्, तस्, झि--इति प्रथमः । सिप्, थस्, थ--इति मध्यमः । मिप्, वस्, मस्--इत्युत्तमः ।
आत्मनेपदेषु-त, आताम्, झ-इति प्रथमः । थास्, आथाम्, ध्वम्-इति मध्यमः । इट्, वहि, महिङ्--इत्युत्तमः ।
प्रथममध्यमोत्तमप्रदेशाः--शेषे प्रथमः(1-4-108/2165) इत्येवमादयः ।।
</1-4-101>
तान्येकवचनद्विवचनबहुवचनान्येकशः ।। <1-4-102> ।।
तान्येकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । एकशः = एकैकं पदम् । `तिप् इत्येकवचनम् । `तस् इति द्विवचनम् । `झि इति बहुवचनम् । एवं सर्वत्र ।
एकवचनद्विवचनबहुवचनप्रदेशाः-बहुषु बहुवचन(1-4-21/187)इत्येवमादयः ।।
</1-4-102>
सुपः ।। <1-4-103> ।।
तिङां त्रिकेष्वेकवचनादिसंज्ञा विहिताः, संप्रति सुपां त्रिकेषु विधीयन्ते । सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति ।
`सु इत्येकवचनम् । `औ इति द्विवचनम् । `जस्इति बहुवचनम् । एवं सर्वत्र ।।
</1-4-103>

विभक्तिश्च ।। <1-4-104> ।।
`त्रीणि त्रीणि इत्यनुवर्तते । त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति, सुपस्तिङश्च ।
विभक्तिप्रदेशाः--अष्टन आ विभक्तौ(7-2-84/371) इत्येवमादयः ।।
</1-4-104>
युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।। <1-4-105> ।।
लस्य(3-4-77/2153) इत्यधिकृत्य सामान्येन तिबादयो विहिताः, तेषामयं पुरुषनियमः क्रियते-युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति । त्वं पचसि, युवां पचथः, यूयं पचथ । अप्रयुज्यमानेऽपि--पचसि, पचथः, पचथ ।।
</1-4-105>
प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।। <1-4-106> ।।
प्रहासः = परिहासः, क्रीडा । प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते ।
प्रहास इति किम् ? एहि मन्यसे ओदनं भोक्ष्य इति । सुष्ठु मन्यसे, साधु मन्यसे ।।
</1-4-106>
अस्मद्युत्तमः ।। <1-4-107> ।।
उत्तमपुरुषो नियम्यते । अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति । अहं पचामि । आवां पचावः । वयं पचामः । अप्रयुज्यमानेऽपि--पचामि । पचावः पचामः ।।
</1-4-107>
शेषे प्रथमः ।। <1-4-108> ।।
`शेषे इति मध्यमोत्तमविषयादन्य उच्यते । यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे
प्रथमपुरुषो भवति । पचति । पचतः । पचन्ति ।।
</1-4-108>
परः संनिकर्षः संहिता ।। <1-4-109> ।।
परशब्दोऽतिशये वर्तते । संनिकर्षः = प्रत्यासत्तिः । परो यः संनिकर्षः = वर्णानामर्धमात्राकालव्यवधानम्, स संहितासंज्ञो भवति । दध्यत्र । मध्वत्र ।
संहिताप्रदेशाः--संहितायाम्(6-1-72/145) इत्येवमादयः ।।
</1-4-109>
विरामोऽवसानम् ।। <1-4-110> ।।
विरतिः = विरामः, विरम्यतेऽनेनेति वा विरामः । सोऽवसानसंज्ञो भवति । दधिं । मधुँ । वृक्षः । प्लक्षः ।
अवसानप्रदेशाः--खरवसानयोर्विसर्जनीयः(8-3-15/76) इत्येवमादयः ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमाध्यायस्य चतुर्थः पादः ।।
</1-4-110>

# काशिका/द्वितीयोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pb8
< काशिका | द्वितीयोऽध्यायः

अथ द्वितीयाध्याये प्रथम पादः
<K.2.003>
समर्थः पदविधिः ।<2-1-1>।
परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स सर्वः समर्थो वेदितव्यः। <K.2.004> विधीयत इति विधिः, पदानां विधिः = पदविधिः। स पुनः समासादिः। <K.2.005> समर्थः = शक्तः। विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः। <K.2.006> अथ वा समर्थपदाश्रयत्वात् समर्थः। समर्थानां पदानां सम्बद्धार्थानां <K.2.008> संसृष्टार्थानां विधिर्वेदितव्यः। वक्ष्यति -- द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः -- कष्टं श्रितः कष्टश्रितः। समर्थग्रहणं किम्? पश्य देवदत्त कष्टं श्रितो विष्णुमित्रो गुरुकुलम्। <K.2.009> तृतीया तत्कृतार्थेन गुणवचनेन -- शङ्कुलया खण्डः शङ्कुलाखण्डः। समर्थग्रहणं किम्? किं त्वं करिष्यसि शङ्कुलया खण्डो देवदत्त उपलेन। <K.2.010> चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः -- यूपाय दारु यूपदारु। समर्थग्रहणं किम् ? गच्छ त्वं यूपाय दारु देवदत्तस्य गृहे। पञ्चमी भयेन -- वृकेभ्यो भयं वृकभयम्। समर्थग्रहणं किम्? गच्छ त्वं मा वृकेभ्यः भयं देवदत्तस्य यज्ञदत्तात्। षष्ठी -- राज्ञः पुरुषो राजपुरुषः। समर्थग्रहणं किम्? भार्या राज्ञः पुरुषो देवेदत्तस्य। सप्तमी शौण्डैः -- अक्षेषु शौण्डः अक्षशौण्डः। समर्थग्रहणं किम्? शक्तस्त्वमक्षेषु शौण्डः पिबति पानागारे। पदग्रहणं किम् ? वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारीच्छत्रं हर देवदत्तात्। यणादेशो नित्यश्च तुग्भवति।।
<K.2.011>
</2-1-1>
सुबामन्त्रिते पराङ्गवत्स्वरे ।<2-1-2>।
सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति, स्वरे=स्वरलक्षणे कर्तव्ये। तादात्म्यातिदेशोऽयम्। सुबन्तमामन्त्रितमनुप्रविशति। वक्ष्यति-- आमन्त्रितस च(6-1-198/3353), आमन्त्रितस्यादिरुदात्तो भवति। स ससुप्कस्यापि यथा स्यात्। कुण्डेनाटन्। परशुनावृश्चन्। मद्राणां पाजन्। कश्मीराणां राजन्। <K.2.012> सुबिति किम् ? पीड्ये पीड्यमान। आमन्त्रित इति किम् ? गेहे गार्ग्यः। <K.2.013> परग्रहणं किम् ? पूर्वस्य मा भूत्-देवदत्त कुण्डेनाटन्। अङ्गग्रहणं किम् ? यथा मृत्पिण्डीभूतः स्वरं लभेत। उभयोराद्युदात्तत्वं मा भूत्। <K.2.014> वत्करणं किम् ? स्वाश्रयमपि कार्यं यथा स्यात्। आम् कुण्डेनाटन्। आम एकान्तरमामन्त्रितमनन्तिके(8-1-95/3962) इत्येकान्तरता भवति। स्वर इति किम् ? कूपे सिञ्चन्। चर्म नमन्। षत्वणत्वे प्रति पराङ्गवन्न भवति। <K.2.015> *सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् * । तीक्ष्णया सूच्या सीव्यन्। तीक्ष्णेन परशुना वृश्चन्।(म.भा.1.375) * अव्ययानां प्रतिषेधोवक्तव्यः *। उच्चैरधीयानः। नीचैरधीयानः(म.भा.1.376)।।

</2-1-2>
प्राक्कडारात्समासः ।<2-1-3>।
कडारसंशब्दनात्प्राग् यानित ऊर्ध्वमनुक्रमिष्यामस्ते समाससंज्ञा वेदितव्याः। <K.2.016> वक्ष्यति - यथाऽसादृश्ये, यथावृद्धं ब्राह्मणानामन्त्रयस्व। प्राग्वचनं संज्ञासमावेशार्थम्। समासप्रदेशाः -- तृतीयासमासे इत्येवमादयः।।

</2-1-3>
<K.2.017>
सह सुपा । <2-1-4>।
`सुप् इति वर्तते, `सह इति `सुपा इति च त्रयमप्यधिकृतं वेदितव्यम्। यदित
ऊर्ध्वमनुक्रमिष्यामस्तत्रेदमुपस्थितं द्रष्टव्यम्। वक्ष्यति -- द्वितीया श्रित इति, द्वितीयान्तं श्रितादिभिः सह समस्यते; कष्टं श्रितः कष्टश्रितः। <K.2.018> सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात् -- अनुव्यचलत्, अनुप्रावर्षत्।।

</2-1-4>
अव्ययीभावः ।<2-1-5>।
अव्ययीभावः इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसंज्ञास्ते वेदितव्याः। वक्ष्यति -- यथाऽसादृश्यते, यथावृध्दं ब्राह्मणानामन्त्रयस्व। अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। <K.2.019> अव्ययीभावप्रदेशाः -- अव्ययीभावश्च इत्येवमादयः।।
</2-1-5>
अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्ति- साकल्यान्तवचनेषु ।<2-1-6>।

`सुप् `सुपा इति च वर्तते। विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकमभिसम्बद्ध्यते। <K.2.020> विभक्तिवचने तावत् -- स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्। समीपवचने -- कुम्भस्य समीपम् उपकुम्भम्। उपमणिकम्। समृद्धिः = ऋध्देराधिक्यम्। समृद्धिर्मद्राणाम् सुमद्रम्, सुमगधं वर्तते। व्यृद्धिः = ऋद्धेरभावः। गवदिकानामृद्धेरभावः दुर्गवदिकम्, दुर्यवनं वर्तते। <K.2.021> अर्थाभावः = वस्तुनोऽभावः। अभावो मक्षिकाणाम् निर्मक्षिकम्, निर्मशकं वर्तते। अत्ययः = अभूतत्वम्, अतिक्रमः। अतीतानि हिमानि निर्हिमम्, अतिशीतं वर्तते। असंप्रति = उपभोगस्य वर्तमानकालप्रतिषेधः। अतितैसृकम्। तैसृकम् = आच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः। <K.2.022> शब्दप्रादुर्भावः = प्रकाशता शब्दस्य। इतिपाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। पश्चात् -- अनुरथं पादातम्। रथानां पश्चात्। यथार्थे यदव्ययं वर्तते तत्समस्यते। योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यं चेति यथार्थाः। योग्यतायाम् -- अनुरूपम्। रूपयोग्यं भवतीत्यर्थः। वीप्सायाम् -- अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थानतिवृत्तौ -- यथाशक्ति। आनुपूर्व्यम् = अनुक्रमः। अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्येण भवन्तः प्रविशन्त्वित्यर्थः। <K.2.023> यौगपद्यम् = एककालता। सचक्रं धेहि। युगपच्चक्रं धेहीत्यर्थः। सादृश्यम् = तुल्यता। किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम् ? गुणभूतेऽषु सादृश्ये यथा स्यात् -- सदृशः किख्या सकिखि। संपत्तिः = अनुरूप आत्मभावः, समृध्देरन्यः। सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्। साकल्यम् = अशेषता। सतृणम् अभ्यवहरति, सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते। <K.2.024> अन्तवचने -- अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्नि अधीते। सेष्टि पशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते।।

</2-1-6>

यथाऽसादृश्ये ।<2-1-7>।

`यथा इत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृध्दं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। यथाध्यापकम्। असादृश्ये इति किम्? यथा देवदत्तः तथा यज्ञदत्तः। यथार्थे <K.2.025> यदव्ययमिति पूर्वेणैव सिध्दे समासे वचनमिदं सादृश्यप्रतिषेधार्थम्।।

</2-1-7>

यावदवधारणे ।<2-1-8>। >

`यावत् इत्येतदव्ययमवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। अवधारणम् = इयत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्ति पात्राणि सम्भवन्ति, पञ्च षड् वा, तावत आमन्त्रयस्व। अवधारण इति किम् ? यावद् दत्तं तावद् भुक्तम्। नावधारयामि कियन्मया भुक्तमिति।।

</2-1-8>

सुप्प्रतिना मात्रार्थे ।<2-1-9>।

मात्रा, बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः। मात्रार्थे वर्तमानेन <K.2.026> प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकं शाकप्रति। सूपप्रति। मात्रार्थ इति किम् ? वृक्षं प्रति विद्योतते विद्युत्। सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्।

</2-1-9>

अक्षशलाकासङ्ख्याः परिणा ।<2-1-10>।

अक्षशब्दः, शलाकाशब्दः, संख्याशब्दाश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। तत्र यदा सर्वे उत्तानाः पतन्ति, अवाञ्चो वा तदा पातयिता जयति, तस्यैवैतस्य विपातोऽन्यथा पाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वं <K.2.027> जये -- अक्षपरि, शलाकापरि, एकपरि, द्विपरि, त्रिपरि। परेण चतुष्परि।

`पञ्चसु त्वेकरूपासु जय एव भविष्यति
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ।।

</2-1-10>

<K.2.028>

विभाषा ।<2-1-11>।

`विभाषा इत्ययमधिकारो वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति। वक्ष्यति -- अपपरिबहिरञ्चवः पञ्चम्या, अपत्रिगर्तं वृष्टो देवः, <K.2.029> अप त्रिगर्तेभ्यः।।

</2-1-11>

अपपरिबहिरञ्चवः पञ्चम्या ।<2-1-12>।

अप, परि, बहिस्, अञ्चु - इत्येते सुबन्ताः पञ्चम्यन्तेन सह <K.2.030> विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः। परित्रिगर्तम्, परि त्रिगर्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ।।

</2-1-12>

आङ् मर्यादाभिविध्योः ।<2-1-13>।

`आङ् इत्येतन्मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ

पाटलीपुत्रात्। अभिविधौ - आकुमारं यशः पाणिनेः, आ कुमारेभ्यः।।
</2-1-13>
लक्षणेनाभिप्रती आभिमुख्ये ।<2-1-14>।
लक्षणम् = चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निम् अभि। प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः। लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिसुखं गतः। अभिप्रती इति किम्? येन अग्निः तेन गतः। <K.2.031> आभिमुख्य इति किम्? अभ्यङ्काः गावः, प्रत्यङ्काः गावः। नवाङ्का इत्यर्थः।।
</2-1-14>
अनुर्यत्समया ।<2-1-15>।
समया = समीपम्। अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह <K.2.032> विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनम् अशनिर्गतः। अनुरिति किम्? वनं समया। यत्समयेति किम्? वृक्षम् अनु विद्योतते विद्युत्। अव्ययं विभक्तिसमीप इत्येव सिद्धे पुनर्वचनं विभाषार्थम्।।?
</2-1-15>
यस्य चायामः ।<2-1-16>।
`लक्षणेन इति वर्तते। आयामः = दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। <K.2.033> अनुगङ्गं वाराणसी। अनुयमुनं मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते। आयाम इति किम्? वृक्षम् अनु विद्योतते विद्युत् ।।
</2-1-16>
तिष्ठद्गुप्रभृतीनि च ।<2-1-17>।
तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञकानि भवन्ति। तिष्टद्गु = कालविशेषः। <K.2.034> तिष्ठन्ति गावो यस्मिन्काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न सम्बध्यन्ते, अन्यपदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति -- परमं तिष्ठद्गु इति। तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्। खलेबुसम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। <K.2.035> अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्। इच् कर्मव्यतिहारे - दण्डादण्डि। मुसलामुसलि।।
</2-1-17>
पारे मध्ये षष्ठ्या वा ।<2-1-18>।
षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनात् <K.2.036> षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते। पारं गङ्गायाः पारेगङ्गम्। मध्यं गङ्गयाः मध्येगङ्गम्। षष्ठीसमासपक्षे - गङ्गापारम्, गङ्गामध्यम्। मपाविभाषया वाक्यविकल्पः क्रियते।।
</2-1-18>
संख्या वंश्येन ।<2-1-19>।
विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंश इत्यभिधीयते। तत्र भवो वंश्यः। तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य। त्रिमुनि व्याकरणस्य। <K.2.037> यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति - द्विसुनि व्याकरणम्, त्रिमुनि व्याकरणमिति। जन्मना - एकविंशतिभारद्वाजम्।।

</2-1-19>
नदीभिश्च ।<2-1-20>।
`संख्या इत्यनुवर्तते। नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। समाहारे चायमिष्यते। सप्तगङ्गम्। <K.2.038> द्वियमुनम्। पञ्चनदम्। सप्तगोदावरम्।।
</2-1-20>
अन्यपदार्थे च संज्ञायाम् ।<2-1-21>।
`संख्या इति निवृत्तम्, नदीग्रहणमनुवर्तते। नदीभिः सह सुबन्तमन्यपदार्थे वर्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति। विभाषाधिकारेऽपि नित्यसमास एवायम्। न हि वाक्येन संज्ञा गम्यते। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्। कृष्णगङ्गम्। शनैर्गङ्गम्। अन्यपदार्थ इति किम्? कृष्णवेण्णा। संज्ञायामिति किम्? शीघ्रगङ्गः देशः।।
</2-1-21>
तत्पुरुषः ।<2-1-22>।
`तत्पुरुषः इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः। यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः। वक्ष्यति - द्वितीया श्रितातीतपतित इति, कष्टश्रितः। पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम् - `उत्तरपदार्थप्रधानस्तत्पुरुषः इति। <K.2.039> तत्पुरुषप्रदेशाः -- तत्पुरुषे कृति बहुलम् इत्येवमादयः।।

</2-1-22>
द्विगुश्च ।<2-1-23>।
द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति। द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम्। पञ्चराजी, दशराजी। द्व्यहः, त्र्यहः। पञ्चगवम्, दशगवम्।।
</2-1-23>
द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।<2-1-24>।
`सुप् `सुपा इति वर्तते, तस्य विशेषणमेतद् द्वितीया। द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। <K.2.040> कष्टं श्रितः कष्टश्रितः। नरकश्रितः। अतीत -- कान्तारमतीतः कान्तारातीतः। पतित - नरकं पतितः नरकपतितः। गत - ग्रामं गतः ग्रामगतः। <K.2.041> अत्यस्त -- तरङ्गानत्यस्तः तरङ्गात्यस्तः। तुहिनात्यस्तः। प्रप्त - सुखं प्राप्तः सुखप्राप्तः। आपन्न -- सुखमापन्नः सुखापन्नः। दुःखापन्नः।।

- श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् * । ग्रामं गमी ग्रमगमी। ग्रामं गामी ग्रामगामी। ओदनं बुभुक्षुः ओदनबुभुक्षुः।।

</2-1-24>
स्वयं क्तेन ।<2-1-25>।
`स्वयम् एतदव्ययमात्मनेत्यस्यार्थे वर्तते, तस्य द्वितीयया सह <K.2.042> सम्बन्धो नोपपद्यत इति द्वितीयाग्रहणमुत्तरार्थमनुवर्तते। स्वयम् इत्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयंधौतौ पादौ। स्वयंविलीनम् आज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति।।
</2-1-25>
खट्वा क्षेपे ।<2-1-26>।
खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपः = निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्। न हि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः <K.2.043> खट्वारूढ इत्युच्यते। खट्वारूढः जाल्मः। खट्वाप्लुतः। अपथप्रस्थित इत्यर्थः। क्षेप इति किम्? खट्वाम् आरूढः।।
</2-1-26>
सामि ।<2-1-27>।
`सामि इत्येतदव्ययमर्धशब्दपर्यायः,तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति संबन्घः। तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृतम्। सामिपीतम्। सामिभुक्तम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति।।
</2-1-27>
कालाः ।<2-1-28>।
`द्वितीया `क्तेन इति वर्तते। कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। अनत्यन्तसंयोगार्थं वचनम्। `कालाः इति न स्वरूपविधिः। षण्मुहूर्ताश्चराचराः, ते कदाचिदहर्गच्छन्ति, कदाचिद्रात्रिम्। <K.2.044> अहरतिसृताः मुहूर्ताः अहःसङ्क्रान्ताः। रात्र्यतिसृताः मुहूर्ताः रात्रिसङ्क्रान्ताः। मासप्रमितः चन्द्रमाः। मासं प्रमातुमारब्धः। प्रतिपच्चन्द्रमा इत्यर्थः।।
</2-1-28>
अत्यन्तसंयोगे च ।<2-1-29>।
`कालाः इति वर्तते, `क्तेन इति निवृत्तम्। अत्यन्तसंयोगः = कृत्स्नसयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्तं सुखम् मुहूर्तसुखम्। सर्वरात्रकल्याणी। सर्वरात्रसोभना।।
</2-1-29>
<K.2.045>
तृतीया तत्कृतार्थेन गुणवचनेन ।<2-1-30>।
`सुप् `सुपा इति वर्तते, तस्य विशेषणमेतत्तृतीया। तृतीयान्तंसुबन्तं गुणवचनेनार्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन? तत्कृतेन = तदर्थकृतेन; तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। <K.2.046> अर्थशब्देन -- धान्येनार्थः, धान्यार्थः। तत्कृतेनेति किम्? अक्ष्णा काणः। गुणवचनेनेति किम् ? गोभिः वपावान्।।
</2-1-30>
<K.2.047>
पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।<2-1-31>।
पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण -- एतैः. सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या। पूर्व - मासेन पूर्वः मासपूर्वः, संवत्सरपूर्वः। सदृश -- मातृसदृशः, पितृसदृशः। सम -- मातृसमः। पितृसमः, ऊनार्थ -- माषोनम्, कार्षापणोनम्। <K.2.048> माषविकलम्, कार्षापणविकलम्। कलह -- असिकलहः, वाक्कलहः। निपुण -- वाग्निपुणः, आचारनिपुणः। मिश्र - गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण -- आचारश्लक्ष्णः।। * पूर्वादिष्ववरस्योपसंख्यानम् *। मासेनावरः मासावरः। संवत्सरावरः।।
</2-1-31>

कर्तृकरणे कृता बहुलम् ।<2-1-32>।
`तृतीया इति वर्तते। कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम्, तत्पुरुषश्च समासो भवति। सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि -- अहिना हतः अहिहतः। करणे - नखैर्निर्भिन्नो नखनिर्भिन्नः। परशुना छिन्नः परशुच्छिन्नः। कर्तृकरणे इति किम् ? भिक्षाभिः उरुषितः। बहुलग्रहणं किम् ? दात्रेण धान्यं लूनवान्, परशुना छिन्नवान् - इह समासो न भवति; पादहारकः, गलेचोपकः इति च भवति।।
</2-1-32>
<K.2.049>
कृत्यैरधिकार्थवचने ।<2-1-33>।
स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। कर्तृकरणे कृत्यैः सह समस्येते अधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्त्ता -- काकपेया नदी। श्वलेह्यः कूपः। करणम् -- बाष्पच्छेद्यानि तृणानि। <K.2.050> कण्टकसञ्चेयः ओदनः। पूर्वस्यैवायं प्रपञ्चः। * कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् *। इह मा भूत् - काकैः पातव्या इति।।
</2-1-33>
अन्नेन व्यञ्जनम् ।<2-1-34>।
`तृतीया इति वर्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना <K.2.051> सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समसो भवति। संस्कार्यमन्नम्, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्।।
</2-1-34>
भक्ष्येण मिश्रीकरणम् ।<2-1-35>।
मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम्।।
</2-1-35>
<K.2.052>
चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ।<2-1-36>।
`सुप् `सुपा इति वर्तते, तस्य विशेषणमेतत् चतुर्थी। `तत् इति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ, अर्थ, बलि, हित, सुख, रक्षित - इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु यूपदारु। कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम्। इह न भवति -- रन्धनाय स्थाली, अवहननाय उलूखलम् इति। चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति।।
<K.2.053>
* अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या *। ब्राह्मणार्थं पयः। <K.2.054> ब्राह्मणार्था यवागूः। बलि -- कुबेराय बलिः कुबेरबलिः। महाराजबलिः। हित -- गोहितम्। अश्वहितम्। सुख -- गोसुखम्। अश्वसुखम्। रक्षित -- गोरक्षितम्। अश्वरक्षितम्।।
</2-1-36>
<K.2.055>
पञ्चमी भयेन ।<2-1-37>।
`सुप् `सुपा इति वर्तते, तस्य विशेषणमेतत्पञ्चमी। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयं वृकभयम्। चौरभयम्। दस्युभयम्। * भयभीतभीतिभीभिरिति वक्तव्यम् *। वृकेभ्यो भीतः वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुः इत्येवमादि सिध्दं भवति।।
</2-1-37>
<K.2.056>
अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।<2-1-38>।
अपेत, अपोढ, मुक्त, पतित, अपत्रस्त -- इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत -- सुखापेतः। अपोढ -- कल्पनापोढः। मुक्त -- चक्रमुक्तः। पतित -- स्वर्गपतितः। अपत्रस्त -- तरङ्गापत्रस्तः। `अल्पशः इति समासस्याल्पविषयतामाचष्टे। अल्पा पञ्चमी समस्यते, न सर्वा। प्रासादात् पतितः, भोजनाद् अपत्रस्तः - इत्येवमादौ न भवति। कर्तृकरणे कृता बहुलम् इत्यस्यैवायं प्रपञ्चः।।
</2-1-38>
स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।<2-1-39>।
स्तोक, अन्तिक, दूर - इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोक - स्तोकान्मुक्तः। अन्तिक - अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। कृच्छ्राल्लब्दः। पञ्चम्याः स्तोकादिभ्यः इत्यलुक्।। * शतसहस्रौ परेणेति वक्तव्यम् *। शतात्परे परश्शताः। सहस्रात्परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः, निपातनात्सुडागमः।।
</2-1-39>
<K.2.057>

सप्तमी शौण्डैः ।<2-1-40>।
सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डः अक्षशौण्डः। अक्षधूर्तः। अक्षकितवः। शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। अधिपटु। पण्डित। कुशल। चपल। निपुण। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी।।
</2-1-40>
<K.2.058>
सिध्दशुष्कपक्वबन्धैश्च ।<2-1-41>।
`सप्तमी इति वर्तते। सिद्ध, शुष्क, पक्व, बन्ध - इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। साङ्काश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क -- आतपशुष्कः। छायाशुष्कः। पक्व -- स्थालीपक्वः। कुम्भीपक्वः। बन्ध -- चक्रबन्धः। बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः।।
</2-1-41>
ध्वाङ्क्षेण क्षेपे ।<2-1-42>।
`ध्वाङ्क्षेण इत्यर्थग्रहणम्। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति, क्षेपे गम्यमाने। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। अनवस्थित इत्यर्थः। तीर्थकाकः। तीर्थवायसः। <K.2.059> क्षेप इति ? तीर्थे ध्वाङ्क्षः तिष्ठाति।।
</2-1-42>
कृत्यैर्ऋणे ।<2-1-43>।
`सप्तमी इति वर्तते। कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्परुषश्च समासो भवति, ऋणे गम्यमाने। यत्प्रत्ययान्तेनैवेष्यते। मासे देयमृणं मासदेयम्। संवत्सरदेयम्। त्र्यहदेयम्। ऋणग्रहणं नियोगोपलक्षणार्थम्, तेनेहापि समासो भवति -- पूर्वाह्णगेयं साम। प्रातरध्येयः अनुवाकः। ऋण इति किम्? मासे देया भिक्षा।।
</2-1-43>
<K.2.060>
संज्ञायाम् ।<2-1-44>।
संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। संज्ञा = समुदायोपाधिः। तेन नित्यसमास एवायम्, न हि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः। अरण्येमाषाः। वनेकिंशुकाः। वनेबिल्वकाः। कूपेपिशाचकाः। हलदन्तात्सप्तम्याः संज्ञायाम् इत्यलुक्।।
</2-1-44>
क्तेनाहोरात्रावयवाः ।<2-1-45>।
अहरवयवाः, रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम् ? एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि। अहनि भुक्तम्। रात्रौ वृत्तम्। बहुलग्रहणाद् रात्रिवृत्तम्, सन्ध्यागर्जितम् इत्यादयः।।
</2-1-45>
तत्र ।<2-1-46>।
<K.2.061>
`तत्र इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। तत्रभुक्तम्। तत्रकृतम्। तत्रपीतम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति।।
</2-1-46>
क्षेपे ।<2-1-47>।
क्षेपः = निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्तेनकुलस्थितं तवैतत् । चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः। उदकेविशीर्णम्। प्रवाहेमूत्रितम्। भस्मनिहुतम्। निष्फलं यत्क्रियते तदेवमुच्यते। तत्पुरुषे कृति बहुलम् इत्यलुक्।।
</2-1-47>
<K.2.062>
पात्रेसमितादयश्च ।<2-1-48>।
समुदाया एव निपात्यन्ते। पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति, क्षेपे गम्यमाने। ये चात्र क्तान्तेन सह समासास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः -- पूर्वपदाद्युदात्तत्वं यथा स्यादिति। युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यन्ते। पात्रेसमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते - पात्र एव समिता न पुनः क्वचित्कार्य इति। उदुम्बरमशकादिषु उपमया क्षेपः। मातरिपुरुषः इति प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया। अव्यक्तत्वाच्चाकृतिगणोऽयम्। पात्रेसमिताः। पात्रेबहुलाः। उदुम्बरमशकाः। उदरक्रिमिः। <K.2.063> कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। मातरिपुरुषः। पिण्डीशूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेदृप्तः। गेहेधृष्टः। गर्भेतृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठेविजिती। गोष्ठेक्ष्वेडी। गेहेमेही। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः। कर्णेचुरचुरा। चकारोऽवधारणार्थः, तेन समासान्तरं न भवति -- परमपात्रेसमिताः इति।
</2-1-48>

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।<2-1-49>।
`सुप् `सुपा इति वर्त्तते, तस्य विशेषणमेतत्। पूर्वकाल, एक, सर्व, जरत्, पुराण, नव, केवल - इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः = सामानाधिकरण्यम्। `पूर्वकाल इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। पूर्वकालोऽपरकालेन <K.2.064> समस्यते। स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। एकशाटी। एकभिक्षा। सर्वदेवाः। सर्वमनुष्याः। जरद्धस्ती। जरद्गृष्टिः। जरद्वृत्तिः। पुराणान्नम्। पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्। समानाधिकरणेनेति किम् ? एकस्याः शाटी।
</2-1-49>
दिक्संख्ये संज्ञायाम् ।<2-1-50>।
`समानाधिकरणेन इत्यापादसमाप्तेरनुवर्तते। दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, संज्ञायां विषये। पूर्वेषुकामशमी। अपरेषुकामशमी। संख्या - पञ्चाम्राः। सप्तर्षयः। संज्ञायामिति किम् ? उत्तरा वृक्षाः। पञ्च ब्राह्मणाः।।
</2-1-50>
<K.2.065>
तध्दितार्थोत्तरपदसमाहारे च ।<2-1-51>।
`दिक्संख्ये इत्यनुवर्त्तते। तध्दितार्थे विषये उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। तद्धितार्थे तावत् - पूर्वस्यां शालायां भवः। दिक्पूर्वपदादसंज्ञायां ञः, पौर्वशालः, आपरशालः। उत्तरपदे - पूर्वशालाप्रियः, अपरशालाप्रियः। <K.2.066> समाहारे दिक्शब्दो न सम्भवति। सङ्ख्या, तद्धितार्थे - पाञ्चनापितिः। पञ्चकपालः। उत्तरपदे - पञ्चगवधनः, दशगवधनः। <K.2.067> समाहारे - पञ्चपूली, दशपूली। पञ्चकुमारि, दशकुमारि। स नपुंसकम् इति नपुंसकत्वम्, ह्रस्वो नपुंसके प्रातिपदिकस्य इति ह्रस्वत्वम्।।
</2-1-51>
<K.2.068>
सङ्ख्यापूर्वो द्विगुः ।<2-1-52>।
तध्दितार्थोत्तरपदसमाहारे च इत्यत्र यः सङ्ख्यापूर्वः समासः स द्विगुसंज्ञो भवति। तद्धितार्थे तावत् - पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, दशकपालः। संस्कृतं भक्षाः इति अण्, तस्य द्विगोर्लुगनपत्ये इति लुक्। उत्तरपदे - पञ्चनावप्रियः। नावो द्विगोः इति समासान्तो भवति। समाहारे - पञ्चमूली। द्विगोः इति ङीब् भवति। द्विगुप्रदेशाः - द्विगोः इत्येवमादयः ।।
</2-1-52>
<K.2.069>
कुत्सितानि कुत्सनैः ।<2-1-53>।
कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते। विशेषणं विशेष्येण इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः। निष्प्रतिभ इत्यर्थः। <K.2.070> याज्ञिककितवः। अयाज्ययाजनतृष्णापर उच्यते। मीमांसकदुर्दुरूटः। नास्तिकः। कुत्सितानीति किम् ? वैयाकरणः चौरः। न ह्यत्र वैयाकरणत्वं कुत्स्यते। कुत्सनैरिति किम् ? कुत्सितो ब्राह्मणः।
</2-1-53>
<K.2.071>
पापाणके कुत्सितैः ।<2-1-54>।
पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपातार्थमिदमारभ्यते। पाप, अणक - एते सुबन्ते कुत्सितवचनैः सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः, पापकुलालः। अणकनापितः, अणककुलालः।।
</2-1-54>
उपमानानि सामान्यवचनैः ।<2-1-55>।
उपमीयतेऽनेनेत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। <K.2.072> उपमानोपमेययोः साधारणो धर्मः = सामान्यम्, तद्विशिष्टोपमेयवचनैरयं समासः। शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। उपमानानीति किम् ? देवदत्ता श्यामा। <K.2.073> सामान्यवचनैरिति किम् ? फाला इव तण्डुलाः। पर्वता इव बलाहकाः।।
</2-1-55>
<K.2.074>
उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।<2-1-56>।
उपमेयम् = उपमितम्, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची <K.2.075> शब्दः प्रयुज्यते। विशेषणं विशेष्येण इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थम् आरम्भः। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। सामान्याप्रयोग इति किम्? पुरुषो व्याघ्र इव शूरः। व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक्ष। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत। पुण्डरीक। बलाहक। आकृतिगणश्चायम्। तेनेदमपि भवति - मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः इत्येवमादि।।
</2-1-56>

विशेषणं विशेष्येण बहुलम् ।<2-1-57>। >
भेदकम् = विशेषणम्, भेद्यम् = विशेष्यम्। विशेषणवाचि सुबन्तं <K.2.076> विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलोत्पलम्। रक्तोत्पलम्। बहुलवचनं व्यवस्थार्थम्। क्वचिन्नित्यसमासः एव - कृष्णसर्पः, लोहितशालिः। क्वचिन्न भवत्येव - रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः। क्वचिद्विकल्पः - नीलमुत्पलम्। नीलोत्पलम्। <K.2.079> विशेषणमिति किम् ? तक्षकः सर्पः। विशेष्येणेति किम् ? लोहितः तक्षकः।।
</2-1-57>
<K.2.080>
पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ।<2-1-58>।
पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह
समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुषः। अपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः। पूर्वस्यैवायं प्रपञ्चः।
</2-1-58>
श्रेण्यादयः कृतादिभिः ।<2-1-59>।
श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। * श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् *। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। एककृताः। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगणः। च्व्यन्तानां तु कुगतिप्रादयः इत्यनेन नित्यसमासः। श्रेणीकृताः। <K.2.081> श्रेणि। एक। पूग। कुण्ड। राशि। विशिक। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण। इति श्रेण्यादिः।। कृत। मित। मत। भूत। उक्त। समाज्ञात। समाम्नात। समाख्यात। सम्भावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत। इति कृतादिः।।
</2-1-59>
क्तेन नञ्विशिष्टेनानञ् ।<2-1-60>।
<K.2.082>
नञैव विशेषो यस्य सर्वमन्यत्प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम्। <K.2.083> पीतापीतम्। उदितानुदितम्। नुडिटौ तद्भक्तत्वान्नैव भेदकौ। अशितानशितेन जीवति। क्लिष्टाक्लिशितेन वर्तते। * कृतापकृतादीनामुपसंख्यानम् * कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्। यातानुयातम्। क्रयाक्रयिका। पुटापुटिका। फलाफलिका। मानोन्मानिका।। <K.2.084> * समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च * । शाकप्रधानः पार्थिवः शाकपार्थिवः। कुतपसौश्रुतः। अजातौल्वलिः।।
</2-1-60>
सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ।<2-1-61>।
सत्, महत्, परम, उत्तम, उत्कृष्ट - इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। `पुज्यमानैः इति वचनात् पूजावचनाः सदादयो विज्ञायन्ते। सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः। ऊत्कृष्टपुरुषः। पुज्यमानैरिति किम् ? उत्कृष्टा गौः कर्दमात्।।
</2-1-61>
<K.2.085>
वृन्दारकनागकुञ्जरैः पुज्यमानम् ।<2-1-62>।
वृन्दारक, नाग, कुञ्जर - इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। `पूज्यमानम् इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते। गोवृन्दारकः, अश्ववृन्दारकः। गोनागः, अश्वनागः। गोकुञ्जरः, अश्वकुञ्जरः। पूज्यमानमिति किम् ? सुषीमो नागः।।
</2-1-62>
कतरकतमौ जातिपरिप्रश्ने ।<2-1-63>।
कतरकतमौ जातिपरिप्रश्ने वर्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः। कतरकालापः। कतमकठः। कतमकालापः। <K.2.086> ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति - कतमशब्दोऽन्यत्रापि वर्तत इति। तथा च प्रत्युदाहरणम् - कतरः भवतोः देवदत्तः। कतमः भवतां देवदत्तः।।
</2-1-63>
किं क्षेपे ।<2-1-64>।
`किम् इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। किंराजा, यो न रक्षति।
किंसखा, योऽभिद्रुह्यति। किंगौः, यो न वहति। किमः क्षेपे इति समासान्तो न भवति। क्षेपे इति किम् ? को राजा पाटलिपुत्रे।।
</2-1-64>
पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ।<2-1-65>।
उभयव्यञ्जना `पोटा इत्यभिधीयते। गृष्टिः = एकवारप्रसूता। <K.2.087> धेनुः = प्रत्यग्रप्रसूता। वशा, वन्ध्या। वेहद् = गर्भपातिनी। बष्कयणी = तरुणवत्सा। पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। इभपोटा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्।

गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। जातिरिति किम् ? देवदत्तः प्रवक्ता। धूर्तग्रहणमकुत्सार्थम्।।
</2-1-65>
प्रशंसावचनैश्च ।<2-1-66>।
`जातिः इति वर्त्तते। जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति। रूढिशब्दाः प्रशंसावचना <K.2.088> गृह्यन्ते मतल्लिकादयः, ते चाविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति। गोप्रकाण्डम्। अश्वप्रकाण्डम्। गोमतल्लिका। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका। जातिरिति किम् ? कुमारी मतल्लिका।।
</2-1-66>
युवा खलतिपलितवलिनजरतीभिः ।<2-1-67>।
खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति। `जरतीभिः इति स्त्रीलिङ्गनिर्देशः <K.2.089> `प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति ज्ञापनार्थः। युवा खलतिः युवखलतिः। युवतिः खलती युवखलती। युवा पलितः युवपलितः। युवतिः पलिता युवपलिता। युवा वलिनः युववलिनः। युवतिर्वलिना युववलिना। युवा जरन् युवजरन्। युवतिर्जरती युवजरती।।
</2-1-67>
कृत्यतुल्याख्या अजात्या ।<2-1-68>।
कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति। भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। तुल्याख्याः -- तुल्यश्वेतः। तुल्यमहान्। सदृशश्वेतः। सदृशमहान्। <K.2.090> अजात्येति किम् ? भोज्यः ओदनः।।
</2-1-68>
वर्णो वर्णेन ।<2-1-69>।
वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति। कृष्णसारङ्गः। <K.2.091> लोहितसारङ्गः। कृष्णशबलः। लोहितशबलः। अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति।।
</2-1-69>
<K.2.092>
कुमारः श्रमणादिभिः ।<2-1-70>।
कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। येऽत्र स्त्रीलिङ्गाः पठ्यन्ते - श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते। ये तु पुँल्लिङ्गा अध्यापकोऽभिरूपकः पण्डितः इति, तैरुभयथा; प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति। कुमारी श्रमणा कुमारश्रमणा। श्रमणा। प्रव्रजिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण।।
</2-1-70>
चतुष्पादो गर्भिण्या ।<2-1-71>।
चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी। अजागर्भणी।। <K.2.093> * चतुष्पाज्जातिरिति वक्तव्यम् * इह मा भूत् - कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी। चतुष्पाद इति किम् ? ब्राह्मणी गर्भिणी।।
</2-1-71>
मयूरव्यंसकादयश्च ।<2-1-72>।
समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः, परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि - हस्तेगृह्य। पादेगृह्य। लाङ्गलेगृह्य। पुनर्दाय।। `एहीडादयोऽन्यपदार्थे । एहीडम्, एहियवं वर्त्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा, प्रेहिवाणिजा। एहिस्वागता, अपेहिस्वागता, प्रेहिस्वागता। एहिद्वितीया, अपेहिद्वितीया। इहवितर्का। प्रोहकटा, <K.2.094> अपोहकटा। प्रोहकर्दमा, अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उञ्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्चप्रचम्। अकिञ्चनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकला। निपत्यरोहिणी। निषण्णश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया। `जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति। जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः। `आख्यातमाख्यातेन क्रियासातत्ये। अश्नीतपिवता। पचतभृज्जता। खादतमोदता। खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्धिलवणा। छिन्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः।

इति श्रीजयादित्यविरचितायां काशिकायां
वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः।।
</2-1-72>

# काशिका/द्वितीयोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pb9
< काशिका | द्वितीयोऽध्यायः
<K.2.096>
अथ द्वितीयाध्याये द्वितीयः पादः

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।। <2-2-1> ।।
एकदेशोऽस्यास्तीत्येकदेशी = अवयवी, तद्वाचिना सुबन्तेन सह पूर्व, अपर, अधर, उत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहणमेकदेशिनो विशेषणम्। एकं <K.2.097> चेदधिकरणमेकद्रव्यमेकदेशि भवति। षष्ठीसमासापवादोऽयं योगः। पूर्वं कायस्य पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः। एकदेशिनेति किम् ? पूर्वं नाभेः कायस्य। एकाधिकरण इति किम् ? पूर्वं छात्राणाम् आमन्त्रयस्व। कथं मध्याह्नः, सायाह्नः इति? संख्याविसायपूर्वस्याह्नस्य इति ज्ञापकात्सर्वैणैकदेशशब्देनाह्नः समासो भवति।
</2-2-1>
<K.2.098>
अर्द्धं नपुंसकम् ।। <2-2-2> ।।
`एकदेशिनैकाधिकरणे इति वर्त्तते। समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम्। `अर्द्धम् इत्येतद् नपुंसकमेकदेशिनैकाधिकरणेन <K.2.099> समस्यते, तत्पुरुषश्च समासो भवति। षष्ठीसमासापवादोऽयं योगः। अर्द्धं पिप्पल्याः अर्धपिप्पली। अर्धकोशातकी। नपुंसकमिति किम् ? ग्रामार्धः। नगरार्धः। एकदेशिनेत्येव - अर्द्धं पशोर्देवदत्तस्य। देवदत्तेन सह समासो न भवति। `एकाधिकरणे इत्येव -- अर्धं पिप्पलीनाम्।।
</2-2-2>
<K.2.100>
द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।। <2-2-3> ।।
`एकदेशिनैकाधिकरणे इति वर्तते। षष्ठीसमासापवादोऽयं योगः। अन्यतरस्याङ्ग्रहणात् सोऽपि षष्ठीसमासो भवति। `पूरणगुण इति प्रतिषेधश्चात एवान्यतरस्याङ्ग्रहणसामर्थ्यान्न प्रवर्त्तते। द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। द्वितीयं भिक्षायाः द्वितीयभिक्षा। षष्ठीसमासपक्षे भिक्षाद्वितीयं वा। तृतीयं भिक्षायाः तृतीयभिक्षा। भिक्षातृतीयं वा। चतुर्थं भिक्षायाः चतुर्थभिक्षा। भिक्षाचतुर्थं वा। तुर्यं भिक्षायाः तुर्यभिक्षा। भिक्षातुर्यं वा। <K.2.101> * तुरीयशब्दस्यापीष्यते *। तुरीयं भिक्षायाः तुरीयभिक्षा। भिक्षातुरीयं वा। एकदेशिनेत्येव -- द्वितीयं भिक्षायाः भिक्षुकस्य। एकाधिकरण इत्येव -- द्वितीयं भिक्षाणाम्।
</2-2-3>
प्राप्तापन्ने च द्वितीयया ।। <2-2-4> ।।
`एकदेशिनैकाधिकरणे इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनमिदम्। समासविधानात्सोऽपि भवति। प्राप्त, आपन्न - इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति। प्राप्तो जीविकाम् प्राप्तजीविकः, जीविकाप्राप्तः इति वा। आपन्नो जीविकाम् आपन्नजीविकः, जीविकापन्नः इति वा।
</2-2-4>
<K.2.102>
कालाः परिमाणिना ।। <2-2-5> ।।
परिमाणमस्यास्तीति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति। षष्ठीसमासविषये योगारम्भः। मासो जातस्य मासजातः। संवत्सरजातः। <K.2.103> द्व्यहजातः। त्र्यहजातः।।
</2-2-5>
<K.2.104>
नञ् ।। <2-2-6> ।।
नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। न ब्राह्मणः अब्राह्मणः। अवृषलः। * नञो नलोपस्तिङि क्षेपे *। अ पचसि त्वं जाल्म।।
</2-2-6>
<K.2.107>
ईषदकृता ।। <2-2-7> ।।
`ईषत् इत्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समसो भवति। * ईषद् गुणवचनेनेति वक्तव्यम् *। ईषत्कडारः। ईषत्पिङ्गलः। ईषद्विकटः। ईषदुन्नतः। ईषत्पीतम्। ईषद्रक्तम्। गुणवचनेनेति किम् ? इह न भवति -- ईषद् गार्ग्यः।।
</2-2-7>

षष्ठी ।। <2-2-8> ।।

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। राज्ञः पुरषो राजपुरुषः। ब्राह्मणकम्बलः। * कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् *। इध्मप्रव्रश्चनः। <K.2.108> पलाशशातनः। किमर्थमिदमुच्यते ? `प्रतिपदविधाना च षष्ठी न समस्यते इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः।।

</2-2-8>

याजकादिभिश्च ।। <2-2-9> ।।

पूर्वेण समासः सिद्ध एव तस्य कर्तरि च इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मणयाजकः। क्षत्रिययाजकः। याजक। पूजक। परिचारक। परिषेचक। स्नातक। अध्यापक। उत्सादक। उद्वर्त्तक। होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक। <K.2.109> * तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् *। चन्दनगन्धः। कपित्थरसः। * गुणात्तरेण तरलोपश्चेति वक्तव्यम् *। सर्वेषां श्वेततरः सर्वश्वेतः, सर्वेषां महत्तरः सर्वमहान्, न निर्धारणे इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला गौः।।

</2-2-9>

न निर्धारणे ।। <2-2-10> ।।

<K.2.110>

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्धारणे या षष्ठी सा न समस्यते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। क्षत्रियः मनुष्याणां शूरतमः। कृष्णा गवां सम्पन्नक्षीरतमा। धावन् अध्वगानां शीघ्रतमः। * प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् *। सर्पिषः ज्ञानम्। मधुनः ज्ञानम्।।

</2-2-10>

<K.2.111>

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।। <2-2-11> ।।

पूरण, गुण, सुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण -- इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन स्वरूपविधिर्न भवति। पूरणार्थे - छात्राणां पञ्चमः। छात्राणां दशमः। गुण - बलाकायाः शौक्ल्यम्। काकस्य कार्ष्ण्यम्। सुहितार्थाः = <K.2.112> तृप्त्यर्थाः। फलानां सुहितः। फलानां तृप्तः। सत् - ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। अव्यय -- ब्राह्मणस्य कृत्वा। ब्राह्मणस्य हृत्वा। तव्य - ब्राह्मणस्य कर्तव्यम्। तव्यता सानुबन्धकेन समासो <K.2.113> भवत्येव -- ब्राह्मणकर्तव्यम्। समानाधिकरण -- शुकस्य माराविदस्य, राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य। किं च स्यात् ? पूर्वनिपातस्यानियमः स्यात्। अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां विशेषणं विशेष्येण इति भवत्येव समासः। पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव।।

</2-2-11>

क्तेन च पूजायाम् ।। <2-2-12> ।।

मतिबुद्धिपूजार्थेभ्यश्च इति वक्ष्यति, तस्येदं ग्रहणम्। पूजाग्रहणमुपलक्षणार्थम्। <K.2.114> क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। पूजायामिति किम् ? छात्रस्य हसितं छात्रहसितम्।।

</2-2-12>

<K.2.115>

अधिकरणवाचिना च ।। <2-2-13> ।।

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः इति वक्ष्यति, तस्येदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदमेषाम् आसितम्। इदमेषां यातम्। इदमेषां भुक्तम्।।

</2-2-13>

कर्मणि च ।। <2-2-14> ।।

`क्तेन इति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। उभयप्राप्तौ कर्मणि इत्यस्याः षष्ठ्या इदं ग्रहणम्। आश्चर्यः गवां दोहः अगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना।।

</2-2-14>

<K.2.116>

तृजकारभ्यां कर्तरि ।। <2-2-15> ।।

कर्तृग्रहणं षष्ठीविशेषणम्। कर्त्तरि या षष्ठी सा तृचा अकेन च सह न समस्यते। भवतः शायिका। भवतः आसिका। भवतः अग्रगामिका। तृच् कर्त्तर्येव विधीयते तत्प्रयोगे कर्तरि षष्ठी नास्ति। तस्मात्तृज्ग्रहणमुत्तरार्थम्। कर्तरीति किम् ? इक्षुभक्षिकां मे धारयसि।।

</2-2-15>

कर्त्तरि च।। <2-2-16> ।।

कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। सामर्थ्यादकस्य <K.2.117> विशेषणार्थं कर्तृग्रहणमितरत्र व्यभिचाराभावात्। अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते ? संबन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम्। अकः खल्वपि ओदनस्य भोजकः। सक्तूनां पायकः।।

</2-2-16>

नित्यं क्रीडाजीविकयोः ।। <2-2-17> ।।

`न इति निवृत्तम्, न तृजकौ। नित्यं समासो विधीयते। क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समसो भवति। तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते -- उद्दालकपुष्पभञ्जिका। <K.2.118> वारणपुष्पप्रचायिका। जीविकायाम् - दन्तलेखकः, नखलेखकः। क्रीडाजीविकयोरिति किम्? ओदनस्य भोजकः।।

</2-2-17>

कुगतिप्रादयः ।। <2-2-18> ।।

`नित्यम् इति वर्तते। कुशब्दोऽव्ययं परिगृह्यते, गत्यादिभिः साहचर्यात्, न द्रव्यवचनः। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे - कुपुरुषः। गति - उररीकृतम्, यदूरीकरोति। प्रादयः -- दुर्निन्दायाम्, दुष्पुरुषः। स्वती पूजायाम्, सुपुरुषः, अतिपुरुषः, आपिङ्गलः। <K.2.119> प्रायिकं चैतदुपाधिवचनम्। अन्यत्रापि हि समासो दृश्यते। कोष्णम्, कवोष्णम्, कदुष्णम्, दुष्कृतम्। अतिस्तुतम्। आबद्धम् इति। * प्रदयो गताद्यर्थे प्रथमया *। प्रगत आचार्यः प्राचार्यः। प्रान्तेवासी। * अत्यादयः क्रान्ताद्यर्थे द्वितीयया *। अतिक्रान्तः खट्वाम् अतिखट्वः। अतिमालः। * अवादयः क्रुष्टाद्यर्थे तृतीयया *। अवक्रुष्टः कोकिलया अवकोकिलः। * पर्यादयोग्लानाद्यर्थे चतुर्थ्या *। परिग्लानोऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै
अलंकुमारिः। <K.2.120> * निरादयः क्रान्ताद्यर्थे पञ्चम्या *। निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः। निर्वाराणसिः। * इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्*। वाससीइव। * प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः *। वृक्षं प्रति विद्योतते विद्युत्। साधुर्देवदत्तो मातरं प्रति।।

</2-2-18>

उपपदमतिङ् ।। <2-2-19> ।।

`नित्यम् इति वर्तते। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति। कुम्भकारः। नगरकारः। अतिङिति किम्? एधान् आहारकः व्रजति। <K.2.121> ननु च `सुप् सुपा इति वर्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः? एतज्ज्ञापयति -- `एतयोर्योगयोः सुप् सुपेति न संबध्यते <K.2.122> इति। तेन `गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः इत्येतदुपपन्नं भवति। अश्वक्रीती। धनक्रीती।।

</2-2-19>

<K.2.124>

अमैवाव्ययेन ।। <2-2-20> ।।

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्। अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते। अमैवेति किम्? कालसमयवेलासु तुमुन् - कालः भोक्तुम्। एवकारकरणमुपपदविशेषणार्थम् -- अमैव यत्तुल्यविधानमुपपदं <K.2.125> तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत् - अग्रे भुक्त्वा, अग्रे भोजम्।।

</2-2-20>

तृतीयाप्रभृतीन्यन्यतरस्याम् ।। <2-2-21> ।।

`अमैव इत्यनुवर्तते। उपदंशस्तृतीयायाम् इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। <K.2.126> उभयत्रविभाषेयम्। यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा -- उपदंशस्तृतीयायाम् इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा -- अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ इति, मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते। उच्चैः कारमाचष्टे। उच्चैःकारम्। अमैवेत्येव -- पर्याप्तिवचनेष्वलमर्थेषु, पर्याप्तः भोक्तुम्। प्रभुः भोक्तुम्।।

</2-2-21>

क्त्वा च ।। <2-2-22> ।।

`अमैव इति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैःकृत्य। उच्चैः कृत्वा। अव्यये यथाभिप्रेताख्याने इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव। तृतीयाप्रभृतीनीत्येव -- अलं कृत्वा। खलु कृत्वा।।

</2-2-22>

शेषो बहुव्रीहिः ।। <2-2-23> ।।

उपयुक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसञ्ज्ञो भवति। कश्च <K.2.127> शेषः? यत्रान्यः समासो नोक्तः। वक्ष्यति -- अनेकमन्यपदार्थे। चित्रगुः। शबलगुः। कृष्णोत्तरासङ्गः। शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम्। बहुव्रीहिप्रदेशाः -- न बहुव्रीहौ इत्येवमादयः।।

</2-2-23>

अनेकमन्यपदार्थे ।। <2-2-24> ।।

अनेकं सुबन्तमन्यपदार्थे वर्तमानं सह समस्यते, बहुव्रीहिश्च <K.2.128> समासो भवति। प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। प्राप्तमुदकं यं ग्रामं प्राप्तोदकः ग्रामः। ऊढरथः अन॒ड्वान्। <K.2.129> उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुः देवदत्तः। वीरपुरुषकः ग्रामः। प्रथमार्थे तु न भवति। वृष्टे देवे गतः। अनेकग्रहणं किम्? बहूनामपि यथा स्यात्,

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति।।

<K.2.130> * बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम् *। व्यधिकरणानां मा भूत् -- पञ्चभिः भुक्तम् अस्य। * अव्ययानां च बहुव्रीहिर्वक्तव्यः *। उच्चैर्मुखः। नीचैर्मुखः। <K.2.131> * सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः *। कण्ठे स्थितः कालोऽस्य कण्ठेकालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। खरमुखः। * समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम् *। <K.2.132> केशानां सङ्घातः, केशसङ्घातः, केशसङ्घातः = चूडाऽस्य केशचूडः। सुवर्णस्य विकारोऽलंकारोऽस्य सुवर्णालङ्कारः। * प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः *। प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः। प्रपतितं पलाशमस्य प्रपलाशः। * नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः *। अविद्यमानः पुत्रो यस्य अपुत्रः। अविद्यमानभार्यः अभार्यः। * सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः *। अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः ।।

</2-2-24>

<K.2.133>

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ।। <2-2-25> ।।

संख्येये या संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति। अव्यय -- उपदशाः। उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः। <K.2.134> अधिकदशाः। अधिकविंशाः। संख्या -- द्वित्राः। त्रिचतुराः। द्विदशाः। संख्ययेति किम् ? पञ्च ब्राह्मणाः। अव्ययासन्नादूराधिकसंख्या <K.2.135> इति किम् ? ब्राह्मणाः पञ्च। संख्येये इति किम् ? अधिका विंशतिः गवाम्।।

</2-2-25>

दिङ्नामान्यन्तराले ।। <2-2-26> ।।

दिशां नामानि = दिङ्नामानि। दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्य दिशोर्यदन्तरालम् दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा।। <K.2.136> * सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः *। नामग्रहणं रूढ्यर्थम्, इह मा भूत् - ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति।।

</2-2-26>

तत्र तेनेदमिति सरूपे ।। <2-2-27> ।।

`तत्र इति सप्तम्यन्तं गृह्यते। `तेन इति तृतीयान्तम्। सरूपग्रहणं प्रत्येकमभिसम्बध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकार्थमनुसारयति। ततो ग्रहणं, प्रहरणं, कर्मव्यतीहारो, युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते। <K.2.137> यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति। केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि। मुसलामुसलि। इच् कर्मव्यतीहारे इति इच् समासान्तः, स चाव्ययम्। अन्येषामपि दृश्यते पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युध्दं प्रवृत्तम्।।

</2-2-27>

तेन सहेति तुल्ययोगे ।। <2-2-28> ।।

`सह इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेन इति तृतीयान्तेन सह <K.2.138> समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः सपुत्रः। सच्छात्रः। सकर्मकरः। तुल्ययोग इति किम्? सहैव दशभिः
पुत्रैः भारं वहति गर्दभी। विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः। कथं सकर्मकः, सलोमकः, सपक्षकः इति? न ह्यत्र तुल्ययोगो गम्यते, किं तर्हि? विद्यमानता। प्रायिकं `तुल्ययोगे इति विशेषणम्, अन्यत्रापि समासो दृश्यते।।

</2-2-28>

चार्थे द्वन्द्वः ।। <2-2-29>।।

`अनेकम् इति वर्तते। अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। वाक्च त्वक्च वाक्त्वचम्। वाग्दृषदम्। द्वन्द्वप्रदेशाः - द्वन्द्वे च इत्येवमादयः।।

</2-2-29>

<K.2.141>

उपसर्जनं पूर्वम् ।। <2-2-30> ।।

`समासे इति वर्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया - <K.2.142> कष्टश्रितः। तृतीया -- शङ्कुलाखण्डः। चतुर्थी -- यूपदारु। पञ्चमी -- वृकभयम्। षष्ठी -- राजपुरुषः। सप्तमी -- अक्षशौण्डः।।

</2-2-30>

राजदन्तादिषु परम् ।। <2-2-31> ।।

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्। राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम्। न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः परनिपातो विधीयते। दन्तानां राजा राजदन्तः। वनस्याग्रे अग्रेवणम्। निपातनादलुक्। राजदन्तः। अग्रेवणम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। पूर्वकालस्य परनिपातः --

उलूखलमुसलम्। तण्डुलकिण्वम्। <K.2.143> दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्चात्रेष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत्कथम्? वक्तव्यमिदम् - धर्मादिषूभयमिति। वैकारिकतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृध्दी। वृद्धिगुणौ।।
</2-2-31>
द्वन्द्वे घि ।। <2-2-32> ।।
`पूर्वम् इति वर्त्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। <K.2.144> पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः। द्वन्द्व इति किम्? विस्पष्टपटुः।।
</2-2-32>
अजाद्यदन्तम् ।। <2-2-33> ।।
`द्वन्द्वे इति वर्त्तते। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्। उष्ट्रशशकम्। * बहुष्वनियमः * अश्वरथेन्द्राः। इन्द्ररथाश्वाः। * द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन *। इन्द्राग्नी। इन्द्रवायू। तपरकरणं किम्? अश्वावृषौ, वृषाश्वे इति वा ।।
</2-2-33>
<K.2.145>
अल्पाच्तरम् ।। <2-2-34> ।।
`द्वन्द्वे इति वर्त्तते। अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। बहुष्वनियमः -- शङ्कदुन्दुभिवीणाः। वीणाशङ्खदुन्दुभयः। * ऋतुनक्षत्राणामानुपूर्व्येण
समानाक्षराणां पूर्वनिपातो वक्तव्यः *। हेमन्तशिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ। <K.2.146> समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ। * लघ्वक्षरं पूर्वं निपततीति वक्तव्यम् *। कुशकाशम्। शरशादम्। * अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम् *। मातापितरौ। श्रध्दामेधे। दीक्षातपसी। * वर्णानामानुपूर्व्येण पूर्वनिपातः *। ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणामित्यत्र नास्ति। * भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः *। युधिष्ठिरार्जुनौ। * संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः। * द्वित्राः। त्रिचतुराः। नवतिशतम्।।
</2-2-34>
<K.2.147>
सप्तमीविशेषणे बहुव्रीहौ ।। <2-2-35> ।।
सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। उरसिलोमा। विशेषणम् - चित्रगुः। शबलगुः। * सर्वनामसंख्ययोरुपसंख्यानम् *। सर्वश्वेतः। सर्वकृष्णः। द्विशुक्लः। द्विकृष्णः। अनयोरेव मिथः सम्प्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः। द्व्यन्यः। त्र्यन्यः। * वा प्रियस्य पूर्वनिपातः *। गुडप्रियः। प्रियगुडः। * सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम् *। गडुकण्ठः। गडुशिराः। कथं वहेगडुः? प्राप्तस्य चाबाधा व्याख्येया।।
</2-2-35>
<K.2.148>
निष्ठा ।। <2-2-36> ।।
निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षः। अवमुक्तोपानत्कः। आहूतसुब्रह्मण्यः। ननु विशेषणमेवात्र निष्ठा? नैष नियमः, विशेषणविशेष्यभावस्य विवक्षानिबन्धत्वात्। कटे कटेन कृतमिति वा विग्रहीतव्यम्। * निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् *। शार्ङ्गजग्धी। पलाण्डुभक्षिती। मासजातः। संवत्सरजातः। सुखजातः। <K.2.149> दुःखजातः। कथं कृतकटः, भुक्तौदनः? प्राप्तस्य चाबाधा व्याख्येया।। * प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् *। अस्युद्यतः। दण्डपाणिः। कथम् उद्यतगदः, उद्यतासिः? प्रप्तस्य चाबाधा व्याख्येया।।
</2-2-36>
वाऽऽहिताग्न्यादिषु ।। <2-2-37> ।।
`निष्ठा इति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोज्यम्। अग्न्याहितः। आहिताग्निः। जातपुत्रः। पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगणश्चायम्। तेन गडुकण्ठप्रभृतय इहैव द्रष्टव्याः।।
</2-2-37>
कडाराः कर्मधारये ।। <2-2-38> ।।
गुणशब्दानां विशेषणत्वात्पूर्वनिपाते प्राप्ते विकल्प उच्यते। कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः। कडारजैमिनिः। जैमिनिकडारः। <K.2.150> कडार। गडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। कर्मधारय इति किम्? कडारपुरुषः ग्रामः।।

# काशिका/द्वितीयोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pba

< काशिका | द्वितीयोऽध्यायः

अथ द्वितीयाध्याये तृतीयः पादः

अनभिहिते ।। <2-3-1> ।।

`अनभिहिते इत्यधिकारोऽयं वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः, `अनभिहित इत्येवं तद्वेदितव्यम्। अनभिहिते = अनुक्ते, अनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनानभिहिते। तिङ्कृत्तद्धितसमासैः, परिसंख्यानम्। वक्ष्यति--कर्मणि द्वितीया(2-3-2/537), कटं करोति। ग्रामं गच्छति। अनभिहित इति किम् ? तिङ्-क्रियते कटः। कृत्-कृतः कटः। तद्धित-शत्यः,शतिकः। समास-प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः। परिसंख्यानं किम् ? कटं करोति भीष्ममुदारं दर्शनीयम्।(म.भा.1.440) बहुषु बहुवचनम्(म.भा.(1-4-21/187) इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, तत्र विशेषणार्थमिदमारभ्यते-अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति।(म.भा.1.440)

</2-3-1>

कर्मणि द्वितीया ।। <2-3-2> ।।

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः। कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति। कटं करोति। ग्रामं गच्छति। * उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्त्रापि दृश्यते *।।(म.भा.1.444)उभयतो ग्रमम्। सर्वतो ग्रामम्। धिग्देवदत्तम्। उपर्युपरि। अध्यधि ग्रामम्। अधोऽधो ग्रामम्।। * अभितः-परितः-समया-निकषा-हा-प्रतियोगेषु च दृश्यते *(म.भा.1.443)। अभितो ग्रामम्। परितो ग्रामम्। निकषा ग्रामम्। हा देवदत्तम्। बुभुक्षितं न प्रतिभाति किञ्चित्।।

</2-3-2>

तृतीया च होश्छन्दसि ।। <2-3-3> ।।

`कर्मणि इति वर्त्तते। द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्सा च भवति। छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति। यवागूमग्निहोत्रं जुहोति।।

</2-3-3>

अन्तरान्तरेण युक्ते ।। <2-3-4> ।।

द्वितीया स्वर्यते, न तृतीया। अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते। आभ्यां योगे द्वितीया विभक्तिर्भवति। षष्ठ्यपवादोऽयं योगः। तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे। अन्तरेणशब्दस्तु तच्च विनार्थं च । अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते। युक्तग्रहणं किम् ? अन्तरा तक्षशिलां च पाटलिपुत्रं स्त्रुघ्नस्य प्राकारः।।

</2-3-4>

कालाध्वनोरत्यन्तसंयोगे ।। <2-3-5> ।।

कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धः = अत्यन्तसंयोगः। मासमधीते। संवत्सरमधीते। मासं कल्याणी। संवत्सरं कल्याणी। मासं गुडधानाः। अध्वनः खल्वपि-क्रोशमधीते। योजनमधीते। क्रोशं कुटिला नदी। क्रोशं पर्वतः। योजनं पर्वतः। अत्यन्तसंयोग इति किम् ? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः। योजनस्यैकदेशे पर्वतः।।

</2-3-5>

अपवर्गे तृतीया ।। <2-3-6> ।।

`कालाध्वनोरत्यन्तसंयोगे इति वर्त्तते। अपवर्गः = फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः। संवत्सरेणानुवाकोऽधीतः। अध्वनः--क्रोशेनानुवाकोऽधीतः। योजनेनानुवाकोऽधीतः। अपवर्ग इति किम् ? क्रोशमधीतोऽनुवाकः। मासमधीतः। कर्तव्यावृत्तौ फलसिध्देरभवात्तृतीया न भवति। मासमधीतोऽनुवाको न चानेन गृहीतः।।(म.भा.1.446)

</2-3-6>

सप्तमीपञ्चम्यौ कारकमध्ये ।। <2-3-7> ।।

`कालाध्वनोः इति वर्त्तते। कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद्वा भोक्ता। त्र्यहे त्रयहाद्वा भोक्ता। कर्तृशक्त्योर्मध्ये कालः। इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति। क्रोशाल्लक्ष्यं विध्यति।(म.भा.1.446) कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः। संख्यातानदेशो न भवति; अस्वरितत्वात्।।

</2-3-7>

कर्मप्रवचनीययुक्ते द्वतीया ।। <2-3-8> ।।

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। अनुर्लक्षणे(1-4-84/547)। शाकल्यस्य संहितामनु प्रावर्षत्। आगस्त्यमन्वसिञ्चत्प्रजाः।।

</2-3-8>

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।। <2-3-9> ।।

`कर्मप्रवचनीययुक्ते इति वर्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति। उपखार्यां द्रोणः। उपनिष्के कार्षापणम्। `यस्य चेश्वरवचनम् इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधि ब्रह्मदत्तेपाञ्चालाः, अधि पाञ्चालेषु ब्रह्मदत्त इति। द्वितीयापवादो योगः।।
</2-3-9>
पञ्चम्यपाङ्परिभिः ।। <2-3-10> ।।
अप, आङ्, परि-इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद् वृष्टो देवः। परि परि त्रिगर्तेभ्यो वृष्टो देवः। अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणम्, तेनेह न भवति--वृक्षं परि विद्योतते विद्युत्।।
</2-3-10>
प्रतिनिधिप्रतिदाने च यस्मात् ।। <2-3-11> ।।
मुख्यसदृशः = प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनम् = प्रतिदानम्। यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रतियच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने ? नैष दोषः, सम्बन्धसम्बन्धात्तस्यापि योगोऽस्त्येव।।
</2-3-11>
गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।। <2-3-12> ।।
गत्यर्थनां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति,ग्रामाय गच्छति। ग्रामं व्रजति,ग्रामाय व्रजति। गत्यर्थग्रहणं किम् ? ओदनं पचति। कर्मणि इति किम् ? अश्वेन व्रजति। चेष्टायामिति किम् ? मनसा पाटलिपुत्रं गच्छति। अनध्वनि इति किम् ? अध्वानं गच्छति। अध्वनीत्यर्थग्रहणम्(म.भा.1.448) पन्थानं गच्छति। मार्गं गच्छति। आस्थितप्रतिषेधश्चायं विज्ञेयः(म.भा.1.448)। आस्थितः सम्प्राप्तः, आक्रान्त उच्यते। यत्र तु उत्पथेन पन्थानं गच्छति, तत्र भवितव्यमेव चतुर्थ्या, पथे गच्छति इति(म.भा.1.448)। द्वितीयाग्रहणं किम् ? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात्। ग्रामं गन्ता। ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति।।
</2-3-12>
चतुर्थी संप्रदाने ।। <2-3-13> ।।
सम्प्रदांने कारके चतिर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति, माणवकाय भिक्षां ददाति, देवदत्ताय रोचते, पुष्पेभ्यः स्पृहयति इत्यादि।। * चतुर्थीविधाने तादर्थ्य उपसङ्ख्यानम् *।(म.भा.1.449) यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्। * क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या *(म.भा.1.449)। मूत्राय कल्पते यवागूः। मूत्राय जायते यवागूः। * उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या

- (म.भा.1.449)।

  `वाताय कपिला विद्युदातपायातिलोहिनी।
  पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्।।(म.भा.1.449)

- हितयोगे चतुर्थी वक्तव्या *(म.भा.1.450)। गोभ्यो हितम्। अरोचकिने हितम्।।

</2-3-13>
क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।। <2-3-14> ।।
क्रियार्था क्रिया उपपदं यस्य सोऽयं क्रियार्थोपपदः। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्(3-3-10/3175) इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति। द्वितीयापवादो योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। क्तियार्थोपपदस्येति किम् ? प्रविश पिण्डीम्। प्रविश तर्पणम्। भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः। कर्मणीति किम् ? एधेभ्यो व्रजति शकटेन। स्थानिन इति किम् ? एधानाहर्तुं व्रजति।
</2-3-14>
तुमर्थाच्च भाववचनात् ।। <2-3-15> ।।
तुमुना समानार्थस्तुमर्थः। तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति। भाववचनाश्च(3-3-11/3180) इति वक्ष्यति, तस्येदं ग्रहणम्। पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति। सम्पत्तये व्रजति। तुमर्थादिति किम् ? पाकः, त्यागः, रागः। भाववचनादिति किम् ? कारको व्रजति।।
</2-3-15>
नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।। <2-3-16> ।।
</2-3-16>
नमः, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट्-इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः(मै.<1-2-13>)। स्वस्ति प्रजाभ्यः। स्वाहाऽग्नये(तै.<1-8-13>.1) स्वधा पितृभ्यः(मै.<1-2-13>)। अलं मल्लो मल्लाय। अलमिति पर्यास्यर्थग्रहणम्। प्रभुर्मल्लो मल्लाय, शक्तो मल्लो मल्लाय। वषडग्नये। वषडिन्द्राय। चकारः पुनरस्यैव समुच्चयार्थः, तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति--स्वस्ति गोभ्यो भूयात्। स्वस्ति ब्राह्मणेभ्यः।।
</1-2-13>

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।। <2-3-17> ।।
मन्यतेः कर्मणि = मन्यकर्मणि। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने। अनादरः = तिरस्कारः। न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये। नत्वा बुसं मन्ये। न त्वा बुसाय मन्ये। मन्यतिग्रहणं किम् ? न त्वा तृणं चिन्तयामि। विकरणनिर्देशः किमर्थः ? न त्वा तृणं मन्वे। अनादर इति किम् ?

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम्।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति।।

अप्राणिष्विति किम् ? न त्वा श्रृगालं मन्ये। * यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम् *(म.भा.1.450)। व्यवस्थितविभाषा च ज्ञेया। न त्वा नावं मन्ये यावदुत्तीर्णं न नाव्यम्। नत्वाऽन्नं मन्ये। यावन्न भुक्तं श्राद्धम्। प्राणिषु तूभयम्--न त्वा काकं मन्ये। नत्वा श्रृगालं मन्ये। इह चतुर्थी द्वितीया च भवति। न त्वा श्वानं मन्ये। न त्वा शुने मन्ये। युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म ? व्यवस्थितविभाषाविज्ञानादेव न भवति।।
</2-3-17>
कर्तृकरणयोस्तृतीया ।। <2-3-18> ।।
कर्त्तरि करणे च कारके तृतीया विभक्तिर्भवति। देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्। करणे-- दात्रेण लुनाति। परशुना छिनत्ति। * तृतीयाविधाने प्रकृत्यादीनामुपसङ्ख्यानम् *(म.भा1.452)। प्रकृत्याऽभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। प्रायेण वैयाकरणः। गार्ग्योऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन
धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति। साहस्रेणाश्वान् क्रीणाति।।
</2-3-18>
सहयुक्तेऽप्रधाने ।। <2-3-19> ।।
सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति। पुत्रेण सहागतः पिता। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसम्वन्धः। शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्। सहार्थेन योगे तृतीयाविधानात्पर्यायप्रयोगेऽपि भवति--पुत्रेण सार्धमिति। विनापि सहशब्देन भवति, वृद्धो यूना(1-2-65/931) इति निपातनात्। अप्रधान इति किम् ? शिष्येण सहोपाध्यायस्य गौः।।
</2-3-19>
येनाङ्गविकारः ।। <2-3-20> ।।
अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्तते, `येन इति च तदवयवो हेतुत्वेन निर्दिश्यते। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति। अक्ष्णा काणः। पादेन खञ्जः। पाणिना कुणिः। अवयवधर्मेण समुदायो व्यपदिश्यते। अङ्गविकार इति किम् ? अक्षि काणमस्य।।

</2-3-20>
इत्थम्भूतलक्षणे ।। <2-3-21> ।।
कञ्चित्प्रकारं प्राप्तः = इत्थम्भूतः, तस्य लक्षणमित्थम्भूतलक्षणम्, ततस्तृतीया विभक्तिर्भवति। अपि भवान् कमण्डलुना छात्रमद्राक्षीत् ? (म.भा.1.453) छात्रेणोपाध्यायम्। शिखया परिव्राजकम्। इह न भवति--कमण्डलुपाणिश्छात्र इति; लक्षणस्य समासेऽन्तर्भूतत्वात्। इत्थम्भूत इति किम् ? वृक्षं प्रति विद्योतनम्।।
</2-3-21>
संज्ञोऽन्यतरस्यां कर्मणि ।। <2-3-22> ।।
सम्पूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति। पित्रा सञ्जानीते। पितरं सञ्जानीते। मात्रा सञ्जानीते। मातरं स?ञ्जानीते।।
</2-3-22>
हेतौ ।। <2-3-23> ।।
फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते। तद्वाचिनस्तृतीयाविभक्तिर्भवति। धनेन कुलम्। कन्यया शोकः। विद्यया यशः।।
</2-3-23>
अकर्तर्यृणे पञ्चमी ।। <2-3-24> ।।
`हेतौ इति वर्त्तते। कर्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति। तृतीयापवादो योगः। शताद्बद्धः। सहस्राद्बद्धः। अकर्त्तरीति किम् ? शतेन बन्धितः। शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञकम्।।
</2-3-24>
विभाषा गुणेऽस्त्रियाम् ।। <2-3-25> ।।
`हेतौ इति वर्त्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति। जाड्याद्बद्धः, जाड्येन बद्धः। पाण्डित्यान् मुक्तः, पाण्डित्येन मुक्तः। गुणग्रहणं किम् ? धनेन कुलम्। अस्त्रियामिति किम् ? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः।।
</2-3-25>
षष्ठी हेतुप्रयोगे ।। <2-3-26> ।।
हेतोः प्रयोगः = हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे = हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति।।

</2-3-26>
सर्वनाम्नस्तृतीया च ।। <2-3-27> ।।
सर्वनाम्नो हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च। पूर्वेण षष्ठ्यामेव
प्राप्तायामिदमुच्यते। कस्य हेतोर्वसति। केन हेतुना वसति। यस्य हेतोर्वसति। येन हेतुना वसति। * निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् *(म.भा1.454)।। किं निमित्तं वसति। केन निमित्तेन वसति। कस्मै निमित्ताय वसति। कस्मान्निमित्ताद्वमति। कस्य निमित्तस्य वसति। कस्मिन्नमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्। अर्थग्रहणं चैतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति। तेनेहापि भवति--किं प्रजोजनं वसति। केन प्रयोजनेन वसति। कस्मै प्रयोजनाय वसति। कस्मात्प्रयोजनाद् वसति। कस्य प्रयोजनस्य वसति। कस्मिन् प्रयोजने वसति।।
</2-3-27>
अपादाने पञ्चमी ।। <2-3-28> ।।
अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात्पराजयते। * पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् *(म.भा.1.455)। प्रासादमारुह्य प्रेक्षते, प्रासादात्प्रेक्षते। * अधिकरणे चोपसङ्ख्यानम् *(म.भा.1.455) आसने उपविश्य प्रेक्षते, आसनात्प्रेक्षते। शयनात्प्रेक्षते। * प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या *(म.भा.1.455)। कुतो भवान्, पाटलिपुत्रात्। * यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या *(म.भा.1.455)। गवीधुमतः साङ्काश्यं चत्वारि योजनानि। कार्तिक्या आग्रहायणी मासे। * तद्युक्तात्काले सप्तमी वक्तव्या *(म.भा.1.455) कार्तिक्या आग्रहायणी मासे। * अध्वनः प्रथमा सप्तमी च वक्तव्या *(म.भा.1.455)। गवीधुमतः साङ्काश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा।।
</2-3-28>
अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।। <2-3-29> ।।
अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच् आहि-इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्त्तते। तत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्(2-3-34/611) इति प्राप्ते पञ्चमी विधीयते। आराद्देवदत्तात्। आराद्यज्ञदत्तात्। `इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते। इतरे देवदत्तात्। `ऋते इति अव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्। दिक्शब्दः - पूर्वो ग्रामात्पर्वतः)। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। `दिक्शब्द इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात्; इतरथा हि दिग्वृत्तिनैव स्यात्--इयमस्याः पूर्वेति। इहतु न स्यात्--अयमस्मात्पूर्वः काल इति। अञ्चूत्तरपद-प्राग् ग्रामात्। प्रत्यग् ग्रमात्।(म.भा.1.456) ननु चायमपि दिक्शब्द एव ? षष्ठ्यतसर्थप्रत्ययेन(2-3-30/609) इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः। आच्-दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि-दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्।।
</2-3-29>
षष्ठ्यतसर्थप्रत्ययेन ।। <2-3-30> ।।
दक्षिणोत्तराभ्यामतसुच्(5-3-28/1978) इति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य।।
</2-3-30>
एनपा द्वितीया ।। <2-3-31>।।
एनबन्यतरस्यामदूरे पञ्चम्या(5-3-35/1984)इति वक्ष्यति। तेन युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यपीष्यते--दक्षिणेन ग्रमस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः।।
</2-3-31>
पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।। <2-3-32>।।
पञ्चमीग्रहणमनुवर्तते। पृथक्, विना, नाना--इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च । पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्।
पृथग्विनानानाभिः इति योगविभागो द्वितीयार्थः।।

विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान्दोषान्केनेमौ पातितौ द्रुमौ।।

</2-3-32>
करणे च स्तेकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य ।। <2-3-33> ।।
स्तोक, अल्प, कृच्छ्र, कतिपय--इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिध्दा। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता। स्तोकान्मुक्तः, स्तोकेनमुक्तः। अल्पान्मुक्तः, अल्पेन मुक्तः, कृच्छ्रान्मुक्तः, कृच्छ्रेण मुक्तः। कतिपयान्मुक्तः, कतिपयेनमुक्तः। असत्त्ववचनस्येति किम् ? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करण इति किम् ? क्रियाविशेषणे कर्मणि मा भूत्--स्तोकं मुञ्चति।।
</2-3-33>

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।। <2-3-34> ।।
पञ्चम्यनुवर्त्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च । दूरं ग्रामात्, दूरं ग्रामस्य। विप्रकृष्टं ग्रामात्, विप्रकृष्टं ग्रामस्य। अन्तिकं ग्रामात्, अन्तिकं ग्रामस्य। अभ्याशं ग्रामात्, अभ्याशं ग्रामस्य, अभ्याशं ग्रामस्य। अन्यतरस्याङ्ग्रहणं पञ्चम्यर्थम्, इतरथा हि तृतीया पक्षे स्यात्।।
</2-3-34>
दूरान्तिकार्थेभ्यो द्वितीया च ।। <2-3-35> ।।
पञ्चम्यनुवर्त्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीयापि समुच्चीयते। दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य। अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य। प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं चानुवर्त्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति-दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वम्।।
</2-3-35>
सप्तम्यधिकरणे च ।। <2-3-36> ।।
सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटेआस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि-दूरे ग्रामस्य, अन्तिके ग्रामस्य, अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः। * सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् *(म.भा.1.458)। अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि। * साध्वसाधुप्रयोगे च सप्तमी वक्तव्या *(म.भा.1.458)। साधुर्देवदत्तो मातरि। असाधुः पतरि। * कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या *(म.भा.1.458)। ऋध्देषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते। * अकारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या *(म.भा.1.458)। दरिद्रेष्वासीनेषु ऋध्दा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति।* तद्विपर्यासे च सप्तमी वक्तव्या *(म.भा.1.458)। ऋध्देष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति। * निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या *(म.भा.1.458)। `चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।। (म.भा.1.458)
</2-3-36>
यस्य च भावेन भावलक्षणम् ।। <2-3-37> ।।
`सप्तमी इति वर्तते। भावः = क्रिया। यस्य च भावेन = यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमीविभक्तिर्भवति। प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः। भावेनेति किम् ? यो जटाभिः स भुङ्क्ते। पुनर्भावग्रहणं किम् ? यो भुङ्क्ते स देवदत्तः।।
</2-3-37>
षष्ठी चानादरे ।। <2-3-38> ।।
पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात्सापि भवति। अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्, रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः।।
</2-3-38>
स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।। <2-3-39> ।।
षष्ठीसप्तम्यौ वर्तेते। स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत-इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः। गवां स्वामी, गोषु स्वामी। गवामीश्वरः, गोष्वीश्वरः। गवामधिपतिः, गोष्वधिपतिः। गवां दायदः, गोषु दायादः। गवां साक्षी, गोषु साक्षी। गवां प्रतिभूः। गवां प्रसूतः, गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम्।।
</2-3-39>
आयुक्तकुशलाभ्यां चासेवायाम् ।। <2-3-40> ।।
षष्ठीसप्तम्यौ वर्तेते। आयुक्तः = व्यापारितः, कुशलः = निपुणः ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा = तात्पर्यम्। आयुक्तः कटकरणस्य। आयुक्तः कटकरणे। कुशलः कटकरणस्य। कुशलः कटकरणे। आसेवायामिति किम् ? आयुक्तो गौः शकटे। तत्र सप्तम्येवाधिकरणे भवति।।
</2-3-40>
यतश्च निर्धारणम् ।। <2-3-41> ।।
षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम् = निर्धारणम्। यतो निर्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः। मनुष्याणां क्षत्त्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा। गोषु कृष्णा सम्पन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः। अध्वगेषु धावन्तः शीघ्रतमाः।।
</2-3-41>
पञ्चमी विभक्ते ।। <2-3-42> ।।
`यतश्च निर्धारणम् इति वर्तते। षष्ठीसप्तम्यपवादो योगः। विभागः = विभक्तम्। यस्मिन्निर्धारणाश्रये विभक्तमस्यास्ति ततः पञ्चमी विभक्तिर्भवति। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः। आढ्यतराः।।
</2-3-42>
साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।। <2-3-43> ।।

साधु, निपुण-इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रतिः प्रयुज्यते। मातरि साधुः। पितरि साधुः। मातरि निपुणः। पितरि निपुणः। अर्चायामिति किम् ? साधुर्भृत्यो राज्ञः। तत्वकथने न भवति। अप्रतेरिति किम् ? साधुर्देवदत्तो मातरं प्रति। * अप्रत्यादिभिरिति वक्तव्यम् *(म.भा.1.459)। साधुर्देवदत्तो मातरं परि। मातरमनु।।
</2-3-43>
प्रसितोत्सुकाभ्यां तृतीया च ।। <2-3-44> ।।
प्रसित, उत्सुक-इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च । प्रसितः=प्रसक्तः, यस्तत्र नित्यमेवावबद्धः स प्रसितशब्देनोच्यते। केशैः प्रसितः, केशेषु प्रसितः। केशैरुत्सुकः।।
</2-3-44>
नक्षत्रे च लुपि ।। <2-3-45> ।।
तृतीयासप्तम्यावनुवर्तेते। लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण पायसमश्नीयात्। पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्। मघासु पललौदनम्। नक्षत्र इति किम् ? पञ्चालेषु वसति। लुपीति किम् ? मघासु ग्रहः। इह कस्मान्न भवति-अद्य पुष्यः, अद्य कृत्तिका ? `अधिकरणे इति वर्तते। वचनं तु पक्षे
तृतीयाविधानार्थम्।।
</2-3-45>
प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।। <2-3-46> ।।
प्रातिपदिकार्थः = सत्ता। लिङ्गम् = स्त्रीलिङ्गपुंल्लिङ्गनपुंसकानि। परिमाणम् - द्रोणः, खारी, आढकम्। वचनम् = एकत्वद्वित्वबहुत्वानि। मात्रशब्दः प्रत्येकमभिसम्बध्यते। प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे प्रथमा विभक्तिर्भवति। प्रातिपदिकार्थमात्रे--उच्चैः। नीचैः। लिङ्गग्रहणं किम् ? कुमारी, वृक्षः, कुण्डम् इत्यत्रापि यथा स्यात्। परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकम्-इत्यत्रापि यथा स्यात्। वचनग्रहणं किम् ? एकत्वादिषूक्तेष्वपि यथा स्यात्-एकः द्वौ, बहवः। प्रातिपदिकग्रहणं किम् ? निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तम्, ततोऽपि यथा स्यात्-प्रलम्बते। अध्यागच्छति।।
</2-3-46>
सम्बोधने च ।। <2-3-47> ।।
आभिमुख्यकरणम् = सम्बोधनम्, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारभ्यते। सम्बोधने च प्रथमा विभक्तिर्भवति। हे देवदत्त। हे देवदत्तौ। हे देवदत्ताः।।
</2-3-47>
साऽऽमन्त्रितम् ।। <2-3-48> ।।
सम्बोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति। तथा चैवोदाहृतम्। आमन्त्रितप्रदेशाः-आमन्त्रितं पर्वमविद्यमानवत्(8-1-72/412) इत्येवमादयः।।
</2-3-48>
एकवचनं सम्बुद्धिः ।। <2-3-49> ।।
आमन्त्रितप्रथमाया यदेकवचनं तत्सम्बुद्धिसंज्ञं भवति। हे पटो! हे देवदत्त! सम्बुद्धिप्रदेशाः - एङ्ह्रस्वात्सम्बुद्धेः(6-1-69/193) इत्येवमादयः।।
</2-3-49>
षष्ठी शेषे ।। <2-3-50> ।।
कर्मादिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसम्बन्धादिः शेषस्तत्र षष्ठीविभक्तिर्भवति। राज्ञः पुरुषस्य गृहम्। पशोः पादः। पितुः पुत्रः।।
</2-3-50>
ज्ञोऽविदर्थस्य करणे ।। <2-3-51> ।।
जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठीविभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। सर्पिषा करणेन प्रवर्तत इत्यर्थः। प्रवृत्तिवचनो जनातिरविदर्थः। अथ वा-मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा। चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानमज्ञानमेव। अविदर्थस्येति किम् ? स्वरेण पुत्रं जानाति।।
</2-3-51>
अधीगर्थदयेशां कर्मणि ।। <2-3-52> ।।
`शेषे इति वर्तते। अधीगर्थाः = स्मरणार्थाः, `दय दानगतिरक्षणेषु(धा.पा.481), `ईश ऐश्वर्ये(धा.पा.1021) -- एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठीविभक्तिर्भवति। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे। कर्मणीति किम् ? मातुर्गुणैः स्मरति। शेष इति किम् ? मातरं स्मरति।।
</2-3-52>
कृञः प्रतियत्ने ।। <2-3-53> ।।
सतो गुणान्तराधानम् = प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधोदकस्योपस्कुरुते। शस्त्रपत्रस्योपस्कुरुते। प्रतियत्न इति किम् ? कटं करोति। कर्मणीति किम्

? एधोदकस्योपस्कुरुते प्रज्ञया। शेषे इत्येव--एधोदकमुपस्कुरुते।।
</2-3-53>
रुजार्थानां भाववचनानामज्वरेः ।। <2-3-54> ।।
रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठीविभक्तिर्भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः। रुजार्थानामिति किम् ?

एति जीवन्तमानन्दो नरं वर्षशतादपि।
जीव पुत्रक मामैवं तपः साहसमाचर।।

भाववचनानामिति किम् ? नदी कूलानि रुजति। अज्वरेरिति किम् ? चौरं ज्वरयति ज्वरः। * अज्वरिसन्ताप्योरिति वक्तव्यम् *(म.भा.1.465)। चौरं सन्तापयति तापः। शेष इत्येव--चौरं रुजति रोगः।।
</2-3-54>
आशिषि नाथः ।। <2-3-55> ।।
`नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु(धा.पा.6,7) पठ्यते, तस्याशीः-क्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठीविभक्तिर्भवति। सर्पिषो नाथते। मधुनो नाथते। आशिषीति किम् ? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व।।
</2-3-55>
जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।। <2-3-56> ।।
जासि, निप्रहण, नाट, क्राथ, पिष्-इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठीविभक्तिर्भवति। `जसु हिंसायाम्(धा.पा.1669) `जसुताडने(धा.पा.1719) इति च चुरादौ पठ्यते तस्येदं ग्रहणम्, न दैवादिकस्य-`जसु मोक्षणे(धा.पा.1212) इत्यस्य। चौरस्योज्जासयति। वृषलस्योज्जासयति। `निप्रहण इति सङ्घातविगृहीतविपर्यस्तस्य ग्रहणम्। चौरस्य निप्रहन्ति। चौरस्य निहन्ति। चौरस्य प्रहन्ति। चौरस्य प्रणिहन्ति। चौरस्योन्नाटयति। वृषलस्योन्नाटयति। चौरस्योत्क्राथयति। वृषलस्य क्राथयति। निपातनाद् वृद्धिः। अयं हि घटादौ पठ्यते-`श्रथ क्नथ क्रथ क्लथ हिंसार्थाः(धा.पा.799-802) इति, तत्र `घटादयो मितः(धा.पा.763-822) इति मित्संज्ञायाम् मितां ह्रस्वः(6-4-92/2568) इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि। वृषलस्य पिनष्टि। हिंसायामिति किम् ? धानाः पिनष्टि। शेष इत्येव-चौरमुज्जासयति। एषामिति किम् ? चौरं हिनस्ति। निप्रहण इति किम् ? चौरं विहन्ति।।
</2-3-56>
व्यवहृपणोः समर्थयोः ।। <2-3-57> ।।
व्यवहृ, पण-इत्येतयोः समर्थयोः = समानार्थयोः कर्मणि कारके षष्ठीविभक्तिर्भवति। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। शतस्य व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्मान्न भवति ? स्तुत्यर्थस्य पणतेरायप्रत्यय इष्यते। समर्थयोरिति किम् ? शलाकां व्यवहरति। गणयतीत्यर्थः। ब्राह्मणान् पणायते।स्तौतीत्यर्थः। शेष इत्येव-शतं पणते।
</2-3-57>
दिवस्तदर्थस्य ।। <2-3-58> ।।
व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठीविभक्तिर्भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्येति किम् ? ब्राह्मणं दीव्यति। योगविभाग उत्तरार्थः।
</2-3-58>
विभाषोपसर्गे ।। <2-3-59> ।।
`दिवस्तदर्थस्य इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते। उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठीविभक्तिर्भवति। शतस्य प्रतिदीव्यति। सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति। सहस्रं प्रतिदीव्यति। उपसर्गस्येति किम् ? शतस्य दीव्यति। तदर्थस्येत्येव-शलाकां प्रतिदीव्यति।
</2-3-59>
द्वितीया ब्राह्मणे ।। <2-3-60> ।।
ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति। गामस्य तदहः सभायां दीव्येयुः(मै.सं.<1-6-11/56)। अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम्। सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषायापि सिध्यति।
</2-3-60>
प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।। <2-3-61> ।।
</2-3-61>
`प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यप्रुवोर्हविषः कर्मणः षष्ठीविभक्तिर्भवति देवतासम्प्रदाने सति। `अग्नये छागस्य हविषो वपाया मेदसः प्रे3ष्य(का.श्रौ.<6-6-26>) `अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि(का.श्रौ.<6-6-20>)। प्रेष्यब्रुवोरिति किम्? `अग्नये छागं हविर्वपां मेदो जुहुधि(का.श्रौ.<6-6-23>)। हविष इति किम् ? `अग्नये गोमयानि प्रेष्य(श.ब्रा.<12-5-2>.3)। देवतासम्प्रदान इति किम् ? माणवकाय पुरोडाशं प्रेष्य।। * हवुषः प्रस्थितस्य प्रतिषेधो वक्तव्यः * (म.भा.1.466) इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य3(का.श्रौ.<6-6-23>)
</6-6-26>

चतुर्थ्यर्थे बहुलं छन्दसि ।। <2-3-62> ।।
छन्दसि विषये चतुर्थ्यर्थे षष्ठीविभक्तिर्भवति बहुलम्। पुरुषमृगश्चन्द्रमसः(वा.सं.24.35)। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्यः(वा.सं.24.35)। बहुलग्रहणं किम् ? कृष्णो रात्र्यै(का.सं.68.40)। हिमवते हस्ती(वा.सं.24.30)। षष्ठ्यर्थे चतुर्थी वक्तव्या *(म.भा.1.466)। या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावति तस्यै श्यावदन्। या नखानि कृन्तति तस्यै कुनखः। याऽऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशात् प्रलिखते। तस्यै खलतिः। अहल्यायै जारः(3-3-1>.19)।।
</2-3-62>
यजेश्च करणे ।। <2-3-63> ।।
यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठीविभक्तिर्भवति। घृतस्य यजते। घृतेन यजते। सोमस्य यजते। सोमेन यजते।।
</2-3-63>
कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।। <2-3-64> ।।
`छन्दसि बहुलम् इति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठीविभक्तिर्भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते। कृत्वोऽर्थग्रहणं किम् ? अह्नि शेते। रात्रौ शेते। प्रयोगग्रहणां किम् ? अहनि भुक्तम्। गम्यते हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति। कालग्रहणं किम् ? द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरण इति किम्। द्विरह्नो भुङ्क्ते। शेष इत्येव-द्विरहन्यधीते।।
</2-3-64>
कर्तृकर्मणोः कृति ।। <2-3-65> ।।
कृत्प्रयोगे कर्तरि कर्मणि च षष्ठीविभक्तिर्भवति। भवतः शायिका। भवत आसिका। कर्मणि-अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। कर्तृकर्मणोरिति किम् ? शस्त्रेण भेत्ता। कृतीति किम् ? तद्धितप्रयोगे मा भूत्--कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। शेष इति निवृत्तम्, पुनः कर्मग्रहणात्; इतरथा हि `कर्तरि च कृति इत्येवं ब्रूयात्।।
</2-3-65>
उभयप्राप्तौ कर्मणि ।। <2-3-66> ।।
पूर्वेण षष्ठी प्राप्ता नियम्यते। `उभयप्राप्तौ इति बहुव्रीहिः उभयोः प्राप्तिर्यस्मिन्कृति सोऽयमुभयप्राप्तिः। तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते मे ओदनस्य भोजनं
देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन। बहुव्रीहिविज्ञानादिह नियमो न भवति - आश्चर्यमिदमोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भाव इति।। * अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् *(म.भा.1.468)। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा देवदत्तस्य कटस्य।। * शेषे विभाषा *(म.भा.1.468)। अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते। विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा।। केचिदविशेषेणैव विभाषामिच्छन्ति - शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा।।
</2-3-66>
क्तस्य च वर्तमाने ।। <2-3-67> ।।
न लोकाव्ययनिष्ठा(2-3-69/627) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठीविभक्तिर्भवति। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। क्तस्येति किम् ? ओदनं पचमानः। वर्तमान इति किम् ? ग्रामं गतः। * नपुंसके भाव उपसंख्यानम् *(म.भा.1.468)। छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम्। * शेषविज्ञानात् सिद्धम् *(म.भा.1.468)। तथा च कर्तृविवक्षायां तृतीयापि भवति--छात्रेण हसितमिति।।
</2-3-67>
अधिकरणवाचिनश्च ।। <2-3-68> ।।
क्तोऽधिकरणे च(3-4-76/3087) इति वक्ष्यति, तस्य प्रयोगे षष्ठीविभक्तिर्भवति। अयमपि प्रतिषेधापवादो योगः। इदमेषामासितम्। इदमेषां शयितम्। इदमहेः सृप्तम्। इदं वनकपेर्यातम्। इदमेषां भुक्तम्। इदमेषामशितम्। द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठीद्वितीयावत्। नेताऽश्वस्य ग्रामस्य चैत्रः। अन्ये प्रधाने कर्मण्याहुः, तदा-नेताश्वस्य ग्रामं चैत्रः।।
</2-3-68>
न लोकाव्ययनिष्ठाखलर्थतृनाम् ।। <2-3-69> ।।
</2-3-69>
कर्तृकर्मणोः कृति(2-3-65/623) इति षष्ठी प्राप्ता प्रतिषिध्यते। ल, उ, उक, अव्यय, निष्ठा,खलर्थ, तृन्-इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति। `ल इति शतृशानचौ कानच्क्वसू किकिनौ च गृह्यन्ते-ओदनं पचन्। ओदनं पचमानः। ओदनं पेचानः। ओदनं पेचिवान्। पपिः सोमम्। ददिर्गाः(ऋ.<6-23-4>)। उ-कटं चिकीर्षुः। ओदनं बुभुक्षुः। कन्यामलंकरिष्णुः। इष्णुचोऽपि प्रयोगे निषेधः। उक--आगामुकं वाराणसीं रक्ष आहुः। * उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः *(म.भा.1.469)। दास्याः कामुकः। अव्यय-कटं कृत्वा। ओदनं भुक्त्वा। * अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः *(म.भा.1.469)। व्युष्टायां पुरा सूर्यस्योदेतोराधेयः(3-4-16/3443)(का.स.8.3)। पुरा क्रूरस्य विसृपो विरप्शिन्।(3-1-17/3444)(तै.सं.<1-1-9>.3) निष्ठा-ओदनं भुक्तवान्। देवदत्तेन कृतम्। खलर्थ-ईषत्कारः कटो भवता। ईषत्पानः सोमो भवता। तृन्निति प्रत्याहारग्रहणम्, लटः शतृशानचौ(3-2-135/3115) इत्यारभ्य आतृनो नकारात्। तेन शानन्-चानश्-शतृ-तृनामपि प्रतिषेधो भवति। सोमं पवमानः। नडमाघ्नानः। अधीयन् पारायणम्। कर्ता कटान्। वदिता जनापवादान्। * द्विषः शतुर्वा वचनम् *(म.भा.1.470)। चौरं द्विषन्। चौरस्य द्विषन्।।

</6-23-4>
अकेनोर्भविष्यदाधमर्ण्ययोः ।। <2-3-70> ।।
अकस्य भविष्यति काले विहितस्य,इनस्तु भविष्यति चाधमर्ण्ये विहितस्य प्रयोगे षष्ठीविभक्तिर्न भवति। कटं कारको व्रजति। ओदनं भोजको व्रजति। इनः खल्वपि-ग्रामं गमी(म.भा.1.470)। ग्रामं गामी(3-3-3/3171)। आधमर्ण्यं-शतं दायी। सहस्रं दायी। भविष्यदाधमर्ण्ययोरिति किम् ? यवानां लावकः। सक्तूनां पायकः। अवश्यं कारी कटस्य। इह कस्मान्न भवति-वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इति ? भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम्।
</2-3-70>
कृत्यानां कर्तरि वा ।। <2-3-71> ।।
कर्तृकर्मणोः कृति(2-3-65/623) इति नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते। कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति, न कर्मणि। भवता कटः कर्तव्यः। भवतः कटः कर्तव्यः। कर्तरीति किम् ? गेयो माणवकः साम्नाम्। * उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः *(म.भा.1.470)। क्रष्टव्या ग्रामं शाखा देवदत्तेन। नेतव्या ग्राममजा देवदत्तेन।।
</2-3-71>
तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यात् ।। <2-3-72> ।।
तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा। शेषे विषये तृतीयाविधानात् तया मुक्ते षष्ठ्येव भवति। तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य। सदृशो देवदत्तेन, सदृशो देवदत्तस्य। अतुलोपमाभ्यामिति किम् ? तुला देवदत्तस्य नास्ति। उपमा कृष्णस्य न विद्यते। वेति वर्तमानेऽन्यतरास्याङ्ग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम्; इतरथा हि तृतीयानुकृष्येत।।
</2-3-72>
चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।। <2-3-73> ।।
आशिषि गम्यमानायाम् आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित-इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। चकारो विकल्पानुकर्षणार्थः। शेषे चतुर्थीविधानात्तया मुक्ते षष्ठीविभक्तिर्भवति। * अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम् *। आयुष्यं देवदत्ताय देवदत्तस्य वा भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। मद्रं देवदत्ताय देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय। भद्रं देवदतस्य। कुशलं देवदत्ताय। कुशलं देवदत्तस्य। निरामयं देवदत्ताय। निरामयं देवदत्तस्य। सुखं देवदत्ताय। सुखं देवदत्तस्य। शं देवदत्ताय। शं देवदत्तस्य। अर्थो देवदत्ताय। अर्थो देतवत्तस्य। प्रयोजनं देवदत्ताय। प्रयोजनं देवदत्तस्य। हितं देवदत्ताय। हितं देवदत्तस्य। पथ्यं देवदत्ताय। पथ्यं देवदत्तस्य। आशिषीति किम् ? आयुष्यं देवदत्तस्य तपः।।
</2-3-73>
इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य तृतीयः पादः।।

# काशिका/द्वितीयोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/pbb

< काशिका | द्वितीयोऽध्यायः

<K.2.237>

अथ द्वितीयाध्याये चतुर्थः पादः

द्विगुरेकवचनम् ।। <2-4-1> ।।

द्विगुः समासः एकवचनं भवति। एकस्य वचनम् = एकवचनम्। एकस्यार्थस्य वाचको भवतीत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद्भवतीति। समाहारद्विगोश्चेदं ग्रहणम्, नान्यस्य। पञ्चपूलाः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्यैकत्वादनुप्रयोगेऽप्येकवचनं भवति -- पञ्चपूली इयं शोभनेति।।

</2-4-1>

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।। <2-4-2> ।।

<K.2.240>

`एकवचनम् इति वर्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि संपद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद्भवति, तथा तूर्याङ्गानां सेनाङ्गानां च । प्राण्यङ्गानां तावत् -- पाणिपादम्। शिरोग्रीवम्। तूर्याङ्गानाम् -- मार्दङ्गिकपाणविकम्। वीणावादकपरिवादकम्। सेनाङ्गानाम् - रथिकाश्वारोहम्। रथिकपादातम्। <K.2.241> हस्त्यश्वादिषु परत्वात्पशुद्वन्द्वे विभाषयैकवद् भवति। इतरेतरयोगे समाहारे च द्वन्द्वो विहितः, तत्र समाहारस्यैकत्वात्सिद्धमेवैकवचनम्? इदं तु प्रकरणं विषयविभागार्थम् - प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधिपयआदीनामितरेतरयोग एव, वृक्षमृगादीनामुभयत्रेति।।

</2-4-2>

<K.2.242>

अनुवादे चरणानाम् ।। <2-4-3> ।।

चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते। चरणानां द्वन्द्व एकवद्भवति, अनुवादे गम्यमाने। प्रमाणान्तरावगतस्यार्थस्य शब्देन संकीर्त्तनम् = अनुवादः। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्। <K.2.243> कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदैवमुदाहरणम्। यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम्। अनुवादे इति किम्? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः।। * स्थेणोरद्यतन्यां चेति वक्तव्यम् *। स्थेणोरिति किम् ? अनन्दिषुः कठकालापाः। अद्यतन्यामिति किम्? उद्यन्ति कठकालापाः।।

</2-4-3>

<K.2.244>

अध्वर्युक्रतुरनपुंसकम् ।। <2-4-4> ।।

अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुः। अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिङ्गानां द्वन्द्व एकद्भवति। अध्वर्युक्रतुरनपुंसकं द्वन्द्व इति गौणो निर्देशः। अर्काश्वमेधम्। सायाह्नातिरात्रम्। <K.2.245> अध्वर्युक्रतुरिति किम्? इषुवज्रौ। उद्भिद्वलभिदौ। अनपुंसकमिति किम्? राजसूयवाजपेये। इह कस्मान्न भवति - दर्शपौर्णमासौ? क्रतुशब्दः सोमयागेषु रूढः।।

</2-4-4>

अध्ययनतोऽविप्रकृष्टाख्यानाम् ।। <2-4-5> ।।

अध्ययनेन निमित्तेन येषामविप्रकृष्टा = प्रत्यासन्ना आख्या तेषां <K.2.246> द्वन्द्व एकवद्भवति। पदकक्रमकम्। क्रमकवार्तिकम्। सम्पाठः = पदानां क्रमस्य च प्रत्यासन्नः। अध्ययनत इति किम्? पितापुत्रौ। अविप्रकृष्टाख्यानामिति किम्? याज्ञिकवैयाकरणौ।।

</2-4-5>

जातिरप्राणिनाम् ।। <2-4-6> ।।

<K.2.247>

जातिवाचिनां शब्दानां द्वन्द्व एकवद्भवति, प्राणिनो वर्जयित्वा। आराशस्त्रि। धानाशष्कुलि। जातिरिति किम्? नन्दकपाञ्चजन्यौ। अप्राणिनामिति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः। `नञिवयुक्तन्यायेन द्रव्यजातीना- मयमेकवद्भावः, न गुणक्रियाजातीनाम्। रूपरसगन्धस्पर्शाः। गमनाकुञ्चनप्रसारणानि। जातिपरत्वे च जातिशब्दानामयमेकवद्भावो विधीयते, न नियतद्रव्यविवक्षायाम् -- इह कुण्डे बदरामलकानि तिष्ठन्तीति।।

</2-4-6>

<K.2.248>

विशिष्टलिङ्गो नदी देशोऽग्रामाः ।। <2-4-7> ।।

विशिष्टलिङ्गानाम् = भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद्भवति। नद्यवयवो द्वन्द्वो नदीत्युच्यते। देशावयवश्च देशः। नदी देश इत्यसमासनिर्देश एवायम्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गाशोणम्। देशः खल्वपि कुरवश्च कुरुक्षेत्रं च

कुरुकुरुक्षेत्रम्। कुरुकुरुजाङ्गलम्। <K.2.249> विशिष्टलिङ्ग इति किम्? गङ्गायमुने। मद्रकेकयाः। नदी देश इति किम् ? कुक्कुटमयूर्यौ। अग्रामा इति किम् ? जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ। नदीग्रहणमदेशत्वात्। जनपदो हि देशः, तथा च पर्वतानां ग्रहणं न भवति - कैलासश्च गन्धमादनं च कैलासगन्धमादने। * अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः *। इह मा भूत् -- मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम्। <K.2.250> * उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः *। सौर्यं च नगरम्, केतवतं च ग्रामः = सौर्यकेतवते।।

</2-4-7>

क्षुद्रजन्तवः ।। <2-4-8> ।।

अपचितपरिमाणः क्षुद्रः। क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद्भवति। दंशमशकम्। यूकालिक्षम्। क्षुद्रजन्तव इति किम् ? ब्राह्मणक्षत्रियौ।।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः।
शतं वा प्रसृतौ येषां केचिदानकुलादपि।।

<K.2.251>

`आनकुलादपि इतीयमेव स्मृतिः प्रमाणम्; इतरासां तद्विरोधात्।।

</2-4-8>

येषां च विरोधः शाश्वतिकः ।। <2-4-9> ।।

<K.2.252>

विरोधः = वैरम्। शाश्वतिकः = नित्यः। येषां शाश्वतिको विरोधस्तद्वाचिनां शब्दानां द्वन्द्व एकवद्भवति। मार्जारमूषकम्। अहिनकुलम्। शाश्वतिक इति किम् ? गौपालिशालङ्कायनाः कलहायन्ते। चकारः पुनरस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनामनेन नित्यमेकवद्भावो भवति - अश्वमहिषम्, श्वशृगालम्, काकोलूकम्।।

</2-4-9>

शूद्राणामनिरवसितानाम् ।। <2-4-10> ।।

<K.2.253>

निरवसानम् = बहिष्करणम्। कुतो बहिष्करणम् ? पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः, न निरवसिताः अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद्भवति। तक्षायस्कारम्। रजकतन्तुवायम्। अनिरवसितानामिति किम्? चण्डालमृतपाः।।

</2-4-10>

गवाश्वप्रभृतीनि च ।। <2-4-11> ।।

गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति। गवाश्वम्, गवाविकम्,गवैडकम्, अजाविकम्,
अजैडकम्। कुब्जवामनम्, कुब्जकैरातकम्, पुत्रपौत्रम्, श्वचण्डालम्। स्त्रीकुमारम्, दासीमाणवकम्। शाटीपिच्छकम्। उष्ट्रखरम्, उष्ट्रशशम्। मूत्रशकृत्, <K.2.254> मूत्रपुरीषम्, यकृन्मेदः, मांसशोणितम्। दर्भशरम्, दर्भपूतीकम्, अर्जुनशिरीषम्, तृणोलपम्। दासीदासम्, कुटीकुटम्, भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चरितं द्वन्द्ववृत्तम्। रूपान्तरे तु नायं विधिर्भवति - गोऽश्वम्, गोऽश्वौ। पशुद्वन्द्वविभाषैव भवति।।

</2-4-11>

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।। <2-4-12>।।

<K.2.255>

वृक्ष, मृग, तृण, धान्य, व्यञ्जन, पशु, शकुनि, अश्ववडव, पूर्वापर, अधरोत्तर - इत्येतेषां द्वन्द्वो विभाषैकवद्भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। <K.2.257> * बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यकतृणानाम् *। एषां बहुप्रकृतिरेव द्वन्द्व एकवद्भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। रुरुपृषतौ। हंसचक्रवाकौ। यूकालिक्षे। व्रीहियवौ। कुशकाशौ।।

</2-4-12>

विप्रतिषिध्दं चानधिकरणवाचि ।। <2-4-13> ।।

परस्परविरुध्दम् = ?Bविप्रतिषिध्दम्। विप्रतिषिध्दार्थानां <K.2.258> शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्व एकवद्भवति। विभाषानुकर्षणार्थश्चकारः। शीतोष्णम्, शीतोष्णे। सुखदुःखम्, सुखदुःखे। जीवितमरणम्, जीवितमरणे। विप्रतिषिद्धमिति किम् ? कामक्रोधौ। अनधिकरणवाचीति किम् ? शीतोष्णे उदके।।

</2-4-13>

न दधिपयआदीनि ।। <2-4-14> ।।

यथायथमेकवद्भावे प्राप्ते प्रतिषेध आरभ्यते। दधिपयआदीनि शब्दरूपाणि नैकवद्भवन्ति। दधिपयसी। सर्पिर्मधुनी। मधुसर्पिषी। <K.2.259> ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। परिव्राट्कौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णौ। इध्माबर्हिषी। निपातनाद्दीर्घः। दीक्षातपसी। श्रध्दातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यवसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे।।

</2-4-14>

अधिकरणैतावत्त्वे च ।। <2-4-15> ।।

`न इति वर्त्तते। अधिकरणं वर्त्तिपदार्थः, स हि समासस्यार्थस्याधारः, तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद्भवति। यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते। दश दन्तोष्ठाः। दश मार्दङ्गिकपाणविकाः।।
</2-4-15>
<K.2.260>
विभाषा समीपे ।। <2-4-16> ।।
अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्व एकवद्भवति। उपदशं दन्तोष्ठम्, उपदशाः दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्, उपदशाः मार्दङ्गिकपाणविकाः। <K.2.261> अव्ययस्य सङ्ख्ययाऽव्ययीभावोऽपि विहितः, बहुव्रीहिरपि। तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः।।
</2-4-16>
स नपुंसकम् ।। <2-4-17> ।।
<K.2.262>
यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च। पञ्चगवम्। दशगवम्। द्वन्द्वः खल्वपि -- पाणिपादम्। शिरोग्रीवम्। परलिङ्गतापवादो योगः। * अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते*।
पञ्चपूली। दशरथी। * वाऽऽबन्तः स्त्रियामिष्टः *। पञ्चखट्वम्, पञ्चखट्वी। * अनो नलोपश्च वा च द्विगुः स्त्रियाम् *। पञ्चतक्षम्, पञ्चतक्षी। <K.2.263> * पात्रादिभ्यः प्रतिषेधो वक्तव्यः *। पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्।।
</2-4-17>
अव्ययीभावश्च ।। <2-4-18> ।।
अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति। अधिस्त्रि। उपकुमारि। उन्मत्तगङ्गम्। लोहितगङ्गम्। पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ता, अन्यपदार्थप्रधानस्याभिधेयलिङ्गता,अत इदमुच्यते। अनुक्तसमुच्चयार्थश्चकारः। * पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते *। पुण्याहम्। सुदिनाहम्। * पथः संख्याव्ययादेः क्लीबतेष्यते *। त्रिपथम्। चतुष्पथम्। विपथम्। सुपथम्। <K.2.264> क्रियाविशेषणानां च क्लीबतेष्यते *। मृदु पचति। शोभनं पचति।।
</2-4-18>
तत्पुरुषोऽनञ्कर्मधारयः ।। <2-4-19> ।।
अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते। नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवतीत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र। वक्ष्यति - विभाषा सेनासुरा इति। ब्राह्मणसेनम्। ब्राह्मणसेना। तत्पुरुष इति किम् ? दृढसेनः राजा। अनञिति किम्? असेना। अकर्मधारय इति किम्? परमसेना।।
</2-4-19>
<K.2.265>
संज्ञायां कन्थोशीनरेषु ।। <2-4-20> ।।
संज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु भवति। सौशमिकन्थम्। आह्वरकन्थम्।। संज्ञायामिति किम् ? वीरणकन्था। उशीनरेष्विति किम् ? दाक्षिकन्था। परवल्लिङ्गतापवाद इदं प्रकरणम्।।
</2-4-20>
उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।। <2-4-21> ।।
उपज्ञायते इत्युपज्ञा, उपक्रम्यते इत्युपक्रमः। उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम्। तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायाम् = तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम्। <K.2.266> आख्यातुमिच्छा = आचिख्यासा, यद्युपज्ञेयस्योपक्रम्यस्य चार्थस्यादिराख्यातुमिष्यते तत एतद्भवति। पाणिन्युपज्ञम् अकालकं व्याकरणम्। पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम्। व्याड्युपज्ञं दशहुष्करणम्। आद्योपक्रमं प्रासादः। नन्दोपक्रमाणि मानानि। दर्शनीयोपक्रमं सुकुमारम्। उपज्ञोपक्रममिति किम् ? वाल्मीकिश्लोकाः। तदाद्याचिख्यासायामिति किम् ? देवदत्तोपज्ञः रथः। यज्ञदत्तोपक्रमः रथः।।
</2-4-21>
छाया बाहुल्ये ।। <2-4-22> ।।
<K.2.267>
विभषा सेनासुराच्छाया इति विभाषां वक्ष्यति, नित्यार्थमिदं वचनम्। छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मः = बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्। बाहुल्य इति किम् ? कुड्यच्छाया।।
</2-4-22>
सभा राजाऽमनुष्यपूर्वा ।। <2-4-23> ।।
सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति सा चेत्सभा?राजपूर्वा, अमनुष्यपूर्वा च भवति। इनसभम्। ईश्वरसभम्। इह कस्मान्न भवति -- राजसभा ? पर्यायवचनस्यैवेष्येते। तदुक्तम् -- `जितपर्यायस्यैव राजाद्यर्थम्
इति। अमनुष्यपूर्वा -- रक्षःसभम्। पिशाचसभम्। <K.2.268> इह कस्मान्न भवति -- काष्ठसभा ? अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्त्तते। राजाऽमनुष्यपूर्वेति किम् ? देवदत्तसभा।।

</2-4-23>
अशाला च ।। <2-4-24> ।।
</2-4-24>

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति। सङ्घातवचनोऽत्र सभाशब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसङ्घात इत्यर्थः। <K.2.269> अशालेति किम्? अनाथसभा। अनाथकुटीत्यर्थः।। <विभाषा सेनासुराच्छायाशालानिशानाम् ।। <2-4-25> ।।

सेना, सुरा, छाया, शाला, निशा - इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। श्वनिशम्, श्वनिशा।।
</2-4-25>
परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।। <2-4-26> ।।

समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् इतरेतरयोगद्वन्द्वस्येदं ग्रहणम्। परस्य यल्लिङ्गं तद्भवति द्वन्द्वस्य तत्पुरुषस्य च । <K.2.271> उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते। कुक्कुटमयूर्यौ इमे, मयूरीकुक्कुटौ इमौ। तत्पुरुषस्य - अर्धं पिप्पल्याः अर्धपिप्पली। अर्धकोशातकी। अर्धनखरञ्जनी। <K.2.272> * द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः *। द्विगुः - पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नो जीविकाम् आपन्नजीविकः। अलं जीविकायै अलञ्जीविकः। गतिसमासः - निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः।।
</2-4-26>
<K.2.273>
पूर्ववदश्ववडवौ ।। <2-4-27> ।।

अश्ववडवयोर्विभाषैकवद्भाव उक्तः, तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायामिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा च अश्ववडवौ। अर्थातिदेशश्चायम्, न निपातनम्। तत्र द्विवचनमतन्त्रम्। वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति - अश्ववडवान्, अश्ववडवैः इति।।
</2-4-27>
हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।। <2-4-28> ।।
</2-4-28>

`पूर्ववत् इति वर्तते। हेमन्तशिशिरौ, अहोरात्रे-इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि(तै.सं.<1-6-2>.3)। अहोरात्रे इदं ब्रूमः(अ.वे.116.5)। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायं न निपातनम्, तेन द्विवचनमतन्त्रम्। वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः(तै.ब्रा.<3-11-4>.1)। छन्दसीति किम् ? दुःखे हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तः, तस्यैवायं प्रपञ्चः।।
</1-6-2>
रात्राह्नाहाः पुंसि ।। <2-4-29> ।।
</2-4-29>

कृतसमासान्तानां निर्देशः। रात्र, अह्न, अह -- इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। <K.2.275> द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः। * अनुवाकादयः पुंसीति वक्तव्यम् *। अनुवाकः। शंयुवाकः । सूक्तवाकः।।
</2-4-29>
अपथं नपुंसकम् ।। <2-4-30> ।।
अपथशब्दो नपुंसकलिङ्गो भवति। अपथम् इदम्। अपथानि गाहते मूढः। <K.2.276> इह कस्मान्न भवति -- अपथः देशः, अपथा नगरी ? तत्पुरुष इति वर्तते।।
</2-4-30>
अर्धर्चाः पुंसि च ।। <2-4-31> ।।
</2-4-31>

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः, अर्धर्चम्। गोमयः, गोमयम्। शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते, यथा - पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ, जलजे उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम्। सैन्धवशब्दो लवणे उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम्। सारशब्द <K.2.277> उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते नपुंसकम् - नैतत्सारमिति। धर्म इत्यपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम् - `तानि धर्माणि प्रथमान्यासन्। अर्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। चक्र। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूष। अन्धकार। दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बाण। प्रोथ। कपित्थ। शुष्क। शील। शुल्ब। सीधु। कवच। रेणु। कपट। सीकर। मुसल। सुवर्ण। यूप। चमस। वर्ण। क्षीर। कर्ष। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जृम्भ। वृत्त। पुस्त। क्ष्वेडित। शृङ्ग। शृङ्खल। मधु। मूल। मूलक। शराव। शाल। वप्र। विमान। <K.2.278> मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट। मस्तक। वलय। कुसुम। तृण। पङ्क। कुण्डल। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम। भूषण। इल्कस। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश।

फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्त्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुष्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्न। नीड। शकल। इति अर्धर्चादिः।।

</2-4-31>

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।। <2-4-32> ।।

आदेशः = कथनम्, अन्वादेशः = अनुकथनम्। इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथो अस्मै शाटकमपि देहि। अस्य छात्रस्य शोभनं शीलम्, अथो अस्य प्रभूतं स्वम्। अशादेशवचनं साकच्कार्थम्। इमकाभ्यां छात्त्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। नेह पश्चादुच्चारणमात्रमन्वादेशः, किं तर्हि ? एकस्यैवाभिधेयस्य पूर्वशब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः। तेनेह न भवति- देवदत्तं भोजय, इमं च यज्ञदत्तमिति।।

</2-4-32>

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ।। <2-4-33> ।।

`अन्वदेशे`अनुदात्तः इति वर्तते। एतदोऽन्वादेशविषयस्य अशादेशो भवति अनुदात्तस्त्रतसोः परतः। तौ चापि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे। एतस्माच्छात्राच्छन्दोऽधीष्व, अथो अतो व्याकरणमप्यधीष्व। सर्वानुदात्तं पदं भवति। `एतदोऽश् इत्यशादेशे लब्धे पुनर्वचनमनुदात्तार्थम्।

</2-4-33>

द्वितीयाटौस्स्वेनः ।। <2-4-34> ।।

`अन्वादेशे, `अनुदात्तः इति वर्तते। द्वितीया, टा, ओस् इत्येतेषु परत इदमेतदोरन्वादेशविषययोरेनशब्द आदेशो भवति अनुदात्तः। इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः। इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय। अनेन छात्रेण रात्रिरधीता, अथो अनेनाहरप्यधीतम्। अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्। एतदः खल्वपि-एतं-छात्रं छन्दो।?ध्यापय, अथो एनं व्याकरणमप्यध्यापय। एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। एतयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्।* एनदिति नपुंसकैकवचने वक्तव्यम् * (म.भा.1.482)। प्रक्षालयैनत्। परिवर्तयैनत्। इह कस्मान्न भवति--अयं दण्डो हरानेन, एतमातं ङितं विद्यादिति ? यत्र किञ्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः। इह तु वस्तुनिर्देशमात्रं कृत्वा एकमेव विधानम्।।

</2-4-34>

आर्धधातुके ।। <2-4-35> ।।

आर्धधातुके इत्यधिकारोऽयम्, ण्यक्षत्त्रियार्षञितः(2-4-58/1276) इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुके वेदितव्यम्। वक्ष्यति हनो वध लिङि(2-4-42/2433), वध्यात्। आर्धधातुक इति किम् ? हन्यात्। विषयसप्तमी चेयं न परसप्तमी। तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद्यथाप्राप्तं प्रत्यया भवन्ति--भव्यम्, प्रवेयम्, आख्येयम्।।

</2-4-35>

अदो जग्धिर्ल्यप्ति किति ।। <2-4-36> ।।

अदो जग्धिरादेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये। प्रजग्ध्य। विजग्ध्य। जग्धः। जग्धवान्। इकार उच्चारणार्थः, नानुबन्धः, तेन नुम्न भवति। एवं वच्यादीनामपि। इह कस्मान्न भवति-अन्नम् ? अन्नाण्णः(4-4-85/1637) इति निपातनात्।

`जग्धौ सिद्धेऽन्तरङ्गत्वागत्ति कितीति ल्यबुच्यते।

ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्।।(म.भा.1.484)

तीति किम् ? अद्यते। कितीति किम् ? अत्तव्यम्।।

</2-4-36>

लुङ्सनोर्घस्लृ।। <2-4-37> ।।

लुङि सनि च परतोऽदो घस्लृ आदेशो भवति। लृदित्करणमङर्थम्। लुङि-अघसत्। अघसताम्। अघसन्। सनि-जिघत्सति। जिघत्सतः। जिघत्सन्ति। * घस्लृभावेऽच्युपसंख्यानम् *(म.भा.1.484) प्रात्तीति प्रघसः।।

</2-4-37>

घञपोश्च ।। <2-4-38> ।।

घञि अपि च परतोऽदो घस्लृ आदेशो भवति। घासः। प्रघसः। उपसर्गेऽदः(3-3-59/3235) इत्यप्।।

</2-4-38>

बहुलं छन्दसि ।। <2-4-39> ।।

छन्दसि विषये बहुलमदो घस्लृ आदेशो भवति। घस्तां नूनम्(वा.सं.21.43)। सग्धिश्च मे(वा.सं.18.9)। न च भवति-- आत्तामद्य मध्यतो मेद उद्भृतम्(वा.सं.21.43)। अन्यतरस्याङ्ग्रहणमेव कस्मान्न क्रियते, तदेवोत्तरार्थमपि भविष्यति ? कार्यान्तरार्थं बहुलग्रहणम्। घस्तामित्यत्रोपधालोपो न भवति।।

</2-4-39>

लिट्यन्यतरस्याम् ।। <2-4-40> ।।

लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति। जघास, जक्षतुः,जक्षुः। आद, आदतु, आदुः।।

</2-4-40>

वेञो वयिः ।। <2-4-41> ।।

`लिट्यन्यतरस्याम् इति वर्त्तते। वेञो वयिरादेशो भवति अन्यतरस्यां लिटि परतः। इकार उञ्चारणार्थः। उवाय, ऊयतु। ऊयुः। पक्षे-ऊवतुः, ऊवुः। लिटि वयो यः(6-1-38/2413) इति यकारस्य सम्प्रसारणं प्रतिषिध्यते। वश्चास्यान्यतरस्यां किति(6-1-39/2414) इति वकारो विधीयते। ववौ, ववतुः, ववुः। वेञः(6-1-40/2415) इति सम्प्रसारणं न भवति।।

</2-4-41>

हनो वध लिङि ।। <2-4-42> ।।

हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङि परत आर्धधातुके। वध्यात्, वध्यास्ताम्, वध्यासुः। अकारान्तश्चायमादेशः, तत्राकारस्य लोपो भवति। तस्य स्थानिवद्भावात् अवधीदिति हलन्तलक्षणा वृद्धिर्न भवति।।

</2-4-42>

लुङि च ।। <2-4-43> ।।

लुङि च परतः हनो वध इत्ययमादेशो भवति। अवधीत्, अवधिष्टाम्, अवधिषुः। योगविभाग उत्तरार्थः। आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत्।।

</2-4-43>

आत्मनेपदेष्वन्यतरस्याम् ।। <2-4-44> ।।

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट। आवधिषाताम्। आवधिषत। न च भवति-- आहत। आहसाताम्। आहसत।।

</2-4-44>

इणो गा लुङि ।। <2-4-45> ।।

इणः `गा इत्ययमादेशो भवति लुङि परतः। अगात्, अगाताम्, अगु। `लुङि इति वर्त्तमाने पुनर्लुङ्ग्रहणम् आत्मनेपदेष्वन्यतरस्याम्(2-4-44/2696) इत्येतन्मा भूत्। इह त्वविशेषेण नित्यं च भवति। अगात्। अगायि भवता। * इण्वदिक इति वक्तव्तम् *(म.भा.1.485)। अध्यगात्। अध्यगाताम्। अध्यगुः।।

</2-4-45>

णौ गमिरबोधने ।। <2-4-46> ।।

णौ परत इणोऽबोधनार्थस्य गमिरादेशो भवति। इकार उच्चारणार्थः। गमयति, गमयतः, गमयन्ति। अबोधने इति किम् ? प्रत्याययति। इण्वदिक इत्येव-- अधिगमयति।।

</2-4-46>

सनि च ।। <2-4-47>।।

सनि परत इणोऽबोधनार्थस्य गमिरादेशो भवति। जिगमिषति, जिगमिषतः, जिगमिषन्ति। अबोधन इत्येव- अर्थान्प्रतीषिषति। इण्वदिक इत्येव- अधिजिगमिषति। योगविभाग उत्तरार्थः- इङश्च(2-4-48/2616) इति सन्येव यथा स्यात्।।

</2-4-47>

इङश्च ।। <2-4-48> ।।

इङश्च सनि परतो गमिरादेशो भवति। अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते।।

</2-4-48>

गाङ् लिटि ।। <2-4-49> ।।

गाङादेशो भवतीङो लिटि परतः। अधिजगे, अधिजगाते, अधिजगिरे। गाङोऽनुबन्धकरणं विशेषणार्थम्, गाङ्कुटादिभ्यः(1-2-1/2461) इत्यत्रास्य ग्रहणं यथा स्यात्। न हि स्थानिवद्भावेन `गाङ् इति रूपं लभ्यते।।

</2-4-49>

विभाषा लुङ्लृङोः ।। <2-4-50> ।।

लुङि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे गाङ्कुटादिभ्यः(1-2-1/2461) इति ङित्वम्, घुमास्थागापाजहातिसां हलि(6-4-66/2462) इतीत्वम्। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। न च भवति अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि खल्वपि--अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। न च भवति-अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त।।

</2-4-50>

णौ च संश्चङोः ।। <2-4-51> ।।

`इङो गाङ् विभाषा इति वर्त्तते। `णौ इतीङपेक्षया परसप्तमी, `संश्चङोः इति च ण्यपेक्षया। णौ सन्परे चङ्परे च परत इङो विभाषा गाङादेशो भवति। अधिजिगापयिषति। न च भवति- अध्यापिपयिषति। चङि खल्वपि-- अध्यजीगपत्, अध्यापिपत्।।

</2-4-51>

अस्तेर्भूः ।। <2-4-52> ।।

अस्तेर्धातोर्भू इत्ययमादेशो भवति आर्धधातुके। भविता। भवितम्। भवितव्यम्। इह कस्मान्न भवति-ईहामास, ईहामासतुः, ईहामासुः ? कृञ्चानुप्रयुज्यते लिटि(3-1-40/2239) इति प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यत्। तथा चोच्यते- `अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः।। इति।

</2-4-52>

ब्रुवो वचिः ।। <2-4-53> ।।

ब्रुवो वचिरादेशो भवति आर्धधातुकविषये। इकार उच्चारणार्थः। वक्ता। वक्तुम्। वक्तव्यम्। स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदं भवति। ऊचे। वक्ष्यति।।

</2-4-53>

चक्षिङः ख्याञ् ।। <2-4-54> ।।

चक्षिङः ख्याञादेशो भवत्यार्धधातुके। आख्याता। आख्यातुम्। आख्यातव्तम्। स्थानिवद्भावेन नित्यमात्मनेपदं न भवति; ञकारानुबन्धकरणसामर्थ्यात्। आख्यास्यति। आख्यास्यते। * क्शादिरप्ययमादेश इष्यते *। आक्शाता। आक्शातुम्। आक्शातव्यम्। * वर्जने प्रतिषेधो वक्तव्याः *(म.भा.1.487)। दुर्जनाः संचक्ष्याः। वर्जनीया इत्यर्थः। * असनयोश्च प्रतिषेधो वक्तव्यः *(म.भा.1.487) नृचक्षा राक्षसाः। हिंसार्थोऽत्र धातुः। अने खल्वपि-विचक्षणः पण्डितः। * बहुलं सञ्ज्ञाछन्दसोरिति वक्तव्यम् *(म.भा.1.488)।* अन्नवधकगात्रविचक्षणाजिराद्यर्थम्*(म.भा.1.488)।।

</2-4-54>

वा लिटि ।। <2-4-55> ।।

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। लिटि परतश्चक्षिङः ख्याञादेशो वा भवति। आचख्यौ, आचख्यतुः, आचख्युः। न च भवति-आचचक्षे, आचचक्षाते, आचचक्षिरे।

</2-4-55>

अजेर्व्यघञपोः ।। <2-4-56> ।।

अजेर्धातेः `वी इत्ययमादेशो भवत्यार्धधात्के परतो घञपौ वर्जयित्वा। प्रवयणीयः। प्रवायकः। अघञपोरिति किम् ? समाजः। उदाजः। अपि तु-समजः। उदजः। समुदोरजःपशुषु(3-3-69/3246) इत्यप्। दीर्घोच्चारणं किम् ? प्रवीताः।। * घञपोः प्रतिषेधे क्यप उपसङ्ख्यानं कर्तव्यम् *(म.भा.1.488)। समज्या।। * वलादावार्धधातुके विकल्प इष्यते *(म.भा.1.488)। प्रवेता, प्राजिता। प्रवेतुम्, प्राजितुम्।।

</2-4-56>

वायौ ।। <2-4-57> ।।

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। `यु इति ल्युटो ग्रहणम्। यौ परभूते अजेर्वा `वी इत्ययमादेशो भवति। प्रवयणो दण्डः, प्राजनो दण्डः। प्रवयणमानय, प्राजनमानय।।

</2-4-57>

ण्यक्षित्त्रियार्षञितो यूनि लुगणिञोः ।। <2-4-58> ।।

ण्यादयो गोत्रप्रत्ययाः। ण्यन्तात् क्षत्त्रियगोत्राद् आर्षाद् ञितश्च परयोरणिञोर्यूनि लुग्भवति। ण्यन्तात्तावत्--कुर्वादिभ्यो ण्यः(4-1-151/1175), तस्माद्यूनि इञ्, तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः। ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यम्-कौरव्यायणिरिति ? क्षत्त्रियगोत्रस्य तत्र ग्रहणम्, कुरुनादिभ्यो ण्यः(4-1-1172/1190) इत्यनेन विहितस्य; इदं तु ब्राह्मणगोत्रम्, कुर्वादिदभ्यो ण्यः(4-1-151/1175) इति ण्यः। क्षत्त्रिय-ऋष्यन्धकवृष्णिकुरुभ्यश्च(4-1-114/1117) इत्यण्, तस्माद्यूनि इञ्, तस्य लुक्। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। आर्ष-ऋष्यम्, तस्माद्यूनि इञ्, तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः। ञित्--अनृष्यानन्तर्ये बिदादिभ्योऽञ्(4-1-104/1190), तस्माद्यूनि इञ्, तस्य लुक्। बैदः पिता। बैदः पुत्रः। अणः खल्वपि--तिकादिभ्यः फिञ्(4-1-154/1178), तस्माद्यूनि प्राग्दीव्यतोऽण्(4-1-83/1073) तस्य लुक्। तैकायनिः पिता। तैकायनिः पुत्रः। एतेभ्यः पुत्रः। एतेभ्य इति किम् ? शिवादिभ्योऽण्(4-1-112/1115) तस्माद् यूनि अत इञ्(4-1-95/1095), तस्य न लुग्भवति। कौह॰ः पिता। कौहडिः पुत्रः। यूनीति किम् ? वामरथ्यस्य छात्राः वामरथाः। कुर्वादिभ्यो ण्यः(4-1-151/1175) इति ण्यः, तस्मात् कण्वादिभ्यो गोत्रे(4-2-111/1332) इति शैषिकोऽण्, तस्य लुग्न भवति। अणिञोरिति किम् ? दाक्षेरपत्यं युवा दाक्षायणः। * अब्राह्मणगोत्राद्युवप्रत्ययस्योपसंख्यानम् *(म.भा.1.489)। बौधिः पिता। बौधिः पुत्रः। जाबालिः पिता। जाबालिः पुत्रः। औदुम्बरिः पिता। औदुम्बरिः पुत्रः। भाण्डीजङ्घिः पिता। भाण्डीजङ्घिः पुत्रः। साल्वावयवलक्षण इञ्, तस्मात्फक्, तस्य लुक्। पैलादिदर्शनात् सिद्धम्।।

</2-4-58>

पैलादिभ्यश्च ।। <2-4-59> ।।

`फैल इत्येवमादिभ्यश्च युवप्रत्ययस्य लुग्भवति। पीलाया वा(4-1-118/1121) इत्यण्। तस्माद् अणो द्व्यचः(4-1-156/1180) इति फिञ्, तस्य लुक्। पैलः पिता। पैलः पुत्रः। अन्ये पैलादय इञन्ताः, तेभ्यः इञः प्रचाम् इति लुकि सिध्देऽप्रागर्थः पाठः। पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षति। भौलिङ्गि। औद्राहमानि। औज्जिहानि।। तद्राजाच्चाणः(ग.सू.21)। आकृतिगणोऽयम्।।

</2-4-59>

इञः प्राचाम् ।। <2-4-60> ।।

गोत्रे य इञ् तदन्तायुवप्रत्ययस्य लुग्भवति। गोत्रविशेषणं प्राग्ग्रहणम्, न विकल्पार्थम्। पान्नागारेरपत्यं युवा। यञिञोश्च(4-1-101/1103) इति फक्, तस्य लुक्। पान्नागारिः पिता। पान्नागारिः पुत्रः। मान्थरैषणिः पिता। मान्थरैषणिः पुत्रः। प्राचामिति किम् ? दाक्षिः पिता। दाक्षायणः पुत्रः।।
</2-4-60>
न तौल्वलिभ्यः ।। <2-4-61> ।।

अनन्तरेण प्राप्तौ लुक् प्रतिषिध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग्भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः। तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवमति। दैवयज्ञि। प्रावाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। बैकि। आन्तरहाति। पौष्करसादि। वैरकि। वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामालि।।
</2-4-61>
तद्राजस्य बहुषु तेनैवास्त्रियाम् ।। <2-4-62> ।।
ते तद्राजाः(4-1-172/1192) ञ्यादयस्तद्राजाः(5-3-119/2072) इति वक्ष्यति, तस्य तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेत्तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। पुण्डाः। सुह्माः। मगधाः। लोहध्वजाः। व्रीहिमन्तः। तद्राजस्येति किम् ? औपगवाः। बहुष्विति किम् ? आङ्गः। `तेनैव ग्रहणं किम् ? प्रियो वाङ्गो येषां त इमे प्रियवाङ्गाः। अस्त्रियामिति किम् ? आङ्ग्यः स्त्रियः।।
</2-4-62>
यस्कादिभ्यो गोत्रे ।। <2-4-63> ।।

`बहुषु तेनैवास्त्रियाम् इति सर्वमनुवर्तते। `यस्क इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति। प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमित्यनन्तरापत्येऽपि लुग्भवत्येव-यस्काः। लभ्याः। बहुष्वित्येव-यास्कः। तेनैवेत्येव--प्रिययास्काः। अस्त्रियामित्येव-यास्क्यः स्त्रियः। गोत्रे इति किम् ? यास्काश्छात्राः। यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। एते पञ्च शिवादिषु पठ्यन्ते। ततः परेभ्यः षड्भ्य इञ्। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यः गृष्ट्यादिभ्यश्च(4-1-136/1143) इति ढञ्। बस्ति। कुद्रि। अजबस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। रक्षोमुख। जङ्घारथ। उत्कास। कटुकमन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान। क्रोष्टुपाद। क्रोष्टुमाय। शीर्षमाय। पुष्करसच्छब्दाद् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पठ्यते, ततः फक्। पदक, वर्मक-एताभ्याम् अत इञ्(4-1-95/1095)। भलन्दनशब्दात् शिवादिभ्योऽण्(4-1-112/1115) भडिल। भडित। भण्डित-एतेभ्यश्चतुर्भ्यः अश्वादिभ्यः फञ्(4-1-110/1113)।।
</2-4-63>
यञञोश्च ।। <2-4-64> ।।

बहुषु तेनैवास्त्रियाम्(2-4-63/1193) `गोत्रे इति चानुवर्तते। यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग्भवति। गर्गादिभ्यो यञ्(4-1-105/1107), गर्गाः। वत्साः। अञः खल्वपि-अनृष्यानन्तर्ये बिदादिभ्योऽञ्(4-1-104/1106)। बिदाः, उर्वाः। बहुष्वित्येव-गार्ग्यः। बैदः। तेनैवेत्येव-प्रियगार्ग्याः। प्रियबैदाः। अस्त्रियामित्येव-गार्ग्यः स्त्रियः। बैद्यः स्त्रियः। गोत्र इत्येव-द्वीपादनुसमुद्रं यञ्(4-3-10/1380), द्वैप्याः। उत्सादिभ्योऽञ्(4-1-86/1078) औत्साश्छात्राः। * यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम् *। गार्ग्यस्यकुलं गार्ग्यकुलम्, गर्गकुलं वा। गार्ग्ययोः कुलं गार्ग्यकुलम्, गर्गकुलं वा। एवं बैदस्य कुलं बैदकुलम्, बिदकुलं वा। बैदयोः कुलं बैदकुलं बिदकुलं वा। यञादीनामिति किम् ? आङ्गकुलम्। एकद्वयोरिति किम् ? गर्गाणां कुलं गर्गकुलम्। तत्पुरुष इति किम् ? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्या इति किम् ? परमगार्ग्यः।।
</2-4-64>
अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।। <2-4-65> ।।

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति। अत्रिशब्दात् इतश्चानिञः(4-1-122/1125) इति ढक्। इतरेभ्य ऋष्यण्। अत्रयः। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। बहुष्वित्येव--आत्रेयः, भार्गवः। तेनैवेत्येव--प्रियात्त्रेयाः। प्रियभार्गवाः। अस्त्रियामिति किम् ? आत्त्रेय्यः स्त्रियः।।
</2-4-65>
बह्वच इञः प्राच्यभरतेषु ।। <2-4-66> ।।

बह्वचः प्रातिपदिकात् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते, तस्य बहुषु लुग्भवति। पन्नागाराः। मन्थरैषणाः। भरतेषु खल्वपि-युधिष्ठिराः। अर्जुनाः। बह्वच इति किम् ? बैकयः। पौष्पयः। प्राच्यभरतेष्विति किम् ? बालाकयः। हास्तिदासयः। भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापनार्थम्-अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति, तेनइञः प्राचाम्(2-4-60/1085) इति भरतानां युवप्रत्ययस्य लुग्न भवति। आर्जुनिः पिता। आर्जुनायनः पुत्रः।।
</2-4-66>
न गोपवनादिभ्यः ।। <2-4-67> ।।
गोपवनादिभ्यः परस्य लुग्न भवति। बिदाद्यन्तर्गणोऽयम्। ततोऽञो गोत्रप्रत्ययस्य यञञोश्च(2-4-64/1108) इति लुक् प्राप्तः प्रतिषिध्यते। गौपवनाः। शैग्रवाः। गौपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। एतावन्त एवाष्टौ गोपवनादयः। परिशिष्टानां हरितादीनां प्रमादपाठः। ते हि चतुर्थे बिदादिषु पठ्यन्ते। तेभ्यश्च बहुषु लुग्भवत्येव-हरिताः, किंदासा इति।।
</2-4-67>

तिककितवादिभ्यो द्वन्द्वे ।। <2-4-68> ।।

तिकादिभ्यः कितावादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग्भवति। तैकायनयश्च कैतवायनयश्च - तिकादिभ्यः फिञ्(4-1-154/1178), तस्य लुक्, तिककितवाः। वाङ्खरयश्च भाण्डीरथयश्च--अत इञ्(4-1-95/1095), तस्य लुक्, वङ्खरभण्डीरथाः। औपकायनाश्च लामकायनाश्च-नडादिभ्यः फक्(4-1-99/1101), तस्य लुक्, उपकलमकाः। पाफकयश्च नारकयश्च--अत इञ्(4-1-95/1095), तस्य लुक्, पफकनरकाः। बाकनखयश्च श्वागुदपरिणद्धयश्च अत इञ्(4-1-95/1095), तस्य लुक्, बकनखश्वगुदपरिणद्धाः। उब्जशब्दादत इञ्, ककुभशब्दात्शिवाद्यण्(4-1-112/1115), तयोर्लुक्, औब्जयश्च काकुभाश्च उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च-अत इञ्(4-1-95/1095), तस्य लुक्, लङ्कशान्तमुखाः। उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्,लङ्टशब्दादिञ्, तयोर्लुक्, औरसायनश्च लाङ्कटयश्च उरसलङ्कटाः। भ्राष्टकयश्च कापिष्ठलयश्च--अत इञ्(4-1-95/1095), तस्य लुक्, भ्रष्टककपिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च--अत इञ्(4-1-95/1095) तस्य लुक्, कृष्णाजिनकृष्णसुन्दराः। आग्निवेश्यश्च दासेरकयश्च--अग्निवेशशब्दाद् गर्गादिभ्यो यञ्(4-1-105/1107),दासेरकशब्दादत इञ्(4-1-95/1095), तयोर्लुक्, अग्निवेशदासेरकाः।।

</2-4-68>

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।। <2-4-69> ।।

`उपक इत्यैवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति, अन्यतरस्यां द्वन्द्वेचाद्वन्द्वे च । अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते--उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दरा इति। तेषां पूर्वेणैव नित्यमेव लुग्भवति। अद्वन्द्वेत्वनेन विकल्पः--उपकाः, औपकायनाः। लमकाः, लामकायनाः। कृष्णसुन्दराः, कार्ष्णसुन्दरय इति। परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्प इति। पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। कठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। वधिरक। जन्तुक। अनुलोम। अर्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित।।

</2-4-69>

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।। <2-4-70> ।।

आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोरणो यञश्च बहुषु लुग्भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासङ्ख्यमगस्ति, कुण्डिनच्-इत्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनीशब्दस्तदादेशोऽपि तथा स्यात्। अगस्त्यशब्दादृष्यण्, कुण्डिनशब्दाद् गर्गादित्वाद्यञ्, तयोः गोत्रेऽलुगचि(4-1-89/1081)इति लुकि प्रतिषिद्धे आगस्तीयाश्छात्रा इति वृद्धलक्षणश्छो भवति। कौण्डिन्ये त्वणैव भवितव्यम्-कण्वादिभ्यो गोत्रे(4-2-111/1332) इति, तत्र विशेषो नास्ति--कौण्डिनाश्छात्राः।।

</2-4-70>

<K.2.316>

सुपो धातुप्रातिपदिकयोः ।। <2-4-71> ।।

सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग्भवति। तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते। धातोस्तावत् -- पुत्रीयति। घटीयति। प्रातिपदिकस्य - कष्टश्रितः। राजपुरुषः। धातुप्रातिपदिकयोरिति किम् ? वृक्षः। प्लक्षः।।

</2-4-71>

अदिप्रभृतिभ्यः शपः ।। <2-4-72> ।।

अदिप्रभृतिभ्य उत्तरस्य शपो लुग्भवति। अत्ति। हन्ति। द्वेष्टि।।

</2-4-72>

बहुलं छन्दसि ।। <2-4-73> ।।

</2-4-73>

छन्दसि विषये शपो बहुलं लुग्भवति। अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि-`वृत्रं हनति(ऋ.<8-89-3>), `अहिः शयसे(ऋ.<1-32-5>)। अन्येभ्यश्च भवति-`त्राध्वं नो देवाः(ऋ.<2-29-6>)।।

</8-89-3>

यङोऽचि च ।। <2-4-74> ।।

यङो लुग्भवति अचि प्रत्यये परतः। चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति, तेन छन्दसि भषायां च यङो लुग्भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वसः। बहुलग्रहणादनच्यपि भवति- शाकुनिको लालपीति। दुन्दुभिर्वावदीति।।

</2-4-74>

जुहोत्यादिभ्यः श्लुः ।। <2-4-75> ।।

शबनुवर्तते, न यङ्। जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति। लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम्। जुहोति। बिभर्ति। नेनेक्ति।।

</2-4-75>

बहुलं छन्दसि ।। <2-4-76> ।।

</2-4-76>

छन्दसि विषये बहुलं शपः श्लुर्भवति। यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति। जुहोत्यादिभ्यस्तावन्न भवति-`दाति प्रियाणि(ऋ.<4-8-3>), `धाति देवम्(ऋ.<7-90-3>)। अन्येभ्यश्च भवति-`पूर्णां विवष्टि(ऋ.<7-16-11>)। `जनिमा विवक्ति(ऋ.<9-97-7>)।।

</4-8-3>
गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।। <2-4-77> ।।

लुगनुवर्त्तते, न श्लुः। गाति, स्था, घु, पा, भू-इत्येतेभ्यः परस्य सिचो लुग्भवति परस्मैपदेषु परतः। अगात्। अस्थात्। घु-अदात्, अधात्, अपात्। अभूत्।। * गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् *(म.भा.1.495)। गायतेः पातेश्च न भवति अगासीन्नटः। अपासीन्नृपः। परस्मैपदेष्विति किम् ? अगासातां ग्रामौ देवकदत्तेन।।

</2-4-77>
विभाषा घ्राधेट्शाच्छासः ।। <2-4-78> ।।

घ्रा, धेट्, शा, छा, सा-इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग्भवति। धेटः पूर्वेण प्राप्ते विभाषार्थं वचनम्, परिशिष्टानामप्राप्ते। अघ्रात्, अघ्रासीत्। अधात्। अधासीत्। अशात्, अशासीत्। अच्छात्, अच्छासीत्। असात्। असासीत्। परस्मैपदेष्वित्येव-अघ्रासातां सुमनसौ देवदत्तेन।।

</2-4-78>
तनादिभ्यस्तथासोः ।। <2-4-79> ।।

तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग्भवति। अतत, अतथाः। अतनिष्ट, अतनिष्ठाः। असात, असाथाः। असनिष्ट, असनिष्ठाः। जनसनखनाम्(6-4-42/2504) इत्यात्वम्। थासा
साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्, परस्मैपदे न भवति-अतनिष्ट यूयम्।।
मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।।
</2-4-79>

मन्त्रविषये घस, ह्वर, णश, वृ, दह, आत्, वृच्, कृ, गमि, जनि-इत्येतेभ्य उत्तरस्य लेर्लुग्भवति। घस-`अक्षन्नमीमदन्त पितरः(तै.सं.<1-8-5>.3)। ह्वरेति `ह्वृकौटिल्ये(धा.पा.931)-`मा ह्वार्मित्रस्य त्वा(तै.सं.<1-1-4>.1)। णश-`धूर्तिः प्राणङ्मर्त्यस्य(ऋ.<1-18-3>)। `वृ इति वृङ्वृञोः(धा.पा.1510/1255) सामान्येन ग्रहणम्--`सुरुचो वेन आवः(वा.सं.13.3)। दह-`मान आधक्(ऋ.<6-61-14>)। आदिति आकारान्तग्रहणम्-`प्रा पूरणे(धा.पा.1061)। `आप्राद् द्यावापृथिवी अन्तरिक्षम्(ऋ.<1-115-1>)। वृच्-`मा नो अस्मिन्महाधने परावर्ग् भारभृद्यथा(ऋ.<8-75-12>)। कृ-`अक्रन् कर्म कर्मकृतः(तै.सं.<1-8-3>.3)। कमि-`अग्मन्(ऋ.<1-132-7>)। जनि-`अज्ञत वा अस्य दन्ताः(ऐ.ब्रा.<7-14-2>)। ब्राह्मणे प्रयोगोऽयम्। मन्त्रग्रहणं तु छन्दस उपलक्षणार्थम्।।

</1-8-5>
आमः ।। <2-4-81> ।।

आमः परस्य लेर्लुग् भवति। ईहाञ्चक्रे। ऊहाञ्चक्रे। ईक्षाञ्चक्रे।।

</2-4-81>
अव्ययादाप्सुपः ।। <2-4-82> ।।

अव्ययादुत्तरस्यापः सुपश्च लुग्भवति। तत्र शालायाम्। यत्र शालायाम्। सुपः खल्वपि-कृत्वा। हृत्वा।।

</2-4-82>
<K.2.325>
नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।। <2-4-83> ।।

पूर्वेण लुक् प्राप्तः प्रतिषिध्यते। अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग्भवति, अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः। <K.2.326> एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति। उपकुम्भं तिष्ठति। उपकुम्भं पश्य। उपमणिकं तिष्ठति। उपमणिकं पश्य। अत इति किम् ? अधिस्त्रि। अधिकुमारि। अपञ्चम्या इति किम् ? उपकुम्भाद् आनय।।

</2-4-83>
तृतीयासप्तम्योर्बहुलम् ।। <2-4-84> ।।

पूर्वेण नित्यमम्भावे प्राप्ते वचनमिदम्। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवति, अव्ययीभावे। उपकुम्भेन कृतम्, उपकुम्भं कृतम्। उपकुम्भे निधेहि, उपकुम्भं निधेहि। <K.2.327> * सप्तम्या ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्यमिति वक्तव्यम् *। सुमद्रम्। सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशतिभारद्वाजम्। बहुलवचनात्सिद्धम्।।

</2-4-84>
लुटः प्रथमस्य डारौरसः ।। <2-4-85> ।।
लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डा, रौ, रस्-इत्येते आदेशा भवन्ति। कर्त्ता। कर्त्तारौ। कर्त्तारः। आत्मनेपदस्य-अध्येता। अध्येतारौ। अध्येतारः। प्रथमस्येति किम् ? श्वः कर्त्तासि, श्वोऽध्येतासे।।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
द्वितीयाध्यायस्य चतुर्थः पादः।।

</2-4-85>

# काशिका/तृतीयोऽध्यायः /प्रथमः पादः

https://sa.wikisource.org/s/pbd

< काशिका | तृतीयोऽध्यायः

अथ तृतीयाध्याये प्रथमः पादः

प्रत्ययः ।। <3-1-1> ।।

अधिकारोऽयम्। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते। आ पञ्चमाध्यायपरिसमाप्तेर्यानितऊर्ध्वमनुक्रमिष्यामः प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकार

ागमान्वर्जयित्वा। वक्ष्यति-तव्यत्तव्यानीयरः(3-1-96/2834) कर्त्तव्यम्। करणीयम्। प्रत्ययप्रदेशाः-प्रत्यलोपे प्रत्ययलक्षणम्(1-1-62/262) इत्येवमादयः।।

</3-1-1>

परश्च ।। <3-1-2> ।।

अयमप्यधिकारो योगे योगे उपतिष्ठते, परिभाषा वा। परश्च स भवति धातोर्वा प्रातिपदिकाद्वा यः प्रत्ययसंज्ञः। कर्तव्यम्। तैत्तिरीयम्। चकारः पनरस्यैव समुच्चयार्थः, तेनोणादिषु परत्वं न विकल्प्यते।।

</3-1-2>

आद्युदात्तश्च ।। <3-1-3> ।।

अयमप्यधिकारः,परिभाषा वा। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः। अनियतस्वरप्रत्ययप्रसङ्गेऽनेकाक्षु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरुदात्तार्थम्। कर्तव्यम्। तैत्तिरीयम्।

</3-1-3>

अनुदात्तौ सुप्पितौ ।। <3-1-4> ।।

पूर्वस्यायमपवादः। सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति। दृषदौ, दृषदः। पितः खल्वपि-पचति, पठति।।

</3-1-4>

गुप्तिज्किद्भ्यः सन् ।। <3-1-5> ।।

`गुप गोपने(धा.पा.971), `तिज निशाने(धा.पा.972), `कित निवासे(धा.पा.994)-एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति। प्रत्ययसंज्ञा चाधिकृतैव। जुगुप्सते। तितिक्षते। चिकत्सति। * निन्दाक्षमाव्याधिप्रतीकारेषु सनिष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति *। गोपयति। तेजयति। सङ्केतयति। गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्।।(म.भा.2.10)

</3-1-5>

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।। <3-1-6> ।।

`मान पूजायाम्(धा.पा.973), `बध बन्धने(धा.पा.974), `दान अवखण्डने(धा.पा.995), `शान अवतेजने(धा.पा.996)-इत्येतेभ्यो धातुभ्यः सन्प्रत्यो भवति, अभ्यासस्य चेकारस्य दीर्घादेशो भवति। मीमांसते। बीभत्सते। दीदांसते। शीशांसते। उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न भवत्यपि। मानयति। बाधयति। दानयति। निशानयति। * अत्रापि सन्नर्थविशेष इष्यते *। मानेर्जिज्ञासायाम्, बधेर्वैरूप्ये, दानेरार्जवे, शानेर्निशाने।

</3-1-6>

धातोः कर्मणः समानकर्तृकादिच्छायां वा ।। <3-1-7> ।।

इषिकर्म यो धातुरिषिणैव समानकर्तृकः, तस्मादिच्छायामर्थे वा सन्प्रत्ययो भवति। कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम्। कर्तुमिच्छति चिकीर्षति। जिहीर्षति। धातुग्रहणं किम् ? सोपसर्गादुत्पत्तिर्मा भूत्- प्रकर्तुमैच्छत् प्राचिकीर्षत्। कर्मण इति किम्? करणान्मा भूत्-गमनेनेच्छति। समानकर्तृकादिति किम् ? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः। इच्छायामिति किम् ? कर्तुं जानाति। वावचनाद्वाक्यमपि भवति। `धातोः इति विधानादत्र सन आर्धधातुकसंज्ञा भवति, न पूर्वत्र। * आशङ्कायामुपसङ्ख्यानम् *(म.भा.2.14)। आशङ्के पतिष्यति कूलम्। पिपतिषति नदीकूलम्। श्वा मुमूर्षति। * इच्छासन्नन्तात्प्रतिषेधो वक्तव्यः *। चिकीर्षितुमिच्छति। विशेषणं किम् ? जुगुप्सिषते। मीमांसिषते।।

`शैषिकान्मतुबर्थोयाच्छैषिको मतुबर्थिकः।

सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते।।(म.भा.2.15)

</3-1-7>

सुप आत्मनः क्यच् ।। <3-1-8> ।।

`कर्मणः `इच्छायां वा इत्यनुवर्त्तते। इषिकर्मण एषितुरात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रीयति। सुब्ग्रहणं किम् ? वाक्यान्मा भूत्- महान्तं पुत्रमिच्छति। आत्मन इति किम् ? राज्ञः पुत्रमिच्छति। ककारः नः क्ये (1-4-15/2659) इति सामान्यग्रहणार्थः। चकारस्तदविघातार्थः। * क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः *(म.भा.2.19)। इदमिच्छति। उच्चैरिच्छति। नीचैरिच्छति। * छन्दसि परेच्छायामिति वक्तव्यम् *(म.भा.2.16)। `मा त्वा वृका अघायवो विदन्।(वा.स.4.34)।

</3-1-8>
काम्यच्च ।। <3-1-9> ।।

सुबन्तात्कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रकाम्यति। वस्त्रकाम्यति। योगविभाग उत्तरत्र क्यचोऽनुवृत्यर्थः। ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति। चकारादित्वाद्वा काम्यचः- उपयट्काम्यति।।(म.भा.2.20)
</3-1-9>
उपमानादाचारे ।। <3-1-10> ।।

क्यजनुवर्त्तते, न काम्यच्। उपमानात्कर्मणः सुबन्तादाचारेऽर्थे वा क्यच्प्रत्ययो भवति। आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता। पुत्रमिवाचरति पुत्रीयति छात्रम्। प्रावारीयति कम्बलम्। * अधिकरणाच्चेति वक्तव्यम् *(म.भा.2.20)। प्रासादीयति कुड्ये। पर्यङ्कीयति मञ्चके।।
</3-1-10>
कर्तुः क्यङ् सलोपश्च ।। <3-1-11> ।।

`आचारे इत्यनुवर्तते। उपमानात्कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपो भवति। अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव। श्येन इवाचरति काकः श्येनायते। कुमुदं पुष्करायते। सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषा भवति। ओजायतेष। अप्सरायते। पयायते। पयस्यते। ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया।
</3-1-11>

(सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः)(जै.सू.2-1-91)

सलोपविधौ च `कर्तुः इति स्थानषष्ठी सम्पद्यते, तत्रालोऽन्त्यनियमे सति, `हंसायते `सारसायते इति सलोपो न भवति। * आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः *(म.भा.2.21)। अवगल्भते, अवगल्भायते। क्लीबते, क्लीबायते। होडते, होडायते। * सर्वप्रातिपदिकेभ्य इत्येके *(म.भा.2.21)। अश्व इवाचरति अश्वायते। गर्दभायते। अश्वति। गर्दभति।।
</2-12-11>
भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।। <3-1-12> ।।
`भृश इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ् प्रत्यययो भवति, हलन्तानां च लोपः। `अच्वेः इति प्रत्येकमभिसम्बध्यते। किमर्थं पुनरिदमुच्यते, यावता भवतियोगे च्विर्विधीयते तेनोक्तार्थत्वाच्च्व्यन्तेभ्यो न क्यङ् भविष्यति ? तत्सदृशप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ्प्रत्ययः। अभृशो भृशो भवति भृशायते। शीघ्रायते। भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। भृशादिः।
अच्वेरिति किम् ? भृशीभवति।।
</3-1-12>
लोहितादिडाज्भ्यः क्यष् ।। <3-1-13> ।।
लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। लोहितायति, लोहितायते। डाजन्तेभ्यः--पटपटायति, पटपटायते। * लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि *(म.भा.2.24) यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस्तु क्यषेव भवति। वर्मायति, वर्मायते। निद्रायति, विद्रायते। करुणायति। करुणायते। कृपायति, कृपायते। आकृतिगणोऽयम्। तथा च ककारः सामान्यग्रहणार्थोऽनुबध्यते-नः क्ये(1-4-15/2659) इति। न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति। कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव वचनं ज्ञापकम्। `अच्वेः इत्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते। लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। लोहितादिः।।
</3-1-13>
कष्टाय क्रमणे ।। <3-1-14> ।।
क्यङनुवर्त्तते न क्यष्। कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्यतो भवति। कष्टाय क्रमणे क्रामति कष्टयते। अत्यल्पमिदमुच्यते। * सत्त्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षामिति वक्तव्यम् *(म.भा.2.25)। कण्वचिकीर्षा = पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति। सत्त्रायते। कष्टायते। कक्षायते। कृच्छ्रायते। गहनायते। कण्वचिकीर्षायामिति किम् ? अजः कष्टं क्रामति।।
</3-1-14>
कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ।। <3-1-15> ।।
रोमन्थशब्दात्तपःशब्दाच्च कर्मणो यथाक्रमं वर्त्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति। रोमन्थं वर्त्तयति रोमन्थायते गौः। * हनुचलन इति वक्तव्यम् *(म.भा.2.25)। इह मा भत्- कीटो रोमन्थं वर्त्तयति। * तपसः परस्मैपदं च *(म.भा.2.25)। तपश्चरति तपस्यति।।
</3-1-15>
बाष्पोष्मभ्यामुद्वमने ।। <3-1-16> ।।
`कर्मणः इति वर्त्तते। बाष्पशब्दादूष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो भवति। बाष्पमुद्वमति बाष्पायते। ऊष्मायते। * फेनाच्चेति वक्तव्यम् *(म.भा.2.25)। फेनमुद्वमति फेनायते।।
</3-1-16>
शब्दवैरकलहाभ्रकण्वमेधेभ्यः करणे ।। <3-1-17> ।।

शब्द, वैर, कलह, अभ्र, कण्व, मेघ-इत्येतेभ्यः करणे करोत्यर्थे क्यङ् प्रत्ययो भवति। शब्दं करोति शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। * सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् *(म.भा.2.26)। सुदिनायते। दुर्दिनायते। नीहारायते। अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्त्तव्यम् *(म.भा.2.26)। अटायते। अट्टायते। शीकायते। कोटायते। पोटायते। सोटायते। प्रुष्टायते। प्लुष्टायते।
</3-1-17>
सुखादिभ्यः कर्तृवेदनायाम् ।। <3-1-18> ।।
कर्मग्रहणमनुवर्त्तते। `सुख-इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत्कर्तुः सम्बन्धीनि सुखादीनि भवन्ति। सुखं वेदयते सुखायते। दुःखायते। कर्तृग्रहणं किम् ? सुखं वेदयते प्रसाधको देवदत्तस्य। सुख। दुःख। तृप्त। गहन। कृच्छ्र। अस्त्र। अलीक। प्रतीप। करुण। कृपण। सोढ। सुखादिः।।
</3-1-18>
नमोवरिवश्चित्रङः क्यच् ।। <3-1-19> ।।
`करणे इति वर्त्तते। नमस्, वरिवस्, चित्रङ्-इत्येतेभ्यो वा क्यचप्रत्ययो भवति, करणविशेषे पूजादौ। `नमसः पूजायाम् नमस्यति देवान्। `वरिवसः परिचर्यायाम्-वरिवस्यति गूरून्। `चित्रङ आश्चर्ये-चित्रीयते।
ङकार आत्मनेपदार्थः।।
</3-1-19>
पुच्छभाण्डचीवराण्णिङ् ।। <3-1-20> ।।
`करणे इति वर्तते। पुच्छ, भाण्ड, चीवर-इत्येतेभ्यो णिङ् प्रत्ययो भवति, करणविशेषे। * पुच्छादुदसने पर्यसने वा *(म.भा.2.27)। उत्पुच्छयते। परिपुच्छयते। * भाण्डात्समाचयने *(म.भा.2.27)। सम्भाण्डयते। * चीवरादर्जने परिधाने वा *(म.भा.2.27)। सञ्चीवरयते भिक्षुः। ङकार आत्मनेपदार्थः। णकारः सामान्यग्रहणार्थः- णेरनिटि(6-4-51/2313) इति।।
</3-1-20>
मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।। <3-1-21> ।।
मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल,कल, कृत, तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति। मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद्भोजने तन्निवृत्तौ च पयो व्रतयति। वृषलान्नं व्रतयति। वस्त्रात्समाच्छादने--संवस्त्रयति। हलिं गृह्णाति हलयति। कलिं गृह्णाति कलयति। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्- अजहलत्, अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति केशान्। विशदीकरोतीत्यर्थः।।
</3-1-21>
धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।। <3-1-22> ।।
एकाज् यो धातुर्हलादिः क्रियासमभिहारे वर्तते तस्माद्यङ् प्रत्ययो भवति। पौनःपुन्यं भृशार्थो वा = क्रियासमभिहारः। पुनः पुनः पचति पापच्यते। यायज्यते। भृशं ज्वलति जाज्वल्यते। देदीप्यते। धातोरिति किम् ? सोपसर्गादुत्पत्तिर्मा भूत्-भृशं प्राटति। एकाच इति किम् ? भृशं जागर्ति। हलादेरिति किम् ? भृशमीक्षते। * सूचिसूत्रिमूर्त्यत्यर्त्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम् *(म.भा.2.29)। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाट्यते। अरार्यते। अशाश्यते। प्रोर्णोनूयते। भृशं शोभते, भृशं रोचते इत्यत्र नेष्यते; अनभिधानात्।।
</3-1-22>
नित्यं कौटिल्ये गतौ ।। <3-1-23> ।।
गतिवचनाद्धातोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। नित्यग्रहणं विषयनियमार्थम्- गतिवचनान्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे। भृशं क्रामति।।
</3-1-23>
लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायम् ।। <3-1-24> ।।
लुप, सद, चर, जप, जभ, दह, दश, गॄ,- इत्येतेभ्यो भावगर्हायाम् = धात्वर्थगर्हायां यङ्प्रत्ययो भवति। गर्हितं लुम्पति लोलुप्यते। एवम्-- सासद्यते। चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। निजेगिल्यते। भावर्हायामिति किम् ? साधु जपति। भावग्रहणं किम् ? साधनगर्हायां मा भूत्- मन्त्रं जपति वृषलः। नित्यग्रहणं विषयनियमार्थमनुवर्त्तते-- एतेभ्यो नित्यं भावगर्हायामेव भवति, न तु क्रियासमभिहारे। भृशं लुम्पति।।
</3-1-24>
सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।। <3-1-25> ।।
सत्यादिभ्यश्चूर्णपर्यन्तेभ्यः, चुरादिभ्यश्च णिच् प्रत्ययो भवति। सत्यमाचष्टे सत्यापयति। * अर्थवेदसत्यानामापुग्वक्तव्यः *(म.भा.2.30)। अर्थमाचष्टे अर्थापयति। वेदापयति। आपुग्वचनसामर्थ्याट्टिलोपो न भवति। पाशाद्विमोचने-विपाशयति। रूपाद्दर्शने-रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णाति, अनुतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाऽभियाति अभषेणयति। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। अकारान्तस्त्वचशब्दः। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसयति अवचूर्णयति। चुरादिभ्यः स्वार्थे-चोरयति। चिन्तयति। स्वाभाविकत्वादर्थाभिधानस्य यथास्वम् = यथायथं प्रत्ययार्था निर्दिश्यन्ते।।
</3-1-25>

हेतुमति च ।। <3-1-26> ।।
हेतुः स्वतन्त्रस्य (कर्तुः) प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति। कटं कारयति। ओदनं पाचयति। * तत्करोतीत्युपसङ्ख्यानं सूत्रयतीत्याद्यर्थम् *(म.भा.2.34)। सूत्रं करोति सूत्रयति। * आख्यानात्कृतस्तदाचष्टे इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् *(म.भा.2.34)। आख्यानात्कृदन्ताण्णिज्वक्तव्यः, तदाचष्टे इत्येस्मिन्नर्थे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवति। कंसवधमाचष्टे कंसं घातयति। बलिबन्धमाचष्टे बलिं बन्धयति। राजागमनमाचष्टे राजानमागमयति। * आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् *(म.भा.2.35)। आरात्रिविवासमाचष्टे रात्रिं विवासयति। * चित्रीकरणे प्रापि *(म.भा.2.35)। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यमुद्गमयति। *नक्षत्रेयोगे ज्ञि *(म.भा.2.35)। पुष्ययोगं जानाति पुष्येण योजयति। मघाभिर्योजयति।।
</3-1-26>
कण्ड्वादिभ्यो यक् ।। <3-1-27> ।।
`कण्डूञ् इत्येवमादिभ्यो यक् प्रत्ययो भवति। द्विविधाः कण्ड्वादयः- धातवः, प्रातिपदिकानि च। तत्र धात्वधिकाराद्धातुभ्य एव प्रत्ययो विधीयते, न तु प्रातिपदिकेभ्यः। तथा च- गुणप्रतिषेधार्थः ककारोऽनुबध्यते।

`धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः।।(म.भा.2.38)

कण्डूञ्-कण्डूयति, कण्डूयते। ञित्वात् कर्त्रभिप्राये क्रियाफले(1-3-72/2158) इत्यात्मनेपदम्। कण्डूञ्। मन्तु। हृणीङ्। वल्गु। अस्मनस्। महीङ्। लेट्। लङ्। इरस्। इरज्। इरञ्। द्रवस्। मेधा। कुषुभ। मगध। तन्तस्। पम्पस्। सुख। दुःख। सपर। अरर। भिषज्। भिष्णज्। इषुध। चरण। भुरण। चुरण। तुरण। भुरण। गद्गद। एला। केला। खेला। लिट्। लोट्।
</3-1-27>
गुपूधूपविच्छिपणिपनिभ्यः आयः ।। <3-1-28> ।।
`गुपू रक्षणे(धा.पा.395), `धूप सेतापे(धा.पा.396), `विच्छ गतौ(धा.पा.1424), `पण व्यवहारे स्तुतौ च(धा.पा.439), `पन च(धा.पा.440)- इत्यतेभ्यो धातुभ्य आयप्रत्यो भवति। गोपायति। दूपायति। विच्छायति। पणायति। पनायति। स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति, न व्यवहारार्थः। शतस्य पणते। सहस्रस्य पणते। अनुबन्धश्च केवले चरितार्थः, तेनायप्रत्ययान्तान्नात्मनेपदं भवति।।
</3-1-28>
ऋतेरीयङ् ।। <3-1-29> ।।
ऋतिः सौत्रो धातुर्घृणायां वर्त्तते, तत ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते, ऋतीयेते, ऋतीयन्ते। `ऋतेश्छङ् इति सिद्धे ईयङ्वचनं ज्ञापनार्थम्-धातुविहितानां प्रत्ययानामायन्नादयो न भवन्तीति।।
</3-1-29>
कमेर्णिङ् ।। <3-1-30> ।।
कमेर्धातोर्णिङ् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ङकार आत्मनेपदार्थः। कामयते, कामयेते, कामयन्ते।।
</3-1-30>
आयादय आर्धधातुके वा ।। <3-1-31> ।।
आर्धधातुकविषये = आर्धधातुकविवक्षायामायादयः प्रत्यया वा भवन्ति। गोप्ता, गोपायिता। अर्तिता, ऋतीयिता। कमिता, कामयिता। नित्यप्रत्ययप्रसङ्गे तदुत्पत्तिरार्ध्दधातुकविषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति-गुप्तिः। गोपाया।।
</3-1-31>
सनाद्यन्ता धातवः ।। <3-1-32> ।।
सन् आदिर्येषां ते सनादयः, सनादयोऽन्ते येषां ते सनाद्यन्ताः। सनाद्यन्ताः समुदाया धातुसंज्ञा भवन्ति। प्रत्ययग्रहणपरिभाषैव पदसंज्ञायामन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिहान्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति।।
</3-1-32>
स्यतासी लृलुटोः ।। <3-1-33> ।।
लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव, तस्मिन् लुटि च परतो धातोर्यथासङ्ख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता। इदित्करणमनुनासिकलोपप्रतिबन्धार्थम्। मन्ता। सङ्गन्ता।।
</3-1-33>
सिब्बहुलं लेटि ।। <3-1-34> ।।
</3-1-34>
धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः। `जोषिषत्(ऋ.<1-35-1>)। `तारिषत्(ऋ.<1-25-12>)। मन्दिषत्। न च भवति-`पदाति विद्युत्(ऋ.<7-25-1>)। `उदधिं च्यावयाति।।(तै.सं.<3-5-5>.5)
</1-35-1>
कास्प्रत्ययादाममन्त्रे लिटि ।। <3-1-35> ।।
</3-1-35>

`कासृ शब्दकुत्सायाम्(धा.पा.623) ततः प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविष्ये। कासाञ्चक्रे। प्रत्ययान्तेभ्यः - लोलूयाञ्चक्रे। अमन्त्र इति किम् ? `कृष्णो नोनाव(ऋ.<1-79-2>)।। * कास्यनेकाच इति वक्तव्यम् चुलुम्पाद्यर्थम् *(म.भा.2.44) । चकासाञ्चकार। चुलुम्पाञ्चकार। दरिद्राञ्चकार।।

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा।
आस्कासोरां विधानाच्च पररूपं कतन्तवत्।।

</1-79-2>
इजादेश्च गुरुमतोऽनृच्छः ।। <3-1-36> ।।
इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितस्तस्माच्च लिटि परत आम्प्रत्ययो भवति। `ईह चेष्टायाम्(धा.पा.632), `ऊह वितर्के(धा.पा.648)। ईहाञ्चक्रे, ऊहाञ्चक्रे। इजादेरिति किम् ? ततक्ष, ररक्ष। गुरुमत इति किम् ? इयज, उवप। अनृच्छ इति किम् ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। * ऊर्णोतेश्च प्रतिषेधो वक्तव्यः *(म.भा.2.46)। प्रोर्णुनाव। अथ वा
*वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात्।।*(म.भा.2.46)
</3-1-36>
दयायासश्च ।। <3-1-37> ।।
`दय दानगतिरक्षणेषु(धा.पा.481), `अय गतौ(धा.पा.474), `आम उपवेशने(धा.पा.1022)-इत्येतेभ्यश्च लिटि परत आम्प्रत्ययो भवति। दयाञ्चक्रे। पलायाञ्चके। आसाञ्चक्रे।
</3-1-37>
उषविदजागृभ्योऽन्यतरस्याम् ।। <3-1-38> ।।
`उष दाहे(धा.पा.696), `विद ज्ञाने(धा.पा.1065), `जागृ निद्राक्षये(धा.पा.1073)-एतेभ्यो लिटि परतोऽन्यतरस्यामाम् प्रत्ययो भवति। ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति।।
</3-1-38>
भीह्रीभृहुवां श्लुवच्च ।। <3-1-39> ।।
`ञिभी भये(धा.पा.1085), `ह्री लज्जायाम्(धा.पा.1086), `डुभृञ् धारणपोषणयोः(धा.पा.1088), `हु दानादनयोः(धा.पा.1084)-इत्येतेभ्यो लिटि परत आम्प्रत्ययो भवत्यन्यतरस्याम्, श्लाविव चास्मिन्कार्यं भवति। किं पुनस्तद् ? द्वित्वमित्त्वं च । बिभयाञ्चकार, बिभाय। जिह्रयाञ्चकार, जिह्राय। बिभराञ्चकार, बभार। जुहवाञ्चकार, जुहाव।।
</3-1-39>
कृञ्चानुप्रयुज्यते लिटि ।। <3-1-40> ।।
आम्प्रत्ययस्य पश्चात्कृञनुप्रयुज्यते लिटि परतः। `कृञ् इति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूभावो न भवति। पाचयाञ्चकार। पाचयाम्बभूव। पाचयामास।।
</3-1-40>
विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।। <3-1-41> ।।
`विदाङ्कुर्वन्तु इत्येतदन्यतरस्यां निपात्यते। किं पुनरिह निपात्यते ? विदेर्लोट्याम्प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट् परस्यानुप्रयोगः। अत्र भवन्तो विदांकुर्वन्तु, विदन्तु। इतिकरणः प्रदर्शनार्थः। न केवलं प्रथमपुरुषबहुवचनम्, किं तर्हि ? सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते-विदाङ्करोतु, विदाङ्कुरुतात्, विदाङ्कुरुताम्, विदाङ्कुरु, विदाङ्कुरुतमित्यादि।।
</3-1-41>
अभ्युत्सादयाम्प्रजनयाञ्चिकयांरमयामकःपावयाङ्क्रियाद्विदामक्रन्निति च्छन्दसि ।। <3-1-42> ।।
</3-1-42>
`अभ्युत्सादयाम् इत्येवमादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययो निपात्यते। चिनोतेरपि तत्रैवाम्प्रत्ययो द्विर्वचनं कुत्वं च। अकरिति चतुर्भिरपि प्रत्येकमनुप्रयोगः सम्बध्यते। पावयाङ्क्रियादिति-पवतेः पुनातेर्वा ण्यन्तस्य लिङ्याम् निपात्यते, क्रियादिति चास्यानुप्रयोगः। विदामक्रन्निति-विदेर्लुङ्याम् निपात्यते, गाणाभावश्च, अक्रन्निति चास्यानुप्रयोगः। `अभ्युत्सादयामकः(मै.<1-6-5>)। अभ्युदसीषददिति भाषायाम्। `प्रजनयामकः(मै.<1-6-10>)। प्रजीजनदिति भाषायाम्। `चिकयामकः। अचैषीदिति भाषायाम्। `रमयामकः(काठकसं.7.7)। अरीरमदिति भाषायाम्। पावयाङ्क्रियात्(मै.<2-1-3>)। पाव्यादिति भाषायाम्। `विदामक्रन्(मै.<1-4-7>,तै.ब्रा.<1-3-10>.3) अवेदिषुरिति भाषायाम्। इतिकरणः प्रयोगदर्शनार्थः।।

</1-6-5>
च्लि लुङि ।। <3-1-43> ।।
धातोश्च्लिः प्रत्ययो भवति लुङि परतः। इकार उच्चारणार्थः, चकारः स्वरार्थः। अस्य सिजादीनादेशान्वक्ष्यति, तत्रैवोदाहरिष्यामः।।
</3-1-43>

च्लेः सिच् ।। <3-1-44> ।।
च्लेः सिजादेशो भवति। इकार उच्चारणार्थः, चकारः स्वरार्थः। अकार्षीत्। अहार्षीत्। आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते। * स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः *। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अम्रक्षीत्, अमार्क्षीत्, अमृक्षत्। अक्राक्षीत्, अकार्क्षीत्,अकृक्षत्। अत्राप्सीत्, अतार्प्सीत्, अतृपत्। अद्राप्सीत्, अदार्प्सीत्, अदृपत्।।
</3-1-44>
शल इगुपधादनिटः क्सः ।। <3-1-45> ।।
शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेरनिटः क्स आदेशो भवति। दुह--अधुक्षत्। लिह--अलिक्षत्। शल इति किम् ? अभैत्सीत्। अच्छैत्सीति। इगुपधादिति किम् ? अधाक्षीत्। अनिटइति किम् ? अकोषीत्। अमोषीत्।।
</3-1-45>
श्लिष आलिङ्गने ।। <3-1-46> ।।
श्लिषेर्धातोरालिङ्गनक्रियावचनात्परस्य च्लेः क्स आदेशो भवति। आलिङ्गनम् = उपगूहनम्परिष्वङ्गः। अत्र नियमार्थमेतत्। आश्लिक्षत्कन्यां देवदत्तः। आलिङ्गन इति किम् ? समाश्लिषज्जतु काष्ठम्(म.भा.2.54)।।
</3-1-46>
न दृशः ।। <3-1-47> ।।
पूर्वेण क्सः प्राप्तः प्रतिषिध्यते। दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति। अस्मिन्प्रतिषिद्धे इरितो वा(3-1-57/2269) इत्यङ्सिचौ भवतः। अदर्शत्, अद्राक्षीत्।।
</3-1-47>
णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।। <3-1-48> ।।
सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः, श्रि, द्रु, स्रु-इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेदार्थः, चकारः`चङि इति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्तरीति किम् ? अकारयिषातां कटौ देवदत्तेन। * कमेरुपसङ्ख्यानम् *। आयादय आर्धधातुके वा(3-1-31/2305) इति यदा णिङ् नास्ति तदैतदुपसङ्ख्यानम्। अचकमत। णिङ्पक्षे सन्वद्भावः अचीकमत।

`नाकमिष्टं सुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः।।(म.भा.2.55)

</3-1-48>
विभाषा धेट्श्व्योः ।। <3-1-49> ।।
`धेट् पाने(धा.पा.903), `टुओश्वि गतिवृद्ध्योः(धा.पा.1011)--एताभ्यामुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत्-अदधत्। सिच्पक्षे विभाषा घ्राधेट्(2-4-78/2376) इति लुक्। अधात्, अधासीत्। श्वयतेः खल्वपि-अशिश्वियत्। अङप्यत्र विकल्प्यते--अश्वत्, अश्वयीत्। कर्तरीत्येव अधिषातां गावौ वत्सेन।।
</3-1-49>
गुपेश्छन्सि ।। <3-1-50> ।।
</3-1-50>
गुपेः परस्य च्लेश्छन्दसि विषये विभाषा चङादेशो भवति। यत्र आयप्रत्ययो नास्ति तत्रायं विधिः। `इमान्नो मित्रावरुणौ गृहानजुगुपतम् युवम्(मै.<1-5-14>);अगोप्तम्, अगोपिष्टम्, अगोपायिष्टमिति वा। भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति।।
</1-5-14>
नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।। <3-1-51> ।।
</3-1-51>
`ऊन परिहाणे(धा.पा.1889), `ध्वन शब्दे(धा.पा.817), `इल प्रेरणे(धा.पा.1358), `अर्द गतौ याचने च(धा.पा.55)-इत्येतेभ्यो धातुभ्यो ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति। `काममूनयीः(ऋ.<1-53-3>)। औनिनः इति भाषायाम्। `मा त्वाग्निर्ध्वनयीत्(ऋ. <1-161-15>)। अदिध्वनदिति भाषायाम्। काममैलयीत्। ऐलिलदिति भाषायाम्। मैनमर्दयीदिति भाषायाम्।।
</1-53-3>
अस्यतिवक्तिख्यातिभ्योऽङ् ।। <3-1-52> ।।
`असु क्षेपणे(धा.पा.1210), `वच परिभाषणे(धा.पा.1064),ब्रूञादेशो वा; `ख्या प्रकथने(धा.पा.1061), चक्षिङादेशो वा-इत्येभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः। अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम्। पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति--अवोचत्, अवोचताम्, अवोचन्। ख्याति--आख्यत्। आख्यताम्, आख्यन्। कर्त्तरीति किम् ? पर्यासिषातां गावौ वत्सेन।।
</3-1-52>
लिपिसिचिह्वश्च ।। <3-1-53> ।।
`लिप उपदेहे(धा.पा.1434), `षिच क्षरणे(धा.पा.1435), `ह्वेञ् स्पर्द्धायाम्(धा.पा.1009)--इत्येतेभ्यश्च परस्य च्लेरङादेशो भवति। अलिपत्। असिचत्। आह्वत्। पृथग्योग उत्तरार्थः।।

</3-1-53>
आत्मनेपदेष्वन्यतरस्याम् ।। <3-1-54> ।।
पूर्वेण प्राप्ते विभाषा आरभ्यते। लिपि-सिचि-ह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवति अन्यतरस्याम्। स्वरितञितः(1-3-72/2158) इत्यात्मनेपदम्। अलिपत, अलिप्त। असिचत, असिक्त। अह्वत,अह्वास्त।।
</3-1-54>
पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।। <3-1-55> ।।
पुषादिभ्यः, द्युतादिभ्यः, लृदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो भवति। पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणो वा। पुष-अपुषत्। द्युतादि-अद्युतत्, अश्वितत्। लृदिद्भ्यः-गम्लृ-अगमत्। शक्लृ-अशकत्। परस्मैपदेष्विति किम् ? व्यद्योतिष्ट। अलोटिष्ट।।
</3-1-55>
सर्त्तिशास्त्यर्तिभ्यश्च ।। <3-1-56> ।।
`सृ गतौ(धा.पा.936), `शासु अनुशिष्टौ(धा.पा.1076), `ऋ गतौ(धा.पा.937)-इत्येतेभ्यः परस्य च्लेरङादेशो भवति। सर्त्ति-असरत्। शास्ति-अशिषत्। अर्त्ति आरत्। पृथग्योगकरणमात्मनेपदार्थम्। समरन्। चकारः परस्मैपदेष्वित्यनुकर्षणार्थः। तच्चोत्तरत्रोपयोगं यास्यति।।
</3-1-56>
इरितो वा ।। <3-1-57> ।।
इरितो धातोः परस्य च्लेरङादेशो वा भवति। भिदिर्-अभिदत्, अभैत्सीत्। छिदिर्-अच्छदत् अच्छैत्सीत्। परस्मैपदेष्वित्येव- अभित्त। अच्छित्त।।
</3-1-57>
जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।। <3-1-58> ।।
`वा इति वर्त्तते। `जॄष् वयोहानौ(धा.पा.1131), `स्तम्भुः सौत्रो धातुः, `म्रुचु म्लुचु गत्यर्थौ(धा.पा.195/196) `ग्रुचु ग्लुचु स्तेयकरणे(धा.पा.197/198), `ग्लुञ्चु षस्ज गतौ(धा.पा.201/202), `टुओश्वि गतिवृद्ध्योः(धा.पा.1011)-इत्येतेभ्यो धातुभ्यः परस्य च्लेर्वाऽङादेशो भवति। अजरत्, अजारीत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्। अग्लुञ्चत्। अग्लुञ्चीत्। अश्वत्, अश्वयीत्, अशिश्वियत्। ग्लुचुग्लुञ्च्वोरन्यतरोपादानेऽपि रूपत्रयं सिद्ध्यति, अर्थभेदात्तु द्वयोरुपादानं कृतम्। केचितु वर्णयन्ति--द्वयोरुपादानसामर्थ्याद् ग्लुञ्चेरनुनासिकलोपो न भवति-अग्लुञ्चदिति।।
</3-1-58>
कृमृदृरुहिभ्यश्छन्दसि ।। <3-1-59> ।।
</3-1-59>
कृ,मृ,दृ,रुहि-इत्येतेभ्यः परस्य च्लेश्छन्दसि विषयेऽङादेशो भवति। शकलाङ्गुष्ठकोऽकरत्। अथोऽमरत्। अदरदर्थान्। पर्वतमारुहत्। `अन्तरिक्षाद्दिवमारुहम्(अ.<4-14-3>)। छन्दसीति किम् ?अकार्षीत्। अमृत।
अदारीत्। अरुक्षत्।।
</4-14-3>
चिण् ते पदः ।। <3-1-60> ।।
`पद गतौ(धा.पा.1170)-अस्माद्धातोः परस्य च्लेश्चिणादेशो भवति तशब्दे परतः। सामर्थ्यादात्मनेपदैकवचनं गृह्यते--उदपादि सस्यम्। समपादि भैक्षम्। ते इति किम् ? उदपत्साताम्। उदपत्सत।।
</3-1-60>
दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।। <3-1-61> ।।
`चिण् ते इति वर्तते। `दीपी दीप्तौ(धा.पा.1151), `जनी प्रादुर्भावे(धा.पा.1150) `बुध अवगमने(धा.पा.1173), `पूरी आप्यायने(धा.पा.1152), `तायृ संतानपालनयोः(धा.पा.489), `ओप्यायी वृद्धौ(धा.पा.488) इत्येतेभ्यः परस्य च्लेस्तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट।।
</3-1-61>
अचः कर्मकर्त्तरि ।। <3-1-62> ।।
अजन्ताद्धातोः परस्य च्लेः कर्मकर्तरि तशब्दे परतश्चिणादेशो भवति। प्राप्तविभाषेयम्। अकारि कटः स्वयमेव, अकृत कटः स्वयमेव। अलावि केदारः स्वयमेव, अलविष्ट केदारः स्वयमेव। अच इति किम् ? अभेदि काष्ठं स्वयमेव। कर्मकर्त्तरि किम् ? अकारि कटो देवदत्तेन।।
</3-1-62>
दुहश्च ।। <3-1-63> ।।
`दुह प्रपूरणे(धा.पा.1015) अस्मात्परस्य च्लेश्चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव - अदोहि गौर्गोपालकेन।।
</3-1-63>
न रुधः ।। <3-1-64> ।।
`रुधिर् आवरणे(धा.पा.1439) अस्मात्परस्य च्लेः कर्मकर्त्तरि चिणादेशो न भवति। अन्ववारुद्ध गौः स्वयमेव। कर्मकर्त्तरीत्येव-- अन्ववारोधि

गौर्गोपालकेन।।
</3-1-64>
तपोऽनुतापे च ।। <3-1-65> ।।
`न इति वर्त्तते। `तप संतापे(धा.पा.986)-अस्मात्परस्य च्लेश्चिणादेशो न भवति कर्म कर्तर्यनुतापे च। अनुतापः = पश्चात्तापः, तस्य ग्रहणमकर्मकर्त्रर्थम्, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति। अतप्त तपस्तापसः। अन्ववातप्त पापेन कर्मणा।।
</3-1-65>
चिण् भावकर्मणोः ।। <3-1-66> ।।
धातोः परस्य च्लेश्चिणादेशो भवति भावे कर्मणि तशब्दे परतः। भावे तावत्-- अशायि भवता। कर्मणि खल्वपि-- अकारि कटो देवदत्तेन। अहारि भारो यज्ञदत्तेन। चिण्ग्रहणं विस्पष्टार्थम्।।
</3-1-66>
सार्वधातुके यक् ।। <3-1-67> ।।
भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति। आस्यते भवता। शय्यते भवता। कर्मणि- - क्रियते कटः। गम्यते ग्रामः। ककारो गुणवृद्धिप्रतिषेधार्थः। यग्विधाने कर्मकर्तर्युपसङ्ख्यानम्। विप्रतिषेधाद्धि यकः शपो बलीयस्त्वम्। क्रियते कटः स्वयमेव। पच्यते ओदनः स्वयमेव।।
</3-1-67>
कर्त्तरि शप् ।। <3-1-68> ।।
कर्त्तवाचिनि सार्वधातुके परतो धातोः शप्प्रत्ययो भवति। पकारः स्वरार्थः, शकारः सार्वधातुकसंज्ञार्थः। भवति। पचति।।
</3-1-68>
दिवादिभ्यः श्यन् ।। <3-1-69> ।।
`दिव्-इत्येवमादिभ्यो धातुभ्यः श्यन्प्रत्ययो भवति। शपोऽपवादः। नकारः स्वरार्थः, शकारः सार्वधातुकार्थः। दीव्यति। सीव्यति।।
</3-1-69>
वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।। <3-1-70> ।।
उभयत्रविभाषेयम्। `टुभ्राशृ टुभ्लाशृ दीप्तौ(धा.पा.825/826); `भ्रामु अनवस्थाने(धा.पा.1206), `भ्रमु चलने(धा.पा.851)-द्वयोरपि ग्रहणम्, `क्रमु पादविक्षेपे(धा.पा.473), `क्लमु ग्लानौ(धा.पा.1208), `त्रसी उद्वेगे(धा.पा.1118), `त्रुटी छेदने(धा.पा.1376), `लष कान्तौ(धा.पा.889)-इत्येतेभ्यो वा श्यन् प्रत्ययो भवति। भ्राशते, भ्राश्यते। भ्लाशते, भ्लाश्यते। भ्रमति, भ्राम्यति। क्रामति, क्राम्यति। क्लामति, क्लाम्यति। त्रसति,त्रस्यति। त्रुटति, त्रुट्यति। लषति, लष्यति।।
</3-1-70>
यसोऽनुपसर्गात् ।। <3-1-71> ।।
`यसु प्रयत्ने(धा.पा.1211) दैवादिकः, तस्मान्नित्यं श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते। यसोऽनुपसर्गाद्वा श्यन्प्रत्ययो भवति। यस्यति, यसति। अनुपसर्गादिति किम् ? आयस्यति। प्रयस्यति।।
</3-1-71>
संयसश्च ।। <3-1-72> ।।
सोपसर्गार्थ आरम्भः। सम्पूर्वाच्च यसेर्वा श्यन्प्रत्ययो भवति। संयस्यति, संयसति।।
</3-1-72>
स्वादिभ्यः श्नुः ।। <3-1-73> ।।
`षुञ् अभिषवे(धा.पा.1248) इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपोऽपवादः। सुनोति। सिनोति।।
</3-1-73>
श्रुवः शृ च ।। <3-1-74> ।।
श्रुवः श्नुप्रत्ययो भवति, तत्संनियोगेन श्रुवः `शृ इत्ययमादेशो भवति। शृणोति,शृण्वन्ति।।
</3-1-74>
अक्षोऽन्यतरस्याम् ।। <3-1-75> ।।
`अक्षू व्याप्तौ(धा.पा.654) भौवादिकः, अस्मादन्यतरस्यां श्नुप्रत्ययो भवति। अक्ष्णोति, अक्षति।।
</3-1-75>
तनूकरणे तक्षः ।। <3-1-76> ।।
`तक्षू त्वक्षू तनूकरणे(धा.पा.655/656)--अस्मात्तनूकरणे वर्तमानादन्यतरस्यां श्नुप्रत्ययो भवति। अनेकार्थत्वाद्धातूनां विशेषणोपादानम्। तक्षति काष्ठम्, तक्ष्णोति काष्ठम्। तनूकरण इति किम् ? सन्तक्षति वाग्भिः।।
</3-1-76>
तुदादिभ्यः शः ।। <3-1-77> ।।
`तुद व्यथने(धा.पा.1282)-इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। तुदति। नुदति।।

</3-1-77>
रुधादिभ्यः श्नम् ।। <3-1-78> ।।
`रुधिर् आवरणे(धा.पा.1439)-इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति। शपोऽपवादः। मकारो देशविध्यर्थः। शकारः श्नान्नलोपः(6-4-23/2544) इति विशेषणार्थः। रुणद्धि। भिनत्ति।।
</3-1-78>
तनादिकृञ्भ्य उः ।। <3-1-79> ।।
`तनु विस्तारे(धा.पा.1464) --इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति। शपोऽपवादः। तनोति। सनोति। क्षणोति। कृञः खल्वपि - करोति। तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्, अन्यत्तनादिकार्यं मा भूदिति। तनादिभ्यस्तथासोः(2-4-79/2547) इति विभाषा सिचो लुग् न भवति-अकृत, अकृथाः।।
</3-1-79>
धिन्विकृण्व्योर च ।। <3-1-80> ।।
`हिवि धिवि जिवि प्रीणनार्थाः(धा.पा.591/593/594), `कृवि हिंसाकरणयोः(धा.पा.598)-इत्येतयोर्धात्वोरुप्रत्ययो भवत्यकारश्चान्तादेशः। धिनोति। कृणोति। अतो लोपस्य स्थानिवद्भावाद् गुणो न भवति।।
</3-1-80>
क्र्यादिभ्यः श्ना ।। <3-1-81> ।।
`डुक्रीञ् द्रव्यविनिमये(धा.पा.1474)-इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति।।
</3-1-81>
स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।। <3-1-82> ।।
आद्याश्चत्वारो धातवः सौत्राः `स्कुञ् आप्रवणे(धा.पा.1479)--इत्येतेभ्यः श्नाप्रत्ययो भवति श्नुश्च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात्सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव।।
</3-1-82>
हलः श्नः शानज्झौ ।। <3-1-83> ।।
हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः। मुषाण। पुषाण। हल इति किम् ? क्रीणीहि। हौ इति किम् ? मुष्णाति। `श्नः इति स्थानिनिर्देश आदेशसम्प्रत्ययार्थः। इतरथा हि प्रत्ययान्तरमेव सर्वविषयं विज्ञायेत।।
</3-1-83>
छन्दसि शायजपि ।। <3-1-84> ।।
</3-1-84>
छन्दसि विषये श्नः शायजादेशो भवति, शानजपि। `गृभाय जिह्वया मधु(ऋ.<8-17-5>)। शानचः खल्वपि-`बधान देव सवितः(शु.य.1.25)।।
</8-17-5>
व्यत्ययो बहुलम् ।। <3-1-85> ।।
</3-1-85>
यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। व्यतिगमनं व्यत्ययः = व्यतिहारः, विषयान्तरे विधानम्-क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च। `आण्डा शुष्मस्य भेदति(ऋ.<8-40-11>)। भिनत्तीति प्राप्ते। `ताश्विन्नु न मरन्ति(ऋ.<1-191-12>)। न म्रियत इति प्राप्ते।
द्विकरणता-इन्द्रो वस्तेन नेषतु। नयत्विति प्राप्ते। त्रिविकरणता--`इन्द्रेण युजा तरुषेम वृत्रम्(ऋ.<7-48-2>)। तीर्यास्म इति प्राप्ते। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्।
`सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन।।(म.भा.2.65)
</8-40-11>
लिङ्याशिष्यङ् ।। <3-1-86> ।।
</3-1-86>
आशिषि विषये यो लिङ् तस्मिन्परतश्छन्दमि विषयेऽङ्प्रत्ययो भवति। शपोऽपवादः। छन्दस्युभयथा(3-4-117/3435) इति लिङः सार्वधातुकसंज्ञाप्यस्ति। स्थागागमिवचिवदिशकिरुहयः प्रयोजनम्। स्था--`उपस्थेयं वृषभं तुग्रियाणाम्(म.भा.2.65)। गा-`सत्यमुपगेषम्(तै.सं.<1-2-10>.2)। गमि-ग`गमेम जानतो गृहान्(ऋ.<10-40-11>)। वचि-`मन्त्रं वोचेमाग्नये(ऋ.<1-74-1>)। विद-`विदेयमेनां मनसि प्रविष्टाम्(अ.<19-4-2>)। शकि-`व्रतं चरष्यामि तच्छकेयम्(आ.श्रौ.<8-14-1>)। रुहि-स्वर्गं लोकमारुहेयम्। * दृशेरग्वक्तव्यः *(म.भा.2.65)। `पितरं च दृशेयं मातरं च(ऋ.<1-24-1>) ।।
</1-2-10>

कर्मवत्कर्मणा तुल्यक्रियः ।। <3-1-87> ।।
कर्मणि क्रिया = कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति। यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते, यथा कर्मणि, स कर्ता कर्मवद्भवति = कर्माश्रयाणि कार्याणि प्रतिपद्यते। कर्तरि शप्(3-1-68/2167) इति कर्तृग्रहणमिहानुवृत्तं प्रथमया विपरिणम्यते। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव। वत्करणं स्वाश्रयमपि यथा स्यात्- भिद्यते कुसूलेनेति। अकर्मकाणां भावे लः सिद्धो भवति। लिङ्याशिष्यङ्(3-1-86/3434) इति द्विलकारको निर्देशः, तत्र लानुवृत्तेर्लान्तस्य कर्त्ता कर्मवद्भवतीति कुसूलाद् द्विताया न भवति। कर्मणेति किम् ? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत् साध्वसिश्छिनत्ति। साधु स्थाली पचति। धात्वधिकारात्समाने धातौ कर्मवद्भावः (म.भा.2.66)। इह न भवति-- पचत्योदनं देवदत्तः, राध्यत्योदनं स्वयमेवेति। कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थभावकानाम्, न वा कर्तृस्थक्रियाणाम्।
`कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया।।
</3-1-87>
तपस्तपःकर्मकस्यैव ।। <3-1-88> ।।
`तप संतापे(धा.पा.986)- अस्य कर्ता कर्मवद्भवति, स च तपःकर्मकस्यैव, नान्यकर्मकस्य। क्रियाभेदाद्विध्यर्थमेतत्। उपवासादीनि तपांसि तापसं तपन्ति। दुःखयन्तीत्यर्थः। स तापसस्त्वगस्थिभूतः स्वर्गाय तपस्तप्यते। अर्जयतीत्यर्थः। पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते तप्यते तपस्तापसः। अतप्त तपस्तापसः। तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः।।
</3-1-88>
न दुहस्नुनमां यक्चिणौ ।। <3-1-89> ।।
`दुह `स्नु `नम्--इत्येषां कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः। दुहेरनेन यक् प्रतिषिध्यते, चिण् तु दुहश्च(3-1-63/2769) इति पूर्वमेव विभाषितः। दुग्धे गौः स्वयमेव। अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव। प्रस्नुते गौः स्वयमेव। प्रास्नोष्ट गौः स्वयमेव। नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव। * यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम् *(म.भा.2.70)। कारयति कटं देवदत्तः। कारयते कटः स्वयमेव। अचीकरत्कटं देवदत्तः। अचीकरत कटः स्वयमेव। उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयमेव। उदपुपुच्छत गौः स्वयमेव। श्रथ्नाति ग्रन्थं देवदत्तः। श्रथ्नीते ग्रन्थः स्वयमेव। अश्रन्थिष्ट ग्रन्थः
स्वयमेव। ग्रथ्नाति श्लोकं देवदत्तः। ग्रथ्नीते श्लोकः स्वयमेव। अग्रन्थिष्ट श्लोकः स्वयमेव। ब्रवीति श्लोकं देवदत्तः। ब्रूते श्लोकः स्वयमेव। अवोचच्छ्लोकं देवदत्तः। अवोचत श्लोकः स्वयमेव। आत्मनेपदाकर्मकाणाम् - आहन्ति माणवकं देवदत्तः। आहते माणवकः स्वयमेव। आवधिष्ट माणवकः स्वयमेव। आहतेति वा। विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव।
</3-1-89>
कुषिरजोः प्राचां श्यन्परस्मैपदञ्च ।। <3-1-90> ।।
`कुष निष्कर्षे(धा.पा.1519), `रञ्ज रागे(धा.पा.1168)--अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन्प्रत्ययो भवति, परस्मैपदं च । यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। प्राचाङ्ग्रहणं विकल्पार्थम्। कुष्यते। रज्यते। व्यवस्थितविभाषा चेयम्। तेन लिट्लिङोः स्यादिविषये च न भवतः। चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। कोषिष्यते पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव।।
</3-1-90>
धातोः ।। <3-1-91> ।।
`धातोः इत्ययमधिकारो वेदितव्यः। आतृतीयाध्यायपरिसमाप्तेर्यदित ऊर्ध्वमनुक्रमिष्यामो धातोरित्येवं तद्वेदितव्यम्। वक्ष्यति तव्यत्तव्यानीयरः(3-1-96/2834) इति। कर्त्तव्यम्, करणीयम्। धातुग्रहणमनर्थकम्, यङ्विधौ `धातोः इत्यधिकारात् ? कृदुपपदसंज्ञार्थं तर्हि- अस्मिन्धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामिति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्--धातोरित्येवं विहितस्य यथा स्यात्; इह मा भूत्-लूभ्याम्, लूभिरिति।।
</3-1-91>
<K.2.485>
तत्रोपपदं सप्तमीस्थम् ।। <3-1-92> ।।
तत्रैतस्मिन् धात्वधिकारे तृतीये यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति -- कर्मण्यण्, कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्; इतरथा हि सप्तमी <K.2.486> श्रूयते यत्र, तत्रैव स्यात् - स्तम्बेरमः, कर्णेजपः इति। यत्र वा सप्तमीश्रुतिरस्ति सप्तम्यां जनेर्डः इति - उपसरजः, मन्दुरजः इति। स्थग्रहणात्तु सर्वत्र भवति। गुरुसंज्ञाकरणमन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम् - पश्य कुम्भं करोति कटम् इति प्रत्ययो न भवति। <K.2.488> उपपदप्रदेशाः - उपपदमतिङ् इत्येवमादयः।।
</3-1-92>
कृदतिङ् ।। <3-1-93> ।।
अस्मिन्धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति। कर्तव्यम्। करणीयम्। अतिङिति किम् ? चीयात्। स्तूयात्। कृत्प्रदेशाः-- कृत्तद्धितसमासाश्च(1-2-46/179) इत्येवमादयः।
</3-1-93>

वाऽसरूपोऽस्त्रियाम् ।। <3-1-94> ।।
अस्मिन्धात्वधिकारेऽसमानरूपोऽपवादप्रत्ययो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा। ण्वुल्तृचौ(3-1-133/2895) इत्युत्सर्गौ, इगुपधज्ञाप्रीकिरः कः(3-1-135/2897) इत्यपवादः, तद्विषये ण्वुल्तृचावपि भवतः। विक्षेपकः, विक्षेप्ता, विक्षिपः। असरूप इति किम् ? कर्मण्यण्(3-2-1/2913) इत्युत्सर्गः, आतोऽनुपसर्गे कः(3-2-3/2915) इत्यपवादः, स नित्यं बाधको भवति। गोदः। कम्बलदः। `नानुबन्धकृतमसारूप्यम्(व्या.प.15)। अस्त्रियामिति किम् ? स्त्रियां क्तिन्(3-3-94/3272) इत्युत्सर्गः, अप्रत्यात्(3-3-102/3279) इत्यपवादः, स बाधक एव भवति। चिकीर्षा। जिहीर्षा।।
</3-1-94>
कृत्याः प्राङ् ण्वुलः ।। <3-1-95> ।।
ण्वुल्तृचौ(3-1-135/2895) इति वक्ष्यति, प्रागेतस्माण्ण्वुल्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः कृत्यसंज्ञकास्ते वेदितव्याः। तत्रैवोदाहरिष्यामः। कृत्यप्रदेशाः-कृत्यैरधिकार्थवचने(2-1-33/695) कृत्यानां कर्तरि वा(2-3-71/629) इत्येवमादयः।।
</3-1-95>
तव्यत्तव्यानीयरः ।। <3-1-96> ।।
धातोः(3-1-91/2829) इति वर्त्तते। धातोस्तव्यत्, तव्य, अनीयर्-इत्येते प्रत्यया भवन्ति। तकाररेफौ स्वरार्थौ। कर्तव्यम्। कर्तव्यम्। करणीयम्। * वसेस्तव्यत् कर्तरि णिच्च *(म.भा.2.81)। वास्तव्यः। * केलिमर उपसङ्ख्यानाम् *(म.भा.2.81)। पचेलिमा माषाः। भिदेलिमानि काष्ठानि। कर्मकर्तरि चायमिष्यते।
</3-1-96>
अचो चत् ।। <3-1-97> ।।
अजन्ताद्धातोर्यत्प्रत्ययो भवति। तकारः यतोऽनावः(6-1-213/3701) इति स्वरार्थः। गेयम्। पेयम्। चेयम्। जेयम्। अज्ग्रहणं किम्, यावता हलन्ताण्णयतं वक्ष्यति ? अजन्तभूतपूर्वाददपि यथा स्यात्--दित्स्यम्, धित्स्यम्। * तकिशसिचतियतिजनीनामुपसङ्ख्यानम् *(म.भा.2.82)। तकि--तक्यम्। शसि--शस्यम्। चति--चत्यम्। यति--यत्यम्। जनि--जन्यम्। *हनो वा वध च *(म.भा.2.82)। वध्यम्। घात्यम्।।
</3-1-97>
पोरदुपधात् ।। <3-1-98> ।।
पवर्गान्ताद्धातोरकारोपधाद्यत्प्रत्ययो भवति। ण्यतोऽपवादः। पोरिति किम् ? पाक्यम्। वाक्यम्। अदुपधादिति किम् ? किम् ? कोप्यम्। गोप्यम्। तपरकरणं तत्कालार्थम्। आप्यम्।।
</3-1-98>
शकिसहोश्च ।। <3-1-99> >
`शुक्लृ शक्तौ(धा.पा.1262), `षह सर्षणे(धा.पा.853)-अनयोर्धात्वोर्यत्प्रत्ययो भवति शक्यम्। सह्यम्।।
</3-1-99>
गदमदचरयमश्चानुपसर्गे ।। <3-1-100> ।।
`गद व्यक्तायां वाचि(धा.पा.52), `मदी हर्षे(धा.पा.1209), `चर गतिभक्षणयोः(धा.पा.559), `यम उपरमे(धा.पा.985)-इत्येतेभ्यश्चानुपसर्गेभ्यो यत्प्रत्ययो भवति। गद्यम्। मद्यम्। चर्यम्। यम्यम्। अनुपसर्ग इति किम् ? प्रगाद्यम्। प्रमाद्यम्। यमेः पूर्वेणैव सिद्धेऽनुपसर्गनियमार्थं वचनम्। * चरेराङिचागुरौ *(म.भा.2.83)। आचर्यो देशः। अगुराविति किम् ? आचार्य उपनेता।।
</3-1-100>
अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ।। <3-1-101> ।।
अवद्य, पण्य, वर्या-इत्येते शब्दा निपात्यन्ते; गर्ह्य। पणितव्य, अनिरोध-इत्येतेष्वर्थेषु यथासङ्ख्यम्। अवद्यमिति निपात्यते, गर्ह्यं चेत्तद्भवति। अवद्यं पापम्। अनुद्यमन्यत्। वदः सुपि क्यप् च(3-1-106/2854) । पण्यमिति निपात्यते, पणितव्यं चेत्तद्भवति। पण्यः कम्बलः। पण्या गौः। पाण्यमन्यत्। वर्येति स्त्रियां निपात्यते, अनिरोधश्चेत्तद्भवति। अनिरोधः = अप्रतिबन्धः। शतेन वर्या। सहस्रेण वर्या। वृत्याऽन्या। स्त्रीलिङ्गनिर्देशः किमर्थः ? वार्या ऋत्विजः।।
</3-1-101>
वह्यं करणम् ।। <3-1-102> ।।
वहेर्धातोः करणे यत्प्रत्ययो निपात्यते। वहत्यनेनेति वह्यं शकटम्। करण इति किम् ? वाह्यमन्यत्।।
</3-1-102>
अर्यः स्वामिवैश्ययोः ।। <3-1-103> ।।
`ऋ गतौ(धा.पा.1099)-अस्माण्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत् प्रत्ययो निपात्यते। अर्य स्वामी।
अर्यो वैश्यः। यतोऽनावः(6-1-213/3701) इत्याद्युदात्तत्वे प्राप्ते--*स्वामिन्यन्तोदात्तत्वं च वक्तव्यम् *(म.भा.2.83)। स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः।।
</3-1-103>
उपसर्या काल्या प्रजने ।। <3-1-104> ।।
`उपसर्या इति निपात्यते, काल्या चेत्प्रजने भवति। उपपूर्वात्सर्तेर्यत्प्रत्ययः। प्राप्तकाला = काल्या। प्रजनः = प्रजननम्, प्रथमगर्भग्रहणम्।

गर्भग्रहणे प्राप्तकाला-उपसर्या गौः, उपसर्या वडवा। काल्या प्रजन इति किम्? उपसार्या शरदि मधुरा।।
</3-1-104>
अजर्यं सङ्गतम् ।। <3-1-105> ।।
अजर्यमिति निपात्यते, सङ्गतं चेद्भवति। जीर्यतेर्नञ्पूर्वात्सङ्गते = सङ्गमने कर्तरि यत्प्रत्ययो निपात्यते। न जीर्यतीत्यजर्यम्। अजर्यमार्यसङ्गतम्। अजर्यं नोऽस्तु सङ्गतम्। सङ्गतमिति किम्? अजरिता कम्बलः।।
</3-1-105>
वदः सुपि क्यप् च ।। <3-1-106> ।।
`अनुपसर्गे इति वर्तते। वदेर्धातोः सुबन्ते उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद्यच्च। ब्रह्मोद्यम्, ब्रह्मवद्यम्। सत्योद्यम्, सत्यवद्यम्। सुपीति किम्? वाद्यम्। अनुपसर्ग इत्येव-प्रवाद्यम्।।
</3-1-106>
भुवो भावे ।। <3-1-107> ।।
`सुपि `अनुपसर्गे इत्यनुवर्त्तेते। भवतेर्धातेः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति। यत्तु नानुवर्त्तते। ब्रह्मभूयं गतः, ब्रह्मत्वं गतः। देवभूयं गतः, देवत्वं गतः। भावग्रहणमुत्तरार्थम्। सुपीत्येव-भव्यम्। अनुपसर्ग इत्येव - प्रभव्यम्।।
</3-1-107>
हनस्त च ।। <3-1-108> ।।
`सुपि `अनुसपर्गे इति वर्तते, `भावे इति च । हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप्, प्रत्ययो भवति, तकारश्चान्तादेशः। ब्रह्महत्या। अश्वहत्या। सुपीत्येव-घातः। ण्यत्तु भावे न भवति; अनभिधानात्। अनुपसर्ग इत्येव-प्रघातो वर्त्तते।।
</3-1-108>
एतिस्तुशास्वृदृजुषः क्यप् ।। <3-1-109> ।।
`सुपि `अनुपसर्गे `भावे इति निवृत्तम्। सामान्येन विधानमेतत्। एति, स्तु, शास्, वृ, दृ, जुष्-इत्येतेभ्यः क्यप् प्रत्ययो भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः आदृत्यः। जुष्यः। क्यबिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्। ओरावश्यके(3-1-125/2886) इति ण्यतं बाधित्वा क्यबेव भवति। अवश्यस्तुत्यः। वृग्रहणे वृञो ग्रहणमिष्यते, न वृङः। वार्या ऋत्विजः। * शंसिदुहिगुहिभ्यो वेति वक्तव्यम् *। शस्यम्, शंस्यम्। दुह्यम्, दोह्यम्। गुह्यम्, गोह्यम्। * आङ्पूर्वादञ्जेः संज्ञायामुपसङ्ख्यानम् *(म.भा.2.85)। आज्यं घृतम्। कथमुपेयम्? एरेतद्रूपम् न इणः।।
</3-1-109>
ऋदुपधाच्चाक्लृपिचृतेः ।। <3-1-110> ।।
ऋकारोपधाच्च धातोः क्यप्प्रत्ययो भवति कृपिचृती वर्जयित्वा। वृतु-वृत्यम्। वृधु-वृद्ध्यम्। अक्लृपिचृतेरिति किम् ? कल्प्यम्। चर्त्यम्। तपरकरणं किम् ? `कृत संशब्दने(धा.पा.1654) ण्यदेव भवति-कीर्त्यम्। * पाणौ सृजेर्ण्यद्वक्तव्यः *। पाणिसर्ग्या रज्जुः। * समवपूर्वाञ्च *। समवसर्ग्या।।
</3-1-110>
ई च खनः ।। <3-1-111> ।।
खनेर्धातोः क्यप् प्रत्ययो भवति ईकारश्चान्तादेशः। खेयम्। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारः ये विभाषा(6-4-43/2319) इत्यात्वबाधनार्थः।।
</3-1-111>
भृञोऽसंज्ञायाम् ।। <3-1-112> ।।
भृञो धातोरसंज्ञायां विषये क्यप् प्रत्ययो भवति। भृत्याः कर्मकराः। भर्तव्या इत्यर्थः। असंज्ञायामिति किम् ? भार्यो नाम क्षत्रियः। * सम्पूर्वाद् विभाषा *(म.भा.2.85)सम्भृत्याः,सम्भार्याः।
`संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति।।(म.भा.2.86)
</3-1-112>
मृजेर्विभाषा ।। <3-1-113> ।।
मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति। ऋदुपधत्वात् प्राप्तविभाषेयम्। परिमृज्यः, परिमार्ग्यः।।
</3-1-113>
राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।। <3-1-114> ।।
राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य-इत्येते शब्दाः क्यपि निपात्यन्ते। राज्ञा सोतव्यः, राजा वा इह सूयते राजसूयः क्रतुः। सूसर्त्तिभ्यां क्यप्, सर्त्तेरुत्वम्, सुवतेर्वा रुडागमः। सरति सुवति वा सूर्यः। मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब् निपात्यते। मृषोद्यम्। रोचतेऽसौ रुच्यः। कर्तरि क्यप्। गुपेरादेः कत्वं च संज्ञायाम्। कुप्यम्। गोप्यमन्यत्। कृष्टे पच्यन्ते कृष्टपच्याः। कर्मकर्त्तरि निपातनम्। न व्यथते अव्यथ्यः।।
</3-1-114>
भिद्योद्ध्यौ नदे ।। <3-1-115> ।।

भिदेरुज्झेश्च क्यब् निपात्यते नदेऽभिधेये। उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः। उज्झत्युदकम् उद्ध्यः। नद इति किम् ? भेत्ता। उज्झिता।।
</3-1-115>
पुष्यसिद्ध्यौ नक्षत्रे ।। <3-1-116> ।।
पुषेः सिधेश्चाधिकरणे क्यब् निपात्यते नक्षत्रेऽभिधेये। पुष्यन्त्यस्मिन्नर्था इति पुष्यः। सिद्ध्यन्त्यस्मिन्निति सिद्ध्यः। नक्षत्र इति किम् ? पोषणम्, सेधनम्।।
</3-1-116>
विपूयविनीयजित्या मुञ्जकल्कहलिषु ।। <3-1-117> ।।
विपूय, विनीय, जित्य-इत्येते शब्दा निपात्यन्ते यथासङ्ख्यं मुञ्ज, कल्क, हलि-इत्येतेष्वर्थेषु बोध्येषु। विपूर्वात्पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते कर्मणि क्यब्निपात्यते। विपूयो मुञ्जः, विपाव्यमन्यत्। विनीयः कल्कः, विनेयमन्यत्, जित्यो हलिः, जेयमन्यत्।।
</3-1-117>
प्रत्यपिभ्यां ग्रहेश्छन्दसि ।। <3-1-118> ।।
प्रति, अपि-इत्येवम्पूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये। `मत्तस्य न प्रतिगृह्यम्(का.सं.14.5)। `तस्मान्नापि गृह्यम्(का.सं.27.3)। छन्दसीति किम्ग ? प्रतिग्राह्यम्। अपिग्राह्यम्।
</3-1-118>
पदास्वैरिबाह्यापक्ष्येषु च ।। <3-1-119> ।।
पदेऽस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति। पदे तावत्-प्रगृह्यं पदम्, यस्य प्रगृह्यसंज्ञा विहिता। अवगृह्यं पदम्, यस्यावग्रहः क्रियते। अस्वैरी = परतन्त्रः। गृह्यका इमे। गृहीतका इत्यर्थः। बाह्यायाम्-ग्रामगृह्या सेना। नगरगृह्या सेना। ग्रामनगराभ्यां बहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशादन्यत्र न भवति। पक्षे
भवः पक्ष्यः। वासुदेवगृह्याः। अर्जुनगृह्याः। तत्पक्षाश्रिता इत्यर्थः।।
</3-1-119>
विभाषा कृवृषोः ।। <3-1-120> ।।
कञो वृषेश्च विभाषा क्यप् प्रत्ययो भवति। करोतेर्ण्यति प्राप्ते वर्षतेर्ऋदुपधत्वान्नित्ये क्यपि प्राप्ते विभाषाऽऽरभ्यते। कृत्यम्, कार्यम्। वृष्यम्, वर्ष्यम्।।
</3-1-120>
युग्यं च पत्त्रे ।। <3-1-121> ।।
`युग्यम् इति निपात्यते, पत्त्रं चेत्तद्भवति। पतत्यनेनेति पत्त्रम्, वाहनमुच्यते। युग्यो गौः। युग्योऽश्वः। युग्यो हस्ती। युजेः क्यप् कुत्वं च निपात्यते। पत्त्र इति किम् ? योगमन्यत्।।
</3-1-121>
अमावस्यदन्यतरस्याम् ।। <3-1-122> ।।
अमाशब्दः सहार्थे वर्त्तते। तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत्प्रत्ययो भवति, तत्रान्यतरस्यां वृद्ध्यभावो निपात्यते। सह वसतेऽस्मिन्काले सूर्याचन्द्रमसाविति अमावस्या, अमावास्या। एकदेशविकृतस्यानन्यत्वाद् अमावास्याया वा(4-3-30/1403) इत्यत्रामावस्याशब्दस्यापि ग्रहणं भवति।
`अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति।।(म.भा.2.87)
</3-1-122>
छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।। <3-1-123> ।।
</3-1-123>
निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। निष्टर्क्य इति - `कृती छेदने(धा.पा.1436) इत्यस्मान्निस्पूर्वात्क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते। `निष्टर्क्यं चिन्वीत पशुकामः(ऐ.आ.<5-1-3>)। देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घः, तुगभावश्च-`देवहूयः(श.ब्रा.<2-1-3>.2)। प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्-`प्रणीयः(श.ब्रा.<3-1-3>.1), `उन्नीयः(श.ब्रा.<3-5-16>.12)। उत्पूर्वाच्छिषेः क्यप्-`उच्छष्यः(मै.सं.<3-9-2>)। `मृङ् प्राणत्यागे(धा.पा.1404), `स्तृञ् आच्छादने(धा.पा.1253)- आभ्यां यत्प्रत्ययः। मर्यः(तै.आ.<1-3-2>)। स्तर्या(श.ब्रा,.<2-1-2>.10)। स्त्रियामेव निपातनम्। `ध्वृ हूर्छने(धा.पा.940) ध्वर्यः। खनेर्यत्-खन्या(तै.सं.<7-4-13>.1)। एस्मादेव ण्यत्--खान्यः। देवश्ब उपपदे यजेर्यत्-देवयज्या(ऋ.<10-30-21>)। स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात्पृच्छेः क्यप्-आपृच्छयः(ऋ.<1-60-2>)। प्रतिपूर्वासीव्यतेः। क्यप् षत्वं च-प्रतिषीव्यः(मा.श्रौ.<2-2-2>.35)। ब्रह्मण्युपपदे वदेर्ण्यद्-ब्रह्मवाद्यम्(तै.सं.<2-5-8>.3)। भवतेः स्तौतेश्च ण्यत् आवादेशश्च भवति--भाव्यम्(अ.वे.<13-1-54>)। स्ताव्यः(म.भा.2.88)। उपपूर्वस्य चिनोतेर्ण्यदायादेशौ--उपचाय्यपृडम्(हिरण्यदक्षिणा)(का.सं.11.1)। पृडे चोत्तरपदे निपातनमेतत्। * हिरण्य इति वक्तव्यम् *(म.भा.2.88)। हिरण्यादन्यत्र उपचेयपृडमेव।
` निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात्। ण्यदायादेश इत्येतावुपचाय्ये निपातितौ।।

ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः।।(म.भा.2.89)
</5-1-3>
ऋहलोर्ण्यत् ।। <3-1-124> ।।
पञ्चम्यर्थे षष्ठी, ऋवर्णान्ताद्धातोर्हलन्ताच्च ण्यप्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम्। वाक्यम्। पाक्यम्।।
</3-1-124>
ओरावश्यके ।। <3-1-125> ।।
अवश्यम्भावः = आवश्यकम्। उवर्णान्ताद्धातोर्ण्यत् प्रत्ययो भवत्यावश्यके द्योत्ये। यतोऽपवादः। लाव्यम्। पाव्यम्। आवश्यके इति किम् ? लव्यम्। आवश्यके द्योत्ये इति चेत्स्वरसमासानुपपत्तिः-अवश्यलाव्यम्, अवश्यपाव्यमिति ? नैष दोषः, मयूरव्यंसकादित्वात्समासः, उत्तरपदप्रकृतिस्वरे च यत्नः करिष्यते।।
</3-1-125>
आसुयुवपिरपिलपित्रपिचमश्च ।। <3-1-126> ।।
आङ्पूर्वात्सुनोतेः यु, वपि, रपि, लपि, त्रपि, चम्-इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति। यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। अनुक्तसमुच्चयार्थश्चकारः। दभि-दाभ्यम्।।
</3-1-126>
आनाय्योऽनित्ये ।। <3-1-127> ।।
</3-1-127>
`आनाय्यः इति निपात्यते, अनित्येऽभिधेये। नयतेराङ्पूर्वाण्ण्यदायादेशौ निपात्येते। आनाय्यो दिक्षिणाग्निः। रूढिरेषा। तस्मादनित्यविशेषे दक्षिणाग्नावेवावतिष्ठते। तस्य चानित्यत्वं नित्यमजागरणात्। यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सहैकयोनिस्तत्र एतन्निपातनम्, न दक्षिणाग्निमात्रे; तस्य हि योनिर्विकल्प्यते-- `वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति।।(पार.गृ.<1-2-3>)
`आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत्।
एकयोनौ च तं विद्यादानेयो ह्यन्यथा भवेत्।।i(म.भा.2.89)
</1-2-3>
प्रणाय्योऽसम्मतौ ।। <3-1-128> ।।
</3-1-128>
अविद्यमाना सम्मतिरस्मिन्नित्यसम्मतिः। सम्मननं समतिः = सम्मतता, पूजा। `प्रणाय्यः इति निपात्यतेऽसम्मतावभिधेये। प्रणाय्यश्चोरः। असम्मातावििति किम् ? प्रणेयोऽन्यः। यद्येवम्, कथमेतत्-`ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यान्तेवासिने, नान्यस्मै कस्मैचन(छां.<3-10-5>.6) इति ? सम्मतिरभिलाषोऽप्युच्यते, तदभावेन निष्कामतया असम्मतिरन्तेवासी भवति। तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते।।
</3-10-5>
पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ।। <3-1-129> ।।
</3-1-129>
पाय्यादयः शब्दा निपात्यन्ते यथासङ्ख्यम्; माने, हविषि, निवासे, सामिधेन्यां चाभिधेयायाम्। पाय्य इति-माङो ण्यत्प्रत्ययः, आदेः पत्वं च निपात्यते माने। पाय्यं मानम्। मेययन्यत्। सम्पूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते-`सान्नाय्यं हविः(तै.सं.<7-5-103>)। सन्नेयमन्यत्। रूढित्वाच्च हविर्विशेषेष्ववतिष्ठते। निपूर्वाच्चिनोतेर्ण्यदायादेशावादिकुत्वं च निपात्यते--निकाय्यो निवासः। निचेयमन्यत्। धाय्येति धाञो ण्यत्प्रत्ययो निपात्यते सामिधेनी चेत्सा भवति-धाय्या सामिधेनी। धेयमन्यत्। सामिधेनीशब्द ऋग्विशेषस्य वाचकः, तत्र च धाय्येति न सर्वा सामिधेन्युच्यते, किं तर्हि ? काचिदेव । रूढिशब्दो ह्ययम्। तथा चासामिधेन्यामपि दृश्यते-`धाय्याः शंसत्यग्निर्नेता त्वं सोमक्रतुभिः(ऐ.ब्रा.12.7) इति।।
</7-5-103>
क्रतौ कुण्डपाय्यसञ्चाय्यौ ।। <3-1-130> ।।
कुण्डपाय्य, संचाय्य-इत्येतौ शब्दौ निपात्येते क्रतावभिधेये। कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो निपात्यते, युक्च। कुण्डेन पीयतेऽस्मिन्सोम इति कुण्डपाय्यः क्रतुः। यतोऽनावः(6-1-213/3701) इति स्वरः। सम्पूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते। सञ्चीयतेऽस्मिन् सोम इति सञ्चाय्यः क्रतुः। क्रताविति किम् ? कुण्डपानम्। सञ्चेयः।।
</3-1-130>
अग्नौ परिचाय्योपचाय्यसमूह्याः ।। <3-1-131> ।।
</3-1-131>
परिचाय्य, उपचाय्य, समूह्य-इत्येते शब्दा निपात्यन्ते अग्नावभिधेये। परिपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते। परिचाय्यः(तै.सं.<5-4-11>)। उपचाय्यःग(मै.<3-4-7>)। सम्पूर्वाद्वहेः सम्प्रसारणं, दीर्घत्वं च निपात्यते। `समूह्यं चिन्वीत पुशुकामः(तै.सं.<5-4-11>)। अग्नाविति किम् ? परिचेयम्। उपचेयम्। संवाह्यम्।।

</5-4-11>
चित्याग्निचित्ये च ।। <3-1-132> ।।
चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते। चीयतेऽसौ चित्योऽग्निः। अग्निचयनमेवाग्निचित्या। भावे यकारप्रत्ययस्तुक् च, तेनान्तोदात्तत्वं भवति। अग्नावित्येव। चेयमन्यत्।
</3-1-132>
ण्वुल्तृचौ ।। <3-1-133> ।।
`धातोः इति वर्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः, कर्ता। हारकः, हर्ता। चकारः सामान्यग्रहणाविघातार्थः तुश्छन्दसि(5-3-59/2007), तुरिष्ठेमेयस्सु(6-4-154/2008) इति।।
</3-1-133>
नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।। <3-1-134> ।।
प्रत्येकमादिशब्दः सम्बध्यते। त्रिभ्यो गणेभ्यस्त्रय प्रत्यया यथासङ्ख्यं भवन्ति-नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच्। नन्दिग्रहिपचादयश्च न धातुपाठतः संनिविष्टा गृह्यते, किं तर्हि ? नन्दन रमणेत्येवमादिषु प्रातिपदिकगणेषु अपोद्धृत्य ये पठ्यन्ते ते निर्दिश्यन्ते। * नन्दिवासिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् *। नन्दनः। वासनः। मदनः। दूषणः। साधनः। वर्धनः। शोभनः। रोचनः। * सहितपिदमेः संज्ञायाम् *(ग.सू.3)। सहनः। तपनः। दमनः। जल्पनः। रमणः। दर्पणः। सङ्क्रन्दनः। सङ्कर्षणः। सम्पर्षणः। जनार्दनः। यवनः। मधुसूदनः। विभीषणः। लवणः। निपातनाण्णत्वम्। वित्तविनाशनः। कुलदमनः। शत्रुदमनः। इति नन्द्यादिः।
ग्रह। उत्सह। उद्दस। उद्भास। स्था। मन्त्र। सम्मर्द। ग्राही। उत्साही। उद्दासी। उद्भासी। स्थायी। मन्त्री। सम्मर्दी। * रक्षश्रुवसवपशां नौ *(ग.सू.24)। निरक्षी। निश्रावी। निवासी। निवापी। निशायी। * याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम् *(ग.सू.25)। अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी। * अचामचित्तकर्तृकाणाम् *(ग.सू.26)। प्रतिषिद्धानामित्येव। अकारी। अहारी। अविनायी। अविशायी। * विशयी विषयी देशे *(ग.सू.27)। विशयी, विषयी देशः। * अभिभावी भूते *(ग.सू.28)। अभिभावी। अपराधी। उपरोधी। परिभावी। परिभवी। इति ग्रह्यादिः।
पच। वच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। सेव। मेष। कोप। मेधा। नर्त्त। व्रण। दश। दंश। दम्भ। जारभरा। श्वपच। पचादिराकृतिगणः।
`अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः।
अण्बाधनार्थमेव स्यात्सिध्यन्ति श्वपचादयः।।i(म.भा.2.91)
</3-1-134>
इगुपधज्ञाप्रीकिरः कः ।। <3-1-135> ।।
इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानातीति ज्ञः। प्रीणातीति। प्रियः। किरतीति किरः। देवसेवमेषादयः पचादौ पठितव्याः।।
</3-1-135>
आतश्चोपसर्गे ।। <3-1-136> ।।
आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे कप्रत्ययो भवति। णस्यापवादः। प्रस्थः। सुग्लः। सुम्लः।।
</3-1-136>
पाघ्राध्माधेट्दृशः ।। <3-1-137> ।।
पादिभ्यो धातुभ्य उपसर्ग उपपदे शप्रत्ययो भवति। उत्पिबः। विपिबः। उज्जिघ्र। विजिघ्रः। उध्दमः। धेट्-उध्दयः, विधयः। उत्पश्यः। विपश्यः। `उपसर्गे इति केचिन्नानुवर्तयन्ति-पश्यतीति पश्यः। * जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः *(म.भा.2.92)। व्याघ्रः।।
</3-1-137>
अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।। <3-1-138> ।।
अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययो भवति। लिम्पतीति लिम्पः। विन्दतीति विन्दः। धारयतिति धारयः। पारयतीति पारयः। वेदयतीति वेदयः। उदेजयतीत्युदेजयः। चेतयतीति चेतयः। सातिः सौत्रो धातुः-सातयः। साहयः। अनुपसर्गादिति किम् ? प्रलिपः। * नौ लिम्पेरिति वक्तव्यम् *(म.भा.2.92)। निलिम्पा नाम देवाः। * गवादिषु विन्देः संज्ञायाम् *(म.भा.2.92)। गोविन्दः। अरविन्दः।।
</3-1-138>
ददातिदधात्योर्विभाषा ।। <3-1-139> ।।
दाञो धाञश्च विभाषा शप्रत्ययो भवति। णस्यापवादः। ददः, दायः। दधः, धायः। अनुपसर्गादित्येव--प्रधः। प्रदः।।
</3-1-139>
ज्वलितिकसन्तेभ्यो णः ।। <3-1-140> ।।
इतिशब्दः आद्यर्थः। `ज्वल दीप्तौ(धा.पा.805)--इत्येवमादिभ्यो धातुभ्यः `कसगतौ(धा.पा.861) इत्येवमन्तेभ्यो विभाषा णप्रत्ययो भवति। अचोऽपवादः। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गादित्येव-प्रज्वलः। * तनोतेर्णस्योपसङ्ख्यानं कर्तव्यम् *(म.भा.2.92)। अवतनोतीत्यवतानः।।
</3-1-140>
श्याऽऽद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च ।। <3-1-141> ।।

`अनुपसर्गात् इति `विभाषा इति च निवृत्तम्। श्यैङः, आकारान्तेभ्यश्च धातुभ्यः, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस--इत्येतेभ्यश्च णप्रत्ययो भवति। आकारान्तत्वादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम्। उपसर्गे कं बाधित्वाऽयमेव भवति। अवश्यायः। प्रतिश्यायः। दायः। धायः। व्याधः। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।।

</3-1-141>

दुन्योरनुपसर्गे ।। <3-1-142> ।।

दुनोतेः, नयतेश्चानुपसर्गे णप्रत्ययो भवति। दुनोतीति दावः। नयतीति नायः। अनुपसर्ग इति किम्? प्रदवः। प्रणयः।।

</3-1-142>

विभाषा ग्रहः ।। <3-1-143> ।।

विभाषा ग्रहेर्धातोर्णप्रत्ययो भवति। अचोऽपवादः। ग्राहः, ग्रहः। व्यवस्थितविभाषा चेयम्। जलचरे नित्यम्-ग्राहः। ज्योतिषि नेष्यते, तत्र ग्रह एव। * भवतेश्चेति वक्तव्यम् *। भवतीति भावः, भवः।।

</3-1-143>

गेहे कः ।। <3-1-144> ।।

ग्रहेर्धातोः कप्रत्ययो भवति। गेहे कर्त्तरि। गृहं वेश्म। तात्स्थ्याद्दाराश्च। गृह्णन्तीति गृहा दाराः। गृहाणि = वेश्मानि।।

</3-1-144>

शिल्पिनि ष्वुन् ।। <3-1-145> ।।

धातोः ष्वुन्प्रत्ययो भवति शिल्पिनि कर्त्तरि। * नृतिखनिरञ्जिभ्यः परिगणनं कर्त्तव्यम् *। नर्त्तकः। खनकः। रजकः। नर्त्तकी। खनकी। रजकी। रञ्जेरनुनासिकलोपश्च।

</3-1-145>

गस्थकन् ।। <3-1-146> ।।

गायतेस्थकन्प्रत्ययो भवति शिल्पिनि कर्त्तरि। गाथकः। गाथिका।

</3-1-146>

ण्युट् च ।। <3-1-147> ।।

चकारेण `ग इत्यनुकृष्यते। गायतेर्ण्युट् प्रत्ययो भवति शिल्पिनि कर्त्तरि। गायनः। गायनी। योगविभाग उत्तरार्थः।।

</3-1-147>

हश्च व्रीहिकालयोः ।। <3-1-148> ।।

चकारेण ण्युडनुकृष्यते। जहातेर्जिहातेश्च धातोर्ण्युट् प्रत्ययो भवति, व्रीहौ काले च कर्त्तरि। हायना नाम व्रीहयः-जहत्युदकमिति कृत्वा। काले-हायनः संवत्सरः, जिहीते भवानिति कृत्वा।।

</3-1-148>

प्रुसृल्वः समभिहारे वुन् ।। <3-1-149> ।।

प्रु-सृ-लू--इत्येतेभ्यो धातुभ्यः समभिहारे वुन्प्रत्ययो भवति। प्रवकः। सरकः। लवकः। समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते। साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र भवति। बहुशो यो दुष्टं करोति तत्र न भवति।।

</3-1-149>

आशिषि च <3-1-150> ।।

आशिषि गम्यमानायां धातुमात्राद् वुन्प्रत्ययो भवति। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः = प्रार्थनाविशेषः। स चेह क्रियाविषयः। अमुष्याः क्रियाया कर्त्ता भवेत् इत्येवमाशास्यते।।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ

तृतीयाध्यायस्य प्रथमः पादः।

</3-1-150>

# काशिका/तृतीयोऽध्यायः /द्वितीयः पादः

https://sa.wikisource.org/s/pbe

< काशिका | तृतीयोऽध्यायः

।। अथ तृतीयाध्याये द्वितीयः पादः।।

कर्मण्यण् ।। 3-2-1 ।।

त्रिविधं कर्म--निर्वर्त्यम्, विकार्यम्, प्राप्यं चेति। सर्वत्र कर्मण्युपपदे धोतोरण्प्रत्ययो भवति। निर्वर्त्यं तावत्--कुम्भकारः, नगरकारः। विकार्यम्-काण्डलावः। शरलावः। प्राप्यम्-वेदाध्यायः। चर्चापारः। ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यत्र न भवति; अनभिधानात्। * शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् *(म.भा.2.94)। मांसशीलः, मांसशीला। मांसकामः, मांसकामा। मांसभक्षः, मांसभक्षा। कल्याणाचारः। कल्याणाचारा। * ईक्षिक्षमिम्यां चेति वक्तव्यम् *(म.भा.2.95)। सुखप्रतीक्षः, सुखप्रतीक्षा। बहुक्षमः, बहुक्षमा।।

ह्वावामश्च ।। 3-2-2 ।।

`ह्वेञ् स्पर्धायां शब्दे च(धा.पा.1009), `वेञ् तन्तुसन्ताने(धा.पा.1007), `माङ् माने(धा.पा.1089) इत्येतेभ्यश्च कर्मण्युपपदेऽण् प्रत्ययो भवति। कप्रत्ययापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यवायः।।

आतोऽनुपसर्गे कः ।। 3-2-3 ।।

आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्। अनुपसर्ग इति किम् ? गोसन्दायः। वडवासन्दायः।

सुपि स्थः ।। 3-2-4 ।।

सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवति। समस्थः। विषमस्थः। अत्र योगविभागः कर्तव्यः-सुपीति। सुप्याकारान्तेभ्यः कप्रत्ययो भवति। द्वाभ्यां पिबतीति द्विपः। पादपः। कच्छपः। ततः स्थ इति। स्थश्च सुपि कप्रत्ययो भवति। किमर्थमिदम् ? कर्तरि पूर्वयोगः, अनेन भावेऽपि यथा स्यात् आखूनामुत्थानम् आखूत्थः। शलभोत्थः। इत उत्तरं कर्मणि इति च सुपीति च द्वयमप्यनुवर्तते। तत्र सकर्मकेषु धातुषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति।।

तुन्दशोकयोः परिमृजापनुदोः ।। 3-2-5 ।।

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्रो जातः। * आलस्यसुखाहरणयोरिति वक्तव्यम् * (म.भा.2.98)। अलसस्तुन्दपरिमृज उच्यते। तुन्दपरिमार्ज एवान्यः। सुखस्याहर्ता शोकापनुदः। शोकापनोद एवान्यः।

- कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् *(म.भा.298)। मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंषि। काकगुहास्तिलाः। कौ मोदते कुमुदम्।।

प्रे दाज्ञः ।। 3-2-6 ।।

सोपसर्गार्थ आरम्भः। ददातेर्जानातेश्च धातोः प्रेणोपसृष्टात्कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्र इति किम् ? गोसन्दायः।।

समि ख्यः ।। 3-2-7 ।।

सोपसर्गार्थ आरम्भः। सम्पूर्वात् `ख्या-इत्येतस्माद्धातोः कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। गां सञ्चष्टे गोसङ्ख्यः।।

गापोष्टक् ।। 3-2-8 ।।

`कर्मण्यनुपसर्गे इति वर्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति। कस्यापवादः। शक्रं गायति शक्रगः। सामगः। शक्रगी। सामगी। * सुराशीध्वोः पिबतेरिति वक्तव्यम् *(म.भा.2.99)। सुरापः। सुरापी। शीधुपः। शीधुपी। सुराशीध्वोरिति किम् ? सुरां पातीति सुरापा। अनुपसर्ग इत्येव-शक्रसङ्गायः। सामसङ्गायः। * बहुलं छन्दसीति वक्तव्यम् *(म.भा.2.99)। या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति।।(म.भा.2.99)

हरतेरनुद्यमनेऽच् ।। 3-2-9 ।।

हरतेर्धातोरनुद्यमने वर्तमानात्कर्मण्युपपदेऽच् प्रत्ययो भवति अणोऽपवादः। उद्यमनम् = उत्क्षेपणम्। अंशं हरतीत्यंशहरः। रिक्थहरः। अनुद्यमन इति किम् ? भारहारः। * अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम् *। श्क्तिग्रहः। लाङ्गलग्रहः। अङ्कुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। घटीग्रहः। धनुर्ग्रहः। * सूत्रे च धार्यर्थे *। सूत्रग्रहः। सूत्रं धारयतीत्यर्थः। सूत्रग्राह एवान्यः।।

वयसि च ।। 3-2-10 ।।

वयसि गम्यमाने हरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति। उद्यमनार्थोऽयमारम्भः। कालकृता शरीरावस्था यौवनादिः = वयः। यदुद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति तत्रायं विधिः। अस्थिहरः श्वा। कवचहरः क्षत्रियकुमारः।।

आङि ताच्छील्ये ।। 3-2-11 ।।

आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति ताच्छील्ये गम्यमाने। ताच्छील्यम् = तत्स्वभावता। पुष्पाहरः। फलाहरः। पुष्पाद्याहरणे स्वाभाविकी फलानपेक्षा प्रवृत्तिरस्येत्यर्थः। ताच्छील्य इति किम् ? भारमाहरतीति भाराहारः।।

अर्हः ।। 3-2-12 ।।

`अर्ह पूजायाम्(धा.पा.740)-अस्माद्धातोः कर्मण्युपपदेऽच् प्रत्ययो भवति। अणोऽपवादः। स्त्रीलिङ्गे विशेषः। पूजार्हा। गन्धार्हा। मालार्हा।।

स्तम्बकर्णयो रमिजपोः ।। 3-2-13 ।।

स्तम्ब, कर्ण-इत्येतयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति। रमेरकर्मकत्वात्, जपेः शब्दकर्मकत्वात्कर्म न सम्भवतीति `सुपि इत्येतदिहाभिसम्बध्यते। * हस्तिसूचकयोरिति वक्तव्यम् *(म.भा.2.99)। स्तम्बे रमते इति स्तम्बेरमः हस्ती। कर्णे जपतीति कर्णेजपः सूचकः। हस्तिसूचकयोरिति किम् ? स्तम्बे रन्ता। कर्णे जपिता मशकः।।

शमि धातोः संज्ञायाम् ।। 3-2-14 ।।

शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच्प्रत्ययो भवति। शङ्करः। शम्भवः। शंवदः। धातुग्रहणं किम्, यावता धातोरिति वर्तत एव ? `शमि संज्ञायाम् इति सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्(म.भा.2.100)। शङ्करा नाम परिव्राजिका। शङ्करा नाम शकुनिका। तच्छीला च ।।

अधिकरणे शेतेः ।। 3-2-15 ।।
`सुपि इति सम्बध्यते। शेतेर्धातोरधिकरणे सुबन्त उपपदेऽच्प्रत्ययो भवति। खे शेते खशयः। गर्तशयः। * पार्श्वादिषूपसङ्ख्यानम् *(म.भा.2.100)। पार्श्वाभ्यां शेते पार्श्वशयः। उदरशयः। पृष्ठशयः। * दिग्धसहपूर्वाच्च *(म.भा.2.100)। दिग्धेन सह शेते दिग्धसहशयः। * उत्तानादिषु कर्तृषु *(म.भा.2.100)। उत्तानः शेते उत्तानशयः। अवमूर्द्धा शेते अवमूर्द्धशयः। * गिरौ डश्छन्दसि *(म.भाय2.100)। गिरौ शेते गिरिशः।।
चरेष्टः ।। 3-2-16 ।।
`अधिकरणे इति वर्त्तते। चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति। कुरुषु चरतीति कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी। प्रत्ययान्तरकरणं ङीबर्थम्।।
भिक्षासेनादायेषु च ।। 3-2-17 ।।
अनधिकरणार्थ आरम्भः। भिक्षा, सेना, आदाय-इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवति। भिक्षाचरः। सेनाचरः। आदायचरः।।
पुरोऽग्रतोऽग्रेषु सर्त्तेः ।। 3-2-18 ।।
पुरस्, अग्रतस्, अग्रे-इत्येतेषूपदेषु सर्तेर्धातोष्टप्रत्ययो भवति। पुरः सरति पुरःसरः। अग्रतःसरः। अग्रेसरः।।
पूर्वे कर्त्तरि ।। 3-2-19 ।।
पूर्वशब्दे कर्तृवाचिन्युपपदे सर्त्तेर्धातोष्टप्रत्ययो भवति। पूर्वः सरतीति पूर्वसरः। कर्त्तरीति किम् ? पूर्वं देशं
सरतीति पूर्वसारः।।
कृञो हेतुताच्छील्यानुलोम्येषु ।। 3-2-20 ।।
कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने। हेतुः = ऐकान्तिकं कारणम्। ताच्छील्यम् = तत्स्वभावता। आनुलोम्यम् = अनुकूलता। हेतौ तावत्-शोककरी कन्या। यशस्करी विद्या। कुलकरं धनम्। ताच्छील्ये-श्राद्धकरः। अर्थकरः। आनुलोम्ये-प्रैषकरः। वचनकरः। एतेष्विति किम् ? कुम्भकारः। नगरकारः।।
दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।। 3-2-21 ।।
`कर्मणि `सुपि इति च द्वयमप्यनुवर्त्तते। तत्र यथायोगं सम्बन्धः। दिवादिषूपपदेषु करोतेर्धातोष्टप्रत्ययो भवति। अहेत्वाद्यर्थ आरम्भः। दिवाशब्दोऽधिकरणवचनः `सुपि इत्यस्य विशेषणम्। दिवा करोति प्राणिनश्चेष्टायुक्तानिति दिवाकरः। विभां करोतीति विभाकरः। निशाकरः। प्रभाकरः। भास्करः। सकारस्य निपातनाद्विसर्जनीयजिह्वामूलीयौ न भवतः। कारकरः। अन्तकरः। अनन्तकरः। आदिकरः। बहुकरः। नान्दीकरः। किङ्करः। लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। कर्तृकरः। चित्रकरः। क्षेत्रकरः। सङ्ख्या-एककरः, द्विकरः, त्रिकरः। जङ्घाकरः। बाहुकरः। अहस्करः। यत्करः। तत्करः। धनुष्करः। अरुष्करः। * किंयत्तद्बहुषु कृञोऽज्विधानम् *(म.भा.2.101)। किङ्करा। यत्करा। तत्करा। बहुकरा। अथ वा-अजादिषु पाठः करिष्यते।।
कर्मणि भृतौ ।। 3-2-22 ।।
`कर्मणि इति स्वरूपग्रहणम्। कर्मवाचिनि कर्मशब्द उपपदे करोतेष्टप्रत्ययो भवति भृतौ गम्यमानायाम्। भृतिः = वेतनम्, कर्मनिर्वेशः। कर्म करोतीति कर्मकरः। भृतक इत्यर्थः। भृताविति किम् ? कर्मकारः।
न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।। 3-2-23 ।।
शब्दादिषूपपदेषु करोतेष्टप्रत्ययो न भवति। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः।।
स्तम्बशकृतोरिन् ।। 3-2-24 ।।
स्तम्ब, शकृत्-इत्येतयोः कर्मणोरुपपदयोरिन्प्रत्ययो भवति * व्रीहिवत्सयोरिति किम् *(म.भा.2.101)। स्तम्बकरिः व्रीहिः। शकृत्करिः वत्सः। व्रीहिवत्सयोरिति किम्? स्तम्बकारः। शकृत्कारः।।
हरतेर्दृतिनाथयोः पशौ ।। 3-2-25 ।।
दृति, नाथ-इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्तरि इन्प्रत्ययो भवति। दृतिं हरति दृतिहरिः पशुः। नाथहरिः पशुः। पशाविति किम् ? दृतिहारः। नाथहारः।।
फलेग्रहिरात्मम्भरिश्च ।। 3-2-26 ।।
फलेग्रहिः, आत्मम्भरिः-इत्येतौ शब्दौ निपात्येते। फलशब्दस्योपपदस्य एकारान्तत्वमिन्प्रत्ययश्च ग्रहेर्निपात्यते। फलानि गृह्णातीति फलेग्रहिर्वृक्षः। आत्मशब्दस्य उपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते। आत्मानं बिभर्ति आत्मम्भरिः। अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः।।
छन्दसि वनसनरक्षिमथाम् ।। 3-2-27 ।।
`वन षण सम्भक्तौ(धा.पा.463/464), `रक्ष पालने(धा.पा.658), `मथे विलोडनें(धा.पा.42)-इत्येतेभ्यः कर्मण्युपपदे छन्दसि विषये इन्प्रत्ययो भवति। `ब्रह्मवनिं त्वा क्षत्रवनिम् सुप्रजावनिं रायस्पोषवनिं पर्यूहामि(तै.सं.1-3-1.2)। `गोसनिं वाचमुदेयम्।(अ.वे.3-20-10) `यौ पथिरक्षी श्वानौ(अ.वे.8,1,9)। `हविर्मथीनामभ्या3 विवासताम्।।(ऋ.7-104-20)
एजेः खश् ।। 3-2-28 ।।
`एजृ कम्पने(धा.पा.234)-इत्यस्माद् ण्यन्तात्कर्मण्युपपदे खश्प्रत्ययो भवति। खकारोऽयं मुमर्थः। शकारः सार्वधातुकसंज्ञार्थ। अङ्गमेजयति अङ्गमेजयः। जनमेजयः। * खश्प्रकरणे
वातशुनीतिलशर्धेष्वजधेट्तुदजहातीनामुपसङ्ख्यानम् *(म.भा.2.102)। वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः।।
नासिकास्तनयोर्ध्माधेटोः ।। 3-2-29 ।।
नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति। यथासङ्ख्यमत्र नेष्यते। * स्तने धेटः *(म.भा.2.102)। स्तनन्धयः। * नासिकायां तु ध्मश्च धेटश्च *(म.भा.2.102)। नासिकन्धमः। नासिकन्धयः। तच्चैतन्नासिकास्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते। धेटष्टित्वात् स्त्रियां ङीप् प्रत्ययो भवति स्तनन्धयी।।
नाडीमुष्टयोश्च ।। 3-2-30 ।।
नाडी, मुष्टि-इत्येतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् प्रत्ययो भवति। अत्रापि घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्, तेन सङ्ख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः। घटिन्धमः। घटिन्धयः। खरिन्धमः। खरिन्धयः। वातन्धमः पर्वतः। वातन्धयः।।

उदि कूले रुजिवहोः ।। 3-2-31 ।।
`रुजो भङ्गे(धा.पा.1417), `वह प्रापणे(धा.पा.1005)-इत्येताभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् प्रत्ययो भवति। कूलमुद्रुजतीति कूलमुद्रुजो रथः। कूलमुद्वहः।।
वहाभ्रे लिहः ।। 3-2-32 ।।
वह, अभ्र-इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खश्प्रत्ययो भवति। वहं लेढीति वहंलिहो वायुः।।
परिमाणे पचः ।। 3-2-33 ।।
परिमाणं प्रस्थादि, तस्मिन्कर्मण्युपपदे पचेः खश्प्रत्ययो भवति। प्रस्थं पचति प्रस्थम्पचा स्थाली। द्रोणम्पचः, खारिम्पचः कटाहः।।
मितनखे च ।। 3-2-34 ।।
मित, नख-इत्येतयोः कर्मणोरुपपदयोः पचेः खश्प्रत्ययो भवति। अपरिमाणार्थ आरम्भः। मितं पचति मितम्पचा ब्राह्मणी। नखम्पचा यवागूः।।
विध्वरुषोस्तुदः ।। 3-2-35 ।।
विधु, अरुस्-इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश्प्रत्ययो भवति। विधुन्तुदः राहुः। अरुन्तुदः।।
असूर्यललाटयोर्दृशितपोः ।। 3-2-36 ।।
असुर्य, ललाट--इत्येतयोः कर्मणोरुपपदयोः दृशितपोर्धात्वोः खश्प्रत्ययो भवति। असूर्यम्पश्या राजदाराः। ललाटन्तप आदित्यः। `असूर्य इति चासमर्थसमासोऽयम्; दृशिना नञः सम्बन्धात् सूर्यं न पश्यन्तीति। गुप्तिपरं चैतत्--एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति।।
उग्रम्पश्येरम्मदपाणिन्धमाश्च ।। 3-2-37 ।।
उग्रम्पश्य, इरम्मद, पाणिन्धम-इत्येते शब्दा निपात्यन्ते। उग्रं पश्यतीत्युग्रम्पश्यः। इरया माद्यतीति इरम्मदः। पाणयो ध्मायन्ते एष्विति पाणिन्धमाः पन्थानः।।
प्रियवशे वदः खच् ।। 3-2-38 ।।
प्रिय, वश-इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् प्रत्ययो भवति। प्रियं वदतीति प्रियंवदः। वशंवदः। चकारः खचि ह्रस्वः(6-4-94/2955) इति विशेषणार्थः। खकारो मुमर्थः। प्रत्ययान्तकरणमुत्तरार्थम्। * खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम् *(म.भा.2.102)। मितम्गमो हस्ती। मितम्गमा हस्तिनी। * विहायसो विह च *(म.भा.2.102)। विहायसा गच्छति विहम्गमः। * खच्च डिद्वा वक्तव्यः *(म.भा.2.103)। विहङ्गः। विहङ्गमः। * डे च विहायसो विहादेशो वक्तव्यः *(म.भा.2.103)। विहगः।।
द्विषत्परयोस्तापेः ।। 3-2-39 ।।
द्विषत्परयोः कर्मणोरुपपदयोस्तापेर्धातोः खच्प्रत्ययो भवति। `तप दाहे(धा.पा.1819) चुरादिः, `तप सन्तापे(धा.पा.986) भ्वादिः--द्वयोरपि ग्रहणम्। द्विषन्तं तापयति द्विषन्तपः। परन्तपः। `द्विषत्परयोः इति
द्वितकारको निर्देशः। तेन स्त्रियां न भवति--द्विषतीं तापयति द्विषतीतापः।।
वाचि यमो व्रते ।। 3-2-40 ।।
वाक्शब्दे कर्मण्युपपदे यमेर्धातोः खच्प्रत्ययो भवति व्रते गम्यमाने। `व्रते इति शस्त्रितो नियम उच्यते। वाचंयम आस्ते। व्रत इति किम् ? वाग्यामः।।
पूःसर्वयोर्दारिसहोः ।। 3-2-41 ।।
पुर, सर्व-इत्येतयोः कर्मणोरुपपदयोर्यथासङ्ख्यं दारिसहोर्धात्वोः खच्प्रत्ययो भवति। पुरं दारयति पुरन्दरः। सर्वंसहो राजा। * भगे च दारेरिति वक्तव्यम् *। भगन्दरः।।
सर्वकूलाभ्रकरीषेषु कषः ।। 3-2-42 ।।
सर्व, कूल, अभ्र, करीष-इत्येतेषु कर्मसूपपदेषु कषेर्धातोः खच् प्रत्ययो भवति। सर्वं कषति सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो गिरिः। करीषङ्कषा वात्या।।
मेघर्त्तिभयेषु कृञः ।। 3-2-43 ।।
मेघ, ऋति, भय-इत्येतेषु कर्मसूपपदेषु कृञः खच्प्रत्ययो भवति। मेघकरः। ऋतिकरः। भयङ्करः। * उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति *। अभयङ्करः।।
क्षेमप्रियमद्रेऽण् च ।। 3-2-44 ।।
क्षेम, प्रिय, मद्र-इत्येतेषु कर्मसूपपदेषु करोतेरण्प्रत्ययो भवति, चकारात्खच्च। क्षेमकारः, क्षेमङ्करः। प्रियकारः, प्रियङ्करः। मद्रकारः, मद्रङ्करः। `वा इति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्।।
आशिते भुवः करणभावयोः ।। 3-2-45 ।।
अत्र `सुपि इत्युपतिष्ठते। आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति। आशितो भवत्यनेन आशितम्भव ओदनः। भावे-आशितस्य भवनम् आशितम्भवं वर्तते।।
संज्ञायां भृतॄवृजिधारिसहितपिदमः ।। 3-2-46 ।।
`कर्मणि इति `सुपि इति च प्रकृतं संज्ञावशाद्यथासम्भवं सम्बध्यते। भृ, तॄ, वृ, जि, धारि, सहि, तपि, दम-इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच्प्रत्ययो भवति। विश्वम्भरा, वसुन्धरा। रथन्तरं साम। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्र तपः। अरिन्दमः। संज्ञायामिति किम् ? कुटुम्बं बिभर्त्तीति कुटुम्बभारः।।
गमश्च ।। 3-2-47 ।।
गमेर्धातोः सुप्युपपदे संज्ञायां विषये खच्प्रत्ययो भवति। सुतङ्गमो नाम यस्य सौतङ्गमिः पुत्रः। योगविभाग उत्तरार्थः।।
अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।। 3-2-48 ।।
`संज्ञायाम् इति नानुवर्तते। अन्त, अत्यन्त, अध्वन्, दूर, पार, सर्व, अनन्त-इत्येतेषु कर्मसूपपदेषु गमेर्डप्रत्ययो भवति। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। डकारष्टिलोपार्थः; डित्यभस्याप्यनुबन्धकरणसामर्थ्यादिति। * डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम् *(म.भा.2.103)। सर्वत्रगः। पन्नगः। * उरसो लोपश्च *(म.भा.2.103)। उरसा गच्छतीत्युरगः। * सुदुरोरधिकरणे *(म.भा.2.103)। सुखेन गच्छत्यस्मिन्निति सुगः। दुर्गः। * निरो देशे *। निर्गो देशः। अपर आह--* डप्रकरणेऽन्येष्वपि दृश्यत इति *(म.भा.2.103)। स्त्र्यगारगः। ग्रामगः। गुरुतल्पगः।।

आशिषि हनः ।। 3-2-49 ।।
`ड इति वर्तते। आशिषि गम्यमानायां हन्तेर्धातोः कर्मण्युपपदे डप्रत्ययो भवति। तिमिं वध्यात्तिमिहः। शत्रुहः। आशिषीति किम् ? शत्रुघातः। * दारावाहनोऽणन्तस्य च टः संज्ञायाम् *(म.भा.2.103)। दारावुपपदे आङ्पूर्वाद्धन्तेरण् प्रत्ययो भवति, अन्तस्य च टकारादेशो भवति, संज्ञायां विषये। दारु आहन्ति दार्वाघाटः। * चारौ वा *(म.भा.2.103)। आङ्पूर्वाद्धन्तेश्चारावुपपदेऽण्, अन्तस्य च वा टकारादेशः। वर्णान्सहन्ति वर्णसङ्घाटः, वर्णसङ्घातः। पदानि संहन्ति पदसङ्घाटः, पदसङ्घातः।।
अपे क्लेशतमसोः ।। 3-2-50 ।।
अपपूर्वाद्धन्तेः क्लेशतमसोः कर्मणोरुपपदयोर्डप्रत्ययो भवति। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः। अनाशीरर्थ आरम्भः ।।
कुमारशीर्षयोर्णिनिः ।। 3-2-51 ।।
`हनः इति वर्तते। कुमार, शीर्ष-इत्येतयोरुपपदयोः हन्तेर्णिनिः प्रत्ययो भवति। कुमारघाती। शीर्षघाती। निपातनाच्छिरसः शीर्षभावः।।
लक्षणे जायापत्योष्टक् ।। 3-2-52 ।।
हन्तेर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्तरि टक् प्रत्ययो भवति। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली। अथ वा-लक्षणे द्योत्ये टक्प्रत्ययः।।
अमनुष्यकर्तृके च ।। 3-2-53 ।।
अमनुष्यकर्तृके वर्तमानाद्धन्तेर्धातोः कर्मण्युपपदे टक् प्रत्ययो भवति। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्। अमनुष्यकर्तृके इति किम् ? आखुघातः शूद्रः। इह कस्मान्न भवति- चौरघातो हस्ती ? कृत्यल्युटो बहुलम्(3-3-113/2841) इति बहुलवचनादण् भवति।।
शक्तौ हस्तिकपाटयोः ।। 3-2-54 ।।
शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति। मनुष्यकर्तृकार्थ आरम्भः। हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः। कं पाटयति प्रविशत इति कपाटघ्नश्चौरः। शक्ताविति किम् ? विषेण हस्तिनं हन्ति हस्तिघातः।।
पाणिघताडघौ शिल्पिनि ।। 3-2-55 ।।
पाणिघ, ताडघ-इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि। पाणि, ताड-इत्येतयोः कर्मणोरुपपदयोर्हन्तेर्धातोः कः प्रत्ययो भवति, तस्मिंश्च परतो हन्तेष्टिलोपः, घत्वं च निपात्यते। पाणिघः। ताडघः। शिल्पिनीति किम् ? पाणिघातः। ताडघातः। * राजघ उपसङ्ख्यानम् *(म.भा.2.104)। राजानं हन्ति राजघः।।
आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।। 3-2-56 ।।
आढ्यादिषु कर्मसूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु करोतेर्धातोः करणे कारके ख्युन्प्रत्ययो भवति। च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः च्व्यन्ताः, अच्व्यन्ताश्च। तत्र च्व्यन्ताः पर्युदस्यन्ते-अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम्। सुभगङ्करणम्। पलितङ्करणम्। नग्नङ्करणम्। अन्धङ्करणम्। प्रियङ्करणम्। च्व्यर्थेष्विति किम् ? आढ्यं तैलेन कुर्वन्ति, अभ्यञ्जन्तीत्यर्थः। प्रकृतेरविवक्षायामभूतप्रादुर्भावेऽपि प्रत्युदाहरणं भवति। अच्वाविति किम् ? आढ्यीकुर्वन्त्यनेन। ननु च ख्युना मुक्ते ल्युटा भवितव्यम्, न च ल्युटः ख्युनश्च विशेषोऽस्ति, तत्र किं प्रतिषेधेन? एवं तर्हि प्रतिषेधसामर्थ्यात्ख्युन्यसति ल्युडपि न भवति। तेन ल्युटोऽप्ययमर्थतः प्रतिषेधः। उत्तरार्थश्च च्विप्रतिषेधः क्रियते।।
कर्तरि भुवः खिष्णुच्खुकञौ ।। 3-2-57 ।।
आढ्यादिषु सुबन्तेषूपपदेषु च्व्यर्थेष्वच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके खिष्णुच्, खुकञ्-इत्येतौ प्रत्ययौ भवतः। अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः, आढ्यम्भावुकः। सुभगम्भविष्णुः, सुभगम्भावुकः। स्थूलम्भविष्णुः, स्थूलम्भावुकः। पलितम्भविष्णुः, पलितम्भावुकः। नग्नम्भविष्णुः, नग्नम्भावुकः। अन्धम्भविष्णुः, अन्धम्भावुकः। प्रियम्भविष्णुः, प्रियम्भावुकः। कर्तरीति किम् ? करणे मा भूत्। च्व्यर्थेष्वित्येव--आढ्यो भविता। अच्वावित्येव-आढ्यीभविता।।
`उदात्तत्वाद्भुवः सिद्धम्कारादित्वमिष्णुचः।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते।।(म.भा.2.106)
स्पृशोऽनुदके क्विन् ।। 3-2-58 ।।
स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययो भवति। ननु च सकर्मकत्वात्स्पृशेः कर्मैवोपपदं प्रप्नोति ?
नैष दोषः;कर्तरीति पूर्वसूत्रादनुवर्तते, तत्कर्तृप्रचयार्थं विज्ञायते। सुबन्तमात्रे चोपपदे कर्तृप्रचयो लभ्यते। घृतं स्पृशति घृतस्पृक्। मन्त्रेण स्पृशति मन्त्रस्पृक्। जलेन स्पृशति जलस्पृक्। अनुदक इति किम् ? उदकस्पर्शः। नकारः क्विन्प्रत्ययस्य कुः(8-2-62/377) इति विशेषणार्थः।।
ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।। 3-2-59 ।।
ऋत्विगादयः पञ्च शब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते, अपरे त्रयो धातवो निर्दिश्यन्ते। ऋतुशब्दे उपपदे यजेर्धातोः क्विन् प्रत्ययो निपात्यते-ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति ऋत्विक्। रूढिरेषा यथाकथञ्चिदनुगन्तव्या। धृषेः क्विन्प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च निपात्यते-धृष्णोतीति दधृक्। कृजेः कर्मणि क्विन्निपात्यते-दिशन्ति तामिति दिक्। उत्पूर्वात्स्निहेः क्विन्, उपसर्गान्तलोपः, षत्वं च निपात्यते-उष्णिक्। अञ्चु, युजि, क्रुञ्च-इत्येतेषां धातूनां क्विन्प्रत्ययो भवति। निपातनैः सह निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्यमस्ति। अञ्चतेः सुबन्तमात्र उपपदे क्विन्प्रत्ययो भवति-प्राङ्, प्रत्यङ्, उदङ्। युजेः क्रुञ्चेश्च केवलादेव-युङ्, युञ्जौ, युञ्जः। सोपपदात्तु सत्सूद्विष(3-2-61/2975) इत्यादिना क्विप् भवति। अश्वयुक्, अश्वयुजौ, अश्वयुजः। क्रुङ्, क्रुञ्चौ, क्रुञ्चः। नलोपः कस्मान्न भवति ? निपातनसाहचर्यात्।।
त्यदादिषु दृशोऽनालोचने कञ्च ।। 3-2-60 ।।
त्यदादिषूपपदेषु दृशेर्धातोरनालोचनेऽर्थे वर्तमानात्कञ् प्रत्ययो भवति, चकारात्क्विन् च । त्यादृक्, त्यादृशः। तादृक्, तादृशः। यादृक्, यादृशः। कञो ञकारो विशेषणार्थः-ठक्, ठञ्, ञिति। अनालोचन इति किम् ? तं पश्यति तद्दर्शः। तादृगादयो हि रूढिशब्दप्रकाराः, नैवात्र दर्शनक्रिया विद्यते। * समानान्ययोश्चेति वक्तव्यम् *(म.भा.2.107)। सदृक्, सदृशः। अन्यादृक्, अन्यादृशः। * दृशेः क्सश्च वक्तव्यः *(म.भा.2.107)। यादृक्षः, तादृक्षः, अन्यादृक्षः, कीदृक्षः।।
सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजीनीराजामुपसर्गेऽपि क्विप् ।। 3-2-61 ।।
`सुपि इत्यनुवर्तते। कर्मग्रहणं तु स्पृशोऽनुदके क्विन्(3-2-58/432) इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यो धातुभ्यः सुबन्ते उपपदे उपसर्गेऽपि, अनुपसर्गेऽपि क्विप्प्रत्ययो भवति। उपसर्गग्रहणं ज्ञापनार्थम्-अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति, वदः सुपि क्यप् च(3-1-106/2854) इति। `सू इति द्विषा(धा.पा.1014) साहचर्यात् सूतेरादादिकस्यग(धा.पा.1032) ग्रहणम्, न सुवतेस्तौदादिकस्य(धा.पा.1409)। `युजिर् योगे(धा.पा.1445), `युज् समाधौ(धा.पा.1178)-द्वयोरपि ग्रहणम्। `विद ज्ञाने(धा.पा.1065), `विद सत्तायाम्()धा.पा.1172, `विद विचारणे(धा.पा.1451)-त्रयाणामपि ग्रहणम्, न लाभार्थस्य विदेः(धा.पा.1433); अकारस्य विवक्षितत्वात्। सत्-`शुचिषत्(ऋ.4-40-5)। `अन्तरिक्षसत्(ऋ.4-40-5)। `उपसत्(तै.सं.6-2-3.2)। सूः-

अण्डसूः। शतसूः। `प्रसूः(तै.सं.4-7-3.2)। द्विष-मित्रद्विट्। प्रद्विट्। द्रुह-`मित्रध्रुक्(मै.सं.4-3-4)। प्रध्रुक्। दुह-गोधुक्। प्रधुक्। युज्-अश्वयुक्। प्रयुक्। विद-वेदवित्। प्रवित्। ब्रह्मवित्। भिद-काष्ठभित्। प्रभित्। छिद-रज्जुच्छिद्। प्रच्छद्। जि-शत्रुजित्। प्रजित्। नी-सेनानीः। प्रणीः। ग्रामणीः। अग्रणीः। कथमत्र णत्वम् ? स एषां ग्रामणीः(5-2-78/1878) इति निपातनात्। नयतेः पूर्वपदात् संज्ञायामगः(8-4-3/857) इति णत्वम्। राज-राट्। विराट्। सम्राट्-मो राजि समः क्वौ(8-2-35/126) इति णत्वम्। अन्योभ्योऽपि दृश्यते(3-2-178/3158), क्विप् च(3-2-76/2983) इति सामान्येन वक्ष्यति, तस्यैवायं प्रपञ्चः।।

भजो ण्विः ।। 3-2-62 ।।

`उपसर्गे `सुपि इति वर्तते। भजेर्धातोः सुबन्त उपपदे उपसर्गेऽपि, अनुपसर्गेऽपि ण्विप्रत्ययो भवति। अर्धं भजते अर्धभाक्। उपसर्गेऽपि-प्रभाक्।।

छन्दसि सहः ।। 3-2-63 ।।

`उपसर्गे `सुपि इत्येव। छन्दसि विषये सहेर्धातोः सुबन्त उपपदे ण्विप्रत्ययो भवति। तुराषाट्-सहेः साडः सः(8-3-56/335) इति षत्वम्, अन्येषामपि दृश्यते(6-3-137/3539) इति दीर्घत्वम्।।

वहश्च ।। 3-2-64 ।।

वहेर्धातोश्छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति। प्रष्ठवाट्। दित्यवाट्। योगविभाग उत्तरार्थः।।

कव्यपुरीषपुरीष्येषु ञ्युट् ।। 3-2-65 ।।

कव्य, पुरीष, पुरीष्य-इत्येतेषु उपपदेषु छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति। `कव्यवाहनः पितॄणाम्(तै.सं.2-5-8.6)। `पुरीषवाहनः(वा.सं.11.44)। `पुरीष्यवाहनः(मै.सं.2-7-4)।।

हव्येऽनन्तः पादम् ।। 3-2-66 ।।

हव्यशब्दे उपपदे छन्दसि विषये वहेर्धातोर्ञ्युट् प्रत्ययो भवति, अनन्तः पादं चेद्वहिर्वर्तते। `अग्निश्च हव्यवाहनः(अ.वे.7-20-1)। अनन्तः पादमिति किम् ? `हव्यवाडग्निरजरः पिता नः(ऋ.5-4-2)।।

जनसनखनक्रमगमो विट् ।। 3-2-67 ।।

`छन्दसि, `उपसर्गे, `सुपि इत्यनुवर्तते। `जन जनने(धा.पा.1106), `जनी प्रादुर्भावे(धा.पा.1150) -द्वयोरपि ग्रहणम्। तथा `षणु दाने(धा.पा.1465), `वन षण संभक्तौ(धा.पा.463/464) द्वयोरपि ग्रहणम्। जनादिभ्यो धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट् प्रत्ययो भवति। टकारः सामान्यग्रहणाविघातार्थः-वेरपृक्तस्य(6-1-67/375) इति; विशेषणार्थश्च-विड्वनोरनुनासिकस्यात्(6-4-41/2982) इति। `अब्जाः गोजाः(ऋ.4-40-5)। सन-`गोषा इन्द्रो नृषा असि(ऋ.9-2-10)। खन-`बिसखाः(ऋ.6-1-2)। कूपखाः। क्रम-`दधिक्राः(ऋ.4-38-10)। गम-`अग्रेगा उन्नेतॄणाम्(तै.सं.1-3-6.1)।।

अदोऽनन्ने ।। 3-2-68 ।।

`छन्दसि इति निवृत्तम्। अदेर्धातोरनन्ने सुप्युपपदे विट् प्रत्ययो भवति। आमममत्ति आमात्। सस्यात्। अनन्न इति किम् ? अन्नादः।।

क्रव्ये च ।। 3-2-69 ।।

क्रव्यशब्दे उपपदे अदेर्धातोर्विट् प्रत्ययो भवति। क्रव्यमत्ति क्रव्यात्। पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्। तेनाण्न भवति। कथं तर्हि क्रव्यादः ? कृत्तविकृत्तशब्दे उपपदेऽण्, तस्य च पृषोदरादिपाठात्क्रव्यभावः। कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यादिति।।

दुहः कब् घश्च ।। 3-2-70 ।।

दुहेर्धातोः सुप्युपपदे कप्प्रत्ययो भवति, धकारश्चान्तादेशः। कामदुघा धेनुः। अर्घदुघा। धर्मदुघा।।

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।। 3-2-71 ।।

श्वेतवह, उक्थशस्, पुरोडाश-इत्यतेभ्यो ण्विन् प्रत्ययो भवति मन्त्रे विषये। धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्ध्यर्थम्। प्रत्ययस्तु विधीयत एव। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातो कर्मणि कारके ण्विन्प्रत्ययो भवति। श्वेता एनं वहन्ति, श्वेतवा इन्द्रः। उक्थशब्दे कर्मणि करणे वा उपपदे शंसतेर्धातोर्ण्विन्प्रत्ययो भवति, नलोपश्च निपात्यते। उक्थानि शंसति, उक्थैर्वा शंसति `उक्थशा(ऋ.4-2-16) यजमानः। `दाशृ दाने(धा.पा.882) इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः। `पुरो दाशन्त एनं पुरोडाः(ऋ.3-28-2)। * श्वेतवहादीनां डस्पदस्येति वक्तव्यम् *(म.भा.2.108)। श्वेतवोभ्याम्। श्वेतवोभिः। पदस्येति किम् ? श्वेतवाहौ। श्वेतवाहः।।

अवे यजः ।। 3-2-72 ।।

अवे उपपदे यजेर्धातेर्ण्विन् प्रत्ययो भवति, मन्त्रे विषये। `त्वं यज्ञे वरुणस्यावया असि(काठ.सं.35.65)। योगविभाग उत्तरार्थः।।

विजुपे छन्दसि ।। 3-2-73 ।।

`उप उपपदे यजेश्छन्दसि विषये विच्प्रत्ययो भवति। उपयड्भिरूर्ध्वं वहन्ति। उपयट्त्वम्। छन्दोग्रहणं ब्राह्मणार्थम्। विचश्चित्करणं सामान्यग्रहणाविघातार्थम्-वेरपृक्तस्य(6-1-67/375) इति। किमर्थमिदमुच्यते, यावता अन्येभ्योऽपि दृश्यते(3-2-75/2980) इति यजेरपि विच् सिद्ध एव ? यजेर्नियमार्थमेतत्-उपयजेश्छन्दस्येव, न भाषायामिति।।

आतो मनिन्क्वनिब्वनिपश्च ।। 3-2-74 ।।

`छन्दसि इति वर्तते। `सुपि, `उपसर्गेऽपि इति च। आकारान्तेभ्यो धातुभ्यः सुप्युपपदे छन्दसि विषये मनिन्, क्वनिप्, वनिप्-इत्येते प्रत्यया भवन्ति। चकाराद्विज् भवति। `सुदामा(ऋ.6-20-7)। अश्वत्थामा। क्वनिप्-सुधीवा। सुपीवा। वनिप्-`भूरिदावा(ऋ.9-87-4)। `घृतपावा(ऋ.अतर्व.13-1-24)। विच् खल्वपि--`कीलालपाः(ऋ.10-91-14)। `शुभंयाः(ऋ.4-3-6)। रामस्योपदाः।।

अन्येभ्योऽपि दृश्यन्ते ।। 3-2-75 ।।

`छन्दसि इति निवृत्तम्। अन्येभ्योऽपि धातुभ्योऽनाकारान्तेभ्यो मनिन्, क्वनिप्, वनिप्-इत्येते प्रत्यया दृश्यन्ते, विच्च। सुशर्मा। क्वनिप्-`प्रातरित्वा(ऋ.1-125-1), `प्रातरित्वानौ(काठ.30.1)। वनिप्-`विजावा(ऋ.3-1-23)। `अग्रेगावा(मै.सं.4-14-9)। विच् खल्वपि-`रेडसि पर्णं नयेः(वा.सं.6.18)। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। निरुपपदादपि भवति-`धीवा(अथर्व.3-5-6), `पीवा(मै.सं.2.51)। दृशिग्रहणं प्रयोगानुसरणार्थम्।।

क्विप् च ।। 3-2-76 ।।

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप् प्रत्ययो भवति। उखायाः स्रंसते उखास्रत्। पर्णध्वत्। वाहाद् भ्रश्यति वाहाभ्रट्-अन्येषामपि दृश्यते(6-3-137/3539) इति दीर्घः।।

स्थः क च ।। 3-2-77 ।।

`सुपि `उपसर्गेऽपि इति च वर्तते। `स्था-इत्येतस्माद्धातोः सुप्युपपदे कप्रत्ययो भवति, क्विप् च । किमर्थमिदमुच्यते, यावता सुपि स्थः(3-2-4/2916) इति

कः सिद्ध एव, अन्येभ्योऽपि दृश्यते(3-2-178/3158) इति क्विप् ? बाधकबाधनार्थं पुनर्वचनम्। शमि धातोः संज्ञायाम्(3-2-14/2928) अचं बाधते शंस्थः। शंस्थाः।।

सुप्यजातौ णिनिस्ताच्छील्ये ।। 3-2-78 ।।

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातेर्णिनिप्रत्ययो भवति। उष्णभोजी। शीतभोजी। अजाताविति किम् ? ब्राह्मणानामन्त्रयिता। ताच्छील्य इति किम् ? उष्णं भुङ्क्ते कदाचित्। सुपीति वर्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्यर्थम्। * उत्प्रतिभ्यामाङि सर्त्तेरुपसङ्ख्यानम् *(म.भा.2.109)। उदासारिण्यः। प्रत्यासारिण्यः। * साधुकारिणि च *(म.भा.2.109)। साधुकारी। साधुदायी। * ब्रह्मणि वदः *(म.भा.2.109)। `ब्रह्मवादिनो वदन्ति(तै.सं.2-5-4.1)।।

कर्तर्युपमाने ।। 3-2-79 ।।

कर्तृवाचिनि उपमान उपपदे धातोर्णिनिप्रत्ययो भवति। उपपदकर्त्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा। कर्तरीति किम् ? अपूपानिव भक्षयति माषान्। उपमान इति किम् ? उष्ट्रः क्रोशति।।

व्रते ।। 3-2-80 ।।

व्रत इति शास्त्रतो नियम उच्यते। व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवति। समुदायोपाधिश्चायम्, धातूपपदप्रत्ययसमुदायेन व्रतं गम्यते। स्थण्डिलशायी। अश्राद्धभोजी। कामचारप्राप्तौ नियमः-सति शयने स्थण्डिल एव शेते नान्यत्र, सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति।

व्रते इति किम् ? स्थण्डिले शेते देवदत्तः। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा।।

बहुलमाभीक्ष्ण्ये ।। 3-2-81 ।।

आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिप्रत्ययो भवति। आभीक्ष्ण्यम् = पौनःपुन्यम्। तात्पर्यम् = आसेवैव, ताच्छील्यादन्यत्। कषायपायिणो गान्धाराः। क्षीरपायिण उशीनराः। सौवीरपायिणो बाह्लीकाः। बहुलग्रहणात् कुल्माषखाद इत्यत्र न भवति।।

मनः ।। 3-2-82 ।।

`सुपि इति वर्तते। मन्यतेः सुबन्त उपपदे णिनिप्रत्ययो भवति। दर्शनीयमानी। शोभनमानी। बहुलग्रहणानुवृत्तेर्मन्यतेर्ग्रहणम्, न मनुतेः। उत्तरसूत्रे हि खशप्रत्यये विकरणकृतो विशेषः स्यात्।।

आत्ममाने खश्च ।। 3-2-83 ।।

आत्मनो मननम् = आत्ममानः। आत्ममाने वर्तमानान्मन्यतेः सुप्युपपदे खशप्रत्ययो भवति। चकाराण्णिनिश्च। यदा प्रत्ययार्थः कर्ताऽऽत्मानमेव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदायं विधिः। दर्शनीयमात्मानं मन्यते दर्शनीयम्मन्यः, दर्शनीयमानी। पण्डितम्मन्यः, पण्डितमानी। आत्ममान इति किम् ? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य। अतः सार्वकालिका विधयो वेदितव्याः।।

भूते ।। 3-2-84 ।।

`भूते इत्यधिकारः वर्तमाने लट्(3-2-123/2151) इति यावत्। यदित ऊर्ध्वमनुक्रमिष्यामः `भूते इत्येवं तद्वेदितव्यम्। धात्वधिकाराच्च धात्वर्थे भूते इति विज्ञायते। वक्ष्यति-करणे यजः(3-2-85/2996), अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी। भूत इति किम् ? अग्निष्टोमेन यजते।।

करणे यजः ।। 3-2-85 ।।

णिनिरनुवर्तते, न खश्। यजतेर्धातोः करण उपपदे णिनिप्रत्ययो भवति भूते। अग्निष्टोमयाजी। अग्निष्टोमः फलभावनायां करणं भवति।।

कर्मणि हनः ।। 3-2-86 ।।

कर्मणि उपपदे हन्तेर्धातोर्णिनिप्रत्ययो भतवि भूते काले। पितृव्यघाती। मातुलघाती। * कुत्सितग्रहणं कर्तव्यम् *। इह मा भूत्-चौरं हतवान्।।

ब्रह्मभ्रूणवृत्रेषु क्विप् ।। 3-2-87 ।।

`कर्मणि इति वर्तते। ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्धातोः क्विप् प्रत्ययो भवति भूते। ब्रह्महा। भ्रूणहा। वृत्रहा। किमर्थमिदमुच्यते, यावता सर्वधातुभ्यः क्विब्विहित एव ? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम्। चतुर्विधश्चात्र नियम इष्यते। ब्रह्मादिष्वेव हन्तेर्नान्यस्मिन्नुपपदे, पुरुषं हतवानिति, ब्रह्मादिषु हन्तेरेव नान्यस्मात्स्यात्, ब्रह्माधीतवानिति; ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव, नान्यः प्रत्ययः; तथा भूतकाल एव, नान्यस्मिन्; ब्रह्माणं हन्ति हनिष्यति वेति। तदेतद्वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षणाल्लभ्यते।।

बहुलं छन्दसि ।। 3-2-88 ।।

पूर्वेण नियमादप्राप्तः क्विब्विधीयते। छन्दसि विषये उपपदान्तरेष्वपि हन्तेर्बहुलं क्विप्प्रत्ययो भवति। मातृहा सप्तमं नरकं प्रविशेत्। पितृहा(छां.7.152)। न च भवति-मातृघातः, पितृघातः।।

सुकर्मपापमन्त्रपुण्येषु कृञः ।। 3-2-89 ।।

`कर्मणि इति वर्तते, तदसम्भवात्सुशब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति। स्वादिषु, कर्मसूपपदेषु करोतेर्धातोः क्विप्प्रत्ययो भवति। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। अयमपि नियमार्थ आरम्भः। त्रिविधश्चात्र नियम इष्यते धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमः। धातोरनियतत्वादन्यस्मिन्नप्युपपदे भवति-शास्त्रकृत्, भाष्यकृत्।।

सोमे सुञः ।। 3-2-90 ।।

`कर्मणि इति वर्तते। सोमे कर्मण्युपपदे सुनोतेर्धातोः क्विप् प्रत्ययो भवति। सोमसुत्, सोमसुतौ, सोमसुतः। अयमपि नियमार्थ आरम्भ। चतुर्विधश्चात्र नियम इष्यते-धातुकालोपपदप्रत्ययविषयः।।

अग्नौ चेः ।। 3-2-91 ।।

`कर्मणि इत्येव। अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप्प्रत्ययो भवति। अग्निचित्, अग्निचितौ, अग्निचितः। अत्रापि पूर्ववच्चतुर्विधो नियम इष्यते।।

कर्मण्यग्न्याख्यायाम्।। 3-2-92 ।।

`चेः कर्मणि इति वर्तते। कर्मण्युपपदे चिनोतेः कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायाम्, धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते। श्येन इव चीयते श्येनचित्। कङ्कचित्।

आख्याग्रहणं रूढिसम्प्रत्ययार्थम्। अग्न्यर्थो हीष्टकाचय उच्यते श्येनचिदिति।।

कर्मणीनिर्विक्रियः।। 3-2-93 ।।

कर्मण्युपपदे विपूर्वात्क्रीणातेर्धातोरिनिप्रत्ययो भवति। `कर्मणि इति वर्तमाने पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्। सोमविक्रयी। रसविक्रयी। इह न भवति----धान्यविक्रायः।।

दृशेः क्वनिप्।। 3-2-94 ।।
`कर्मणि इत्येव। दृशेर्धातोः कर्मण्युपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। अन्येभ्योऽपि दृश्यन्ते(3-2-75/2980) इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम्।।
राजनि युधिकृञः।। 3-2-95 ।।
`कर्मणि इत्येव। राजन्शब्दे कर्मण्युपपदे युध्यतेः करोतेश्च क्वनिप्प्रत्ययो भवति। ननु च युधिरकर्मकः ? अन्तर्भावितण्यर्थः सकर्मको भवति। राजयुध्वा। राजानं योधितवानित्यर्थः। राजकृत्वा।।
सहे च।। 3-2-96 ।।
सहशब्दे चोपपदे युधिकृञोर्धात्वोः क्वनिप्प्रत्ययो भवति। असत्ववाचित्वान्नोपपदं कर्मणा विशेष्यते। सहयुध्वा। सहकृत्वा।।
सप्तम्यां जनेर्डः।। 3-2-97 ।।
सप्तम्यन्ते उपपदे जनेधातोः डप्रत्ययो भवति। उपसरे जातः उपसरजः। मन्दुरजः।।
पञ्चम्यामजातौ।। 3-2-98 ।।
पञ्चम्यन्ते उपपदे जातिवर्जिते जनेर्डः प्रत्ययो भवति। बुद्धिजः। संस्कारजः। दुःखजः।
अजाताविति किम् ? हस्तिनो जातः। अश्वाज्जातः।
उपसर्गे च संज्ञायाम्।। 3-2-99 ।।
उपसर्गे चोपपदे जनेर्डः प्रत्ययो भवति संज्ञायां विषये। समुदायोपाधिः संज्ञा। अथेमा मानवीः प्रजाः।।
अनौ कर्मणि।। 3-2-100 ।।
अनुपूर्वाद् जनेः कर्मण्युपपदे डः प्रत्ययो भवति। पुमांसमनुजातः पुमनुजः। स्त्र्यनुजः।।
अन्येष्वपि दृश्यते।। 3-2-101 ।।
अन्येष्वप्युपपदेषु कारकेषु जनेर्डप्रत्ययो दृश्यते। सप्तम्यामित्युक्तम्, असप्तम्यामपि दृश्यते। न जायते इत्यजः। द्विर्जाताः द्विजाः।
पञ्चम्यामजातौ(3-2-18/3008)इत्युक्तम्, जातावपि दृश्यते----ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम्।
उपसर्गे संज्ञायाम्(3-2-99/3009)इत्युक्तम्, असंज्ञायामपि दृश्यते। अभिजाः, परिजाः केशाः।
अनौ कर्मणि(3-2-100/3010) इत्युक्तम्, अकर्मण्यपि दृश्यते---अनुजातः अनुजः।
अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति कारकान्तरेऽपि। परितः खाता परिखा। आखा।।
निष्ठा।। 3-2-102 ।।
क्तक्तवतू निष्ठा(1-1-26/3012) इत्युक्तम्, स निष्ठासंज्ञकः प्रत्ययो भूते भवति। कृतम्, कृतवान्। भुक्तम्, भुक्तवान्।
निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः(म.भा.2.113)। संज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः संज्ञया भाव्यम् ? नैष दोषः; भाविनी संज्ञा विज्ञायते। स भूते भवति यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। सामर्थ्यात् क्तक्तवत्वोर्विधानमेतत्।
*आदिकर्मणि निष्ठा वक्तव्या*(म.भा.2.113)। प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः।।
सुयजोर्ङ्वनिप्।। 3-2-103 ।।
सुनोतेर्यजतेश्च ङ्वनिप् प्रत्ययो भवति। सुत्वा। यज्वा।।
जीर्यतेरतृन्।। 3-2-104 ।।
भूते(3-2-84/2995) इति वर्तते। जीर्यतेरतृन् प्रत्ययो भवति भूते। जरन्। जरन्तौ। जरन्तः। वाऽसरूपेण निष्ठा - जीर्णः, जीर्णवानिति।।
छन्दसि लिट्।। 3-2-105 ।।
`भूते इत्येव। छन्दसि विषये धातोर्लिट् प्रत्ययो भवति। `अहं सूर्यमुभयतो ददर्श(वा.सं.8.9)। `अहं द्यावापृथिवी आततान(तै.ब्रा.1-2-1.33)।
ननु च छन्दसि लुङ्लङ्लिटः(3-4-6/3423) इति सामान्येन लिङ् विहित एव ? धातुसम्बन्धे स विधिः, अयं त्वविशेषेण।।
लिटः कानज्वा।। 3-2-106 ।।
छन्दसि लिटः कानजादेशो भवति वा। `अग्निं चिक्यानः(मै.सं.3-3-9)। `सोमं सुषुवाणः(मै.सं.4-4-10)। `वरुणं सुषुवाणः(तै.सं.2-1-9.1)। न च भवति--`अहं सूर्यमुभयतो ददर्श(वा.सं.8.9)। `अहं द्यावापृथिवी आततान(तै.ब्रा.1-2-1.33)।
लिड्ग्रहणं किम्, न पूर्वस्यैव प्रकृतस्यादेशविधाने विभक्तिविपरिणामो भविष्यति ? लिण्मात्रस्य यथा स्यात्। योऽपि परोक्षे विहितस्तस्याप्ययमादेशो भवति।।
क्वसुश्च।। 3-2-107 ।।
छन्दसि लिटः क्वसुरादेशो भवति। `जक्षिवान्(अ.4-7-3)। `पपिवान्(ऋ.1-61-7) । न च भवति--`अहं सूर्यमुभयतो ददर्श(वा.सं.8.9)। योगविभाग उत्तरार्थः।।
भाषायां सदवसश्रुवः।। 3-2-108 ।।
सद, वस, श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति। आदेशविधानादेव लिडपि तद्विषयोऽनुमीयते। `उपसेदिवान् कौत्सः पाणिनिम्(म.भा.2.115)। तेन मुक्ते यथा प्राप्तं प्रत्यया भवन्ति---उपासदत्, उपासीदत्, उपससाद। अनूषिवान्कौत्सः पाणिनिम्; अन्ववात्सीत्, अन्ववसत्, अनूवास। उपशुश्रुवान्कौत्सः पाणिनिम्, उपाश्रौषीत्, उपाश्रृणोत्, उपशुश्राव।
लुङ्लङ्विषये परस्तादनुवृत्तेः क्वसुर्भवति।।
उपेयिवाननाश्वाननूचानश्च।। 3-2-109 ।।
उपेयिवान् अनाश्वान्, अनूचान् इत्येते शब्दा निपात्यन्ते। उपपूर्वादिणः क्वसुः, द्विर्वचनमभ्यासदीर्घत्वम्, तत्सामर्थ्यादेकादेशप्रतिबन्धः, तत्र वस्वेकाजाद्घसाम्(7-2-67/3096) इत्यनेकाच्त्वादिण्न प्राप्नोति, स निपात्यते। अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः। उपेयिवान्।
क्रादिनियमात्प्राप्तश्च वस्वेकाजाद्घसाम्(7-2-67/3096) इति प्रतिषिद्धः, स पुनरिट् प्रतिप्रसूयते, तेनाजादौ न भवति---उपेयुषः, उपेयुषा।
न चात्रोपसर्गस्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव--समीयिवान्, ईयिवान्।
वावचनानुवृत्तेश्च पूर्ववल्लङादयोऽपि भवन्ति। उपागात्। उपैत्। उपेयाय।
अश्नातेर्नञ्पूर्वात् क्वसुर्निपात्यते, इडभावश्च। अनाश्वान्। नाशीत्। नाश्नात्। नाश।
वचेरनुपूर्वात्कर्तरि कानज्निपात्यते। अनूचानः। अन्ववोचत्। अन्वब्रवीत्। अनूवाच।।

लुङ्।। 3-2-110 ।।
`भूते इत्येव। भूतेऽर्थे वर्त्तमानाद् धातोर्लुङ् प्रत्ययो भवति। अकार्षीत्। अहार्षीत्।
*वसतेर्लुङ् रात्रिविशेषे जागरणसन्ततौ वक्तव्यः*(म.भा.2.118)। क्व भवानुषितः ? अहमत्रावात्सम्।।
अनद्यतने लङ्।। 3-2-111 ।।
`भूते इत्येव। `अनद्यतने इति बहुव्रीहिनिर्देशः। अविद्यमानाद्यतने भूतेऽर्थे वर्त्तमानाद्धातोर्लङ् प्रत्ययो भवति। अकरोत्। अहरत्। बहुव्रीहिनिर्देशः किमर्थः ? अद्य ह्यो वा अभुक्ष्महीति व्यामिश्रे मा भूत्(म.भा.2.118)।
*परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः*(म.भा.2.119)। अरुणद्यवनः साकेतम्। अरुणद्यवनो माध्यमिकानिति।।
अभिज्ञावचने लृट्।। 3-2-112 ।।
अभिज्ञा=स्मृतिः, तद्वचने उपपदे भूतानद्यतने लृट् प्रत्ययो भवति। लङोऽपवादः। अभिजानासि देवदत्त
कश्मीरेषु वत्स्यामः।
वचनग्रहणं पर्यायार्थम्--अभिजानासि स्मरसि बुध्यसे चेतयसे इति।
न यदि।। 3-2-113 ।।
यच्छब्दसहितेऽभिज्ञावचन उपपदे लृट् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम। वासमात्रं स्मर्यते, न त्वपरं किञ्चिल्लक्ष्यते। तेनोत्तरसूत्रस्य नायं विषयः।।
विभाषा साकाङ्क्षे।। 3-2-114 ।।
`यदि इति नानुवर्त्तते। उभयत्रविभाषेयम्, अभिज्ञावचने उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति, साकाङ्क्षश्चेत्प्रयोक्ता। लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति। अभिजानासि देवदत्त कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे। अभिजानासि देवदत्त मगधेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे। यदि खल्वपि--अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः, यत्तत्रौदनं भोक्ष्यामहे। अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम, यत्तत्रौदनमभुञ्ज्महि। वासो लक्षणम्, भोजनं तु लक्ष्यम्।।
परोक्षे लिट्।। 3-2-115 ।।
`भूतानद्यतने इति वर्त्तते। तस्य विशेषणं परोक्षग्रहणम्। भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद्धातोर्लिट् प्रत्ययो भवति।
ननु च धात्वर्थः सर्वः परोक्ष एव ? सत्यमेतत्। अस्ति तु लोके धात्वर्थेनाऽपि कारकेषु प्रत्यक्षाभिमानः। स यत्र नास्ति तत्परोक्षमित्युच्यते। चकार। जहार। उत्तमविषयेऽपि चित्तव्याक्षेपात् परोक्षता सम्भवत्येव, तद्यथा--सुप्तोऽहं किल विललाप।
*अत्यन्तापह्नवे च लिड् वक्तव्यः*(म.भा.2.120)। कलिङ्गेषु स्थितोऽसि ? नाहं कलिङ्गान् जगाम। दक्षिणापथं प्रविष्टोसि ? नाहं दक्षिणापथं प्रविवेश।।
हशश्वतोर्लङ् च।। 3-2-116 ।।
भूतानद्यतनपरोक्षेऽर्थे लिटि प्राप्ते हशश्वतोरुपपदयोर्लङ् प्रत्ययो भवति,चकाराल्लिट् च। इति हाकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच्चकार।।
प्रश्ने चासन्नकाले।। 3-2-117 ।।
`भूतानद्यतनपरोक्षे इति वर्त्तते। तस्य विशेषणमेतत्। प्रष्टव्यः=प्रश्नः। आसन्नकाले पृच्छयमाने भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद्धातोर्लङ्लिटौ प्रत्ययौ भवतः। कश्चित्कञ्चित्पृच्छति - अगच्छद्देवदत्तः ? जगाम देवदत्तः ? अयजद् देवदत्तः? इयाज देवदत्तः ?
प्रश्ने इति किम् ? जगाम देवदत्तः। आसन्नकाल इति किम् ? भवन्तं पृच्छामि। जघान कंसं किल वासुदेवः।।
लट् स्मे।। 3-2-118 ।।
`भूतानद्यतनपरोक्षे इति वर्त्तते। स्मशब्द उपपदे भूतानद्यतनपरोक्षे लट् प्रत्ययो भवति। लिटोऽपवादः। नडेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते।।
अपरोक्षे च।। 3-2-119 ।।
अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्म उपपदे लट् प्रत्ययो भवति। एवं स्म पिता ब्रवीति। इति स्मोपाध्यायः कथयति।।
ननौ पृष्टप्रतिवचने।। 3-2-120 ।।
`अनद्यतने परोक्षे इति निवृत्तम्। भूतसामान्ये विधिरयम्। ननुशब्द उपपदे प्रश्नपूर्वके प्रतिवचने भूतेऽर्थे लट् प्रत्ययो भवति। लुङोऽपवादः। अकार्षीः कटं देवदत्त ? ननु करोमि भोः। अवोचस्तत्र किञ्चिद्देवदत्त ? ननु ब्रवीमि भोः।
पृष्टप्रतिवचन इति किम् ? नन्वकार्षीन्माणवकः।।
नन्वोर्विभाषा।। 3-2-121 ।।
`भूते इत्येव। नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति भूते। अकार्षीः कटं देवदत्त ? न करोमि भोः। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्।।
पुरि लुङ् चास्मे।। 3-2-122 ।।
अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्त्तते। पुराशब्द उपपदे स्मशब्दवर्जिते भूतानद्यतनेऽर्थे विभाषा लुङ् प्रत्ययो भवति लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति। वसन्तीह पुरा छात्राः। अवात्सुः पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः।
अस्म इति किम् ? नडेन स्म पुराधीयते।।
वर्त्तमाने लट्।। 3-2-123 ।।
प्रारब्धोऽपरिसमाप्तश्च वर्तमानः, तस्मिन्वर्तमानेऽर्थे वर्त्तमानाद्धातोः लट् प्रत्ययो भवति। पचति। पठति।।
लटः शतृशानचावप्रथमासमानाधिकरणे।। 3-2-124 ।।
लटः शतृशानचावित्येतावादेशौ भवतः, अप्रथमान्तेन चेत्तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पश्य। पचता कृतम्। पचमानेन कृतम्।
अप्रथमासमानाधिकरणे इति किम् ? देवदत्तः पचति।
`लट् इति वर्तमाने पुनर्लङ्ग्रहणमधिकविधानार्थम् - क्वचित् प्रथमासमानाधिरणेऽपि भवति। सन्ब्राह्मणः। अस्ति ब्राह्मणः। विद्यते ब्राह्मणः। विद्यमानो ब्राह्मणः। जुह्वन्। जुहोति। अधीयानः। अधीते।
*माङ्याक्रोशे*। मा पचन्। मा पचमानः।

केचिद्विभाषाग्रहणमनुवर्तयन्ति -नन्वोर्विभाषा(3-2-121) इति। सा च व्यवस्थिता। तत्र यथादर्शनं प्रयोगा नेतव्याः।।
सम्बोधने च।। 3-2-125 ।।
प्रथमासमानाधिकरणार्थ आरम्भः। सम्बोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः। हे पचन्। हे पचमान।।
लक्षणहेत्वोः क्रियायाः।। 3-2-126 ।।
लक्ष्यते चिह्न्यते येन तल्लक्षणम्। जनकः=हेतुः। धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ चार्थे वर्त्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेल्लक्षणहेतू क्रियाविषयौ भवतः। लक्षणे - शयाना भुञ्जते यवनाः। तिष्ठन्तोऽनुशासति गणकाः। हेतौ - अर्जयन्वसति। अधीयानो वसति।
लक्षणहेत्वोरिति किम् ? पचति। पठति। क्रियाया इति किम् ? द्रव्यगुणयोर्मा भूत् - यः कम्पते सोऽश्वत्थः। यदुत्प्लवते तल्लघु। यन्निषीदति तद्गुरु। लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारलिङ्गम्।।
तौ सत्।। 3-2-127 ।।
तौ शतृशानचौ सत्संज्ञौ भवतः। `तौ ग्रहणमुपाध्यसंसर्गार्थम्। शतृशानज्मात्रस्य संज्ञा भवति। ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः।
सत्प्रदेशाः--पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन(2-2-11/705) इत्येवमादयः।।
पूङ्यजोः शानन्।। 3-2-128 ।।
पूङो यजेश्च धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः।
यदि प्रत्ययाः शानन्नादयो न लादेशाः, कथं सोमं पवमानो नडमाघ्नान इति षष्ठीप्रतिषेधः ? तृन्निति प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः ? लटः शतृ(3-2-124/3100) इत्यतः प्रभृति आ `तृनो(3-2-135/3115) नकारात्।
*द्विषः शतुर्वा वचनम्*। चौरस्य द्विषन्। चौरं द्विषन्।।
ताच्छील्यवयोवचनशक्तिषु चानश्।। 3-2-129 ।।
ताच्छील्यम्=तत्स्वभावता। वयः=शरीरावस्था, यौवनादिः। शक्तिः=सामर्थ्यम्। ताच्छील्यादिषु धातोश्चानश् प्रत्ययो भवति। ताच्छील्ये तावत् - कतीह मुण्डयमानाः। कतीह भूषयमाणाः। वयोवचने - कतीह कवचं
पर्यस्यमानाः। कतीह शिखण्डं वहमानाः। शक्तौ - कतीह निघ्नानाः। कतीह पचमानाः।।
इङ्धार्योः शत्रकृच्छ्रिणि।। 3-2-130 ।।
इङो धारेश्च धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्तरि। अकृच्छ्रः=सुखसाध्यो यस्य कर्तुर्धात्वर्थः सोऽकृच्छ्री। अधीयन् पारायणम्। धारयन्नुपनिषदम्। अकृच्छ्रिणीति किम् ? कृच्छ्रेणाधीते। कृच्छ्रेण धारयति।।
द्विषोऽमित्रे।। 3-2-131 ।।
अमित्रः=शत्रुः, अमित्रे कर्तरि द्विषेर्धातोः शतृप्रत्ययो भवति। द्विषन्, द्विषन्तौ, द्विषन्तः।
अमित्रे इति किम्। द्वेष्टि भार्या पतिम्।।
सुञो यज्ञसंयोगे।। 3-2-132 ।।
यज्ञेन संयोगो यज्ञसंयोगः। यज्ञसंयुक्तेऽभिषवे वर्त्तमानात्सुनोतेर्धातोः शतृप्रत्ययो भवति। सुन्वन्तः। सर्वे यजमानाः सत्त्रिण उच्यन्ते। संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्, याजकेषु मा भूत्।
यज्ञसंयोग इति किम् ? सुनोति सुराम्।।
अर्हः प्रशंसायाम्।। 3-2-133 ।।
प्रशंसा=स्तुतिः। अर्हतेर्द्धातोः प्रशंसायां शतृप्रत्ययो भवति। अर्हन्निह भवान्विद्याम्। अर्हन्निह भवान्पूजाम्।
प्रशंसायामिति किम् ? अर्हति चौरो वधम्।।
आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु।। 3-2-134 ।।
भ्राजभासभाषदीपजीवमीलपाडामन्यतरस्याम्(3-2-177/3157) इति क्विपं वक्ष्यति। आ एतस्मात् क्विप्संशब्दाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायमाङ्, तेन क्विपोऽप्ययमर्थनिर्देशः।
तदिति धात्वर्थः शीलादिविशेषणत्वेन निर्दिश्यते। तच्छीलः= यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्त्तते। तद्धर्मा=तदाचारः, यः स्वधर्मे ममायमिति प्रवर्त्तते विनापि शीलेन। तत्साधुकारी=यो धात्वर्थं साधु करोति। उत्तरत्रैवोदाहरिष्यामः।।
तृन्।। 3-2-135 ।।
सर्वधातुभ्यस्तृन्प्रत्ययो भवति तच्छीलादिषु कर्तृषु। तकारः स्वरार्थः। तच्छीले तावत् - कर्ता कटान्। वदिता जनापवादान्। तद्धर्मणि - मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्। अन्नमपहर्त्तार आह्वरका भवन्ति श्राद्धे सिद्धे। उन्नेतारस्तौल्वलायना भवन्ति पुत्रे जाते। तत्साधुकारिणि - कर्ता कटम्। गन्ता खेटम्।
*तृन्विधावृत्विक्षु चानुपसर्गस्य*(म.भा.2.130)। होता। पोता। अनुपसर्गस्येति किम् ? उद्गाता। प्रतिहर्ता। तृजेव भवति। स्वरे विशेषः।
* नयतेः षुक् च*(म.भा.2.130)। नेष्टा।
* त्विषेर्देवतानामकारश्चोपधाया अनिट्त्वं च*(म.भा.2.131)। त्वष्टा।
* क्षदेश्च नियुक्ते*(म.भा.2.131)। क्षत्ता। क्वचिदधिकृत उच्यते।
* छन्दसि तृच्च*(म.भा.2.131)। `क्षत्तृभ्यः संग्रहीतृभ्यः(वा.सं.16.26) स्वरे विशेषः।।
अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।। 3-2-136 ।।
अलङ्कृञादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलङ्करिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः।
*अलंकृञो मण्डनार्थाद्युचः पूर्वविप्रतिषेधेनेष्णुज्वक्तव्यः*।।
णेश्छन्दसि।। 3-2-137 ।।
ण्यन्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। `दृषदं धारयिष्णवः(शां.आ.12.2)। `वीरुधः पारयिष्णवः(ऋ.1-97-3)।।

भुवश्च।। 3-2-138 ।।
भवतोर्धातोश्छन्दसि विषये तच्छीलादिष्विष्णुच् प्रत्ययो भवति। `भविष्णुः(मै.सं.1-8-1)। योगविभाग उत्तरार्थः। चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुना लोहितचन्दनेन।।
ग्लाजिस्थश्च ग्स्नुः।। 3-2-139 ।।
`छन्दसि इति निवृत्तम्। ग्ला, जि, स्था---इत्येतेभ्यो धातुभ्यश्चकाराद्भुवश्च तच्छीलादिषु ग्स्नुः प्रत्ययो भवति। ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः। गिच्चायं प्रत्ययो न कित्। तेन स्थ ईकारो न भवति। क्ङिति च(1-1-5/2217) इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति। श्र्युकः किति(7-2-11/2381) इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति।।
`क्स्नोर्गित्वान्न स्थ ईकारः कङितोरीत्वशासनात्।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः।।(म.भा.2.132)
*दंशेश्छन्दस्युपसङ्ख्यानम्*। `दङ्क्षणवः पशवः(वा.सं.15-15-3)।।
त्रसिगृधिधृषिक्षिपेः क्नुः।। 3-2-140 ।।
त्रसादिभ्यो धातुभ्यस्तच्छीलादिषु क्नुः प्रत्ययो भवति। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः।।
शमित्यष्टाभ्यो घिनुण्।। 3-2-141 ।।
`इति शब्द आद्यर्थे। शमादिभ्यो धातुभ्योऽष्टाभ्यस्तच्छीलादिषु घिनुण् प्रत्ययो भवति। `शम उपशमे(धा.पा.1202) इत्यतः प्रभृति `मदी हर्षे(धा.पा.1209) इत्येवमन्तः शमादिर्दिवाद्यन्तर्गणः। घकार उत्तरत्र कुत्वार्थः। उकार उच्चारणार्थः। णकारो वृद्ध्यर्थः।
शमी। तमी। दमी। श्रमी। भ्रमी। क्लमी। प्रमादी। उन्मादी। अष्टाभ्य इति किम्? असिता।।
सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च।। 3-2-142 ।।
घिनुणनु वर्तते। सम्पृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादिषु। `पृची सम्पर्के(धा.पा.1463) इति रुधादिर्गृह्यते, न त्वदादिर्लुग्विकरणत्वात्। परिदेविर्भ्वादिर्गृह्यते - `देवृ देवने(धा.पा.500) इति। `क्षिप प्रेरणे(धा.पा.1122/1286) दिवादिस्तुदादिश्च सामान्येन गृह्यते। `युज समाधौ(धा.पा.1178) दिवादिः, `युजिर् योगे(धा.पा.1445) रुधादिः,द्वयोरपि ग्रहणम्। `रञ्ज रागे(धा.पा.1168) इत्यस्य निपातनादनुनासिकलोपः। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती।।
वौ कषलसकत्थस्रम्भः।। 3-2-143 ।।
`कष हिंसार्थः(धा.पा.685) `लस श्लेषणक्रीडनयोः(धा.पा.714),`कत्थ श्लाघायाम्(धा.पा.37),`स्रम्भु विश्वासे(धा.पा.757)इत्येतेभ्यो धातुभ्यो विशब्द उपपदे घिनुण् प्रत्ययो भवति। विकाषी। विलासी। विकत्थी। विस्रम्भी।।
अपे च लषः।। 3-2-144 ।।
`लष कान्तौ(धा.पा.889)अस्माद्धातोरप उपपदे, चकाराद्वौ च घिनुण् भवति। अपलाषी। विलाषी।।
प्रे लपसृद्रुमथवदवसः।। 3-2-145 ।।
`प्र उपपदे लपादीभ्यो घिनुण् भवति। प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। वस इति `वस निवासे(धा.पा.1006) इत्यस्य ग्रहणम्, नाच्छादनार्थस्य; लुग्विकरणत्वात्।।
निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्।। 3-2-146 ।।
निन्दादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु वुञ् प्रत्ययो भवति। पञ्चम्यर्थे प्रथमा। `क्लिश उपतापे(धा.पा.1162),`क्लिशू विबाधने(धा.पा.1523)-द्वयोरपि ग्रहणम्। निन्दकः। हिंसकः। क्लेशकः। खादकः।
विनाशकः। परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। असूयकः।
ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम्--ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्तीति(म.भा.2.133)।।
देविक्रुशोश्चोपसर्गे।। 3-2-147 ।।
देवयतेः क्रुशेश्चोपसर्गे उपपदे वुञ् प्रत्ययो भवति। आदेवकः, परिदेवकः। आक्रोशकः, परिक्रोशकः।
उपसर्ग इति किम्? देवयिता। क्रोष्टा।।
चलनशब्दार्थादकर्मकाद्युच्।। 3-2-148 ।।
चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु युचप्रत्ययो भवति। चलनः। चोपनः। शब्दार्थेभ्यः - शब्दनः। रवणः।
अकर्मकादिति किम्? पठिता विद्याम्।।
अनुदात्तेतश्च हलादेः।। 3-2-149 ।।
अनुदात्तेद्यो धातुः हलादिरकर्मकः ततश्च युच् प्रत्ययो भवति। वर्त्तनः। वर्द्धनः।
अनुदात्तेत इति किम्? भविता। हलादेरिति किम्? एधिता। आदिग्रहणं किम्? जुगुप्सनः। मीमांसनः। अकर्मकादित्येव - वसिता वस्त्रम्।।
जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः।। 3-2-150 ।।
जुप्रभृतिभ्यो धातुभ्यो युच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। `जु इति सौत्रो धातुः। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। गर्द्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः।
चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थमिह। ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति - ताच्छीलिकेषु मिथो वाऽसरूपविधिर्नास्तीति। तेनालङ्कृञस्तृन्न भवति - अलङ्कर्त्तेति। तथा हि - पदेरुकञा विशेषविहितेन सामान्यविहितस्य युचोऽसरूपत्वात्समावेशो भवेदेव, किमनेन विधानेन! ज्ञापनार्थं पुनर्विधीयते। प्रायिकं चैतद् ज्ञापनम्। क्वचित्समावेश इष्यत एव - गन्ता खेटं विकत्थनः।।
क्रुधमण्डार्थेभ्यश्च।। 3-2-151 ।।
`क्रुध कोपे(धा.पा.1190),`मडि भूषायाम्(धा.पा.1588)इत्येतदर्थेभ्यश्च धातुभ्यो युच् प्रत्ययो भवति। क्रोधनः। रोषणः। मण्डनः। भूषणः।।
न यः।। 3-2-152 ।।

यकारान्ताद्धातोर्युच् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। क्नूयिता। क्ष्मायिता।।
सूददीपदीक्षश्च।। 3-2-153 ।।
सूद्, दीप, दीक्ष इत्येतेभ्यश्च युच् प्रत्ययो न भवति। अनुदात्तेत्वात् प्राप्तः प्रतिषिध्यते। सूदिता। दीपिता। दीक्षिता।
ननु च दीपेर्विशेषविहितो रप्रत्ययो दृश्यते नमिकम्पिस्म्यजसकमहिंसदीपो रः(3-2-167/3147) इति, स एव बाधको भविष्यति, किं प्रतिषेधेन ? वाऽसरूपेण युजपि प्राप्नोति। ताच्छीलिकेषु च वाऽसरूपविधिर्नास्तीति प्रायिकमेतदित्युक्तम्। तथा च समावेशो दृश्यते। कम्रा युवतिः। कमना युवतिः। कम्प्रा शाखा। कम्पना शाखेति।
सूदेर्युचि प्रतिषिद्धे कथं मधुसूदनः, रिपुसूदन इति ? अनित्योऽयं प्रतिषेध इति योगविभागाद्विज्ञायते।
अथ वा - नन्द्यादिषु मधुसूदनादयो द्रक्ष्यन्ते। कृत्यल्युटो बहुलम्(3-3-113/2841) इति ल्युडन्तो वा।।
लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्।। 3-2-154 ।।
लषादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। अपलाषुकं वृषलसङ्गतम्। प्रपातुका गर्भा भवन्ति। उपपादुकं सत्त्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आघातुकं पाकलिकस्य मूत्रम्। कामुका एनं स्त्रियो भवन्ति। आगामुकं वाराणसीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः।।
जल्पभिक्षकुट्टलुण्टवृङः षाकन्।। 3-2-155 ।।
जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी।।
प्रजोरिनिः।। 3-2-156 ।।
प्रपूर्वाज्जवतेः तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति। प्रजवी। प्रजविनौ।।
जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।। 3-2-157 ।।
`जि जये(धा.पा.561),`दृङ् आदरे(धा.पा.1412); `क्षि क्षये(धा.पा.236),`क्षि निवासगत्योः(धा.पा.1408)-इति द्वयोरपि ग्रहणम्। प्रसू इति `षू प्रेरणे(धा.पा.1409) इत्यस्य ग्रहणम्। जिप्रभृतिभ्यो धातुभ्य इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी।।
स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्।। 3-2-158 ।।
`स्पृह ईप्सायाम्(धा.पा.1872),`ग्रह ग्रहणे(धा.पा.1900),`पत गतौ(धा.पा.1862) चुरादावदन्ताः पठ्यन्ते; `दय दानगतिरक्षणेषु(धा.पा.481),`द्रा कुत्सायां गतौ(धा.पा.1055) निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते; `डुधाञ्(धा.पा.1093) श्रत्पूर्वः इत्येतेभ्यस्तच्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तन्द्रालुः। श्रद्धालुः।
*आलुचि शीङो ग्रहणं कर्तव्यम्*(म.भा.2.134)। शयालुः।।
दाधेट्सिशदसदो रुः।। 3-2-159 ।।
दा, धेट्, सि, शद्, सद इत्येतेभ्यो रुः प्रत्ययो भवति। दारुः। धारुर्वत्सो मातरम्। न लोकाव्ययनिष्ठा खलर्थतृनाम्(2-3-69/627) इत्युकारप्रश्लेषात् षष्ठी न भवति। सेरुः। शद्रुः। सद्रुः।।
सृघस्यदः क्मरच्।। 3-2-160 ।।
सृ, घसि, अद् इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति। सृमरः। घस्मरः। अद्मरः।।
भञ्जभासमिदो घुरच्।। 3-2-161 ।।
भञ्ज,भास, मिद इत्येतेभ्यो घुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। भङ्गुरं काष्ठम्। घित्वात्कुत्वम्। भासुरं ज्योतिः। मेदुरः पशुः। भञ्जेः कर्मकर्तरि प्रत्ययः, स्वभावात्।।
विदिभिदिच्छिदेः कुरच्।। 3-2-162 ।।
ज्ञानार्थस्य विदेर्ग्रहणम्, न लाभाद्यर्थस्य(धा.पा.1433); स्वभावात्। विदादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति। विदुरः पण्डितः। भिदुरं काष्ठम्। छिदुरा रज्जुः। भिदिच्छिद्योः कर्मकर्तरि प्रयोगः।
*व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः* विधुरः।।
इण्नश्जिसर्तिभ्यः क्वरप्।। 3-2-163 ।।
इण्, नश्,जि, सर्ति इत्येतेभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति। पकारस्तुगर्थः। इत्वरः, इत्वरी। नश्वरः, नश्वरी। जित्वरः, जित्वरी। सृत्वरः, सृत्वरी। नेड् वशि कृति(7-2-8/2981) इतीट्प्रतिषेधः।।
गत्वरश्च।। 3-2-164 ।।
`गत्वर इति निपात्यते। गमेरनुनासिकलोपः क्वरप्प्रत्ययश्च। गत्वरः। गत्वरी।।
जागुरूकः।। 3-2-165 ।।
जागर्तेरूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जागरूकः।।
यजजपदशां यङः।। 3-2-166 ।।
यजादीनां यङन्तानामूकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। यायजूकः। जञ्जपूकः। दन्दशूकः।।
नमिकम्पिस्म्यजसकमहिंसदीपो रः।। 3-2-167 ।।
नम्यादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति। नम्रं काष्ठम्। कम्प्रा शाखा। स्मेरं मुखम्। अजस्रं जुहोति। कम्रा युवतिः। हिंस्रं रक्षः। दीप्रं काष्ठम्। अजस्रमिति`जसु मोक्षणे(धा.पा.1212) नञ्पूर्वो
रप्रत्ययान्तः क्रियासातत्ये वर्तते।।
सनाशंसभिक्ष उः।। 3-2-168 ।।
सन्निति सन्प्रत्ययान्तो गृह्यते, न सनिर्धातुः; अनभिधानात्, व्याप्तिन्यायाद्वा। सन्नन्तेभ्यो धातुभ्य आशंसेर्भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति। चिकीर्षुः। जिहीर्षुः। आशंसुः। भिक्षुः। `आङः शसि इच्छयाम्(धा.पा.629) इत्यस्य ग्रहणम्, न शंसेः स्तुत्यर्थस्य(धा.पा.728)।।
क्याच्छन्दसि।। 3-2-170 ।।

`क्य इति क्यच्क्यष्क्यङां सामान्येन निर्देशः। क्यप्रत्यान्ताद्धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। `मित्रयुः(मै.सं.2-6-12)। न छन्दस्यपुत्रस्य(7-4-35/3588)इति प्रतिषेधान्न दीर्घः।`संस्वेदयुः(मै.सं.4-12-2.44)। `सुम्नयुः(ऋ.1-79-10)।
छन्दसीति किम् ? मित्रीयिता।
आदृगमहनजनः किकिनौ लिट् च।। 3-2-171 ।।
आकारान्तेभ्यः ऋवर्णान्तेभ्यः गम हन जन इत्येतेभ्यश्च छन्दसि तच्छीलादिषु किकिनौ प्रत्ययौ भवतः। लिड्वच्च तौ भवतः। आत् इति तकारो मुखसुखार्थः,न त्वयं तपरः मा भूतादपि परः तपरः इति ऋकारे तत्कालग्रहणम्। `पपिः सोमं ददिर्गाः(ऋ.6-23-4)। `ददथुः मित्रावरुणा ततुरिम्(ऋ.4-39-2)मित्रावरुणौ ततुरिः। `दूरे ह्यध्वा जगुरिः(ऋ.10-108-1)`जग्मिर्युवा(ऋ.7-20-1)`ज्घ्निर्वृत्रम्(ऋ.9-61-20)`जज्ञिबीजम्(तै.सं.7-5-20.1) अथ किमर्थं कित्वम्, यावता असंयोगाल्लिट् कित्(1-2-5/2242) इति कित्त्वं सिद्धमेव ? ऋच्छत्यृताम्(7-4-11/2383) इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्यापि बाधनार्थं कित्त्वम्।
?*किकिनवुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्*(म.भा.2.135)।` सेदः(तै.आ.4-22-1)।` नेमिः(ऋ.2-5-3)
*भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः किकिनौ वक्तव्यौ*(म.भा.2.135)। दधिः। चक्रिः। सस्रिः। जज्ञिः। जग्मिः। नेमिः।
*सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ*।दीर्घोऽकितः(7-4-83/2632)। सासहिः। वावहिः। चाचलिः। पापतिः।।
स्वपितृषोर्नजिङ्।। 3-2-172 ।।
`छन्दसि इति निवृत्तम्। स्वपेस्तृषेश्च तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययो भवति। स्वप्नक्। तृष्णक्।
*धृषेश्चेति वक्तव्यम्*। घृष्णक्।।
शॄवन्द्योरारुः।। 3-2-173 ।।
`शॄ हिसायाम्(धा.पा.1489),`वदि अभिवादनस्तुत्योः(धा.पा.11)इत्येताभ्यां धातुभ्यां तच्छीलादिषु कर्तृष्वारुः प्रत्ययो भवति। शरारुः। वन्दारुः।।
भियः क्रुक्लुकनौ।। 3-2-174 ।।
`ञिभी भये(धा.पा.1085)इत्यस्माद्धातोः तच्छीलादिषु कर्तृषु क्रुक्लुकनौ प्रत्ययौ भवतः। भीरुः। भीलुकः।
*क्रुकन्नपि वक्तव्यः*(म.भा.2.135)। भीरुकः।।
स्थेशभासपिसकसो वरच्।। 3-2-175 ।।
`ष्ठा गतिनिवृत्तौ(धा.पा.929),`ईश ऐश्वर्ये(धा.पा.1021),`भासृ दीप्तौ(धा.पा.624),`पिसृ पेसृ गतौ(धा.पा.719/720),`कस गतौ(धा.पा.861) इत्येतेभ्यस्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। विकस्वरः।।
यश्च यङः।। 3-2-176 ।।
`या प्रापणे(धा.पा.1050)इत्यस्माद्यङन्तात्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति। यायावरः।
भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्।। 3-2-177 ।।
भ्राजादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो भवति। विभ्राट्, विभ्राजौ, विभ्राजः। भाः, भासौ,
भासः। धूः धुरौ, धुरः। विद्युत्, विद्युतौ, विद्युतः। ऊर्क्, ऊर्जौ ऊर्जः। पूः पुरौ, पुरः।
*जवतेर्दीर्घश्च निपात्यते*। जूः जुवौ, जुवः। ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः।
किमर्थमिदमुच्यते, यावता अन्येभ्योऽपि दृश्यते(3-2-75/2980)क्विप् च(3-2-76/2983) इति क्विप्सिद्ध एव ? ताच्छीलिकैर्बाध्यते। वाऽसरूपविधिर्नास्तीत्युक्तम्। अथ तु प्रायिकमेतत् ? ततस्तस्यैवायं प्रपञ्चः।।
अन्येभ्योऽपि दृश्यते।। 3-2-178 ।।
अन्येभ्योऽपि धातुभ्यस्ताच्छीलिकेषु क्विप् प्रत्ययो दृश्यते। युक्। छित्। भित्। दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम्। क्वचिद्दीर्घः, क्वचिद्द्विर्वचनम्, क्वचित्सम्प्रसारणम्, क्वचिदसम्प्रसारणम्। तथा चाह -
*क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च*(म.भा.2.136)।
वचि - वाक्। प्रच्छि - शब्दप्राट्। आयतस्तूः। कटप्रूः। जूः। श्रीः। जुग्रहणेनात्र नार्थः; भ्राजादिसूत्र एव गृहीतत्वात्।
*द्युतिगमिजुहोतीनां द्वे च*(म.भा.2.136)। दिद्युत्। जगत्।
*जुहोतेर्दीर्घश्च*(म.भा.2.136)। जुहूः।
*`दृ भये(धा.पा.809) इत्यस्य ह्रस्वश्च द्वे च*(म.भा.2.136)। दद्दत्।
*ध्यायतेः सम्प्रसारणं च*(म.भा.2.136)। धीः।।
भुवः संज्ञान्तरयोः।। 3-2-179 ।।
भवतेर्धातोः संज्ञायामन्तरे च गम्यमाने क्विप् प्रत्ययो भवति। विभूर्नाम कश्चित्। अन्तरे - प्रतिभूः। धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूरुच्यते।
विप्रसम्भ्यो ड्वसंज्ञायाम्।। 3-2-180 ।।
`भुवः इति वर्तते। वि, प्र, सम् इत्येवम्पूर्वाद् भवतेर्धातोः डुप्रत्ययो भवति, न चेत्संज्ञा गम्यते। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुर्जनिता।
असंज्ञायामिति किम् ? विभूर्नाम कश्चित्।
*डुप्रकरणे मितद्रवादिभ्य उपसङ्ख्यानम्*(म.भा.2.136)। मितं द्रवति मितद्रुः। शम्भुः।
धः कर्मणि ष्ट्रन्।। 3-2-181 ।।
धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन्प्रत्ययो भवति। षकारो ङीषर्थः। धयन्ति तां दधति वा भैषज्यार्थमिति धात्री। स्तनदायिनी आमलकी चोच्यते।।
दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे।। 3-2-182 ।।
`दाप् लवने(धा.पा.1060),`णीञ् प्रापणे(धा.पा.902),`शसु हिंसायाम्(धा.पा.727),`यु मिश्रणे,`युजिर् योगे(धा.पा.1445),`ष्टुञ् स्तुतौ(धा.पा.727),`तुद व्यथने(धा.पा.1034),षिञ् बन्धने(धा.पा.1249),`षिचिर् क्षरणे(धा.पा.1435),`मिह सेचने(धा.पा.993),`पत्लृ गतौ(धा.पा.846),`दंश दशने(धा.पा.990),`णह बन्धने(धा.पा.1167) इत्येतेभ्यो धातुभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवति। दात्यनेनेति दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। आजादित्वात् टाप्, न ङीप्।
दंशेरनुनासिकलोपेन निर्देशो ज्ञापनार्थः, क्ङितोऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद्भवतीति; तेन ल्युट्यपि भवति - दशनम्। नद्ध्री।

हलसूकरयोः पुवः।। 3-2-183 ।।
`पू इति पूङ्पूञोस्सामान्येन ग्रहणम्। अस्माद्धातोः करणे कारके ष्ट्रन् प्रत्ययो भवति। तच्चेत्करणं हलसूकरयोरवयवो भवति। हलस्य पोत्रम्। सूकरस्य पोत्रम्। मुखमुच्यते।।
अर्त्तिलूधूसूखनसहचर इत्रः।। 3-2-184 ।।
`ऋ गतौ(धा.पा.1099),`लूञ् छेदने(धा.पा.1484),`धू विधूनने(धा.पा.1399),`षू प्रेरणे(धा.पा.1409), `खनु अवदारणे(धा.पा.879),`षह मर्षणे(धा.पा.853) ,`चर गतिभक्षणयोः(धा.पा.559) इत्येतेभ्यो धातुभ्यः करणे कारके इत्र प्रत्ययो भवति। अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।।
कर्त्तरि चर्षिदेवतयोः।। 3-2-186 ।।
`पुवः इति वर्त्तते। पुवः करणे कर्त्तरि च इत्रप्रत्ययो भवति। ऋषिदेवतयोर्यथासङ्ख्यं सम्बन्धः। ऋषौ करणे देवतायां कर्त्तरि। पूयतेऽनेनेति पवित्रोऽयमृषिः। देवतायाम् - `अग्निः पवित्रं स मा पुनातु। वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तुः(नि.5.5)।।
ञीतः क्तः।। 3-2-187 ।।
`ञि इद्यस्यासौ ञीत्। ञीतो धातोर्वर्तमानेऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता, वर्तमाने न प्राप्नोतीति विधीयते। `ञिमिदा स्नेहने(धा.पा.1244) मिन्नः। ञिक्ष्विदा - क्ष्विण्णः। ञिधृषा - धृष्टः।
मतिबुद्धिपूजार्थेभ्यश्च।। 3-2-188 ।।
मतिः = इच्छा। बुद्धिः = ज्ञानम्। पूजा=सत्कारः, इत्येतदर्थेभ्यश्च धातुभ्यो वर्त्तमानार्थे क्तप्रत्ययो भवति। राज्ञां मतः। राज्ञामिष्टः। राज्ञां बुद्धः। राज्ञां ज्ञातः। राज्ञां पूजितः। राज्ञामर्चितः। अनुक्तसमुच्चयार्थश्चकारः।
`शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितिश्चोभावभिव्याहृत इत्यपि।।1।।
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः।।2।।(म.भा.2.137)
कष्ट इति भविष्यति काले। अमृत इति पूर्ववत्। वर्त्तमान इत्यर्थः।
तथा सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः इत्येवमादयोऽपि वर्त्तमाने द्रष्टव्याः।।
इति श्रीजयादित्यविरचितायां काशिकावृतौ
तृतीयाध्यायस्य द्वितीयः पादः।।
-------*********************------

# काशिका/तृतीयोऽध्यायः /तृतीयः पादः

https://sa.wikisource.org/s/pbf
< काशिका | तृतीयोऽध्यायः
अथ तृतीयाध्याये तृतीयः पादः
उणादयो बहुलम् ।। 3-3-1 ।।
`वर्तमाने इत्येव, `संज्ञायाम् इति च । उणादयः प्रत्यया वर्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति । यतो विहितास्ततोऽन्यत्रापि भवन्ति । केचिदविहिता एव प्रयोगत उन्नीयन्ते । `कृवापाजिमिस्वदिसाध्यशूभ्य उण्(उ.सू.1)। कारुः, वायुः, पायुः, जायुः, मायुः, स्वादुः, साधुः, आशुः ।
`बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ।।
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ।।
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ।।(म.भा.2.138)

भूतेऽपि दृश्यन्ते ।। 3-3-2 ।।
पूर्वत्र वर्तमानाधिकाराद् भूतार्थमिदं वचनम् । भूते काले उणादयः प्रत्यया दृश्यन्ते । वृत्तमिदं वर्त्म । चरितं तदिति चर्म । भसितं तदिति भस्म । दृशिग्रहणं प्रयोगानुसारार्थम् ।।
भविष्यति गम्यादयः ।। 3-3-3 ।।
भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति । प्रत्ययस्यैव भविष्यत्कालता विधीयते, न प्रकृतेः । गमी ग्रामम् । आगामी । प्रस्थायी । प्रतिरोधी । प्रतिबोधी । प्रतियोधी । प्रतियोगी । प्रतियायी । आयावी । भावी ।।

- अनद्यतन उपसङ्ख्यानम् * (म.भा.2.139)। श्वो गमी ग्रामम् ।।

यावत्पुरानिपातयोर्लट् ।। 3-3-4 ।।
`भविष्यति इत्येव । यावत्पुराशब्दयोर्निपातयोरुपपदयोर्भविष्यति काले धातोर्लट् प्रत्ययो भवति । यावद् भुङ्क्ते । पुरा भुङ्ते ।
निपातयोरिति किम् ? यावद्दास्यति तावद्भोक्ष्यते । करणभूतया पुरा व्रजिष्यति ।।

विभाषा कदाकर्ह्योः ।। 3-3-5 ।।
कदा, कर्हि-इत्येतयोरुपपदयोर्विभाषा भविष्यति काले धातोर्लट् प्रत्ययो भवति । कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता । कर्हि भुङ्क्ते, कर्हि भोक्ष्यते। कर्हि भोक्ता ।।
किंवृत्ते लिप्सायाम् ।। 3-3-6 ।।
`विभाषा इति वर्तते । किमो वृत्तं किंवृत्तम् । वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरडतमौ चेति परिस9ङ्ख्यानं स्मर्यते । किंवृत्त उपपदे लिप्सायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति । लिप्सा=लब्धुमिच्छा, प्रार्थनाभिलाषः । कं भवन्तो भोजयन्ति । कं भवन्तो भोजयितारः । लब्धुकामः पृच्छति - कतरो भिक्षां दास्यति, ददाति, दाता वा । कतमो भिक्षां दास्यति, ददाति, दाता वा ।
लिप्सायामिति किम् ? कः पाटलिपुत्रं गमिष्यति ।।
लिप्स्यमानसिद्धौ च ।। 3-3-7 ।।
`विभाषा इत्येव । लिप्स्यमानात्सिद्धि=लिप्स्यमानसिद्धिः, लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति । अकिंवृत्तार्थोऽयमारम्भः । यो भक्तं ददाति स स्वर्गं गच्छति, यो भक्तं दास्यति स स्वर्गं गमिष्यति, यो भक्तं दाता स स्वर्गं गन्ता । लिप्स्यमानाद्भक्तात्स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति
।।
लोडर्थलक्षणे च ।। 3-3-8 ।।
लोडर्थः प्रेषादिर्लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः, तत्र वर्तमानाद्धातोर्भविष्यति काले विभाषा लट् प्रत्ययो भवति । उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व । उपाध्यायागमनमध्ययनप्रैषस्य लक्षणम् ।।
लिङ् चोर्ध्वमौहूर्तिके ।। 3-3-9 ।।
`भविष्यति `विभाषा `लोडर्थलक्षणे इति सर्वमनुवर्त्तते । ऊर्ध्वमौहूर्तिके भविष्यति काले लोडर्थलक्षणार्थे वर्तमानाद्धातोर्विभाषा लिङ् प्रत्ययो भवति, चकाराल्लट् च । ऊर्ध्वमुहूर्ताद्भव ऊर्ध्वमौहूर्त्तिकः । निपातनात्समासः, उत्तरपदवृद्धिश्च । भविष्यतश्चैतद्विशेषणम् । ऊर्ध्वं मुहूर्ताद्=उपरिमुहूर्तस्य, उपाध्यायश्चेदागच्छेत् उपाध्यायश्चेदागच्छति उपाध्यायश्चेदागमिष्यति उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व,

अथ त्वं व्याकरणमधीष्व ।।
तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।। 3-3-10 ।।
`भविष्यति इत्येव । क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्ण्वुलौ प्रत्ययौ भवतः । भोक्तुं व्रजति भोजको व्रजति । भुजिक्रियार्थो व्रजिरत्रोपपदम् ।
क्रियायामिति किम् ? भिक्षिष्य इत्यस्य जटाः । क्रियार्थायामिति किम् ? धावतस्ते पतिष्यति दण्डः ।
अथ किमर्थं ण्वुल् विधीयते, यावता ण्वुल्तृचौ(3-1-133/2895) इति सामान्येन विहित एव, सोऽस्मिन्नपि विषये भविष्यति ? लृटा क्रियार्थोपपदेन बाध्यते । वासरूपविधिना सोऽपि भविष्यति ? एवं तर्ह्येतज्ज्ञाप्यते,क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति । तेन कर्ता व्रजति, विक्षिपो व्रजतीत्येवमादि निवर्त्यते ।।
भाववचनाश्च ।। 3-3-11 ।।
`भविष्यति इत्येव । भावे(3-3-18/3184) इति प्रकृत्य ये घञादयो विहितास्ते च भाववचना भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति ।
किमर्थमिदम्, यावता विहिता एव ते ? क्रियार्थोपपदे विहितेनास्मिन्विषये तुमुना बाध्येरन् । वासरूपविधिश्चात्र नास्तीत्युक्तम् ।
अथ वचनग्रहणं किमर्थम् ? वाचका यथा स्युः । कथं च वाचका भवन्ति ? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिता यदि ताभ्यस्तथैव भवन्ति, नासामञ्जस्येनेति । पाकाय व्रजति । भूतये व्रजति । पुष्टये व्रजति ।।
अण् कर्मणि च ।। 3-3-12 ।।
`भविष्यति इत्येव । चकारः सन्नियोगार्थः । धातोरण्प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायाम् । कर्मण्यण्(3-2-1/2913) इति सामान्येन विहितो वासरूपविधेरभावाद् ण्वुला बाधितः पुनरण्विधीयते, सोऽपवादत्वाद् ण्वुलं बाधते, परत्वाच्च कादीन् । तेनापवादविषयेऽपि भवत्येव - काण्डलावो व्रजति, अश्वदायो व्रजति, गोदायो व्रजति । कम्बलदायो व्रजति ।।
लृट् शेषे च ।। 3-3-13 ।।
`भविष्यति इत्येव । शेषः क्रियार्थोपपदादन्यः । शेषे शुद्धे भविष्यति काले चकारात् क्रियायां चोपपदे क्रियार्थायां धातोर्लृट् प्रत्ययो भवति । करिष्यामीति व्रजति । हरिष्यामीति व्रजति । शेषे खल्वपि करिष्यति, हरिष्यति ।
लृटः सद्वा ।। 3-3-14 ।।
लृटः स्थाने सत्संज्ञौ शतृशानचौ वा भवतः । व्यवस्थितविभाषेयम् । तेन यथा लटः शतृशानचौ, तथाऽस्यापि भवतः । अप्रथमासमानाधिकरणादिषु नित्यम् । अन्यत्र विकल्पः - करिष्यन्तं देवदत्तं पश्य, करिष्यमाणं देवदत्तं पश्य । हे करिष्यन्, हे करिष्यमाण । अर्जयिष्यमाणो वसति ।
प्रथमासमानाधिकरणे विकल्पः - करिष्यन्देवदत्तः, करिष्यमाणो देवदत्तः । करिष्यते, करिष्यति ।।
अनद्यतने लुट् ।। 3-3-15 ।।
`भविष्यति इत्येव । भविष्यदनद्यतनेऽर्थे वर्त्तमानाद् धातोर्लुट् प्रत्ययो भवति । लृटोऽपवादः । श्वः कर्ता । श्वो भोक्ता । `अनद्यतने इति बहुव्रीहिनिर्देशः, तेन व्यामिश्रे न भवति - अद्य श्वो वा ममिष्यतीति ।

- परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या *(म.भा.2.143) । इयं नु कदा गन्ता, यैवं पादौ निदधाति । अयं कदाऽध्येता, य एवमनभियुक्तः ।।

पदरुजविशस्पृशो घञ् ।। 3-3-16 ।।
`भविष्यति इति निवृत्तम् । इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः । पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति । पद्यतेऽसौ पादः । रुजत्यसौ रोगः । विशत्यसौ वेशः ।

- स्पृश उपताप इति वक्तव्यम् *(म.भा.2.144) । स्पृशतीति स्पर्श उपतापः । ततोऽन्यत्र पचाद्यच् भवति - स्पर्शो देवदत्तः । स्वरे विशेषः ।।

सृस्थिरे ।। 3-3-17 ।।
सर्त्तेर्धातोः स्थिरे कर्तरि घञ् प्रत्ययो भवति । स्थिर इति कालान्तरस्थायी पदार्थ उच्यते, स चिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्त्ता युज्यते । चन्दनसारः । खदिरसारः ।
स्थिरे इति किम् ? सर्त्ता, सारकः ।

- व्याधिमत्स्यबलेष्विति वक्तव्यम् *(म.भा.2.144) । अतीसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ।।

भावे ।। 3-3-18 ।।
भावे वाच्ये धातोर्घञ् प्रत्ययो भवति । पाकः । त्यागः । रागः । क्रियासामान्यवाची भवतिः, तेनार्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति । धात्वर्थश्च धातुनैवोच्यते । यस्तस्य सिद्धता नाम धर्मः, तत्र घञादयः प्रत्यया विधीयन्ते ।
पुंल्लिङ्गैकवचनं चात्र न तन्त्रम् । लिङ्गान्तरे वचनान्तरेऽपि चात्र प्रत्यया भवन्त्येव - पक्तिः, पक्वम्, पचनम् । पाकौ, पाका इति ।।
अकर्तरि च कारके संज्ञायाम् ।। 3-3-19 ।।
कर्तृवर्जिते कारके संज्ञायां विषये धातोर्घञ् भवति । प्रास्यन्ति तं प्रासः । प्रसीव्यन्ति तं प्रसेवः । आहरन्ति तस्माद्रसमित्याहारः । मधुराहारः । तक्षशिलाहारः ।
अकर्त्तरीति किम् ? मिषत्यसौ मेषः । संज्ञायामिति किम् ? कर्त्तव्यः कटः ।

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।। 3-3-163 ।।
प्रेषणम् = प्रैषः, कामचाराभ्यनुज्ञानम् = अतिसर्गः, निमित्तभूतस्य कालस्यावसरः = प्राप्तकालता एतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति । चकाराल्लोट् च । भवता कटः करणीयः, कर्त्तव्यः, कृत्यः, कार्यः । लोट् खल्वपि - करोतु कटं भवानिह प्रेषितः । भवानतिसृष्टः । भवतः प्राप्तकालः कटकरणे ।।
किमर्थं प्रैषादिषु कृत्या विधीयन्ते न सामान्येन, भावकर्मणोर्विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेषविहितेनानेन लोटा बाध्यन्ते । वासरूपविधिना भविष्यन्ति ? एवं तर्हि ज्ञापयति `स्त्र्यधिकारात्परेण वासरूपविधिर्नावश्यं भवति इति ।
विधिप्रैषयोः को विशेषः ? केचिदाहुः--अज्ञातज्ञापनं विधिः, प्रेषणं प्रैष इति ।।
लिङ् चोर्ध्वमौहूर्तिके ।। 3-3-164 ।।
प्रैषादयो वर्त्तन्ते । प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् प्रत्ययो भवति । चकाराद्यथाप्राप्तं च । ऊर्ध्वं मुहूर्त्तात् = उपरिमुहूर्तस्य भवता खलु कटः कर्तव्यः, करणीयः, कार्यः । भवान्खलु कटं कुर्यात्, भवान्खलु करोतु । भवानिह प्रेषितः । भवानतिसृष्टः । भवान्प्राप्तकालः ।।
स्मे लोट् ।। 3-3-165 ।।
`प्रैषादिषु `ऊर्ध्वमौहूर्तिके इति वर्तते । स्मशब्द उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लोट् प्रत्ययो भवति । लिङ्कृत्यानामपवादः । ऊर्ध्वं मुहूर्ताद् भवान्कटं करोतु स्म । ग्रामं गच्छतुस्म । माणवकमध्यापयतु स्म ।।
अधीष्टे च ।। 3-3-166 ।।
`स्मे इति वर्तते । अधीष्टं व्याख्यातम् । स्मशब्द उपपदेऽधीष्टे गम्यमाने धातोर्लोट् प्रत्ययो भवति । लिङोऽपवादः । अङ्ग स्म राजन्माणवकमध्यापय । अङ्ग स्म राजन्नग्निहोत्रं जुहुधि ।।
कालसमयवेलासु तुमुन् ।। 3-3-167 ।।
कालादिषूपपदेषु धातोस्तुमुन्प्रत्ययो भवति । कालो भोक्तुम् । वेला भोक्तुम् ।। इह कस्मान्न भवति - `कालः पचति भूतानि(मै.उ.6.15) इति ? प्रैषादिग्रहणमिहाभिसम्बध्यते ।।
इह कस्मान्न भवति - कालो भोजनस्य ? वासरूपेण ल्युडपि भवति । उक्तमिदम् - `स्त्र्यधिकरात्परत्र
वासरूपविधिरनित्यः इति ।।
लिङ् यदि ।। 3-3-168 ।।
कालादयोऽनुवर्त्तन्ते । यच्छब्दे उपपदे कालादिषु धातोर्लिङ् प्रत्ययो भवति । तुमुनोऽपवादः । कालो यद् भुञ्जीत भवान् । समयो यद् भुञ्जीत भवान् । वेला यद्भुञ्जीत भवान् ।।
अर्हे कृत्यतृचश्च ।। 3-3-169 ।।
अर्हतीत्यर्हः = तद्योग्यः । अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति । चकाराल्लिङ् च । भवता खलु कन्या वोढव्या, वाह्या, वहनीया । भवान् खलु कन्याया वोढा । भवान् खलु कन्यां वहेत् । भवानेतदर्हेदिति ।
अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति ? योऽयमिह लिङ् विधीयते, तेन बाधा मा भूदिति । वासरूपविधिश्चानित्यः ।।
आवश्यकाधमर्ण्ययोर्णिनिः ।। 3-3-170 ।।
अवश्यं भावः = आवश्यकम् । उपाधिरयम्, नोपपदम् । अवश्यम्भावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति । अवश्यङ्कारी । मयूरव्यंसकादित्वात्समासः ।
आधमर्ण्ये खल्वपि - शतं दायी । सहस्रं दायी । निष्कं दायी ।।
कृत्याश्च ।। 3-3-171 ।।
`आवश्यकाधमर्ण्ययोः इति वर्तते । कृत्यसंज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपाधिभूतयोर्धातोर्भवन्ति । भवता खलु अवश्यं कटः कर्त्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः । आधमर्ण्ये - भवता शतं दातव्यम् । सहस्रं देयम् ।।
किमर्थमिदम्, यावता सामान्येन विहिता अस्मिन्नपि विषये भविष्यन्ति ? विशेषविहितेन णिनिना बाध्येरन् ।।
कर्तरि णिनिः, भावकर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः ? तत्र केचिदाहुः - भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इहोदाहरणमिति ।।
शकि लिङ् च ।। 3-3-172 ।।
`शकि इति प्रकृत्यर्थविशेषणम् । शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति । चकारात्कृत्याश्च । भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः । भवान् खलु भारं वहेत् । भवानिह शक्तः ।
सामान्यविहितानां पुनर्वचनम् - लिङा बाधा मा भूदिति ।
आशिषि लिङ् लोटौ ।। 3-3-173 ।।
आशंसनमाशीः = अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा । प्रकृत्यर्थविशेषणं चैतत् । आशीर्विशिष्टेऽर्थे वर्त्तमानाद्धातोर्लिङ्लोटौ प्रत्ययौ भवतः । चिरं जीव्याद् भवान् । चिरं जीवतु भवान् ।
आशिषीति किम् ? चिरं जीवति देवदत्तः ।।
क्तिच्क्तौ च संज्ञायाम् ।। 3-3-174 ।।
`आशिषि इत्येव । आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत्संज्ञा गम्यते । तनुतात् तन्तिः । सनुतात् सातिः । भवतात् भूतिः । मनुतात् मन्तिः । क्तः खल्वपि - देवा एनं देयासुर्देवदत्तः ।

सामान्येन विहितः क्तः पुनरुच्यते - क्तिचा बाधा मा भूदिति । चकारो विशेषणार्थः - न क्तिचि दीर्घश्च(6-4-39/3314) इति ।।
माङि लुङ् ।। 3-3-175 ।।
माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । मा कार्षीत् । मा हार्षीत् । कथं मा भवतु तस्य पापम्, मा भविष्यतीति ? असाधुरेवायम् । केचिदाहुः - अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः ।।
स्मोत्तरे लङ् च ।। 3-3-176 ।।
स्मशब्दोत्तरे माङ्युपपदे धातोर्लङ् प्रत्ययो भवति । चकाराल्लुङ्च । मा स्म करोत्, मा स्म कार्षीत् । मा स्म हरत्, मा स्म हार्षीत् ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
तृतीयाध्याये तृतीयः पादः ।।

# काशिका/तृतीयोऽध्यायः /चतुर्थः पादः

https://sa.wikisource.org/s/pbg

< काशिका | तृतीयोऽध्यायः

अथ तृतीयाध्याये चतुर्थः पादः

धातुसम्बन्धे प्रत्ययाः ।। 3-4-1 ।।

धात्वर्थे धातुशब्दः । धात्वर्थानां सम्बन्धो धातुसम्बन्धः = विशेषणविशेष्यभावः । तस्मिन्सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । अग्निष्टोमयाज्यस्य पुत्रो जनिता । कृतः कटः श्वो भविता । भावि कृत्यमासीत् । अग्निष्टोमयाजीति भूतकालः, जनितेति भविष्यत्कालः, तत्र भूतः कालो भविष्यत्कालेनाभिसम्बध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति ।

प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम्-अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युरिति । गोमानासीत् । गोमान्भविता । गावो विद्यन्तेऽस्येति वर्तमानविहितो मतुप् आसीद् भवितेति सम्बन्धादतीते भविष्यति च साधुर्भवति ।।

क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ।। 3-4-2 ।।

`धातुसम्बन्धे इति वर्तते । पौनः पुन्यं भृशार्थो वा क्रियासमभिहारः । प्रकृत्यर्थविशेषणं चैतत् । समभिहारविशिष्टक्रियावचनाद्धातोर्लोट् प्रत्ययो भवति, सर्वेषु कालेषु । सर्वलकाराणामपवादः । तस्य च लोटो हि, स्व इत्येतावादेशौ भवतः, तध्वंभाविनस्तु वा भवतः ।

योगविभागोऽत्र कर्तव्यः, क्रियासमभिहारे लोड् भवति, ततो लोटो हिस्वौ । लोडित्येव, लोड्धर्माणौ हिस्वौ भवत इत्यर्थः । तेनात्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङ्त्वं च द्वयोरपि भवति ।। लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति । लुनीहि लुनीहीत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ । अथ वा लुनीत लुनीतेत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः ।।

भूते - लुनीहि लुनीहीत्येवायमलावीत् ,अलाविष्टाम्, अलाविषुः । एवं मध्यमोत्तमयोरुदाहार्यम् ।।

भविष्यति - लुनीहि लुनीहीत्येवायं लविष्यति, लविष्यतः, लविष्यन्ति । एवं मध्यमोत्तमयोरुदाहार्यम् ।।

अधीष्वादीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । अथवा,अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे । एवं सर्वेष्वेव लकारेषूदाहार्यम् ।।

क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते - क्रियासमभिहारे द्वे भवत इति । यङ्प्रत्ययः पुनरस्मिन्नेवार्थे विधीयमानः स्वयमेव शक्तत्वान्नापेक्षते द्विर्वचनम् ।।

समुच्चयेऽन्यतरस्याम् ।। 3-4-3 ।।

अनेकक्रियाध्याहारः = समुच्चयः । समुच्चीयमानक्रियावचनाद्धातोरन्यतरस्यां लोट् प्रत्ययो भवति, तस्य लोटो हिस्वावादेशौ भवतः । तध्वंभाविनस्तु वा भवतः ।

भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येवायमटति, इमावटतः, इमेऽटन्ति । भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ । अथ वा - भ्राष्ट्रमटत मठमटत खदूरमटत स्थाल्यपिधानमटतेत्येव यूयमटथ । भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येवाहमटामि, आवामटावः, वयमटामः ।

अथ वा-भ्राष्ट्रमटति मठमटति खदूरमटति स्थाल्यपिधानमटति इत्येवायमटति, इमावटतः, इमेऽटन्ति । भ्राष्ट्रमटसि मठमटसि खदूरमटसि स्थाल्यपिधानमटसि इत्येव त्वमटसि, युवामटथः, यूयमटथ । भ्राष्ट्रमटामि मठमटामि खदूरमटामि स्थाल्यपिधानमटामीत्येवाहमटामि, आवामटावः, वयमठामः ।

छन्दोऽधीष्व व्याकरणमधीष्व निरुक्तमधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते । छन्दोऽधीष्व व्याकरणमधीष्व निरुक्तमधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । अथ वा - छन्दोऽधीध्वं व्याकरणमधीध्वं निरुक्तमधीध्वमित्येव यूयमधीध्वे । छन्दोऽधीष्व व्याकरणमधीष्व निरुक्तमधीष्वेत्येवाहमधीये, आवामधीवहे, वयमधीमहे ।।

अथ वा - छन्दोऽधीते व्याकरणमधीते निरुक्तमधीते इत्येवायमधीते इमावधीयाते, इमेऽधीयते । छन्दोऽधीषे व्याकरणमधीषे निरुक्तमधीषे इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । छन्दोऽधीये व्याकरणमधीये निरुक्तमधीय
इत्येवाहमधीये, आवामधीवहे, वयमधीमहे ।।

यथाविध्यनुप्रयोगः पूर्वस्मिन् ।। 3-4-4 ।।

पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति । यस्माद्धातोर्लोड्विहितस्स एव धातुरनुप्रयोक्तव्यः । धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यर्थं तु वचनम् । तथा चैवोदाहृतम् लुनीहि लुनीहीत्येवायं लुनातीति । छिनत्तीति नानुप्रयुज्यते । अधीष्वाधीष्वेत्येवायमधीते । पठतीति नानुप्रयुज्यते ।।

समुच्चये सामान्यवचनस्य ।। 3-4-5 ।।

द्वितीये लोड्विधाने समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्यः । ओदनं भुङ्क्ष्व, सक्तून्पिब, धानाः खादेत्येवायमभ्यवहरति । सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम् । लाघवं च लौकिके शब्दव्यवहारे नाद्रियते । भ्राष्ट्रमट मठमट खदूरमट स्थाल्यपिधानमटेत्येवायमटतीत्यत्रापि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव ।।

छन्दसि लुङ् लङ्लिटः ।। 3-4-6 ।।

`धातुसम्बन्धे इत्येव । छन्दसि विषये धातुसम्बन्धे सर्वेषु लुङ्लङ् लिटः प्रत्यया भवन्ति । `अन्यतरस्याम् इति वर्त्तते । तेनान्येऽपि लकारा यथायथं भवन्ति । लुङ् - शकलाङ्गुष्ठकोऽकरत् । `अहं तेभ्योऽकरं नमः(वा.सं.16.8) । लङ् - `अग्निमद्य होतारमवृणीतायं यजमानः(शां.श्रौ.5-20-5) । लिट् - `अद्या ममार(ऋ.10-55-5) । अद्य म्रियते ।।

लिङर्थे लेट् ।। 3-4-7 ।।

`छन्दसि `अन्यतरस्याम् इति वर्त्तते । लिङर्थे - यत्र लिङ् विधीयते विध्यादिः हेतुहेतुमतोर्लिङ्(3-3-156/2813) इत्येवमादिः, तत्र छन्दसि विषयेऽन्यतरस्यां लेट् प्रत्ययो भवति । `जोषिषत्(ऋ.2-35-1) । `तारिषत्(ऋ.1-25-12) । `मन्दिषत् । `नेता इन्द्रो नेषत्(श.श्रौ.7-9-1) । तक्षिषत् । `पताति विद्युत्(ऋ.7-25-1) । `प्रजापतिरुदधिं च्यावयाति(तै.3-5-5.2) ।।

उपसंवादाशङ्कयोश्च ।। 3-4-8 ।।

उपसंवादः = परिभाषणम्, कर्तव्ये पणबन्धः - `यदि मे भवानिदं कुर्याद् अहमपि भवते इदं दास्यामि इति । कारणतः कार्यानुसरणं तर्कः, उत्प्रेक्षा = आशङ्का । उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति । उपसंवादे - `अहमेव पशूनामीशै(काठक.सं.25.1) । `मदग्रा एव वो ग्रहा गृह्यान्तै(मै.4-5-8) इति । `मद्देवतान्येव वः पात्राण्युच्यान्तै(तै.सं.6-4-7.1) । आशाङ्कायां च - `नेज्जिह्मायन्तो नरकं पताम(ऋ.खि.10-106-1) । जिह्माचरणेन नरकपात आशङ्क्यते ।

लिङर्थ एवायम्, नित्यार्थं तु वचनम् । पूर्वसूत्रे `अन्यतरस्याम् इति वर्त्तते ।।

तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ् तवेनः ।। 3-4-9 ।।

`छन्दसि इत्येव । तुमुनोऽर्थस्तुमर्थः । तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति । तुमर्थो भावः । कथं ज्ञायते ? वचनसामर्थ्यात् । तावदयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे तुमुन्नादिश्यते । `अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति(प.122) । स्वार्थश्च धातूनां भाव एव । से--वक्षे रायः । सेन्--`ता वामेषे रथानाम्(ऋ.5-56-3) । असे, असेन्--`क्रत्वे दक्षाय जीवसे(अ.6-19-2) । स्वरे विशेषः । क्से--`प्रेषे भगाय(तै.सं.1-2-11.1),कसेन्- `श्रियसे(ऋ.5-59-3) । अध्यै, अध्यैन् - `काममुपाचरध्यै(तै.सं.1-2-11.1) । स्वरे विशेषः । कध्यै--`इन्द्राग्नी आहुवध्यै(वा.सं.3.13) । कध्यैन्--श्रियध्यै । शध्यै, शध्यैन् - `वायवे पिबध्यै(ऋ.7-92-2) । `राधसः सह मादयध्यै(वा.सं.3.13) । तवैग-`सोममिन्द्राय पातवै(ऋ.8-69-10) । तवेङ् - `दशमे मासि सूतवे(ऋ.10-184-3) । तवेन् -`स्वर्देवेषु गन्तवे(अ.9-5-17) । `कर्त्तवे(ऋ.9-86-20) । हर्त्तवे ।

प्रयै रोहिष्यै अव्यथिष्यै ।। 3-4-10 ।।

`तुमर्थे छन्दसि इत्येव । प्रयै, रोहिष्यै, अव्यथिष्यै इत्येते शब्दा निपात्यन्ते छन्दसि विषये । प्रपूर्वस्य यातेः कैप्रत्ययः - `प्रयै देवेभ्यः(ऋ.1-142-6), प्रयातुम् । रुहेः इष्यैप्रययः - `अपामोषधीनां

रोहिष्यै(तै.सं.1-3-10.2), रोहणाय । व्यथेर्नञ्पूर्वस्य इष्यैप्रत्ययः - `अव्यथिष्यै(काठ.सं.3.7), अव्यथनाय ।।

दृशे विख्ये च ।। 3-4-11 ।।

`तुमर्थे, `छन्दसि इत्येव । दृशे, विख्ये इत्येतौ छन्दसि विषये निपात्येते । दृशेः के प्रत्ययः - `दृशे विश्वाय सूर्यम्(ऋ.1-50-1), द्रष्टुम् । विख्ये त्वा हरामि, विख्यातुम् ।।

शकि णमुल्कमुलौ ।। 3-4-12 ।।

`छन्दसि इत्येव । शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल्, कमुल् इत्येतौ प्रत्ययौ भवतः । णकारो वृद्ध्यर्थः । ककारो गुणवृद्धिप्रतिषेधार्थः । लकारः स्वरार्थः । `अग्निं देवा विभाजं नाशक्नुवन्(मै.सं.1-6-4) । विभक्तुमित्यर्थः । `अपलुम्पं नाशक्नुवन्(मै.सं.1-6-5) । अपलोप्तुमित्यर्थः ।।

ईश्वरे तोसुन्कसुनौ ।। 3-4-13 ।।

`तुमर्थे, `छन्दसि इत्येव । ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोस्तोसुन्कसुन्प्रत्ययौ भवतः । ईश्वरोऽभिचरितोः । अभिचरितुमित्यर्थः । ईश्वरो विलिखः । विलिखितुमित्यर्थः । ईश्वरो वितृदः । वितर्दितुमित्यर्थः ।।

कृत्यार्थे तवैकेन्केन्यत्वनः ।। 3-4-14 ।।

`छन्दसि इत्येव । कृत्यानामर्थो भावकर्मणी । तस्मिन् कृत्यार्थे छन्दसि विषये तवै, केन्, केन्य, त्वन् इत्येते प्रत्यया भवन्ति । तवै-`अन्वेतवै(ऋ.7-44-5), अन्वेतव्यम् । `परिधातवै(अ.2-13-2), परिधातव्यम् । `परिस्तरितवै(काठ.सं.32.7), परिस्तरितव्यम् । केन् - नावगाहे, नावगाहितव्यम् । केन्य - `दिदृक्षेण्यः(ऋ.1-1-46.5), `शुश्रूषेण्यः(तै.आ.4-1-1), दिदृक्षितव्यम्, शुश्रूषितव्यम् । त्वन् - `कर्त्वं हविः(अ.वे.1-4-3), कर्त्तव्यम् ।

`तुमर्थे छन्दसि(3-4-9/3436) इति सयादिसूत्रेऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्टव्यः ।।

अवचक्षे च ।। 3-4-15 ।।

`कृत्यार्थे छन्दसि इत्येव । अवपूर्वाच्चक्षिङ एश्प्रत्ययो निपात्यते । `रिपुणा नावचक्षे(वा.सं.17.93) । नावख्यातव्यमित्यर्थः ।।

भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।। 3-4-16 ।।

`कृत्यार्थे इति निवृत्तम् । `तुमर्थे इति वर्तते । प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानेभ्यः स्थादिभ्यो धातुभ्यश्छन्दसि विषये तुमर्थे तोसुन्प्रत्ययो भवति । `आसंस्थातोर्वेद्यां सीदन्ति(काठ.सं.11.6) । आ समाप्तेः सीदन्तीत्यर्थः । इण् - `पुरा सूर्यस्योदेतोराधेयः(काठ.सं.8.3) । कृञ् - `पुरा वत्सानामपाकर्त्तोः(काठ.सं.31.15) । वदि - `पुरा प्रवदितोरग्नौ प्रहोतव्यम् । चरि - `पुरा प्रचरितोराग्नीध्रे होतव्यम्(गो.ब्रा.2-2-10) । हु- `आ होतोरप्रमत्तस्तिष्ठति(तै.ब्रा.1-4-9.5) । तमि - `आ तमितोरासीत(तै.ब्रा.1-6-9.5) । जनि - `आ विजनितोः सम्भवामेति(तै.सं.2-5-1.5) ।।

सृपितृदोः कसुन् ।। 3-4-17 ।।
`भावलक्षणे `छन्दसि इति वर्त्तते । सृपितृदोर्धात्वोर्भावलक्षणेऽर्थे वर्तमानयोश्छन्दसि विषये तुमर्थे कसुन्प्रत्ययो भवति । `पुरा क्रूरस्य विसृपो विरप्शिन्(तै.सं.1-1-9.3) । `पुरा जर्तृभ्य आतृदः(ऋ.8-1-12) ।
अलंखल्वोः प्रतिषेधयोः प्राचा क्त्वा ।। 3-4-18 ।।
`छन्दसि `भावलक्षणे इति सर्वं निमित्तम् । अलं, खलु इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणां मतेन । अलं कृत्वा । खलु कृत्वा । अलं बाले रुदित्वा ।
अलङ्खल्वोरिति किम् ? मा कार्षीः । प्रतिषेधयोरिति किम् ? पूजार्थम् ।।
उदीचां माङो व्यतीहारे ।। 3-4-19 ।।
`क्त्वा तु वर्त्तते । माङो धातोर्व्यतीहारे वर्तमानादुदीचामाचार्याणां मतेन क्त्वा प्रत्ययो भवति । अपमित्य याचते । अपमित्य हरति । अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते । उदीचाङ्ग्रहणात्तु यथाप्राप्तमपि भवति - याचित्वाऽपमयते, हृत्वाऽपमयते ।
मेङः कृतात्वस्यायं निर्देशः कृतो ज्ञापनार्थः -`नानुबन्धकृतमनेजन्तत्वम्(शा.प.15) इति, तेन दाधा घ्वदाप्(1-1-20/2373) इति दैपोऽपि प्रतिषेधो भवति ।।
परावरयोगे च ।। 3-4-20 ।।
परावराभ्यां योगः परावरयोगः । परेण पूर्वस्य योगे गम्यमाने अवरेण च परस्य धातोः क्त्वा प्रत्ययो भवति । परेण तावत्--अप्राप्य नदीं पर्वतः स्थितः । परनदीयोगेन पर्वतो विशिष्यते । अवरयोगे--अतिक्रम्य तु पर्वतं नदी स्थिता । अवरपर्वतयोगेन नदी विशिष्यते ।
समानकर्तृकयोः पूर्वकाले ।। 3-4-21 ।।
समानः कर्त्ता ययोर्धात्वर्थयोस्तत्र पूर्वकाले धात्वर्थे वर्तमानाद्धातोः क्त्वा प्रत्ययो भवति । शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् समानकर्तृकता । भुक्त्वा व्रजति । पीत्वा व्रजति। द्विवचनमतन्त्रम् । स्नात्वा पीत्वा भुक्त्वा दत्त्वा व्रजति ।
समानकर्तृकयोरिति किम् ? भुक्तवति ब्राह्मणे गच्छति देवदत्तः । पूर्वकाले इति किम् ? व्रजति च जल्पति च ।

- आस्यं व्यादाय स्वपिति चक्षुः संमील्य हसतीत्युपसङ्ख्यानमपूर्वकालत्वात् *(म.भा.2.173) ।।

आभीक्ष्ण्ये णमुल् च ।। 3-4-22 ।।
`समानकर्तृकयोः पूर्वकाले इत्येव । आभीक्ष्ण्यम् = पौनः पुन्यम् । प्रकृत्यर्थविशेषणं चैतत् । आभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद्धातोर्णमुल् प्रत्ययो भवति, चकारात् क्त्वा च । द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ । `अभिक्ष्ण्ये द्वे भवतः(8-1-12/2447.वा.) इत्युपसङ्ख्यानाद् द्विर्वचनम् । भोजंभोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति । पायंपायं व्रजति, पीत्वा पीत्वा व्रजति ।।
न यद्यनाकाङ्क्षे ।। 3-4-23 ।।
यच्छब्द उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतोऽनाकाङ्क्षे वाच्ये । यत्र पूर्वोत्तरे क्रिये स्तस्तच्चेद्वाक्यं न परं किञ्चदाकाङ्क्षत इति । णमुलनन्तरः, क्त्वा तु पूर्वसूत्रविहितोऽपि प्रतिषिध्यते । यदयं भुङ्क्ते ततः पचति । यदयमधीते ततः शेते ।
अनाकाङ्क्ष इति किम् ? यदयं भुक्त्वा व्रजति अधीत एव ततः परम् ।।
विभाषाग्रेप्रथमपूर्वेषु ।। 3-4-24 ।।
अप्राप्तविभाषेयम् । `आभीक्ष्ण्ये इति नानुवर्त्तते । अग्रे, प्रथम, पूर्व इत्येतेषूपपदेषु समानकर्तृकयोः पूर्वकाले धातोः क्त्वाणमुलौ प्रत्ययौ विभाषा भवतः । अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति । प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति । पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति ।
विभाषाग्रहणम् - एताभ्यां मुक्ते लडादयोऽपि यथा स्युः । अग्रे भुङ्क्ते ततो व्रजति ।
ननु च वासरूप इति भविष्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीत्येतदनेन ज्ञाप्यते, तेनाभीक्ष्ण्ये लडादयो न भवन्ति ।
उपपदसमासः कस्मान्न क्रियते ? उक्तं तत्रैवकारस्य प्रयोजनम्, `अमैव यत्तुल्यविधानमुपपदं तत्समस्यते, नान्यत् इति ।।
कर्मण्याक्रोशे कृञः खमुञ् ।। 3-4-25 ।।
कर्मण्युपपदे कृञो धातोः खमुञ् प्रत्ययो भवति, आक्रोशे गम्यमाने । चोरङ्कारमाक्रोशति । चोरोऽसि दस्युरसि इत्याक्रोशति । चोरकरणमाक्रोशसम्पादनार्थमेव, न त्वसौ चोरः क्रियते ।।
स्वादुमि णमुल् ।। 3-4-26 ।।
`समानकर्तृकयोः पूर्वकाले, `कृञः इति चानुवर्त्तते । `स्वादुमि इत्यर्थग्रहणम् । स्वाद्वर्थेषूपपदेषु कृञो णमुल् प्रत्ययो भवति । स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारं भुङ्क्ते । लवणङ्कारम् । स्वादुमीति मकारान्तनिपातनमीकाराभावार्थम्, च्व्यन्तस्यापि मकारार्थं दीर्घाभावार्थं च । अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते । वासरूपेण क्त्वापि भवति - स्वादुं कृत्वा भुङ्क्ते ।
तुमर्थाधिकाराच्च सर्व एते भावे प्रत्ययाः । यद्येवम्, स्वादुङ्कारं भुङ्क्ते देवदत्त इति णमुला
कर्तुरनभिहितत्वात्कर्त्तरि कस्मात्तृतीया न भवति ? भुजिप्रत्ययेनाभिहितः कर्त्ता, न चास्मिन्प्रकरणे शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृत्वं हि विरुध्यते । प्रधानशक्त्यभिधाने वा गुणशक्तिरभिहितवत्प्रकाशते ।।
अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ।। 3-4-27 ।।
`कृञः इत्येव । अन्यथादिषूपपदेषु कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत्करोतेर्भवति ।
कथं पुनरसौ सिद्धाप्रयोगः ? निरर्थकत्वान्न प्रयोगमर्हतीति एवमेव प्रयुज्यते । अन्यथा भुङ्क्ते इति यावानर्थस्तावानेव अन्यथा कारं भुङ्क्ते इति गम्यते । अन्यथाकारं भुङ्क्ते । एवङ्कारं भुङ्क्ते । कथङ्कारं भुङ्क्ते । इत्थङ्कारं भुङ्क्ते ।।

सिद्धाप्रयोग इति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ।।
यथातथयोरसूयाप्रतिवचने ।। 3-4-28 ।।
`कृञः `सिद्धाप्रयोगे इति वर्त्तते । यथातथाशब्दयोरुपपदयोः कृञो णमुल् प्रत्ययो भवति, असूयाप्रतिवचने गम्यमाने । यद्यसूयन् पृच्छति प्रतिवचनम् - यथाकारमहं भोक्ष्ये तथाकारमहम्, किं तवानेन ?
असूयाप्रतिवचन इति किम् ? यथा कृत्वाऽहं भोक्ष्ये तथा त्वं द्रक्ष्यसि ।
सिद्धाप्रयोग इत्येव - यथा कृत्वाऽहं शिरो भोक्ष्ये किं तवानेन ?
कर्मणि दृशिविदोः साकल्ये ।। 3-4-29 ।।
कर्मण्युपपदे साकल्यविशिष्टेऽर्थे दृशिविदोर्धात्वोर्णमुल् प्रत्ययो भवति । कन्यादर्शं वरयति । या याः कन्याः पश्यति तास्ता वरयतीत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तान्सर्वान् भोजयतीत्यर्थः ।।
साकल्ये इति किम् ? ब्राह्मणं दृष्ट्वा भोजयति ।।
यावति विन्दजीवोः ।। 3-4-30 ।।
यावच्छब्द उपपदे विन्दतेर्जीवतेश्च णमुल् प्रत्ययो भवति । यावद्वेदं भुङ्क्ते । यावल्लभते तावद् भुङ्क्त इत्यर्थः । यावज्जीवमधीते । यावज्जीवति तावदधीत इत्यर्थः ।।
चर्मोदरयोः पूरेः ।। 3-4-31 ।।
`कर्मणि इत्येव । चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् प्रत्ययो भवति । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ।।
वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।। 3-4-32 ।।
`कर्मणि इत्येव । पूरयतेर्धातोर्णमुल् प्रत्ययो भवति, ऊलोपश्चास्य पूरयतेरन्यतरस्यां भवति, समुदायेन चेद्वर्षस्य प्रमाणम् = इयत्ता गम्यते । गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः । सीतापूरं वृष्टो देवः, सीताप्रं वृष्टो देवः ।।
अस्यग्रहणं किमर्थम् ? उपपदस्य मा भूत् - मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रम् ।।
चेले क्नोपेः ।। 3-4-33 ।।
`कर्मणि इत्येव । `क्नूयी शब्दे उन्दने च(धा.पा.485)- अस्माण्ण्यन्ताद्धातोश्चेलार्थेषु कर्मसु उपपदेषु णमुल् प्रत्ययो भवति, वर्षप्रमाणे गम्ययाने । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ।।
निमूलसमूलयोः कषः ।। 3-4-34 ।।
`कर्मणि इत्येव । निमूलसमूलशब्दयोः कर्मवाचिनोरुपपदयोः कर्षधातोर्णमुल्प्रत्ययो भवति । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । इतः प्रभृति कषादीन्यान्वक्ष्यति, तत्र कषादिषु यथाविध्यनुप्रयोगः(3-4-46/3367) इति ।।
शुष्कचूर्णरूक्षेषु पिषः ।। 3-4-35 ।।
`कर्मणि इत्येव । शुष्कादिषु कर्मवाचिषूपपदेषु पिषेर्धातोर्णमुल् प्रत्ययो भवति । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषं पिनष्टि । चूर्णं पिनष्टीत्यर्थः । रूक्षपेषं पिनष्टि । रूक्षं पिनष्टीत्यर्थः ।।
समूलाकृतजीवेषु हन्कृञ्ग्रहः ।। 3-4-36 ।।
`कर्मणि इत्येव । समूल, अकृत, जीव इत्येतेषु शब्देषु कर्मसूपपदेषु यथासङ्ख्यं हन्, कृञ्, ग्रह इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति । समूलघातं हन्ति । समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति ।।
करणे हनः ।। 3-4-37 ।।
करणे उपपदे हन्तेर्धातोर्णमुल् प्रत्ययो भवति । पाणिघातं वेदिं हन्ति । पादघातं भूमिं हन्ति ।
हिंसार्थानां च समानकर्मकाणाम्(3-4-48/3369) इति णमुलं वक्ष्यति, अहिंसार्थोऽयमारम्भः । नित्यसमासार्थो वा यथाविध्यनुप्रयोगार्थश्च ।
पूर्वविप्रतिषेधेन - हन्तेर्हिंसार्थस्यापि प्रत्ययोऽनेनैवेष्यते - असिघातं हन्ति, शरघातं हन्ति ।।
स्नेहने पिषः ।। 3-4-38 ।।
`करणे इत्येव । स्निह्यते येन तत् स्नेहनम् । स्नेहनवाचिनि करणे उपपदे पिषेर्धातोर्णमुल् प्रत्ययो भवति । उदपेषं पिनष्टि । तैलपेषं पिनष्टि । तैलेन पिनष्टीत्यर्थः ।।
हस्ते वर्त्तिग्रहोः ।। 3-4-39 ।।
`करणे इत्येव । `हस्ते इत्यर्थग्रहणम् । वर्त्तिर्ण्यन्तः । हस्तवाचिनि करण उपपदे वर्त्तयतेर्गृह्णातेश्च णमुल् प्रत्ययो भवति । हस्तेन वर्त्तयति, हस्तवर्त्तं वर्त्तयति । करवर्त्तम् । पाणिवर्त्तम् । ग्रहेः खल्वपि - हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ।
स्वे पुषः ।। 3-4-40 ।।
`करणे इत्येव । `स्वे इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषेर्धातोर्णमुल्प्रत्ययो भवति । आत्मीयज्ञातिधनवचनः स्वशब्दः । स्वपोषं पुष्णाति । आत्मपोषम् । गोपोषम् । पितृपोषम् । धनपोषम् । रैपोषम् ।।
अधिकरणे बन्धः ।। 3-4-41 ।।
अधिकरणवाचिन्युपपदे बध्नातेर्धातोर्णमुल्प्रत्ययो भवति । चक्रबन्धं बध्नाति । कूटबन्धं बध्नाति । मुष्टिबन्धं बध्नाति। चोरकबन्धं बध्नाति । चोरके बध्नातीत्यर्थः ।।
संज्ञायाम् ।। 3-4-42 ।।
संज्ञायां विषये बध्नातेर्धातोर्णमुल् प्रत्ययो भवति । क्रौञ्चबन्धं बध्नाति। मयूरिकाबन्धं बध्नाति । मयूरिकाबन्धम् , अट्टालिकाबन्धं बद्धः ।

बन्धविशेषाणां नामधेयान्येतानि ।।
कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।। 3-4-43 ।।
जीवपुरुषयोः कर्तृवाचिनोरुपपदयोर्यथासङ्ख्यं नशिवहोर्धात्वोर्णमुल् प्रत्ययो भवति । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । परुषः प्रेष्यो भूत्वा वहतीत्यर्थः ।।
कर्त्तरीति किम् ? जीवेन नष्टः । पुरुषेणोढः ।।
ऊर्ध्वे शुषिपूरोः ।। 3-4-44 ।।
कर्तृग्रहणमनुवर्त्तते । ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्धात्वोर्णमुल् प्रत्ययो भवति । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वं शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यते इत्यर्थः ।।
उपमाने कर्मणि च ।। 3-4-45 ।।
उपमीयतेऽनेनेत्युपमानम् । उपमाने कर्मण्युपपदे चकारात्कर्त्तरि धातोर्णमुल् प्रत्ययो भवति । घृतनिधायं निहितः । घृतमिव निहित इत्यर्थः । सुवर्णनिधायं निहितः । सुवर्णमिव निहित इत्यर्थः । कर्त्तरि खल्वपि - अजकनाशं नष्टः । अजक इव नष्टः । चूडकनाशम् । दन्तनाशम् ।।
कषादिषु यथाविध्यनुप्रयोगः ।। 3-4-46 ।।
निमूलसमूलयोः(3-4-34/3355) इत्येतदारभ्य कषादयः, एतेषु यथाविध्यनुप्रयोगो भवति । यस्माद्धातोर्णमुल् प्रत्ययो भवति स एवानुप्रयोक्तव्यः ।।
ननु धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव ? `यथाविधि इति नियमार्थं वचनम्, तथा चैवोदाहृतम् ।
उपदंशस्तृतीयायाम् ।। 3-4-47 ।।
`दशं दशने(धा.पा.990)अस्माद्धातोरुपपूर्वातृतीयान्त उपपदे णमुल्प्रत्ययो भवति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम् । आर्द्रकोपदंशम्, आर्द्रकेणोपदंशम् । अत्र विकल्पेनोपपदसमासः तृतीयाप्रभृतीन्यन्यतरस्याम्(2-2-21/784) इति । मूलकादि चोपदंशेः कर्म । भुजेः करणम् ।।
सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि भवति - मूलकेनोपदश्य भुङ्क्ते ।।
हिंसार्थानां च समानकर्मकाणाम् ।। 3-4-48 ।।
`तृतीयायाम् इत्येव । हिंसा = प्राण्युपघातः । तदर्थानां धातूनामनुप्रयोगधातुना समानकर्मकाणां तृतीयान्त उपपदे णमुल् प्रत्ययो भवति । दण्डोपघातं गाः कालयति, दण्डेनोपघातम् । दण्डताडम्, दण्डेन ताडम् ।
समानकर्मकाणामिति किम् ? चोरं दण्डेनोपहत्य गोपालको गाः कालयति ।
सप्तम्यां चोपपीडरुधकर्षः ।। 3-4-49 ।।
उपशब्दः प्रत्येकमभिसम्बध्ये । उपपूर्वेभ्यः पीडरुधकर्षेभ्यः सप्तम्यन्त उपपदे चकारातृतीयान्त उपपदे णमुल्प्रत्ययो भवति । पार्श्वोपपीडं शेते, पार्श्वयोरुपीडम्, पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति, व्रजे उपरोधम्, व्रजेनोपरोधम् । पाण्युपकर्षं धानाः सङ्गृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम् । कर्षतेरिदं ग्रहणं न कृषतेः ।।
समासत्तौ ।। 3-4-50 ।।
`सप्तम्याम्, `तृतीयायाम् इति वर्त्तते । समासत्तिः = सन्निकर्षः । समासत्तौ गम्यमानायां तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति । केशग्राहं युद्ध्यन्ते, केशेषु ग्राहम्, केशैर्ग्राहम् । हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर्ग्राहम् । युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः ।।
प्रमाणे च ।। 3-4-51 ।।
`तृतीयासप्तम्योः इत्येव । प्रमाणम् = आयामः, दैर्घ्यम् । प्रमाणे गम्यमाने तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम् । त्र्यङ्गुलोत्कर्षम् ।।
अपादाने परीप्सायाम् ।। 3-4-52 ।।
परीप्सा = त्वरा । परीप्सायां गम्यमानायामपादान उपपदे धातोर्णमुल् प्रत्ययो भवति । शय्योत्थायं धावति, शय्याया उत्थाय । एवं नाम त्वरते यदवश्यंकर्त्तव्यमपि नापेक्षते । शय्योत्थानमात्रमाद्रियते । रन्ध्रापकर्षं पयः पिबति । भ्राष्ट्रापकर्षमपूपान् भक्षयति ।
परीप्सायामिति किम् ? आसनादुत्थाय गच्छति ।।
द्वितीयायां च ।। 3-4-53 ।।
`परीप्सायाम् इत्येव । द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोर्णमुल् प्रत्ययो भवति । यष्टिग्राहं युध्यन्ते; यष्टिं ग्राहम्, लोष्टग्राहम्, लोष्टं ग्राहम्। एवं नाम त्वरते यदायुधग्रहणमपि नाद्रियते । लोष्टादिकं यत्किञ्चिदासन्नं तद् गृह्णाति ।।
स्वाङ्गेऽध्रुवे ।। 3-4-54 ।।
`द्वितीयायाम् इत्येव । अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति । अक्षिनिकाणं जल्पति । भ्रूविक्षेपं कथयति ।
अध्रुव इति किम् ? उत्क्षिप्य शिरः कथयति ।
यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवम् - `अद्रवं मूर्त्तिमत्स्वाङ्गम्(काशिका.4-1-54) ।।
परिक्लिश्यमाने च ।। 3-4-55 ।।
`स्वाङ्गे, `द्वितीयायाम् इत्येव । परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति । परिक्लेशः = सर्वतो विबाधनम्, दुःखनम् । उरःपेषं युद्ध्यन्ते, उरः प्रतिपेषं युद्ध्यन्ते । शिरः पेषम्, शिरः प्रतिपेषम् । कृत्स्नमुरः पीडयन्तो युध्यन्ते । ध्रुवार्थोऽयमारम्भः ।।
विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।। 3-4-56 ।।

`द्वितीयायाम् इत्येव। द्वितीयान्ते उपपदे विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति, व्याप्यमाने आसेव्यमाने चार्थे गम्यमाने। विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां सम्बन्धो व्याप्तिः। तात्पर्यम् = आसेवा। द्रव्ये व्याप्तिः, क्रियायामासेवा। गेहानुप्रवेशमास्ते। समासेन व्याप्त्यासेवयोरुक्तत्वात् नित्यवीप्सयोः(8-1-4/2140) इति द्विर्वचनं न भवति। असमासपक्षे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रियावचनस्य। तथा च वक्ष्यति -`सुप्सु वीप्सा, तिङ्क्षु नित्यता इति।

गेहं गेहमनुप्रवेशमास्ते। आसेवायाम् - गेहमनुप्रवेशमनुप्रवेशमास्ते। पति - गेहानुप्रपातमास्ते, गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते। पदि - गेहानुप्रपादमास्ते, गेहं गेहमनुप्रपादम्, गेहमनुप्रपादमनुप्रपादम्। स्कन्दि - गेहावस्कन्दमास्ते, गेहं गेहमवस्कन्दम्, गेहमवस्कन्दमवस्कन्दम्।।

व्याप्यमानासेव्यामानयोरिति किम्? गेहमनुप्रविश्य भुङ्क्ते।

ननु चाभीक्ष्ण्ये णमुल्विहित एव, आसेवा चाभीक्ष्ण्यमेव, किमर्थं पुनरासेवायां णमुलुच्यते? क्त्वानिवृत्त्यर्थमिति चेत्, न; इष्टत्वात्तस्य। द्वितीयोपपदार्थं तर्हि वचनम् - उपपदसमासः पक्षे यथा स्यात्। तेन हि सत्युपपदाभावः।।

अस्यतितृषोः क्रियान्तरे कालेषु।। 3-4-57।।

`द्वितीयायाम् इत्येव। क्रियामन्तरयति क्रियान्तरः = क्रियाव्यवधायकः। क्रियान्तरे धात्वर्थे वर्तमानाभ्यामस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषूपपदेषु णमुल्प्रत्ययो भवति। द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासं गाः पाययति। त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं गाः पाययति। द्व्यहतर्षं गाः पाययति, द्व्यहं तर्षं गाः पाययति। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते = विच्छिद्यते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः।

अस्यतितृषोरिति किम्? द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तर इति किम्? अहरत्यस्येषून् गतः। न गतिर्व्यवधीयते। कालेष्वितिकिम्? योजनमत्यस्य गाः पाययति। अध्वकर्मकमत्यसनं व्यवधायकम्, न कालकर्मकम्।।

नाम्न्यादिशिग्रहोः।। 3-4-58।।

`द्वितीयायाम् इत्येव। नामशब्दे द्वितीयान्त उपपदे आदिशेर्ग्रहेश्च धातोर्णमुल्प्रत्ययो भवति। नामादेशमाचष्टे। नामग्राहमाचष्टे।।

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ।। 3-4-59

अव्यय उपपदेऽयथाभिप्रेताख्याने गम्यमाने करोतेः क्त्वाणमुलौ भवतः। ब्राह्मण, पुत्त्रस्ते जातः, किं तर्हि वृषल, नीचैः कृत्याचक्षे। नीचैः कृत्वा, नीचैः कारम्। उच्चैर्नाम प्रियमाख्येयम्। ब्राह्मण, कन्या ते गर्भिणी, कि तर्हि वृषल, उच्चैः कृत्याचक्षे, उच्चैः कृत्वा, उच्चैः कारम्। नीचैर्नामाप्रियमाख्येयम्।

अयथाभिप्रेताख्यान इति किम्? उच्चैः कृत्वाऽऽचष्टे पुत्त्रस्ते जात इति। क्त्वाग्रहणं किम्, यावता सर्वस्मिन्नेवात्र प्रकरणे वासरूपेण क्त्वा भवतीत्युक्तम्? समासार्थं वचनम्। तथा च क्त्वा च(2-2-22/785) इत्यस्मिन्सूत्रे तृतीयाप्रभृतीन्यन्यतरस्याम्(2-2-21/784) इति वर्त्तते। णमुलधिकारे पुनर्णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम्, तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यति।।

तिर्यच्यपवर्गे।। 3-4-60।।

तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतः, अपवर्गे गम्यमाने। अपवर्गः = समाप्तिः। तिर्यक्कृत्य गतः, तिर्यक्कृत्वा गतः, तिर्यक्कारं गतः। समाप्य गत इत्यर्थः।

अपवर्ग इति किम्? तिर्यक्कृत्वा काष्ठं गतः।

`तिर्यचि इति शब्दानुकरणम्। न च प्रकृतिवदनुकरणेन भवितिव्यम्; अनुक्रियमाणरूपविनाशप्रसङ्गात् -एतदोऽश्(2-4-33/1962), अदसो मात्(1-1-12/101) इति।।

स्वाङ्गे तस्प्रत्यये कृभ्वोः।। 3-4-61।।

तस्प्रत्ययो यतः स्वाङ्गात्तदेवमुच्यते। तस्प्रत्यये स्वाङ्गवाचिन्युपपदे करोतेर्भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। यथासङ्ख्यमत्र नेष्यते; अस्वरितत्वात्। मुखतःकृत्य गतः, मुखतः कृत्वा गतः, मुखतः कारं

गतः। मुखतोभूय तिष्ठति, मुखतो भूत्वा तिष्ठति, मुखतोभावं तिष्ठति। पृष्ठतःकृत्य गतः, पृष्ठतः कृत्वा गतः, पृष्ठतःकारं गतः। पृष्ठतोभूय गतः, पृष्ठतो भूत्वा, पृष्ठतोभावम्।

स्वाङ्ग इति किम्? सर्वतः कृत्वा गतः। तस्ग्रहणं किम्? मुखीकृत्य गतः। मुखीभूय गतः। प्रत्ययग्रहणं किम्? मुखे तस्यतीति मुखतः, मुखतः कृत्वा गतः।।

नाधार्थप्रत्यये च्व्यर्थे।। 3-4-62।।

नार्थो धार्थश्च प्रत्ययो यस्मात्स एवमुच्यते। नाधार्थप्रत्यये शब्दे च्व्यर्थ उपपदे कृभ्वोर्धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। अनाना नाना कृत्वा गतः नानाकृत्यगतः, नाना कृत्वा गतः, नानाकारं गतः। विनाकृत्यगतः, विना कृत्वा गतः, विनाकारं गतः। नानाभूय गतः, नाना भूत्वा गतः, नानाभावं गतः। विनाभूय गतः, विना भूत्वा गतः, विनाभावं गतः। द्विधाकृत्य गतः, द्विधाकारं गतः, द्विधा कृत्वा गतः। द्विधाभूय गतः, द्विधा भूत्वा गतः, द्विधाभावं गतः। द्वैधङ्कृत्य गतः, द्वैधं कृत्वा गतः, द्वैधङ्कारं गतः. द्वैधम्भूय गतः, द्वैधं भूत्वा गतः, द्वैधम्भावं गतः।

प्रत्ययग्रहणं किम्? हिरुक् कृत्वा। पृथक् कृत्वा।

च्व्यर्थ इति किम्? नाना कृत्वा काष्ठानि गतः।

धार्थमर्थग्रहणम्, ना पुनरेक एव -विनञ्भ्यां नानाञौ(5-2-27/1828) इति।।

तूष्णीमि भुवः।। 3-4-63।।

तूष्णींशब्द उपपदे भवतेर्धातोः क्त्वाणमुलौ प्रत्ययौ भवतः। तूष्णींभूय, तूष्णीं भूत्वा, तूष्णींभावम्। भूग्रहणं कृञो निवृत्त्यर्थम्।।

अन्वच्यानुलोम्ये ।। 3-4-64 ।।
अन्वक्शब्द उपपदे भवतेर्धातोरानुलोम्ये क्त्वाणमुलौ भवतः । आनुलोम्यम् = अनुलोमता, अनुकूलत्वम्, परिचित्तानुविधानम् । अन्वग्भूयास्ते । अन्वग्भूत्वाऽऽस्ते । अन्वग्भावमास्ते ।
आनुलोम्य इति किम् ? अन्वग्भूत्वा तिष्ठति ।।
शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।। 3-4-65 ।।
शकादिषूपपदेषु अस्त्यर्थेषु वा धातुमात्रात्तुमुन् प्रत्ययो भवति । अक्रियार्थोपपदार्थोऽयमारम्भः । शक्नोति भोक्तुम् । धृष्णोति भोक्तुम् । जानाति भोक्तुम् । ग्लायति भोक्तुम् । घटते भोक्तुम् । आरभते भोक्तुम् । लभते भोक्तुम् । प्रक्रमते भोक्तुम् । सहते भोक्तुम् । अर्हति भोक्तुम् । अस्त्यर्थेषु खल्वपि - अस्ति भोक्तुम् । भवति भोक्तुम् । विद्यते भोक्तुम् ।।
पर्याप्तिवचनेष्वलमर्थेषु ।। 3-4-66 ।।
पर्याप्तिः = अन्यूनता । पर्याप्तिवचनेष्वलमर्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति । पर्याप्तो भोक्तुम् । अलं भोक्तुम् । भोक्तुं पारयति ।
पर्याप्तिवचनेष्विति किम् ? अलं कृत्वा । अलमर्थेष्विति किम् ? पर्याप्तं भुङ्क्ते । पूर्वसूत्रे शकिग्रहणमनलमर्थम् - शक्यमेवं कर्तुमिति ।।
कर्त्तरि कृत् ।। 3-4-67 ।।
कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति । कृदुत्पत्तिवाक्यानामयं शेषः । तत्र येष्वर्थनिर्देशो नास्ति तत्रेदमुपतिष्ठते, अर्थाकाङ्क्षत्वात् । न ख्युन्नादिवाक्येषु, साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वात् । कारकः । कर्त्ता । नन्दनः । ग्राही । पचः ।।
भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।। 3-4-68 ।।
भव्यादयः शब्दाः कर्त्तरि वा निपात्यन्ते । तयोरेव कृत्यक्तखलर्थाः(3-4-70/2833) इति भावकर्मणोः प्राप्तयोः कर्त्ता च वाच्यः पक्षे उच्यते । भवत्यसौ भव्यः, भव्यमनेनेति वा । गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानीति वा । प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा । उपस्थानीयोऽन्तेवासी गुरोः, अपस्थानीयः शिष्येण वा गुरुः । जायतेऽसौ जन्यः, जन्यमनेनेति वा ।
आप्लवतेऽसावाप्लाव्यः, आप्लाव्यमनेनेति वा । आपतत्यसावापात्यः । आपात्यमनेनेति वा ।।
लः कर्मणि च भावे चाकर्मकेभ्यः ।। 3-4-69 ।।
`लः इत्युत्सृष्टानुबन्धं सामान्यं गृह्यते, प्रथमाबहुवचनान्तं चैतत् । लकाराः कर्मणि कारके भवन्ति, चकारात्कर्तरि च । अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात्कर्तरि च । गम्यते ग्रामो देवदत्तेन । गच्छति ग्रामं देवदत्तः । अकर्मकेभ्यः - आस्यते देवदत्तेन । आस्ते देवदत्तः । सकर्मकेभ्यो भावे न भवन्ति ।।
तयोरेव कृत्यक्तखलर्थाः ।। 3-4-70 ।।
तयोरेव भावकर्मणोः कृत्यसंज्ञकाः क्तखलर्थाश्च प्रत्यया भवन्ति । एवकारः कर्तुरपकर्षणार्थः ।
कृत्याः कर्मणि - कर्तव्यः कटो भवता । भोक्तव्य ओदनो भवता । भावे - आशितव्यं भवता । शयितव्यं भवता ।
क्तः कर्मणि - कृतः कटो भवता । भुक्त ओदनो भवता । भावे - आसितं भवता । शयितं भवता ।।
खलर्थाः कर्मणि - ईषत्करः कटो भवता । सुकरः । दुष्करः । भावे - ईषदाढ्यम्भवं भवता । स्वाढ्यम्भवं भवता । भावे चाकर्मकेभ्यः(3-4-69/2151) इत्यनुवृत्तेस्सकर्मकेभ्यो भावे न भवन्ति ।।
आदिकर्मणि क्तः कर्तरि च ।। 3-4-71 ।।
आदिकर्मणि यः क्तो विहितः स कर्तरि भवति । चकाराद्यथाप्राप्तं भावकर्मणोः । आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितस्तस्यायमर्थनिर्देशः । प्रकृतः कटं देवदत्तः, प्रकृतः कटो देवदत्तेन, प्रकृतं देवदत्तेन । प्रभुक्त ओदनं देवदत्तः, प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन ।।
गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।। 3-4-72 ।।
गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः स कर्तरि भवति । चकाराद्यथाप्राप्तं च भावकर्मणोः । गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन । अकर्मकेभ्यः - ग्लानो भवान् । ग्लानं भवता । आसितो भवान् । आसितं भवता । श्लिष - उपश्लिष्टो गुरुं भवान्, उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता । शीङ् - उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता । स्था - उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता । आस - उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं भवता । वस - अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता । जन - अनुजातो माणवको माणविकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन । रुह - आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता । जीर्यति - अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन, अनुजीर्णं देवदत्तेन ।।
श्लिषादयस्सोपसर्गास्सकर्मका भवन्ति, तदर्थमेषामुपादानम् ।।
दाशगोघ्नौ सम्प्रदाने ।। 3-4-73 ।।
दाशगोघ्नौ शब्दौ सम्प्रदाने कारके निपात्येते । `दाशृ दाने(धा.पा.883), ततः पचाद्यच् । स कृत्संज्ञकत्वात्कर्तरि प्राप्तः, सम्प्रदाने निपात्यते । दाशन्ति तस्मै इति दाशः । आगताय तस्मै दातुं गां हन्तीति गोघ्नः, अर्घार्होऽतिथिः । टगत्र निपात्यते । निपातनसामर्थ्यादेव गोघ्न ऋत्विगादिरुच्यते, न तु चण्डालादिः । असत्यपि च गोहनने तस्य योग्यतया गोघ्न इत्यभिधीयते ।।
भीमादयोऽपादाने ।। 3-4-74 ।।
भीमादयः शब्दा अपादाने निपात्यन्ते । उणादिप्रत्ययान्ता एते, इषुधीन्धिदसिश्याधूसूभ्यो मक्(उ.1.144) भियष्षुक् ह्रस्वश्च(उ.147) इत्येवमादयः । ताभ्यामन्यत्रोणादयः(3-4-75/3174) इति पर्युदासे प्राप्ते निपातनमारभ्यते । भीमः । भीष्मः । भयानकः । वरुः । चरुः । भूमिः । रजः । संस्कारः । सङ्क्रन्दनः । प्रपतनः । समुद्रः । स्रुचः । स्रुक् । खलतिः ।

ताभ्यामन्यत्रोणादयः ।। 3-4-75 ।।
उणादयः शब्दाः ताभ्यामपादानसम्प्रदानाभ्यामन्यत्र कारके भवन्ति । कृत्त्वात् कर्तयेव प्राप्ताः कर्मादिषु कथ्यन्ते । `ताभ्याम् इति सम्प्रदानार्थः प्रत्यवमर्शः, अन्यथा ह्यपादानमेव पर्युदस्येत; अनन्तरत्वात् । कृषितोऽसौ कृषिः । तनित इति तन्तुः । वृत्तमिति वर्त्म । चरितं चर्म ।।
क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।। 3-4-76 ।।
ध्रौव्यार्थाः = अकर्मकाः, प्रत्यवसानार्थाः = अभ्यवहारार्था इति स्वनिकायप्रसिद्धिः । ध्रौव्यगतिप्रत्यवसानार्थेभ्यो यः क्तो विहितः सोऽधिकरणे भवति । चकाराद्यथाप्राप्तं च। ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु, प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु । ध्रौव्यार्थेभ्यस्तावत् - आसितो देवदत्तः, आसितं तेन, इदमेषामासितम् । गत्यर्थेभ्यः - यातो देवदत्तो ग्रामम्, यातो देवत्तेन ग्रामः, यातं देवदत्तेन, इदमेषां यातम् । प्रत्यवसानार्थेभ्यः - भुक्त ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदमेषां भुक्तम् ।।
कथं भुक्ता ब्राह्मणाः, पीता गाव इति ? अकारो मत्वर्थीयः - भुक्तमेषामस्ति, पीतमेषामस्तीति ।
लस्य ।। 3-4-77 ।।
`लस्य इत्ययमधिकारः । अकार उच्चारणार्थः । लकारमात्रं स्थानित्वेनाधिक्रियते । यदित ऊर्ध्वमनुक्रमिष्यामो लस्येत्येवं तद्वेदितव्यम् । किं चेदं लस्येति ? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च, तेषां विशेषकराननुबन्धानुत्सृज्य यत्सामान्यं तद् गृह्यते । षट्टितः, चत्वारो ङितः । अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । इति ।।
अथ लकारमात्रस्य ग्रहणं कस्मान्न भवति - लुनाति, चूडाल इति ? धात्वधिकारोऽनुवर्तते, कर्त्रादयश्च विशेषकाः ।।
तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।। 3-4-78 ।।
लस्य तिबादय आदेशा भवन्ति । तिप्सिप्मिपां पकारः स्वरार्थः । इटष्टकारः इटोऽत्(3-4-106/2257) इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वान्न देशविध्यर्थः । महिङो ङकारस्तिङिति प्रत्याहारग्रहणार्थः । पचति । पचतः । पचन्ति । पचसि । पचथः । पचथ । पचामि । पचावः । पचामः । पचते । पचेते । पचन्ते । पचसे । पचेथे । पचध्वे । पचे । पचावहे । पचामहे । एवमन्येष्वपि लकारेषूदाहार्यम् ।।
टित आत्मनेपादानां टेरे ।। 3-4-79 ।।
टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशो भवति । तथा चैवोदाहृतम् ।।
इह कस्मान्न भवति - पचमानः, यजमानः ? प्रकृतैस्तिबादिभिरात्मनेपदानि विशेष्यन्ते ।।
थासः से ।। 3-4-80 ।।
`टितः इत्येव । टितो लकारस्य यस्थास्तस्य सेशब्द आदेशो भवति । पचसे । पेचिषे । पक्तासे । पक्ष्यसे ।।
लिटस्तझयोरेशिरेच् ।। 3-4-81 ।।
लिडादेशयोस्तझयोर्यथासङ्ख्यम् एश्, इरेच् इत्येतावादेशौ भवतः । शकारः सर्वादेशार्थः । चकारः स्वरार्थः । पेचे, पेचाते, पेचिरे । लेभे, लेभाते, लेभिरे ।।
परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।। 3-4-82 ।।
`लिटः इत्येव । लिडादेशानां परस्मैपदसंज्ञकानां यथासङ्ख्यं तिबादीनां णलादयो नवादेशा भवन्ति । लकारः स्वरार्थः । णकारो वृद्ध्यर्थः । पपाच । पेचतुः । पेचुः । पेचिथ, पपक्थ । पेचथुः । पेच । पपाच, पपच । पेचिव । पेचिम ।।
विदो लटो वा ।। 3-4-83 ।।
`परस्मैपदानाम् इत्येव । `विद ज्ञाने(धा.पा.1065) अस्माद्धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेनादेशा भवन्ति । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ।।
न च भवति - वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ।।
ब्रुवः पञ्चानामादित आहो ब्रुवः ।। 3-4-84 ।।
`परस्मैपदानाम् इत्येव । `लटो वा इति च । ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां पञ्चैव णलादय आदेशा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति । आह । आहतुः । आहुः । आत्थ ।
आहथुः ।
न च भवति - ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः ।
पञ्चानामिति किम् ? ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । आदित इति किम् ? परेषां मा भूत् ।
`ब्रुवः इति पुनर्वचनं स्थान्यर्थम्, परस्मैपदानामेव हि स्यात् ।।
लोटो लङ्वत् ।। 3-4-85 ।।
अतिदेशोऽयम् । लोटो लङ्वत्कार्यं भवति । तामादयः, सलोपश्च । पचताम् । पचतम् । पचत । पचाव । पचाम ।
अडाटौ कस्मान्न भवतः, तथा झेर्जुसादेशः(3-4-108/2213) लङः शाकटायनस्यैव(3-4-111/2463) इति - वान्तु, यान्तु ? विदो लटो वा(3-4-83/2464) इत्यतो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा भविष्यति ।।
एरुः ।। 3-4-86 ।।
`लोटः इत्येव । लोडादेशानामिकारस्य उकारादेशो भवति । पचतु । पचन्तु ।

- हिन्योरुत्वप्रतिषेधो वक्तव्यः *(म.भा.2.185) । न वा, उच्चारणसामर्थ्यात् । अथवा `वा इति वर्तते, सा च व्यवस्थितविभाषा ।।

सेर्ह्यपिच्च ।। 3-4-87 ।।
`लोटः इत्येव । लोडादेशस्य सेः `हि इत्ययमादेशो भवति, अपिच्च भवति । स्थानिवद्भावात्पित्त्वं प्राप्तं प्रतिषिध्यते । लुनीहि । पुनीहि । राध्नुहि । तक्ष्णुहि ।।
वाच्छन्दसि ।। 3-4-88 ।।
अपित्त्वं विकल्प्यते । लादेशश्छन्दसि विषये हिशब्दो वाऽपिद् भवति । `युयोध्यस्मज्जुहुराणमेनः(ऋ.1-189-1), प्रीणाहि, प्रीणीहि ।।
मेर्निः ।। 3-4-89 ।।
`लोटः इत्येव । लोडादेशस्य मेर्निरादेशो भवति । उत्वलोपयोरपवादः । पचानि । पठानि ।।
आमेतः ।। 3-4-90 ।।
`लोटः इत्येव । लोट्सम्बन्धिन एकारस्य आमित्ययमादेशो भवति । पचताम् । पचेताम् । पचन्ताम् ।।
सवाभ्यां वामौ ।। 3-4-91 ।।
`लोटः इत्येव । सकारवकाराभ्यामुत्तरस्य लोट्सम्बन्धिन एकारस्य यथासङ्ख्यं व, अम् इत्येतावादेशौ भवत । आमोऽपवादः । पचस्व । पचध्वम् ।।
आडुत्तमस्य पिच्च ।। 3-4-92 ।।
`लोटः इत्येव । लोट्सम्बन्धिन उत्तमपुरुषस्याऽऽडागमो भवति, स चोत्तमपुरुषः पिद्भवति । करवाणि, करवाव, करवाम । करवै, करवावहै, करवामहै ।।
एत ऐ ।। 3-4-93 ।।
`लोट् `उत्तमस्य इति वर्तते । लोडुत्तमसम्बन्धिन एकारस्य ऐकारादेशो भवति । आमोऽपवादः । करवै, करवावहै, करवामहै ।।
इह कस्मान्न भवति - पचावेदम्, यजावेदम् ? बहिरङ्गलक्षणत्वाद् गुणस्य ।।
लेटोऽडाटौ ।। 3-4-94 ।।
लोटोऽडाटागमौ भवतः पर्यायेण । `जोषिषत्(ऋ.2-35-1) । `तारिषत्(वा.सं.23.32) । मन्दिषत् । `पताति विद्युत्(ऋ.4-16-17) । `प्रजापतिरुदधिं च्यावयाति(तै.सं.3-5-5.2) ।।
आत ऐ ।। 3-4-95 ।।
`लेटः इत्येव । लेट्सम्बन्धिन आकारस्य ऐकारादेशो भवति । प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः । मन्त्रयैते, मन्त्रयैथे । करवैते, करवैथे ।
आटः कस्मान्न भवति ? विधानसामर्थ्यात् ।।
वैतोऽन्यत्र ।। 3-4-96 ।।
`लेटः इत्येव । लेट्सम्बन्धिन एकारस्य वा ऐकारादेशो भवति । अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते - आत ऐ(3-4-95/3429) इत्येतद्विषयं वर्जयित्वा एत ऐ भवति । सप्ताहानि शासै । `अहमेव पशूनामीशै(काठ.सं.25.1) । `मदग्रा एव वो ग्रहा गृह्यान्तै(तै.सं.6-4-7.1) । `मद्देवत्यान्येव वः पात्राण्युच्यान्तै(तै.6-4-7.2) ।
न च भवति--`यत्र क्व च ते मनो दक्षं दधस उत्तरम्(ऋ.6-16-17) ।
अन्यत्रेति किम् ? मन्त्रयैते । मन्त्रयैथे ।
इतश्च लोपः परस्मैपदेषु ।। 3-4-97 ।।
`लेटः इत्येव । लेट्सम्बन्धिन इकारस्य परस्मैपदविषयस्य लोपो भवति । वानुवृत्तेः पक्षे श्रवणमपि भवति । `जोषिषत्(ऋ.2-3-5.1) । `तारिषत्(वा.सं.23.32) । मन्दिषत् ।
न च भवति - `पताति दिद्युत्(ऋ.4-16-17) । `प्रजापतिरुदधिं च्यावयाति(तै.सं.3-5-5.2) ।
परस्मैपदग्रहणम् - इड्वहिमहिङां मा भूत् ।।
स उत्तमस्य ।। 3-4-98 ।।
`लेटः इति, `वा इति च वर्तते । लेट्सम्बन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति । करवाव, करवाम ।
न च भवति - करवावः, करवामः ।
उत्तमग्रहणम् - पुरुषान्तरे मा भूत् ।।
नित्यं ङितः ।। 3-4-99 ।।
`लेटः इति निवृतम् । ङितो लकारस्य य उत्तमस्तस्य नित्यं सकारस्य लोपो भवति । अपचाव । अपचाम ।
नित्यग्रहणं विकल्पनिवृत्यर्थम् ।।
इतश्च ।। 3-4-100 ।।
`ङितः इत्येव । ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति । अपचत् । अपाक्षीत् ।
परस्मैपदेष्वित्येव - अपचावहि, अपचामहि ।।
तस्थस्थमिपां तान्तन्तामः ।। 3-4-101 ।।
`ङितः इत्येव । ङिल्लकारसम्बन्धिनां चतुर्णां यथासङ्ख्यं तामादय आदेशा भवन्ति । अपचताम्, अपचतम्, अपचत, अपचम् । अपाक्ताम्, अपाक्तम्, अपाक्त, अपाक्षम् ।।

लिङः सीयुट् ।। 3-4-102 ।।
लिङादेशानां सीयुडागमो भवति । टकारो देशविध्यर्थः । उकार उच्चारणार्थः । पचेत, पचेयाताम्, पचेरन् । पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् ।
यासुट् परस्मैपदेषूदात्तो ङिच्च ।। 3-4-103 ।।
`लिङः इत्येव । परस्मैपदविषयस्य लिङो यासुडागमो भवति, स चोदात्तो भवति, ङिच्च । सीयुटोऽपवादः । आगमानुदात्तत्वे प्राप्ते, ङित्त्वं तु लिङ एव विधीयते; तत्र तत्कार्याणां सम्भवाद्, नागमस्य । कुर्यात्। कुर्याताम् । कुर्युः ।
स्थानिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटो ङिद्वचनं ज्ञापनार्थम् - लकाराश्रयङित्त्वमादेशानां न भवतीति । अचिनवम् । अकरवम् ।
किदाशिषि ।। 3-4-104 ।।
आशिषि यो लिङ् तस्य यासुडागमो भवति, स चोदात्तः किद्वद्भवति । प्रत्ययस्यैवेदं कित्वम्, नागमस्य; प्रयोजनाभावात् । ङित्त्वे प्राप्ते कित्त्वं विधीयते । गुणवृद्धिप्रतिषेधस्तुल्यः, सम्प्रसारणम्, जागर्तेर्गुणे च विशेषः । इष्यात्, इष्याताम्, इष्यासुः । जागर्यात्, जागर्यास्ताम्, जागर्यासुः । आशिषीति किम् ? वच्यात् । जागृयात् ।।
झस्य रन् ।। 3-4-105 ।।
`लिङः इत्येव । झस्य लिङादेशस्य रन् - इत्ययमादेशो भवति । झोऽन्तापवादः । पचेरन् । यजेरन् । कृषीरन् ।।
इटोऽत् ।। 3-4-106 ।।
लिङादेशस्य इटः `अत् इत्ययमादेशो भवति । पचेय । यजेय । कृषीय । हृषीय ।
तकारस्येत्संज्ञाप्रतिषेधः प्राप्नोति - न विभक्तौ तुस्माः(1-3-4/190) इति ? नैवायमादेशावयवस्तकारः, किं तर्हि ? मुखसुखार्थ उच्चार्यते ।
आगमस्येटो ग्रहणं न भवति, `अर्थवद्ग्रहणे नानर्थकस्य(व्या.प.1) इति ।।
सुट् तिथोः ।। 3-4-107 ।।
`लिङः इत्येव । लिङ्सम्बन्धिनोस्तकारथकारयोः सुडागमो भवति । तकारथकारावागमिनौ, लिङ् तद्विशेषणम्, सीयुटस्तु लिङेवागमी । तेन भिन्नविषयत्वात्सुटा बाधनं न भवति । तकारे इकार उच्चारणार्थः । कृषीष्ट, कृषीयास्ताम् । कृषीष्ठाः, कृषीयास्थाम् ।।
झेर्जुस् ।। 3-4-108 ।।
`लिङः इत्येव । लिङादेशस्य झेर्जुस् आदेशो भवति । झोऽन्तावादः । पचेयुः । यजेयुः ।।
सिजभ्यस्तविदिभ्यश्च ।। 3-4-109 ।।
अलिङर्थ आरम्भः । सिचः परस्य, अभ्यस्तसंज्ञकेभ्यो, वेत्तेश्चोत्तरस्य झेर्जुस् आदेशो भवति । अभ्यस्तविदिग्रहणमसिजर्थम् । `ङितः इति चानुवर्तते । सिचस्तावत् - अकार्षुः, अहार्षुः । अभ्यस्तात् - अबिभयुः, अजिह्रयुः, अजागरुः । विदेः - अविदुः ।।
आतः ।। 3-4-110 ।।
सिज्ग्रहणमनुवर्तते । सिच आकारान्ताच्च परस्य झेर्जुसादेशो भवति । कथमाभ्यामानन्तर्यम् ? सिचो लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या चाकारान्तादिति । अदुः, अधुः, अस्थुः । तकारो मुखसुखार्थः ।
पूर्वेणैव सिद्धे नियमार्थं वचनम् - आत एव सिज्लुगन्तात्, नान्यस्मादिति । अभूवन् ।
प्रत्ययलक्षणेन जुस्प्राप्तः प्रतिषिध्यते; तुल्यजातीयापेक्षत्वान्नियमस्य । श्रूयमाणे हि सिचि भवत्येव - अकार्षुः, अहार्षुः ।।
लङः शाकटायनस्यैव ।। 3-4-111 ।।
`आतः इत्येव । आकारान्तादुत्तरस्य लङादेशस्य झेर्जुसादेशो भवति, शाकटायनस्याचार्यस्य मतेन । अयुः । अवुः । अन्येषां मते अयान् ।
ननु `ङितः इत्यनुवर्तते, अत्र लङेवाकारान्तादनन्तरो ङित्सम्भवति नान्यः, तत्किं लङ्ग्रहणेन ? एवं तर्हि लङेव यो लङ् विहितस्तस्य यथा स्यात्, लङ्वद्भावेन यस्तस्य मा भूत्, लोटो लङ्वत्(3-4-85/2198) इति। यान्तु, वान्तु । सिजभ्यस्तविदिभ्यश्च(3-4-109/2226) इत्ययमपि झेर्जुस् लोटो न भवति। बिभ्यतु, जाग्रतु, विदन्तु । जुस्भावमात्रं हि मुख्येन लङा विशेष्यते । एवकार उत्तरार्थः ।।
द्विषश्च ।। 3-4-112 ।।
`लङः शाकटायनस्यैव इत्येव । द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति, शाकटायनस्याचार्यस्य मतेन । अद्विषुः । अन्येषां मते अद्विषन् ।।
तिङ्शित्सार्वधातुकम् ।। 3-4-113 ।।
तिङः शितश्च प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति । भवति । नयति । स्वपिति । रोदिति । पवमानः । यजमानः ।
सार्वधातुकप्रदेशाः - सार्वाधातुके यक्(3-1-67/2756) इत्येवमादयः ।।
आर्धधातुकं शेषः ।। 3-4-114 ।।
तिङः शितश्च वर्जयित्वाऽन्यः प्रत्ययः शेषो धातुसंशब्दनेन विहित आर्धधातुकसंज्ञो भवति । लविता ।
लवितुम् । लवितव्यम् ।
धातोः(3-1-91/2829) इत्येव। वृक्षत्वम्, वृक्षताऽस्ति । लूभ्याम्, लूभिः । जुगुप्सते ।।
लिट् च ।। 3-4-115 ।।
लिडादेशस्तिङार्धाधातुकसंज्ञो भवति । सार्वधातुकसंज्ञाया अपवादः । पेचिथ । शेकिथ । जग्ले । मम्ले ।
ननु चैकसंज्ञाधिकारादन्यत्र समावेशो भवति ? सत्यमेतत्; इह त्वेवकारोऽनुवर्तते, स नियमं करिष्यति ।।
लिङाशिषी ।। 3-4-116 ।।
आशिषि विषये यो लिङ् स आर्धधातुकसंज्ञो भवति । सार्वधातुकसंज्ञाया अपवादः । समावेशश्चैवकारानुवृत्तेर्न भवति । लविषीष्ट । पविषीष्ट ।
आशिषीति किम् ? लुनीयात् । पुनीयात् ।।

छन्दस्यभयथा ।। 3-4-117 ।।
छन्दसि विषये उभयथा भवति - सार्वधातुकमार्धधातुकं च ।
किं लिङेवानन्तरः सम्बध्यते ? नैतदस्ति; सर्वमेव प्रकरणमपेक्ष्यैतदुच्यते । तिङ्शिदादि छन्दस्युभयथा भवति ।
`वर्धन्तु त्वा सुष्टुतयः(ऋ.7-99-7) । आर्धधातुकत्वाण्णिलोपः । वर्धयन्त्विति प्राप्ते । शेषं च सार्वधातुकम् - `स्वस्तये नावमिवारुहेम(ऋ.10-178-2) । क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति ।
लिट् सार्त्रधातुकम् - `ससृवांसो विश्रृण्विरे(ऋ.4-8-6) । `सोममिन्द्राय सुन्विरे(ऋ.7-32-4) लिङ् उभयथा भवति - `उपस्थेयाम शरणा बृहन्ता(ऋ.6-47-8) । सार्वधातुकत्वात् - लिङः सलोपः(7-2-79/2211), आर्धधातुकत्वात् - एत्वम् ।
व्यत्ययो बहुलम्(3-1-85/3433) इत्यस्यैवायं प्रपञ्चः ।
इति श्रीजयादित्यविरिचितायां काशिकावृत्तौ
तृतीयाध्यायस्य चतुर्थः पादः

# काशिका/चतुर्थोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pbj
< काशिका | चतुर्थोऽध्यायः
अथ चतुर्थाध्याये प्रथमः पादः
ङ्याप्प्रातिपदिकात् ।। 4-1-1 ।।
अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्याम आपञ्चमाध्यायपरिसमाप्तेः ङ्याप्प्रातिपदिकादित्येवं तद्वेदितव्यम् । स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते । `ङी इति ङीब्ङीष्ङीनां सामान्येन ग्रहणम्, टाब्डाप्चापाम् आबिति, प्रातिपदिकमुक्तम् - अर्थवत्(1-2-45/178), कृत्तद्धितसमासाश्च(1-2-46/179) इति, तेषां समाहारनिर्देशः - ङ्याप्प्रातिपदिकादिति ।
यद्यपि च प्रत्ययपरत्वेन पारिशेष्यादियमेव प्रकृतिर्लभ्यते, तथापि वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्तव्यम्(म.भा.2.191); इतरथा हि समर्थविशेषणमेतत्स्यात् ।
अथ ङ्याब्ग्रहणं किम्, न `प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति(व्या.प.25) इत्येव सिद्धम् ? नैतदस्ति; स्वरूपविधिविषये परिभाषेयम् `प्रातिपदिकस्वरूपग्रहणे सति लिङ्गविशिष्टग्रहणं भवति(व्या.प.25) इति । तथा च युवा खलतिपलितवलिनजरतीभिः(2-1-67/748) इति ज्ञापकमस्यास्तादृशमेव ।
किञ्च - तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणम् । कालितरा, हरिणितरा । खट्वातरा । मालातरा इति । विप्रतिषेधाद्धि तद्धितबलीयस्त्वं स्यात् ।।
स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।। 4-1-2 ।।
`ङ्याप्प्रातिपदिकात् इत्यधिकृतम् । ङ्याप्प्रातिपदिकात् स्वादयः प्रत्यया भवन्ति । उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः औटष्टकारः `सुट् इति प्रत्याहारग्रहणार्थः । पकारः `सुप् इति प्रत्याहारार्थः ।
सङ्ख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहितास्तेन सहास्यैकवाक्यता ।
ङ्यन्तातावत्--कुमारी । गौरी । शार्ङ्गरवी । ङीब्ङीष्ङीनां क्रमेणोदाहरणम् ।
कुमारी, कुमार्यौ, कुमार्यः । कुमारीम्, कुमार्यौ, कुमारीः । कुमार्या, कुमारीभ्याम्, कुमारीभिः । कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमार्योः, कुमारीणाम् । कुमार्याम्, कुमार्योः, कुमारीषु । एवं गौरी, शार्ङ्गरवी चोदाहार्ये ।
आपः खल्वपि--खट्वा । बहुराजा । कारीषगन्ध्या । टाब्डाप्चापां क्रमेणोदाहरणम् । खट्वा । खट्वे, खट्वाः । खट्वाम्, खट्वे, खट्वाः । खट्वया, खट्वाभ्याम्, खट्वाभिः । खट्वायै, खट्वाभ्याम्, खट्वाभ्यः । खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः । खट्वायाः, खट्वयोः, खट्वानाम् । खट्वायाम्, खट्वयोः, खट्वासु । एवं बहुराजा-करोषगन्ध्ये चोदाहार्ये ।
एवं प्रातिपदिकात् - दृषद्, दृषदौ, दृषदः । दषदम्, दृषदौ, दृषदः । दृषदा, दृषद्भ्याम्, दृषद्भिः । दृषदे, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषदोः, दृषदाम् । दृषदि, दृषदोः, दृषत्सु ।
स्त्रियाम् ।। 4-1-3 ।।
अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः स्त्रियामित्येवं तद्वेदितव्यम् । ङ्याप्प्रातिपदिकात्(4-1-1/182) इति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यते; ङ्यापोरनेनैव विधानात् ।
`स्त्रियाम् इत्युच्यते, केयं स्त्री नाम ? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः । क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव भवन्ति, यथा - ब्राह्मणत्वादयः ।
स्त्रीत्वं च प्रत्ययार्थः, प्रकृत्यर्थविशेषणं चेत्युभयथापि युज्यतेस्त्रियामभिधेयायां स्त्रियां वा यत्प्रातिपदिकं वर्तत इति । वक्ष्यति अजाद्यतष्टाप्(4-1-4/454) अजा । देवदत्ता । स्त्रियामिति किम् ? अजः । देवदत्तः ।।
अजाद्यतष्टाप् ।। 4-1-4 ।।
अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । पकारः स्वरसामान्यग्रहणार्थः । टकारः सामान्यग्रहणाविघातार्थः । अजा । एडका । कोकिला । चटका । अश्वा । खट्वा । देवदत्ता ।
तपरकरणं तत्कालार्थम् । शुभंयाः, कीलालपाः ब्राह्मणी हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्(6-1-68/252) इति सुलोपः स्यात् ।
अजादिग्रहणं तु क्वचिज्जातिलक्षणे ङीषि प्राप्ते(4-1-63/518), क्वचित्तु पुंयोगलक्षणे(4-1-48/504), क्वचित्तु पुष्पफलोत्तरपदलक्षणे(4-1-64/519), क्वचित्तु वयोलक्षणे ङीपि(4-1-20/478), क्वचिट्टिल्लक्षणे(4-1-15/470) ।
हलन्तानां त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते ।
`शूद्रा चामहत्पूर्वा जातिः(म.भा.2.201) इति पठ्यते, तस्यायमर्थः - शूद्रशब्दष्टापमुत्पादयति जातिश्चेद्भवति । शूद्रा । पुंयोगे ङीषैव भवितव्यम्शूद्रस्य भार्या शूद्री । महत्पूर्वस्य प्रतिषेधः - महाशूद्री । महाशूद्रशब्दोह्या भीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते ।
`ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न(व्या.प.89) इति कथं तदन्तविधिः ? एतदेव ज्ञापकं भवति -`अस्मिन् प्रकरणे तदन्तविधिः इति । तेनातिधीवरी, अतिपीवरी, अतिभवती, अतिमहती - इति भवति ।
अजा, एडका, चटका, अश्वा, मूषिका इति जातिः । बाला होढा, पाका, वत्सा, मन्दा, विलातेति वयः । पूर्वापहाणा, अपरापहाणा । टित्, निपातनाण्णत्वम् । * सम्भस्त्राजिनशणपिण्डेभ्यः फलात् *(ग.सू.37) सम्फला, भस्त्रफला । अजिनफला । शणफला । पिण्डफला । `त्रिफलाद्विगौ(ग.सू.38) । बहुव्रीहौ--त्रिफली संहतिः । * सदच्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् *(ग.सू.39) सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा ।

प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । पाककर्ण(4-1-64/519) इति ङीषोऽपवादः । * शूद्रा चामहत्पूर्वा जातिः *(ग.सू.40) । क्रुञ्चा, उष्णिहा, देवविशा - हलन्ताः । ज्येष्ठा, कनिष्ठा, मध्यमा - पुंयोगः । कोकिला जातिः । * मूलान्नञः *(ग.सू.41) अमूला ।।
ऋन्नेभ्यो ङीप् ।। 4-1-5 ।।
ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति । ङकारः सामान्यग्रहणार्थः । कर्त्री, । हर्त्री । दण्डिनी । छत्रिणी ।।
उगितश्च ।। 4-1-6 ।।
उग् इग्यत्र सम्भवति यथाकथञ्चित् तदुगिच्छब्दरूपम् , तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति । भवती । अतिभवती । पचन्ती । यजन्ती ।

- धातोरुगितः प्रतिषेधो वक्तव्यः *(म.भा.2.202) । उखास्रत् । पर्णध्वत् ब्राह्मणी ।
- अञ्चतेश्चोपसंख्यानम् *(म.भा.2.202) प्राची । प्रतीची । उदीची ।।

वनो र च ।। 4-1-7 ।।
वन्नन्तात्प्रातिपदिकात्स्त्रियां ङीप् प्रत्ययो भवति, रेफश्चान्तादेशः । धीवरी । पीवरी । शर्वरी । परलोकदृश्वरी ।
`ऋन्नेभ्यः इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम् ।

- वनो न हशः *(म.भा.2.202) । प्राप्तौ ङीब्रावुभावपि प्रतिषिद्ध्येते । सहयुध्वा ब्राह्मणी ।।

पादोऽन्यतरस्याम् ।। 4-1-8 ।।
`पादः इति कृतसमासान्तः पादशब्दो निर्दिश्यते । पादन्तात् प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति । द्विपात्, द्विपदी । त्रिपात्, त्रिपदी । चतुष्पाद्, चतुष्पदी ।।
टाबृचि ।। 4-1-9 ।।
`पादः इत्येव । `ऋचि इत्यभिधेयनिर्देशः । ऋचि वाच्यायां पादन्तात्प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । ङीपोऽपवादः । द्विपदा ऋक् । त्रिपदा ऋक् । चतुष्पदा ऋक् ।
ऋचीति किम् ? द्विपदी देवदत्ता ।।
न षट्स्वस्रादिभ्यः ।। 4-1-10 ।।
षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति । यो यतः प्राप्नोति स सर्वः
प्रतिषिद्ध्यते । पञ्च ब्राह्मण्यः । सप्त । नव । दश ।
स्वस्रादिभ्यः - स्वसा । दुहिता । ननान्दा । याता । माता । तिस्रः । चतस्रः ।
`षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ?
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्त्वे तस्मान्नोभौ ।।(म.भा.2.204)
मनः ।। 4-1-11 ।।
मन्नन्तात्प्रातिपदिकात् ङीप् प्रत्ययो न भवति । ऋन्नेभ्यो ङीप्(4-1-5/306) इति ङीप् प्राप्तः `मनः इति सूत्रेण प्रतिषिद्ध्यते । दामा, दामानौ, दामानः । पामा, पामानौ, पामानः ।
`अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति(व्या.प.129) सीमा, सीमानौ, सीमानः । अतिमहिमा, अतिमहिमानौ, अतिमहिमानः ।।
अनो बहुव्रीहेः ।। 4-1-12 ।।
अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति । अनुपधालोपी बहुव्रीहिरिहोदाहरणम् । उपधालोपिनो हि विकल्पं वक्ष्यति । सुपर्वा, सुपर्वाणौ, सुपर्वाणः । सुचर्मा, सुचर्माणौ, सुचर्माणः ।
बहुव्रीहेरिति किम् ? अतिक्रान्ता राजानमतिराजी ।।
डाबुभाभ्यामन्यतरस्याम् ।। 4-1-13 ।।
डाप् प्रत्ययो भवति उभाभ्याम् - मन्नन्तात्प्रातिपदिकादन्नन्ताच्च बहुव्रीहेरन्यतरस्याम् । पामा, पामे, पामाः । सीमा, सीमे, सीमाः । न च भवति - पामानः । सीमानः ।
बहूव्रीहौ - बहुराजा, बहुराजे, बहुराजाः । बहुतक्षा, बहुतक्षे, बहुतक्षाः । न च भवति - बहुराजानः । बहुतक्षाणः ।
अन्यतरस्याङ्ग्रहणं किमर्थम् ? बहुव्रीहौ वनो र च(4-1-7/456) इत्यस्यापि विकल्पो यथा स्यात् - बहुधीवा, बहुधीवरी । बहुपीवा, बहुपीवरी ।।
अनुपसर्जनात् ।। 4-1-14 ।।
अधिकारोऽयम् । उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोति । यदित ऊर्ध्वमनुक्रमिष्यामः, अनुपसर्जनात् - इत्येवं तद्वेदितव्यम् । वक्ष्यतिटिड्ढाणञ्(4-1-15/470) इति ङीप् । कुरुचरी । मद्रचरी । अनुपसर्जनादिति किम् ? बहुकुरुचरा, बहुमद्रचरा मधुरा ।
जातेः(4-1-63/518) इति ङीष् । कुक्कुटी । शूकरी । अनुपसर्जनादिति किम् ? बहुकुक्कुटा, बहुशूकरा, मधुरा ।
कथं पुनरुपसर्जनात्प्रत्ययप्रसङ्गः ? तदन्तविधिना। ज्ञापितं चैतद् - अस्त्यत्र प्रकरणे तदन्तविधिरिति । तथा च प्रधानेन तदन्तविधिर्भवति - कुम्भकारी । नगरकारी ।
न च `अण् इति कृद्ग्रहणम्, तद्धितोऽप्यणस्ति ।।
टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ।। 4-1-15 ।।

`अतः इति सर्वत्रानुवर्तते । तत् सति सम्भवे विशेषणं भवति । टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति । टापोऽपवादः ।
टितस्तावत् - कुरुचरी । मद्रचरी । इह कस्मान्न भवति पचमाना, यजमाना ? द्व्यनुबन्धकत्वाल्लटः ।
ल्युडादि, कथम् ? टित्करणसामर्थ्यात् । इतरत्र तु टेरेत्वं फलम् । पठिता विद्येति ? आगमटित्त्वमनिमित्तम्; ट्युट्युलौ तुट्च(4-3-23/1391) इति लिङ्गात् ।
ढ--सौपर्णेयी । वैनतेयी । निरनुबन्धको ढशब्दः स्त्रियां नास्तीति निरनुबन्धकपरिभाषा न प्रवर्तते(म.भा.2.208) ।
अण्--कुम्भकारी । नगरकारी । औपगवी । णेऽपि क्वचिदण्कृतं कार्यं भवति--चौरी, तापसी । दाण्डा, मौष्टेत्यत्र न भवति ।
अञ्--औत्सी । औदपानी । शार्ङ्गरवाद्यञः(4-1-73/527) इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम् ।
द्वयसच्--ऊरुद्वयसी । जानुद्वयसी ।(5-2-37/1838)
दघ्नच्--ऊरुदघ्नी । जानुदघ्नी ।(5-2-37/1838)
मात्रच्--ऊरुमात्री । जानुमात्री ।(5-2-37/1838)
तयप्--पञ्चतयी । दशतयी ।(5-2-42/1843)
ठक्--आक्षिकी । शालाकिकी ।(4-4-2/1550)
ठञ्--लावणिकी(4-4-52/1602) ठक्ठञोर्भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम् ।
कञ्--यादृशी । तादृशी ।(3-2-60/429)
क्वरप्--इत्वरी । नश्वरी ।(3-2-163/3142)
ख्युन्--आढ्यङ्करणी । सुभगङ्करणी ।(3-2-56/2973)

- नञ्स्नञीकक्तरुणतलुनानामुपसङ्ख्यानम् *(म.भा.2.209) । स्त्रैणी । पौंस्नी । शाक्तीकी । याष्टीकी । तरुणी । तलुनी ।।

यञश्च ।। 4-1-16 ।।
`ङीप् इत्येव । यञन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । गार्गी। वात्सी ।

- अपत्यग्रहणं कर्तव्यम् *(म.भा.2.209) । इह मा भूत्--द्वीपादनुसमुद्रं यञ्(4-3-10>), द्वैप्या । योगविभाग उत्तरार्थः ।।

प्राचां ष्फ तद्धितः ।। 4-1-17 ।।
`यञः इत्येव । प्राचामाचार्याणां मतेन यञन्ताद् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः । षकारो ङीषर्थः । प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते । तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् । गार्ग्यायणी । वात्स्यायनी । अन्येषाम्--गार्गी । वात्सी ।
`सर्वत्र--ग्रहणमुत्तरसूत्रादिहापकृष्यते, बाधकबाधनार्थम् । आवट्याच्च(4-1-75/529) इति चापं वक्ष्यति, तमपि बाधित्वा प्राचां ष्फ एव यथा स्यात् - आवट्यायनी ।
सर्वत्र लोहितादिकतन्तेभ्यः ।। 4-1-18 ।।
`यञः इत्येव । पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् । सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यो(4-1-105/1107) यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति । कतशब्दः स्वतन्त्रं यत्प्रातिपदिकं तदवधित्वेन परिगृह्यते - कपिशब्दात्परः कपिकतेति, न प्रातिपदिकावयवः कुरुकतेति । लौहित्यायनी । शांसित्यायनी । बाभ्रव्यायणी ।।
`कण्वात्तु शकलः पूर्वः कतादुत्तरे इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्(म.भा.2.210) ।।
प्रातिपदिकेष्वन्यथा पाठः स एवं व्यवस्थापयितव्य इति मन्यते । `कतन्तेभ्यः इति बहुव्रीहितत्पुरुषयोरेकशेषः, तथा कण्वादिभ्यो गोत्रे(4-2-111/1332) इति । तत्र तत्पुरुषवृत्त्या सङ्गृहीतो मध्यपाती शकलशब्दो यञन्तः प्रत्ययद्वयमपि प्रतिपद्यते । शाकल्यायनी । शाकल्यस्येमे छात्राः शाकलाः ।।
कौरव्यमाण्डूकाभ्यां च ।। 4-1-19 ।।
कौरव्य, माण्डूक इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति । कुर्वादिभ्यो ण्ये(4-1-151/1175) कृते ढक्च मण्डूकात्(4-1-119/1122) इत्यणि च । यथाक्रमं टाब्ङीपोरपवादः । कौरव्यायणी । माण्डूकायनी ।
कथं कौरवी सेना ? तस्येदम्(4-3-120/1500) विवक्षायामणि कृते भविष्यति ।

- कौरव्यमाण्डूकयोरासुरेरुपसङ्ख्यानम् *(म.भा.2.210) । आसुरायणी । शैषिकेष्वर्थेषु इञश्च(4-2-112/2333) इत्यणि प्राप्ते छप्रत्यय इष्यते । आसुरीयः कल्पः ।।

वयसि प्रथमे ।। 4-1-20 ।।
कालकृतशरीरावस्था यौवनादिः = वयः । प्रथमे वयसि यत्प्रातिपदिकं श्रुत्या वर्तते ततः स्त्रियां ङीप् प्रत्ययो भवति । कुमारी । किशोरी । वर्करी । प्रथम इति किम् ? स्थविरा । वृद्धा । अत इत्येव--शिशुः ।।

- वयस्यचरम इति वक्तव्यम् *(म.भा.2.211) । वधूटी । चिरण्टी । द्वितीयवयोवचनावेतौ । प्राप्तयौवना

स्त्र्यभिधीयते ।
कथं कन्या ? कन्यायाः कनीन च(4-1-116/1119) इति ज्ञापकात् ।
उत्तानशया, लोहितपादिकेति ? नैता वयःश्रुतयः ।।
द्विगोः ।। 4-1-21 ।।
द्विगुसंज्ञकात्प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । पञ्चपूली । दशपूली ।
कथं त्रिफला ? अजादिषु दृश्यते ।।
अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।। 4-1-22 ।।
पूर्वेण ङीप् प्राप्तः प्रतिषिद्ध्यते । अपरिमाणान्ताद् द्विगोर्बिस्ताचितकम्बल्यान्ताच्च तद्धितलुकि सति ङीप् प्रत्ययो न भवति । बिस्तादीनां परिमाणार्थं ग्रहणम् । सर्वतो मानम् = परिमाणम् ।
अपरिमाणान्तात्तावत् - पञ्चभिरश्वैः क्रीता पञ्चाश्वा । दशाश्वा ।(5-1-37/1702)(5-1-28/1693)
कालः सङ्ख्या च न परिमाणम् । द्विवर्षा । त्रिवर्षा(5-2-37/1838) । द्वाभ्यां शताभ्यां क्रीता द्विशता । त्रिशता ।(5-1-22/1687)
बिस्तादिभ्यः - द्विबिस्ता । त्रिबिस्ता । द्व्याचिता । त्र्याचिता (5-1-54/1720)। द्विकम्बल्या । त्रिकम्बल्या ।(5-1-37/1702)
अपरिमाणेति किम् ? द्व्याढकी । त्र्याढकी । तद्धितलुकीति किम् ? समाहारे--पञ्चाश्वी । दशाश्वी ।
काण्डान्तात्क्षेत्रे ।। 4-1-23 ।।
काण्डशब्दान्ताद् द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति । द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः, प्रमाणे द्वयसज्दघ्नञ्मत्रचः(5-2-37/1838) इति विहितस्य तद्धितस्य `प्रमाणे लो द्विगोर्नित्यम्(5-2-37/1838) इति लुकि कृतेद्विकाण्डा क्षेत्रभक्तिः, त्रिकाण्डा क्षेत्रभक्तिः ।
काण्डशब्दस्यापरिमाणवाचित्वात्पूर्वेणैव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम् । इह मा भूत्--द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुरिति । प्रमाणविशेषः = काण्डम् ।।
पुरुषात्प्रमाणेऽन्यतरस्याम् ।। 4-1-24 ।।
`द्विगोः `तद्धितलुकि इत्येव । प्रमाणे यः पुरुषशब्दस्तदन्ताद् द्विगोस्तद्धितलुकि सति अन्यतरस्यां न ङीप् प्रत्ययो भवति । द्वौ पुरुषौ प्रमाणमस्याः परिखायाः द्विपुरुषा, द्विपुरुषी । त्रिपुरुषा, त्रिपुरुषी ।
अपरिमाणान्तत्वान्नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् ।
प्रमाण इति किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । त्रिपुरुषा ।
तद्धितलुकीत्येव, समाहारे -- द्विपुरुषी, त्रिपुरुषी ।
बहुव्रीहेरूधसो ङीष् ।। 4-1-25 ।।
ऊधस्शब्दान्ताद्बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति । ऊधसोऽनङ्(5-4-131/483) इति समासान्ते कृते अनो बहुव्रीहेः(4-1-12/460) इति डाप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते । घटोध्नी । कुण्डोध्नी ।
बहुव्रीहेरिति किम् ? प्राप्ता ऊधः प्राप्तोधाः ।
अन उपधालोपिनोऽन्यतरस्याम्(4-1-28/462) इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते । समासान्तश्च स्त्रियामेव, इह न भवति--महोधाः पर्जन्य इति ।।
सङ्ख्याव्ययादेर्ङीप् ।। 4-1-26 ।।
पूर्वेण ङीषि प्राप्ते ङीब्विधीयते । सङ्ख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्ताद् ङीप् प्रत्ययो भवति । सङ्ख्यादेस्तावत्--द्व्यूध्नी । त्र्यूध्नी । अव्ययादेः--अत्यूध्नी । निरूध्नी ।
आदिग्रहणं किम् ? द्विविधोध्नी, त्रिविधोध्नीत्यत्रापि यथा स्यात् ।।
दामहायनान्ताच्च ।। 4-1-27 ।।
`ऊधसः इति निवृत्तम् । सङ्ख्याग्रहणमनुवर्तते, नाव्ययग्रहणम् । सङ्ख्यादेर्बहुव्रीहेर्दामशब्दान्ताद्धायनशब्दान्ताच्च स्त्रियां ङीप् प्रत्ययो भवति । दामान्तात् डाप्प्रतिषेधविकल्पेषु
प्राप्तेषु नित्यार्थं वचनम् । द्विदाम्नी । त्रिदाम्नी ।
हायनान्ताट्टापि प्राप्ते - द्विहायनी । त्रिहायनी । चतुर्हायणी ।

- हायनो वयसि स्मृतः *(म.भा.2.213) तेनेह न भवति--द्विहायना शाला, त्रिहायना, चतुर्हायना । णत्वमपि `त्रिचतुर्भ्यां हायनस्य इति वयस्येव स्मर्यते ।।

अन उपधालोपिनोऽन्यतरस्याम् ।। 4-1-28 ।।
`बहुव्रीहेः इत्येव । अन्नन्तो यो बहुव्रीहिरुपधालोपी तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति । ङीपा मुक्ते डाप्प्रतिषेधौ भवतः ।
किमर्थं तर्हीदमुच्यते, ननु सिद्धा एव डाप्प्रतिषेधङीपः ? अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम् । बहुराजा । बहुराज्ञी । बहुराजे । बहुतक्षा । बहुतक्ष्णी । बहुतक्षे ।
अन इति किम् ? बहुमत्स्या । उपधालोपिनः किम् ? सुपर्वा । सुपर्वे । सुपर्वाः । सुपर्वाणौ । सुपर्वाणः । डाप्प्रतिषेधावेवात्र भवतः ।।
नित्यं संज्ञाछन्दसोः ।। 4-1-29 ।।
</>

अन्नन्ताद्बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति । विकल्पस्यापवादः । सुराज्ञो, अतिराज्ञी नाम ग्रामः । छन्दसि--गौः पञ्चदाम्नी । एकदाम्नी । द्विदाम्नी । `एकमूर्ध्नी(अ.वे.<8-9-15>) । `समानमूर्ध्नी(तै.सं.<4-3-11>.4) ।।
केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ।। 4-1-30 ।।
</8-9-15>
`संज्ञाछन्दसोः इत्येव । केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि विषये स्त्रियां ङीप् प्रत्ययो भवति । केवली । केवलेति भाषायाम् । `मामकी(पै.<1-6-8>) । मामिकेति भाषायाम् । `मित्रावरुणयोर्भागधेयी स्थ(तै.<1-3-12>.1) । भागधेयेति भाषायाम् । `पापी त्वियम्(मै.<4-2-14>) । पापेति भाषायाम् । `उताऽपरिभ्यो मघवा विजिग्ये(ऋ.<1-32-13>) । अपरेति भाषायाम् । `समानी प्रवाणी(ऋ.<10-191-3>) । समानेति भाषायाम् । `आर्यकृती(मै.<1-8-3>) । आर्यकृतेति भाषायाम् । `सुमङ्गली(ऋ.<10-85-33>) । सुमङ्गलेति भाषायाम् । `भेषजी(तै.<4-5-10>.1) । भेषजेति भाषायाम् ।।
रात्रेश्चाजसौ ।। 4-1-31 ।।
</1-6-8>
जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति । या च रात्री सृष्टा । `रात्रीभिः(ऋ.<10-10-9>) ।
अजसाविति किम् ? यास्ता रात्रयः ।।

- अजसादिष्विति वक्तव्यम् *(म.भा.2.213) रात्रिं सहोषित्वा ।

कथं तिमिरपटलैरवगुण्ठिताश्च रात्र्यः ? ङीषयं बह्वादिलक्षणः, तत्र हि पठ्यते -`कृदिकारादक्तिनः(ग.सू.50), `सर्वतोऽक्तिन्नर्थादित्येके(ग.सू.51) इति ।।
अन्तर्वत्पतिवतोर्नुक् ।। 4-1-32 ।।
प्रकृतिर्निपात्यते, नुगागमस्तु विधीयते । अन्तर्वत्पतिवतोर्नुग्भवति ङीप् च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः । निपातनसामर्थ्याच्च विशेषे वृत्तिर्भवति । अन्तर्वत्, पतिवदिति गर्भ-भर्तृसंयोगे । इह तु न भवति - अन्तरस्यां शालायां विद्यते । पतिमती पृथिवी ।
अन्तर्वदिति मतुब्निपात्यते, वत्वं सिद्धम् । पतिवदिति वत्वं निपात्यते, मतुप्सिद्धः । अन्तर्वत्नी गर्भिणी । पतिवत्नी जीवपतिः ।
`अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् ।
गर्भिण्यां जीवपत्यां च वाच्छन्दसि तु नुग्विधिः(म.भा.2.214) ।।
सान्तर्वत्नी देवानुपैत् । सान्तर्वती देवानुपैत् । पतिवत्नी तरुणवत्सा । पतिवती तरुणवत्सा ।।
पत्युर्नो यज्ञसंयोगे ।। 4-1-33 ।।
पतिशब्दस्य नकारादेशः स्त्रियां विधीयते । ङीप् प्रत्ययस्तु नकारान्तत्वादेव सिद्धः यज्ञसंयोगे । यज्ञेन संयोगः = यज्ञसंयोगः ।
तत्साधनत्वात्फलग्रहीतृत्वाद्वा यजमानस्य पत्नी । पत्नि वाचं यच्छ ।
यज्ञसंयोग इति किम् ? ग्रामस्य पतिरियं ब्राह्मणी ।
कथं वृषलस्य पत्नी ? उपमानाद् भविष्यति ।
विभाषा सपूर्वस्य ।। 4-1-34 ।।
`पत्युर्न इति वर्त्तते । पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपसर्जनस्य स्त्रियां विभाषा नकारादेशो भवति । ङीप् तु लभ्यत एव । वृद्धपतिः, वृद्धपत्नी । स्थूलपतिः, स्थूलपत्नी(म.भा.2.214) । अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात् ।
सपूर्वस्येति किम् ? पतिरियं ब्राह्मणी ग्रामस्य ।।
नित्यं सपत्न्यादिषु ।। 4-1-35 ।।
सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति । ङीप् तु लभ्यत एव । पूर्वेण विकल्पे प्राप्ते वचनम् । नित्यग्रहणं विस्पष्टार्थम् । समानः पतिरस्याः सपत्नी । एकपत्नी ।
समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम् ।
समान । एक । वीर । पिण्ड । भ्रातृ । पुत्र । * दासाच्छन्दसि * ।।
पूतक्रतोरै च ।। 4-1-36 ।।
पूतक्रतुशब्दस्य स्त्रियामैकारश्चान्तादेशो भवति ङीप् प्रत्ययः । पूतक्रतोः स्त्री पूतक्रतायी(म.भा.2.215) ।
त्रय एते योगाः पुंयोगप्रकरणे द्रष्टव्याः । यया हि पूताः क्रतवः पूतक्रतुः सा भवति ।।
वृषाकप्यग्निकुसितकुसिदानामुदात्तः ।। 4-1-37 ।।
वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप् च प्रत्ययः । वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति । अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम् । वृषाकपेः स्त्री वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ।
पुंयोग इत्येव--वृषाकपिः स्त्री ।।
मनोरौ वा ।। 4-1-38 ।।
`ऐ `उदात्तः इति वर्त्तते । मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्चोदात्तः । वाग्रहणेन द्वावपि विकल्प्येते । तेन त्रैरूप्यं भवति--मनोः स्त्री मनायी(काठ.30.1), मनावी(मै.1.8), मनुः । मनुशब्द आद्युदात्तः ।।
वर्णादनुदात्तात्तोपधात्तो नः ।। 4-1-39 ।।

</10-10-9>
`वा इति वर्तते । वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात्तकारोपधाद्वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति । एता, एनी(ऋ.<1-144-6>) । श्येता, श्येनी । हरिता, हरिणी । सर्व एते आद्युदात्ताः; वर्णानां तणतिनितान्तानाम्(फि.सू.2.10) इति वचनात् ।
वर्णादिति किम् ? प्रकृता । प्ररुता । गतिस्वरेणाद्युदात्तः(6-2-49/3783) । अनुदात्तादिति किम् ?श्वेता । घृतादित्वादन्तोदात्तः(फि.सू.1.21) । तोपधादिति किम् ? अन्यतो ङीषं वक्ष्यति । अत इत्येव - शितिर्ब्राह्मणी ।।

- पिशङ्गादुपसङ्ख्यानम् *(म.भा.2.215) । पिशङ्गी ।
- असितपलितयोः प्रतिषेधः *(म.भा.2.215) । असिता । पलिता ।

</1-144-6>

- तयोश्छन्दसि क्नमित्येके *(म.भा.2.216) । `असिक्नी(शौ.अ.<1-23-1>) । `पलिक्नी(ऋ.<5-2-4>) ।

भाषायामपीष्यते--गतो गणस्तूर्णमसिक्निकानाम् ।।
अन्यतो ङीप् ।। 4-1-40 ।।
`वा इति निवृत्तम्, `वर्णादनुदात्तात् इति वर्तते, तोपधापेक्षमन्यत्वम् । वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति । स्वरे विशेषः । सारङ्गी । कल्माषी । शबली । वर्णादित्येव, खट्वा । अनुदात्तादित्येव--कृष्णा । कपिला ।।
षिद्गौरादिभ्यश्च ।। 4-1-41 ।।
`ङीषनुवर्तते । षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति । शिल्पिनि ष्वुन्(3-1-145/2907) नर्तकी । खनकी । रजकी । गौरादिभ्यः--गौरी । मत्सी ।
गौर । मत्स्य । मनुष्य । शृङ्ग । हय । गवय । मुकय । ऋष्य । पुट । द्रुण । द्रोण । हरिण । कण । पटर । उकण । आमलक । कुवल । बदर । बिम्ब । तर्कार । शर्कार । पुष्कर । शिखण्ड । सुषम । सलन्द । गडुज । आनन्द । सृपाट । सृगेठ । आढक । शष्कुल । सूर्म । सुब। सूर्य । पूष । मूष । घातक । सकलूक । सल्लक । मालक । मालत । सात्वक । वेतस । अतस । पृस । मह । मठ । छेद । श्वन् । तक्षन् । अनडुही । अनड्वाही । `एषणः करणे(ग.सू.42) । देह । काकादन । गवादन । तेजन । रजन । लवण । पान । मेध । गौतम । आयस्थूण । भौरि । भौलिकि । भौलिङ्गि । औद्गाहमानि । आलिङ्गि। आपिच्छिक । आरट। टोट । नट । नाट । मलाट । शातन । पातन । पावन । आस्तरण । अधिकरण । एत। अधिकार । आग्रहायणी । प्रत्यवरोहिणी । सेवन । * सुमङ्गालात्संज्ञायाम् * (ग.सू.43)। सुन्दर । मण्डल । पिण्ड। विटक। कुर्द। गूर्द। पट । पाण्ट । लोफाण्ट । कन्दर । । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म । * रोहिणी नक्षत्रे *(ग.सू.44),* रेवती नक्षत्रे *(ग.सू.45) विकल । निष्फल । पुष्कल । * कटाच्छ्रोणिवचने *(ग.सू.46) । * पिप्पल्यादयश्च *(ग.सू.47) । पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्ट्री । मातामह । पितामह । मातामहपितामहयोः `मातरि षिच्च(4-2-36/1242) इति षित्वादेव सिद्धे ज्ञापनार्थं वचनम् -`अनित्यः षिल्लक्षणो ङीष् इति, तेन दंष्ट्रेत्युपपन्नं भवति ।।
जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु ।। 4-1-42 ।।
जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्यादिष्वर्थेषु यथासङ्ख्यं ङीष् प्रत्ययो भवति । जानपदी भवति, वृत्तिश्चेत् । जानपदी अन्या । स्वरे विशेषः। उत्सादिपाठादञि कृते ङीपाद्युदात्तत्वं भवति । कुण्डी भवति, अमत्रं चेत् । कुण्डाऽन्या । गोणी भवति, आवपनं चेत् । गोणान्या । स्थली भवति, अकृत्रिमा चेत् । स्थलान्या । भाजी भवति, श्राणा चेत्, पक्वेत्यर्थः । भाजाऽन्या । नागी भवति, स्थौल्यं चेत् । नागाऽन्या । नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम् । जातिवचनात्तु जातिलक्षणो ङीषेव भवति--नागी । काली भवति, वर्णश्चेत् । कालाऽन्या । नीली भवति अनाच्छादनं चेत् । नीलाऽन्या । न च सर्वस्मिन्ननाच्छादन इष्यते, किं तर्हि ? * नीलादोषधौ, प्राणिनि च * । नीली ओषधिः, नीली गौः, नीली वडवा । * संज्ञायां वा * । नीला । कुशी भवति, अयोविकारश्चेत् । कुशान्या । कामुकी भवति, मैथुनेच्छा चेत् । कामुकान्या । मैथुनेच्छावती भण्यते, नेच्छामात्रम् । कबरी भवति, केशवेशश्चेत् । कबरान्या ।।
शोणात्प्राचाम् ।। 4-1-43 ।।
शोणशब्दात्प्राचामाचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति । शोणी, शोणा वडवा ।।
वोतो गुणवचनात् ।। 4-1-44 ।।
गुणमुक्तवान् = गुणवचनः । गुणवचनात्प्रातिपदिकाद् उकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति । पटुः, पट्वी । मृदुः, मृद्वी ।
उत इति किम् ? शुचिरियं ब्राह्मणी । गुणवचनादिति किम् ? आखुः ।

- वसुशब्दाद्गुणवचनाद् ङीबाद्युदात्तार्थम् * (म.भा.2.217)। वस्वी ।
- खरुसंयोगोपधात्प्रतिषेधो वक्तव्यः *(म.भा.2.217) । खरुरियं ब्राह्मणी । पाण्डुरियं ब्राह्मणी ।

`सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ।।(म.भा.2.217)
बह्वादिभ्यश्च ।। 4-1-45 ।।
`बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति । बहुः, बह्वी ।

बहु । पद्धति । अङ्कति । अञ्चति । अंहति । वंहति । शकटि । * शक्तिः शस्त्रे *(ग.सू.48) । शारि । वारि । गति । अहि । कपि । मुनि । यष्टि । * इतः प्राण्यङ्गात्* (ग.सू.49)। * कृदिकारादक्तिनः * (ग.सू.50)। * सर्वतोऽक्तिन्नर्थादित्येके *(ग.सू.51)। चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशङ्कट । भरुज । ध्वज । * चन्द्रभागान्नद्याम् *(ग.सू.52) । कल्याण । उदार । पुराण । अहन् ।
बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थः ।।
नित्यं छन्दसि ।। 4-1-46 ।।
बह्वादिभ्यश्छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति । बह्वीषु हित्वा प्रपिबन् । बह्वी नाम औषधी भवति ।
नित्यग्रहणमुत्तरार्थम् ।।
भुवश्च ।। 4-1-47 ।।
</1-23-1>
छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति । `विभ्वी च(ऋ.<5-38-1>) । `प्रभ्वी च(ऋ.<1-188-5>) । शम्भ्वी च ।
इह कस्मान्न भवति - स्वयम्भूः ? `उतः(4-1-44/502) इति तपरकरणमनुवर्तते, ह्रस्वादेवेयं पञ्चमी । `भुवः इति सौत्रो निर्देशः ।।
पुंयोगादाख्यायाम् ।। 4-1-48 ।।
पुंसा योगः = पुंयोगः । पुंयोगाद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद् ङीष् प्रत्ययो भवति गणकस्य स्त्री गणकी । महामात्री । प्रष्ठी । प्रचरी । पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते, तद्योगात्स्त्रियां वर्तन्ते ।
पुंयोगादिति किम् ? देवदत्ता । यज्ञदत्ता । आख्याग्रहणं किम् ? परिसृष्टा । प्रजाता । पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते ।

- गोपालिकादीनां प्रतिषेधः *(म.भा.2.217) । गोपालकस्य स्त्री गोपालिका ।
- सूर्याद् देवतायां चाब्वक्तव्यः *(म.भा.2.220) । सूर्यस्य स्त्री देवता सूर्या । देवतायामिति किम् ? सूरी ।।

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।। 4-1-49 ।।
इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक्चागमः । येषामत्र पुंयोग एवेष्यते तेषामानुगागममात्रं विधीयते, प्रत्ययस्तु पूर्वेणैव सिद्धः । अन्येषां तूभयं विधीयते । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी ।

- हिमारण्ययोर्महत्त्वे *(म.भा.2.220) महद्धिमं हिमानी । महदरण्यमरण्यानी ।
- यवाद्दोषे *(म.भा.2.220) । दुष्टो यवो यवानी ।
- यवनाल्लिप्याम् *(म.भा.2.220) । यवनानी लिपिः ।
- उपाध्यायमातुलाभ्यां वा * (म.भा.2.220)। उपाध्यायी, उपाध्यायानी । मातुली । मातुलानी ।
- आचार्यादणत्वं च *(म.भा.2.220) ।। आचार्यानी । आचार्या ।
- अर्यक्षत्त्रियाभ्यां वा * (म.भा.2.220)। अर्याणी, अर्या । क्षत्त्रियाणी, क्षत्त्रिया । विना पुंयोगेन स्वार्थ एवायं विधिः । पुंयोगे तु ङीषैव भवितव्यम्--अर्यी, क्षत्त्रियी ।

</5-38-1>

- मुद्गलाच्छन्दसि लिच्च *(म.भा.2.220) । `रथीरभून्मुद्गलानी गविष्टौ(ऋ.<10-102-2>) ।।

क्रीतात्करणपूर्वात् ।। 4-1-50 ।।
करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम् । क्रीतशब्दान्तात् प्रातिपदिकात्करणपूर्वात्स्त्रियां ङीष् प्रत्ययो भवति । वस्त्रेण क्रीयते सा वस्त्रक्रीती । वसनक्रीती ।
करणपूर्वादिति किम् ? सुक्रीता । दुष्क्रीता ।
इह कस्मान्न भवति -
`सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी इति ?
टाबन्तेन समासः, अत इति चानुवर्तते । `गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति, बहुलं तदुच्यते -कर्तृकरणे कृता बहुलम्(2-1-32/694) इति ।।
क्तादल्पाख्यायाम् ।। 4-1-51 ।।
`करणपूर्वात् इत्येव । करणपूर्वात्प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति । `अल्पाख्यायाम् इति समुदायोपाधिः । अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री । अल्पसूपेत्यर्थः ।
अल्पाख्यायामिति किम् ? चन्दनानुलिप्ता ब्राह्मणी ।।
बहुव्रीहेश्चान्तोदात्तात् ।। 4-1-52 ।।

`क्तात् इत्येव । बहुव्रीहिर्योऽन्तोदात्तस्तस्मात्स्त्रियां ङीष् प्रत्ययो भवति । स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम् , अस्वाङ्गपूर्वपदाद्विकल्पं वक्ष्यति । शङ्खभिन्नी । ऊरुभिन्नी । गलकोत्कृत्ती । केशलूनी ।
बहुव्रीहेरिति किम् ? पादपतिता ।

- अन्तोदात्ताज्जातप्रतिषेधः *(म.भा.2.221) दन्तजाता, स्तनजाता ।
- पाणिगृहीत्यादीनामर्थविशेषे *(म.भा.2.221) पाणिगृहीती भार्या । यस्यास्तु कथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति ।
- अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् *(म.भा.2.222) । बहुकृता । नञ्-अकृता । सु - सुकृता । काल - मासजाता, संवत्सरजाता । सुखादि - सुखजाता, दुःखजाता । जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः(6-2-170/6904) इत्येवमादिना बहुव्रीहेरन्तोदात्तत्वम् ।।

अस्वाङ्गपूर्वपदाद्वा ।। 4-1-53 ।।
`अन्तोदात्तात् क्तान्तात् इत्यनुवर्तते । अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद्बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति । पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । शार्ङ्गजग्धी, शार्ङ्गजग्धा । पलाण्डुभक्षिती पलाण्डुभक्षिता । सुरापीती, सुरापीता ।
अस्वाङ्गपूर्वपदादिति किम् ? शङ्खभिन्नी । ऊरुभिन्नी । अन्तोदात्तादित्येव - वस्त्रच्छन्ना, वसनच्छन्ना ।

- बहुलं संज्ञाछन्दसोरिति वक्तव्यम् * । प्रवृद्धविलूनी, प्रवृद्धविलूना । प्रवृद्धा चासौ विलूना चेति, नायं बहुव्रीहिः ।

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।। 4-1-54 ।।
`बहुव्रीहेः क्तान्तादन्तोदात्तात् इति सर्वं निवृत्तम् । वाग्रहणमनुवर्तते । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् प्रत्ययो भवति । चन्द्रमुखी, चन्द्रमुखा । अतिक्रान्ता केशान् अतिकेशी, अतिकेशा माला ।
स्वाङ्गादिति किम् ? बहुयवा । उपसर्जनादिति किम् ? अशिखा । असंयोगोपधादिति किम् ? सुगुल्फा । सुपार्श्वा ।

- अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् *(म.भा.2.222) । मृद्वङ्गी, मृद्वङ्गा । सुगात्री, सुगात्रा । स्निग्धकण्ठी, स्निग्धकण्ठा ।

`अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम् ।।(म.भा.2.222)
नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।। 4-1-55 ।।
`स्वाङ्गाच्चोपसर्जनात् इत्येव । बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम् । सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव । नासिकाद्यन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् प्रत्ययो भवति । तुङ्गनासिकी, तुङ्गनासिका । तिलोदरी, तिलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती, समदन्ता । चारुकर्णी, चारुकर्णा । तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा ।

- पुच्छाच्चेति वक्तव्यम् * । कल्याणपुच्छी । कल्याणपुच्छा ।
- कबरमणिविषशरेभ्यो नित्यम् *(म.भा.2.224) कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ।
- उपमानात्पक्षात् पुच्छाच्च *(म.भा.2.224) । उलूकपक्षी सेना । उलूकपुच्छी शाला ।।

न क्रोडादिबह्वचः ।। 4-1-56 ।।
`स्वाङ्गात् इति ङीष् प्राप्तः प्रतिषिध्यते । क्रोडाद्यन्ताद बह्वजन्ताच्च प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो न भवति । कल्याणक्रोडा । कल्याणखुरा । कल्याणोखा । कल्याणबाला । कल्याणशफा । कल्याणगुदा । कल्याणघोणा । कल्याणनखा । कल्याणमुखा । क्रोडादिराकृतिगणः । सुभागा । सुगला ।
बह्वचः खल्वपि - पृथुजघना । महाललाटा ।।
सहनञ्विद्यमानपूर्वाच्च ।। 4-1-57 ।।
स्वाङ्गाच्चोपसर्जनात्(4-1-54/510) इति नासिकोदरौष्ठजङ्घा(4-1-55/511) इति च प्राप्तो ङीष्प्रतिषिद्ध्यते । सह, नञ्, विद्यमान इत्येवम्पूर्वात्प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । सकेशा, अकेशा, विद्यमानकेशा । सनासिका, अनासिका, विद्यमाननासिका ।।
नखमुखात्संज्ञायाम् ।। 4-1-58 ।।
नखमुखान्तात्प्रातिपदिकात्संज्ञायां स्त्रियां विषये ङीष् प्रत्ययो न भवति । शूर्पणखा । वज्रणखा । गौरमुखा । कालमुखा ।
संज्ञायामिति किम् ? ताम्रनखी कन्या । चन्द्रमुखी ।।
दीर्घजिह्वी च च्छन्दसि ।। 4-1-59 ।।
</10-102-2>
`दीर्घजिह्वी इति छन्दसि विषये निपात्यते । संयोगोपधत्वादप्राप्तो ङीष् विधीयते । `दीर्घजिह्वी वै देवानां हव्यमवालेट्(मै.सं.<3-10-6>) । चकारः संज्ञानुकर्षणार्थः । `दीर्घजिह्वी इति निपातनं नित्यार्थम् ।।
दिक्पूर्वपदान्ङीप् ।। 4-1-60 ।।
स्वाङ्गाच्चोपसर्जनात्(4-1-54/510) इत्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते । यत्र ङीष् विहितस्तत्र तदपवादः ।

दिक्पूर्वपदात्प्रातिपदिकाद् ङीप् प्रत्ययो भवति । स्वरे विशेषः । प्राङ्मुखी, प्राङ्मुखा । प्राङ्नासिकी, प्राङ्नासिका ।
इह न भवति - प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघनेति ।।
वाहः ।। 4-1-60 ।।
ङीषेव स्वर्यते, न ङीप् । वहेरयं ण्विप्रत्ययान्तस्य निर्देशः । सामर्थ्यात्तदन्तविधेर्विज्ञानम् । वाहन्तात्प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो भवति । दित्यौही । प्रष्ठौही ।।
सख्यशिश्वीति भाषायाम् ।। 4-1-62 ।।
सखी, अशिश्वी - इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते । सखीयं मे ब्राह्मणी । नास्याः शिशुरस्तीति अशिश्वी ।
</3-10-6>
भाषायामिति किम् ? `सखा सप्तपदी भव(आ.गृ.<1-7-19>) । अशिशुमिव मामयं शिशुरभिमन्यते ।।
जातेरस्त्रीविषयादयोपधात् ।। 4-1-63 ।।
जातिवाचि यत्प्रातिपदिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च तस्मात्स्त्रियां ङीष् प्रत्ययो भवति ।
`आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ।।(म.भा.2.225)
कुक्कुटी । सूकरी । मयूरी । ब्राह्मणी । वृषली । नाडायनी । चारायणी । कठी । वह्वृची । जातेरिति किम् ? मुण्डा । अस्त्रीविषयादिति किम् ? मक्षिका । अयकारोपधादिति किम्? क्षत्त्रिया ।

- योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः * (म.भा.2.226)। हयी । गवयी । मुकयी । मत्सी । मनुषी ।।

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ।। 4-1-64 ।।
पाकाद्युत्तरपदाज्जातिवाचिनः प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो भवति । स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोबाली ।
पुष्पफलमूलोत्तरपदात्तु यतो नेष्यते तदजादिषु पठ्यते -`सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्(ग.सू.53), `सम्भस्त्राजिनशणपिण्डेभ्यः फलात्(ग.सू.54), `मूलान्नञः(ग.सू.55) इति ।।
इतो मनुष्यजातेः ।। 4-1-65 ।।
इकारान्तात्प्रातिपदिकान्मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति । अवन्ती । कुन्ती । दाक्षी । प्लाक्षी ।
इत इति किम् ? विट् । दरत् । मनुष्यग्रहणं किम् ? तित्तिरिः । `जातेः इति वर्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात् - औदमेयी (म.भा.2.226)।

- इञ उपसङ्ख्यानमजात्यर्थम् *(म.भा.2.226) । सौतङ्गमी । मौनचित्ती । सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः ।।

ऊङुतः ।। 4-1-66 ।।
`मनुष्यजातेः इति वर्त्तते । उकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात्स्त्रियामूङ् प्रत्ययो भवति । कुरूः । ब्रह्मबन्धूः । वीरबन्धूः ।
ङकारः नोङ्धात्वोः(6-1-175/3721) इति विशेषणार्थः । दीर्घोच्चारणं कपो बाधनार्थम् । `अयोपधात् इत्येतदत्रापेक्ष्यते । अध्वर्युर्ब्राह्मणी ।

- अप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम् *(म.भा.2.226) । अलाबूः । कर्कन्धूः । अप्राणिग्रहणं किम् ? कृकवाकुः । अरज्ज्वादीनामिति किम् ? रज्जुः । हनुः ।।

बाह्वन्तात्संज्ञायाम् ।। 4-1-67 ।।
बाहुशब्दान्तात्प्रातिपदिकात्संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । भद्रबाहूः । जालबाहूः ।
संज्ञायामिति किम् ? वृत्तौ बाहू यस्याः सा वृत्तबाहुः ।।
पङ्गोश्च ।। 4-1-68 ।।
पङ्गुशब्दात्स्त्रियामूङ् प्रत्ययो भवति । पङ्गूः ।

- श्वशुरस्योकाराकारयोर्लोपश्च वक्तव्यः * । श्वश्रूः ।।

ऊरूत्तरपदादौपम्ये ।। 4-1-69 ।।
ऊरूत्तरपदात्प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् प्रत्ययो भवति । कदलीस्तम्भोरूः । नागनासोरूः । करभोरूः ।
औपम्य इति किम् ? वृत्तोरुः स्त्री ।।
संहितशफलक्षणवामादेश्च ।। 4-1-70 ।।
संहित, शफ, लक्षण, वाम - इत्येवमादेः प्रातिपदिकादूरूत्तरपदात् स्त्रियामूङ् प्रत्ययो भवति । अनौपम्यार्थ आरम्भः । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ।

- सहितसहाभ्यां चेति वक्तव्यम् * (म.भा.2.227)। सहितोरूः । सहोरूः ।।

कद्रुकमण्डल्वोश्छन्दसि ।। 4-1-71 ।।
</1-7-19>
कद्रुशब्दात्कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति । `कद्रूश्च वै सुपर्णी च(तै.सं.<6-1-6>) । मा स्म कमण्डलूं शूद्राय दद्यात् । छन्दसीति किम् ? कद्रुः । कमण्डलुः ।
</6-1-6>

- गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् *(म.भा.2.227) । `गुग्गुलूः(अ.<4-37-3>) । `मधूः(अ.<7-56-2>) । `जतूः(मै.<3-14-6>) । `पतयालूः(अ.<7-115-2>) ।।

संज्ञायाम् ।। 4-1-72 ।।
कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । अच्छन्दोऽर्थं वचनम् । कद्रूः । कमण्डलूः ।
संज्ञायामिति किम् ? कद्रुः । कमण्डलुः ।।
शाङ्गरवाद्यञो ङीन् ।। 4-1-73 ।।
शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति । शार्ङ्गरवी । कापटवी । अञन्तेभ्यः - बैदी । और्वी ।
जातिग्रहणं चेहानुवर्तते । तेन जातिलक्षणो ङीषनेन बाध्यते, न पुंयोगलक्षणः - बैदस्य स्त्री बैदी ।
शार्ङ्गरव, कापटव, गौगुलव, ब्राह्मण, गौतम - एतेऽणन्ताः । कामण्डलेय, ब्राह्मकृतेय, आनिचेय, आनिधेय, आशोकेय - एतेढगन्ताः । वात्स्यायन, मौञ्जायन - एतौ फगन्तौ जातिः । कैकसेयः - ढगन्तः । काव्यशैव्यौ ञ्यङन्तौ । एहि, पर्येहि - कृदिकारान्तौ । आश्मरथ्यः - यञन्तः । औदपानः - उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति । अराल, चण्डाल, वतण्ड - जातिः ।

- भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् * (ग.सू.56)।

- नृनरयोर्वृद्धिश्च *(ग.सू.57) । अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन्विधीयते ।।

यङश्चाप् ।। 4-1-74 ।।
यङन्तात्प्रातिपदिकात्स्त्रियां चाप् प्रत्ययो भवति । ञ्यङः ष्यङश्च सामान्यग्रहणमेतत् । आम्बष्ठ्या । सौवीर्या । कौसल्या । ष्यङ् - कारिषगन्ध्या । वाराह्या । बालाक्या ।

- षाच्च यञः * (म.भा.2.228)। षात्परो यो यञ् तदन्ताच्चाप् वक्तव्यः । शार्कराक्ष्या । पौतिमाष्या । गौकक्ष्या । उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति ।।

आवट्याच्च ।। 4-1-75 ।।
अवटशब्दो गर्गादिः, तस्माद्यञि कृते ङीपि प्राप्ते वचनमेतत् । आवट्याच्च स्त्रियां चाप् प्रत्ययो भवति । आवट्या । प्राचां ष्फ एव, सर्वत्र ग्रहणात् । आवट्यायनी ।
तद्धिताः ।। 4-1-76 ।।
अधिकारोऽयम् । आपञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामस्तद्धितसंज्ञास्ते वेदितव्याः । वक्ष्यति -यूनस्तिः(4-1-77/531), युवतिः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम् - `पृथिव्या ञाञौ(4-1-85/1077), `अग्रादिपश्चाड्डिमच्(4-3-23/1391) इत्येवमादि लब्धं भवति ।
तद्धितप्रदेशआः - कृत्तद्धितसमासाश्च(1-2-46/179) इत्येवमादयः ।।
यूनस्तिः ।। 4-1-77 ।।
युवन्शब्दात्प्रातिपदिकात्स्त्रियां तिः प्रत्ययो भवति, स च तद्धितसंज्ञो भवति । ङीपोऽपवादः । युवतिः ।।
अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।। 4-1-78 ।।
गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति । `निर्दिश्यमानस्यादेशा भवन्ति(व्या.प.106) इत्यणिञोरेव विज्ञायते, न तु समुदायस्य । ङकारः सामान्यग्रहणार्थः
। षकारस्तदविघातार्थः -यङश्चाप्(4-1-74/528) इति ।
उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह । उत्तमस्य समीपमुपोत्तमम्, गुरुः उपोत्तमं यस्य तद् गुरूपोत्तमं प्रातिपदिकम् । करीषस्येव गन्धोऽस्य करीषगन्धिः, कुमुदगन्धिः; तस्यापत्यम्(4-1-92/1088) इत्यण्, तस्य ष्यङादेशः - कारीषगन्ध्या, कौमुदगन्ध्या । वराहस्यापत्यम्, अत इञ्(4-1-95/1095), वाराहिः, तस्य ष्यङादेशः - वाराह्या, बालाक्या ।
अणिञोरिति किम् ? ऋतभागस्यापत्यम्, बिदादित्वादञ्, आर्तभागी । गुरूपोत्तमादिकं सर्वमस्तीति न त्वणिञौ । टिड्ढाणञ्(4-1-15/470) इति ङीबेव भवति ।
अनार्षयोरिति किम् ? वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोरिति किम् ? औपगवी । कापटवी । गोत्र इति किम् ? तत्र जातः(4-3-25/1393), आहिच्छत्री, कान्यकुब्जी ।।
गोत्रावयवात् ।। 4-1-79 ।।
`अणिञोः इत्येव । गोत्रावयवाः - गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः, ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या ।

येषां त्वनन्तरापत्येऽपीष्यते - दैवदत्या, याज्ञदत्येति; ते क्रौड्यादिषु द्रष्टव्याः ।
क्रौड्यादिभ्यश्च ।। 4-1-80 ।।
`क्रौडि इत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति । अगुरूपोत्तमार्थ आरम्भः, अनणिञर्थश्च । क्रौड्या । लाड्या ।
क्रौडि । लाडि । व्याडि । आपिशलि । आपक्षिति । चौपयत । चैटयत । शैकयत । बैल्वयत । वैकल्पयत । सौधातकि । * सूत युवत्याम् * (ग.सू.58) । * भोज क्षत्त्रिये * (ग.सू.59)। भौरिकि । भौलिकि । शाल्मकि । शालास्थलि । कापिष्ठलि । गौलक्ष्य । गौकक्ष्य ।।
दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।। 4-1-81 ।।
दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्ठेविद्धि - इत्येतेषामन्यतरस्यां ष्यङ् प्रत्ययो भवति । इञन्ता एते, गोत्रग्रहणं च नानुवर्तते । तेनोभयत्रविभाषेयम् । गोत्रे पूर्वेण नित्यः ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते । तेन मुक्ते इतो मनुष्यजातेः(4-1-65/520) इति ङीषेव भवति । दैवयज्ञ्या, दैवयज्ञी । शौचिवृक्ष्या, शौचिवृक्षी । सात्यमुग्र्या, सात्यमुग्री । काण्ठेविद्ध्या, काण्ठेविद्धी ।
समर्थानां प्रथमाद्वा ।। 4-1-82 ।।
त्रयमप्यधिक्रियते - समर्थानामिति च, प्रथमादिति च, वेति च । स्वार्थिकप्रत्ययावधिश्चायमधिकारः - प्राग्दिशो विभक्तिः(5-3-1/1947) इति यावत् । स्वार्थिकेषु ह्यस्योपयोगो नास्ति, विकल्पोऽपि तत्रानवस्थितः । केचिन्नित्यमेव भवन्ति । लक्षणवाक्यानि -तस्यापत्यम्(4-1-92/1088), तेन रक्तं रागात्(4-2-1/1202), तत्र भवः (4-3-53/1428) इत्येवमादीनि भविष्यन्ति । तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम् ।
`समर्थानाम् इति निर्द्धारणे षष्ठी । समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यते । तस्येति सामान्यं विशेषलक्षणार्थम्, तदीयं प्राथम्यं विशेषाणां विज्ञायते । उपगोरपत्यम् औपगवः ।
समर्थानामिति किम् ? कम्बल उपगोरपत्यं देवदत्तस्य । प्रथमादिति किम् ? षष्ठ्यन्ताद्यथा स्यात्, प्रथमान्तान्मा भूत् ।
वाग्रहणं किम् ? वाक्यमपि हि यथा स्यात् - उपगोरपत्यमिति । यद्येवम्, समासवृत्तिस्तद्धितवृत्त्या बाध्येत - उपग्वपत्यमिति ? नैष दोषः, पूर्वसूत्रादन्यतरस्याङ्ग्रहणमनुवर्तते, तेनैतदपि भविष्यति ।।
प्राग्दीव्यतेऽण् ।। 4-1-83 ।।
तेन दीव्यति(4-4-2/1550) इति वक्ष्यति । तदेकदेशो दीव्यच्छब्दोऽवधित्वेन गृह्यते, प्राग्दीव्यत्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामोऽण्प्रत्ययस्तत्र भवतीति वेदितव्यम् । अधिकारः, परिभाषा, विधिर्वेति त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्याण् प्रवर्तते । वक्ष्यति -तस्यापत्यम्(4-1-92/1088) औपगवः,
कापटवः ।
अश्वपत्यादिभ्यश्च ।। 4-1-84 ।।
अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति । पत्युत्तरपदाद् ण्यं वक्ष्यति, तस्यापवादः । आश्वपतम् । शातपतम् ।
अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । धान्यपति । पशुपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति ।
दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।। 4-1-85 ।।
`प्राग्दीव्यतः इत्येव । दिति, अदिति, आदित्य इत्येतेभ्यः पत्युत्तरपदाच्च प्रातिपदिकात्प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति । दैत्यः । आदित्यः । आदित्यम् । पत्युत्तरपदात् - प्राजापत्यम् । सैनापत्यम् ।

- यमाच्चेति वक्तव्यम् * । याम्यम् ।
- वाङ्मतिपितृमतां छन्दस्युपसङ्ख्यानम् * (म.भा.2.236)। वाच्यम् । मात्यम् । पैतृमत्यम् ।

</4-37-3>

- पृथिव्या ञाञौ * (म.भा.2.236)। `पार्थिवा(ऋ.<1-64-3>) । `पार्थिवी(पै.<16-46-3>) ।
- देवाद्यञञौ * (म.भा.2.236)। दैव्यम् । दैवम् ।

</1-64-3>

- बहिषष्टिलोपश्च * (म.भा.2.236)। `बाह्यः(अ.<19-44-6>) ।
- ईकक्च * (म.भा.2.236)। बाहीकः ।
- ईकञ् छन्दसि *(म.भा.2.236) । बाहीकः । स्वरे विशेषः । टिलोपवचनमव्ययानां भमात्रे टिलोपस्यानित्यत्वज्ञापनार्थम् - आरातीयः ।
- स्थाम्नोऽकारः * (म.भा.2.237)। अश्वत्थामः ।
- लोम्नोपत्ये बहुषु * (म.भा.2.237)। उडुलोमाः । शरलोमाः । बहुष्विति किम् ? औडुलोमिः । शारलोमिः ।
- सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् *(म.भा.2.237) । गव्यम् । अजादिप्रत्ययप्रसङ्ग इति किम् ? गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ।
- ण्यादयोऽर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेन *(म.भा.2.237) । दितेरपत्यं दैत्यः । वनस्पतीनां समूहो वानस्पत्यम् ।

कथं दैतेयः ? दितिशब्दात् `कृदिकारादक्तिनः(ग.सू.50) `सर्वतोऽक्तिन्नर्थादित्येके(ग.सू.51) इति ङीषं कृत्वा स्त्रीभ्यो ढक् क्रियते । लिङ्गविशिष्टपरिभाषा चानित्या ।।

उत्सादिभ्योऽञ् ।। 4-1-86 ।।

`प्राग्दीव्यतः इत्येव । उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति, अणस्तदपवादानां च बाधकः । औत्सः । औदपानः ।

उत्स । उदपान । विकर । विनोद । महानद । महानस । महाप्राण । तरुण । तलुन । * वष्कयाऽसे *(ग.सू.60) । धेनु । पृथिवी । पङ्क्ति । जगती । त्रिष्टुप् । अनुष्टुप् । जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुल । * उदस्थानाद् देशे * (ग.सू.61)। * पृषदंशे *(ग.सू.62) । भल्लकीय । रथन्तर । मध्यन्दिन । बृहत् । महत् । * सत्वन्तु * । सच्छब्दो मतुबन्त आगतनुङ्को गृह्यते - सत्वन्त्विति । कुरु । पञ्चाल । इन्द्रावसान । उष्णिक् । ककुप् । सुवर्ण । देव ।

- ग्रीष्मादच्छन्दसीति वक्तव्यम् * (ग.सू.63)। इह मा भूत्--`ग्रैष्मी त्रिष्टुप्(काठ.सं.16.18) । छन्दश्चेह वृत्तं गृह्यते, न वेदः ।।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।। 4-1-87 ।।

धान्यानां भवने क्षेत्रे खञ्(5-2-1/1802) इति वक्ष्यति । तस्य `प्राक् इत्यनेनैव सम्बन्धः । प्राग्भवनसंशब्दनाद्येऽर्थास्तेषु स्त्रीशब्दात्पुंस्शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवतः । स्त्रीषु भवं स्त्रैणम् ।

पौंस्नम् । स्त्रीणां समूहः स्त्रैणम् । पौंस्नम् । स्त्रीभ्य आगतं स्त्रैणम् । पौंस्नम् । स्त्रीभ्यो हितं स्त्रैणम् । पौंस्नम् ।

स्त्रियाः पुंवत्(6-3-34/831) इति ज्ञापकाद्वत्यर्थे न भवति । योगापेक्षं च ज्ञापकमिति स्त्रीवदित्यपि सिद्धम् ।।

द्विगोर्लुगनपत्ये ।। 4-1-88 ।।

`प्राग्दीव्यतः इति वर्तते, न `भवनात् इति । `द्विगोः इति षष्ठी । द्विगोर्यः सम्बन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग्भवति । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । दशकपालः । द्वौ वेदावधीते द्विवेदः । त्रिवेदः ।

अनपत्य इति किम् ? द्वैदेवदत्तिः । त्रैदेवदत्तिः ।

प्राग्दीव्यत इत्येव - द्वैपारायणिकः ।

द्विगुनिमित्तविज्ञानादिह न भवति - पञ्चकपालस्येदं पाञ्चकपालम् । अथ वा - द्विगोरेवायं लुग्विधीयते, `द्विगोः इति स्थानषष्ठी ।

ननु च प्रत्ययादर्शनस्यैषा संज्ञा ? सत्यमेतत्;उपचारेण तु लक्षणया दिगुनिमित्तभूतः प्रत्यय एव द्विगुस्तस्य लुग्भवति । द्विगुनिमित्तकोऽपि तर्हि गुणकल्पनया कस्मान्न द्विगुरुच्यते - पाञ्चकपालमिति ? न तस्य द्विगुत्वं निमित्तम्, इतरस्तु द्विगुत्वस्यैव निमित्तमित्यस्ति विशेषः ।

यद्येवम्, इह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति ? नैवात्र तद्धित उत्पद्यते, वाक्यमेव भवति । त्रैशब्द्यं हि साध्यम् - पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपाल इति; तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति ।

अथेह कस्मान्न भवति - पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयमिति ? वेत्यनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते ।

गोत्रेऽलुगचि ।। 4-1-89 ।।

`प्राग्दीव्यतः इत्येव । यस्कादिभ्यो गोत्रे(2-4-63/1146) इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तस्तेषामजादौ प्राग्दीव्यतीये विषयभूते प्रतिषिद्ध्यते । गर्गाणां छात्रा गार्गीयाः । वात्सीयाः । आत्रेयीयाः । खारपायणीयाः ।

गोत्र इति किम् ? कौबलम् । बादरम् । अचीति किम् ? गर्गेभ्य आगतं गर्गरूप्यम् । गर्गमयम् । प्राग्दीव्यत इत्येव - गर्गेभ्यो हितं गार्गीयम् ।

गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् बिदानामपत्यं युवा युवानौ - बैदः,बैदौ । बैदशब्दात् अत इञि(4-1-95/1095) कृते तस्य च इञः ण्यक्षत्त्रियार्षञितो यूनि लुगणिञोः(2-4-58/1276) इति लुकि रूपम् ।

एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि - बैदस्य बैदयोर्वाऽपत्यं बहवो माणवका बिदाः, न ह्यत्राञ् बहुषूत्पन्नः ।।

यूनि लुक् ।। 4-1-90 ।।

`प्राग्दीव्यतः इति वर्तते, `अचि इति च । प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग्भवति । तस्मिन्निवृत्ते सति यो यतः प्राप्नोति स ततो भवति । फाण्टाहृतस्यापत्यं फाण्टाहृतिः, तस्यापत्यं युवा, फाण्टाहृतिमिमताभ्यां णफिञौ(4-1-150/1174), फाण्टाहृतः, तस्य छात्त्रा इति विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग्भवति, तस्मिन्निवृत्ते इञन्तं प्रकृतिरूपं सम्पन्नम्, तस्मात् इञश्च(4-2-112/1333) इत्यण् भवति, फाण्टाहृताः ।

भागवित्तस्यापत्यं भागवित्तिः, तस्यापत्यं युवा वृद्धाट्ठक्सौवीरेषु बहुलम्(4-1-148/1172) इति ठक् - भागवित्तिकः, तस्य छात्त्राः - पूर्ववद् युवप्रत्यये निवृत्ते इञश्च(4-2-112/1333) इत्यण् - भागवित्ताः ।

तिकस्यापत्यम् तिकादिभ्यः फिञ्(4-1-154/1178) - तैकायनिः, तस्यापत्यं युवा - फेश्छ च(4-1-149/1173) इति छः, तैकायनीयः, तस्य छात्त्राः - युवप्रत्यये निवृत्ते वृद्धाच्छः(4-2-114/1337) -

तैकायनीयाः ।

कपिञ्जलादस्यापत्यं कापिञ्जलादिः, तस्यापत्यं युवा - कुर्वादिभ्यो ण्यः(4-1-151/1175) - कापिञ्जलाद्यः । तस्य छात्त्राः - ण्ये निवृत्ते इञश्च(4-2-112/1333) इत्यण् - कापिञ्जलादाः ।

ग्लुचुकस्यापत्यम् प्राचामवृद्धात्फिन्बहुलम्(4-1-160/1184) इति ग्लुचुकायनिः, तस्यापत्यं युवा -प्राग्दीव्यतोऽण्(4-1-83/1073) - ग्लौचुकायनः, तस्य छात्त्राः - युवप्रत्यये निवृत्ते स एवाण् - ग्लौचुकायनाः ।

अचीत्येव - फाण्टाहृतरूप्यम् । फाण्टाहृतमयम् ।

प्राग्दीव्यत इत्येव - भागवित्तिकाय हितं भागवित्तिकीयम् ।।

फक्फिञोरन्यतरस्याम् ।। 4-1-91 ।।
`यूनि इत्येव । पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते । फक्फिञोर्युवप्रत्यययोः प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग्भवति । गर्गादिभ्यो यञि(4-1-105/1107) कृते यञिञोश्च(4-1-101/1103) इति फक्, गार्ग्यायणः, तस्य छात्त्राः गार्गीयाः, गार्ग्यायणीयाः । वात्सीयाः, वात्स्यायनीयाः ।
फिञः खल्वपि - यस्कस्यापत्यम्, शिवादिभ्योऽण्(4-1-112/1115), यास्कः, तस्यापत्यं युवा - अणो द्व्यचः(4-1-156/1180) इति फिञ् - यास्कायनिः । तस्य छात्त्राः यास्कीयाः । यास्कायनीयाः ।।
तस्यापत्यम् ।। 4-1-92 ।।
अर्थनिर्देशोऽयम्, पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बद्ध्यते । `तस्य इति षष्ठीसमर्थादपत्यमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यमात्रञ्चेह गृह्यते । लिङ्गवचनादिकमन्यत्सर्वमविवक्षितम् । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।
`तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ।।(म.भा.2.245)
भानोरपत्यं भानवः । श्यामगवः ।।
एको गोत्रे ।। 4-1-93 ।।
अपत्यं पौत्रप्रभृति गोत्रम्(4-1-162/1089), तस्मिन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रसङ्गे नियमः क्रियते--गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते । अपतनादपत्यम् । योऽपि व्यवहितेन जनितः, सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव । गर्गस्यापत्यं गार्गिः । गार्गेरपत्यं गार्ग्यः । तत्पुत्रोऽपि गार्ग्यः । सर्वस्मिन् व्यवहितजनितेऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवतीति प्रत्ययो नियम्यते ।
अथ वा - गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययमुत्पादयतीति प्रकृतिर्नियम्यते - गार्ग्यः । नाडायनः ।।
गोत्राद् यून्यस्त्रियाम् ।। 4-1-94 ।।
अयमपि नियमः । यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः । गार्ग्यस्यापत्यं युवा गार्ग्यायणः । वात्स्यायनः । दाक्षायणः । प्लाक्षायणः । औपगविः । नाडायनिः ।
अस्त्रियामिति किम् ? दाक्षी । प्लाक्षी ।
किं पुनरत्र प्रतिषिद्ध्यते ? यदि नियमः, स्त्रियामनियमः प्राप्नोति ? अथ युवप्रत्ययः, स्त्रियां गोत्रप्रत्ययेनाभिधानं न प्राप्नोति गोत्रसंज्ञाया युवसंज्ञया बाधितत्वात् ? तस्माद्योगविभागः कर्तव्यः - गोत्राद्यूनि प्रत्ययो भवति । ततोऽस्त्रियाम् - यूनि यदुक्तं स्त्रिया तन्न भवति । युवसंज्ञैव प्रतिषिद्ध्यते, तेन स्त्री गोत्रप्रत्ययेनाभिधास्यते ।।
अत इञ् ।। 4-1-95 ।।
`तस्यापत्यम् इत्येव । अकारान्तात्प्रातिपदिकादिञ् प्रत्ययो भवति । अमोऽपवादः । दक्षस्यापत्यं दाक्षिः ।
तपरकरणं किम् ? शुभंयाः, कीलालपाः - इत्यतो मा भूत् ।
कथं `प्रदीयता दाशरथाय मैथिली(वा.रा.युद्ध.9.22) ? शेषविवक्षया भविष्यति ।।
बाह्वादिभ्यश्च ।। 4-1-96 ।।
`बाहु इत्येवमादिभ्यः शब्देभ्योऽपत्ये इञ्प्रत्ययो भवति । बाहविः । औपबाहविः । अनकारार्थ आरम्भः । क्वचिद्बाधकबाधनार्थः ।
बाहु । उपबाहु । विवाकु । शिवाकु । वटाकु । उपबिन्दु । वृक । चूडाला । मूषिका । बलाका । भगला । छगला । ध्रुवका । धुवका । सुमित्रा । दुर्मित्रा । पुष्करसत् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् । सुनामन् । पञ्चन् । सप्तन् । अष्टन् । * अमितौजसः सलोपश्च * (ग.सू.64)। उदञ्चु । शिरस् । शराविन् । क्षेमवृद्धिन् । शृङ्खलातोदिन् । खरनादिन् । नगरमर्दिन् । प्राकारमर्दिन् । लोमन् । अजीगर्त्त । कृष्ण । सलक । युधिष्ठिर । अर्जुन । साम्ब । गत । प्रद्युम्न । राम । * उदङ्कः संज्ञायाम् *(ग.सू.65) । * सम्भूयोऽम्भसोः सलोपश्च *(ग.सू.66) । * बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः * (म.भा.2.252)। बाहुर्नाम कश्चित्तस्यापत्यं बाहवः । * सम्बन्धिशब्दानां च तत्सदृशात्प्रतिषेधः *(म.भा.2.252) । संज्ञा-श्वशुरस्यापत्यं श्वाशुरिः । चकारोऽनुक्तसमुच्चयार्थः, आकृतिगणतामस्य बोधयति । जाम्बिः । ऐन्द्रशर्मिः । आजधेनविः । आजबन्धविः । औडुलोमिः ।।
सुधातुरकङ् च ।। 4-1-97 ।।
सुधातृशब्दादपत्ये इञ्प्रत्ययो भवति, तत्सन्नियोगेन च तस्याकङादेशो भवति । सुधातुरपत्यं सौधातिकिः ।।

- व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम् *(म.भा.2.253) वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ।।

गोत्रे कुञ्जादिभ्यश्च्फञ् ।। 4-1-98 ।।
`तस्यापत्यम् इत्येव । गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति । इञोऽपवादः । चकारो विशेषणार्थः, व्रातच्फञोरस्त्रियमाम्(5-3-113/1100) इति । ञकारो वृद्ध्यर्थः । कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः । ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः ।
गोत्र इति किम् ? कुञ्जस्यापत्यमनन्तरं कौञ्जिः । एकवचनद्विवचनयोः सतिशिष्टत्वाद् ञित्स्वरेणैव भवितव्यम् । बहुवचने तु कौञ्जायना इति, परमपि ञित्स्वरं त्यक्त्वा । चित्स्वर एवेष्यते । गोत्राधिकारश्च शिवादिभ्योऽण्(4-1-112/1115) इति यावत् ।
कुञ्ज । ब्रध्न । शङ्ख । भस्मन् । गण । लोमन् । शठ । शाक । शाकट । शुण्डा । शुभ । विपाश । स्कन्द । स्तम्भ ।।
नडादिभ्यः फक् ।। 4-1-99 ।।

पाशादिभ्यो यः प्रत्ययो भवति `तस्य समूहः इत्येतस्मिन्विषये । पाशानां समूहः पाश्या । तृण्या ।
पाश । तृण । धूम । वात । अङ्गार । पोत । बालक । पिटक । पिटाक । शकट । हल । नड । वन ।।
खलगोरथात् ।। 4-2-50 ।।
खलगोरथशब्देभ्यो यः प्रत्ययो भवति `तस्य समूहः इत्येतस्मिन्विषये । खलानां समूहः खल्या । गव्या । रथ्या ।
पाशादिष्वपाठ उत्तरार्थः ।।
इनित्रकट्यचश्च ।। 4-2-51 ।।
खलगोरथशब्देभ्यो यथासङ्ख्यम् `इनि `त्र `कट्यच् इत्येते प्रत्यया भवन्ति `तस्य समूहः इत्येतस्मिन्विषये । खलिनी । गोत्रा । रथकट्या ।।

- खलादिभ्य इनिर्वक्तव्यः * (म.भा.2.282)। डाकिनी । कुण्डलिनी । कुटुम्बिनी ।
- कमलादिभ्यः कण्डच् प्रत्ययो भवति * । कमलखण्डम् । अम्भोजखण्डम् ।

कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिराकृतिगणः ।।

- नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः * । नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः ।।
- पूर्वादिभ्यः काण्डः प्रत्ययो भवति * । पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाडम् ।।<विषयो देशे ।। 4-2-52 ।।

`समूहः इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्तते । तस्येति षष्ठीसमर्थाद् `विषयः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति ।
विषयशब्दोऽयं बह्वर्थः । क्वचिद् ग्रामसमुदाये वर्तते - विषयो लब्ध इति । क्वचिदिन्द्रियग्राह्ये - चक्षुर्विषयो रूपमिति । क्वचिदत्यन्तशीलिते ज्ञेये - देवदत्तस्य विषयोऽनुवाक इति । क्वचिदन्यत्राभावे - मत्स्यानां विषयो जलमिति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः ।
देश इति किम् ? देवदत्तस्य विषयोऽनुवाकः ।।
राजन्यादिभ्यो वुञ् ।। 4-2-53 ।।
राजन्यादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति `विषयो देशे इत्येतस्मिन्नर्थे । अणोऽपवादः । राजन्यानां विषयो देशः राजन्यकः । दैवयानकः । आकृतिगणश्चायम् । मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्तकः ।
राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर । बैल्वत । आर्जुनायन । सम्प्रिय । दाक्षि । ऊर्णनाभ ।।
भौरिक्याद्यैषुकार्यादिभ्यो बिधल्भक्तलौ ।। 4-2-54 ।।
भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल्, भक्तल् इत्येतौ प्रत्ययौ भवतः `विषयो देशे इत्येतस्मिन्विषये । अणोऽपवादः । भौरिकिविधः । वैपेयविधः । ऐषुकार्यादिभ्यः - ऐषुकारिभक्तः । सारस्यायनभक्तः ।
भौरिकि । वैपेय । भौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । इति भौरिख्यादिः ।।
ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । ताक्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव ।।
सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ।। 4-2-55 ।।
`सः इति समर्थविभक्तिः । `अस्य इति प्रत्ययार्थः । `आदिः इति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । `छन्दसः इति प्रकृतिनिर्देशः । `प्रागाथेषु इति प्रत्ययार्थविशेषणम् । `सः इति प्रथमासमर्थात् `अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति । इतिकरणस्ततश्चेद्विवक्षा । पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः । आनुष्टुभः । जागतः ।
आदिरिति किम् ? अनुष्टुभ्मध्यमस्य प्रगाथस्य । छन्दस इति किम् ? उदुत्यशब्द आदिरस्य प्रगाथस्य । प्रगाथेष्विति किम् ? पङ्क्तिरादिरस्यानुवाकस्य । प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते । यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स प्रग्रथनात्प्रकर्षगानाद्वा `प्रगाथः इत्युच्यते ।।

- छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम् * (म.भा.2.283)। त्रिष्टुबेव त्रैष्टुभम् । जागतम् ।।

सङ्ग्रामे प्रयोजनयोद्धृभ्यः ।। 4-2-56 ।।
`सोऽस्य इति समर्थविभक्तिः, प्रत्यायार्थश्चानुवर्तते । प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च । प्रत्ययार्थविशेषणं सङ्ग्रामः । प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे
सङ्ग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति । भद्रा प्रयोजनमस्य सङ्ग्रामस्य भाद्रः सङ्ग्रामः । सौभद्रः । गौरिमित्रः । योद्धृभ्यः - अहिमाला योद्धारोऽस्य सङ्ग्रामस्य आहिमालः । स्यान्दनाश्वः । भारतः ।
सङ्ग्राम इति किम् ? सुभद्रा प्रयोजनमस्य दानस्य । प्रयोजनयोद्धृभ्य इति किम् ? सुभद्रा प्रेक्षिकाऽस्य सङ्ग्रामस्य ।।
तदस्यां प्रहरणमिति क्रीडायां णः ।। 4-2-57 ।।
तदिति प्रथमासमर्थात् `अस्याम् इति सप्तम्यर्थे णः प्रत्ययो भवति, यत्तदिति निर्दिष्टं प्रहरणं चेत्तद्भवति । यदस्यामिति निर्दिष्टं क्रीडा तद् चेत्सा भवति । इतिकरणस्ततश्चेद्विवक्षा । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा, मौष्टा ।
प्रहरणमिति किम् ? माला भूषणमस्यां क्रीडायाम् । क्रीडायामिति किम् ? खड्गः प्रहरणमस्यां सेनायाम् ।।
घञः सास्यां क्रियेति ञः ।। 4-2-58 ।।
`सा इति समर्थविभक्तिः । `अस्याम् इति प्रत्ययार्थः स्त्रीलिङ्गः । `क्रिया इति प्रकृत्यर्थविशेषणम् । `घञः इति `प्रकृतिनिर्देशः । इतिकरणो विवक्षार्थः ।

घञन्तात्क्रियावाचिनः प्रथमासमर्थात् `अस्याम् इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति । `घञः इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वमपि गृह्यते । श्येनपातोऽस्यां वर्तते श्यैनम्पाता । तैलम्पाता ।
घञ इति किम् ? श्येनपतनमस्यां वर्तते । क्रियेति किम् ? प्राकारोऽस्यां वर्तते ।
अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात्पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव ? क्रीडायामित्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत । सामान्येन चेदं विधानम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः । मौसलपाता तिथिः ।।
तदधीते तद्वेद ।। 4-2-59 ।।
तदिति द्वितीयासमर्थाद् `अधीते, `वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति । छन्दोऽधीते छान्दसः । वैयाकरणः । नैरुक्तः । निमित्तानि वेद नैमित्तः । मौहूर्तः । औत्पातः ।
द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् ।।
क्रतूक्थादिसूत्रान्ताट्ठक् ।। 4-2-60 ।।
क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति `तदधीते तद्वेद इत्यस्मिन्विषये । अणोऽपवादः । अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । उक्थादिभ्यः - औक्थिकः । लौकायतिकः । सूत्रान्तात् - वार्तिकसूत्रिकः । साङ्ग्रहसूत्रिकः ।

- सूत्रान्तादकल्पादेरिष्यते * । कल्पसूत्रमधीते काल्पसूत्रः, अणेव भवति । उक्थशब्दः केषुचिदेव सामसु रूढः । यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि ? सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति । उक्थमधीते, औक्थिकः । औक्थिक्यमधीत इत्यर्थः । औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव; अनभिधानात् ।
- विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम् * (म.भा.2.284)। वायसविद्यिकः । सार्पविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । मातृकल्पिकः । पाराशरकल्पिकः ।

विद्या च नाङ्गक्षत्त्रधर्मसंसर्गत्रिपूर्वा * । अङ्गविद्यामधीते आङ्गविद्यः । क्षात्त्रविद्यः । धार्मविद्यः । सांसर्गविद्यः । त्रैविद्यः ।

- आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः * (म.भा.2.284)। आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम् । यावक्रीतिकः । प्रैयङ्गविकः । वासवदत्तिकः । सौमनोत्तरिकः । ऐतिहासिकः । पौराणिकः ।
- सर्वसादेर्द्विगोश्च लः * (म.भा.2.284)। सर्ववेदः । सर्वतन्त्रः । सादेः - सवार्त्तिकः । ससङ्ग्रहः । द्विगोः - द्विवेदः । पञ्चव्याकरणः ।
- अनुसूर्लक्ष्यलक्षणे च * (म.भा.2.284)। अनुसूर्नाम ग्रन्थः, तमधीते आनुसुकः । लाक्षिकः । लाक्षणिकः ।
- इकन्बहुलं पदोत्तरपदात् * पूर्वपदिकः ।
- शतषष्टेः षिकन् पथो बहुलम् * (म.भा.2.284)। शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । बहुलग्रहणादणपि भवति - शातपथः, षाष्टिपथः ।

उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरुक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता । पद । क्रम । सङ्घात । वृत्ति । सङ्ग्रह । गुणागुण । आयुर्वेद । * सूत्रान्तादकल्पादेः * (ग.सू.83)* विद्यालक्षणकल्पान्तात्*(ग.सू.84) । * विद्या चानङ्गक्षत्त्रधर्मसंसर्गत्रिपूर्वा *(ग.सू.85)। * आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् *(ग.सू.86)। * सर्वसादेर्द्विगोश्च लः *(ग.सू.87)। * अनुसूर्लक्ष्यलक्षणे च *(ग.सू.88)। * द्विपदी---ज्योतिषि * (ग.सू.89)। अनुपद । अनुकल्प । अनुगुण । * इकन्बहुलं पदोत्तरपदात् *(ग.सू.90)। * शतषष्टेः षिकन् पथो बहुलम् *(ग.सू.91)।।
क्रमादिभ्यो वुन् ।। 4-2-61 ।।
`क्रम इत्येवमादिभ्यः शब्देभ्यो वुन्प्रत्ययो भवति `तदधीते तद्वेद इत्यस्मिन्विषये । अणोऽपवादः । क्रमकः । पदकः ।
क्रम । पद । शिक्षा । मीमांसा । सामन् ।।
अनुब्राह्मणादिनिः ।। 4-2-62 ।।
अनुब्राह्मणशब्दादिनिः प्रत्ययो भवति `तदधीते तद्वेद इत्यस्मिन्विषये । अणोऽपवादः । ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम् । तदधीते अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः ।
मत्वर्थे अत इनिठनौ(5-2-115/1922) इति इनिना सिद्धम् ? तत्रैतस्माट्ठन्नपि प्राप्नोति । अनभिधानान्न भविष्यति ? अमो निवृत्त्यर्थं तर्हि वचनम् ।।
वसन्तादिभ्यष्ठक् ।। 4-2-63 ।।
`वसन्त इत्येवमादिभ्यष्ठक्प्रत्ययो भवति `तदधीते तद्वेद इत्यस्मिन्विषये । अणोऽपवादः । वसन्तसहचरितोऽयं ग्रन्थो वसन्तः, तमधीते वासन्तिकः । वार्षिकः ।
वसन्त । वर्षाशरदम् । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अपर्वन् । अथर्वन् ।।
प्रोक्ताल्लुक् ।। 4-2-64 ।।
प्रोक्तसहचरितः प्रत्ययः `प्रोक्तः । प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य लुग्भवति । पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः । आपिशलः । स्त्रियां स्वरे च विशेषः - पाणिनीया ब्राह्मणी ।।
सूत्राच्च कोपधात् ।। 4-2-65 ।।
सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग्भवति । अप्रोक्तार्थ आरम्भः । पाणिनीयमष्टकं सूत्रम्, तदधीते अष्टकाः पाणिनीयाः। दशका वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः ।

- सङ्ख्याप्रकृतेरिति वक्तव्यम् * (म.भा.2.285)। इह मा भूत् - महावार्तिकं सूत्रमधीते माहावार्तिकः । कालापकमधीते कालापकः ।

कोपधादिति किम् ? चतुष्टयमधीते चातुष्टयः ।।

छन्दोब्राह्मणानि च तद्विषयाणि ।। 4-2-66 ।।

प्रोक्तग्रहणमनुवर्तते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति । अध्येतृवेदितृप्रत्ययविषयाणि । अनन्यभावो विषयार्थः, तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते । कठेन प्रोक्तमधीयते कठाः । मौदाः । पैप्पलादाः । आर्चाभिनः । वाजसनेयिनः ।

ब्राह्मणानि खल्वपि - ताण्डिनः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः ।

ब्राह्मणग्रहणं किम्, यावता छन्द एव तद् ? ब्राह्मणविशेषप्रतिपत्त्यर्थम्, इह तद्विषयता मा भूत् - याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । सौलभानि (म.भा.2.285)।

चकारोऽनुक्तसमुच्चयार्थः । कल्पे - काश्यपिनः । कौशिकिनः । सूत्रे - पाराशरिणो भिक्षवः । शैलालिनो नटाः

(म.भा.2.286)। कर्मन्दिनः । कृशाश्विनः ।

छन्दोब्राह्मणानीति किम् ? पाणिनीयं व्याकरणम् । पैङ्गी कल्पः ।।

तदस्मिन्नस्तीति देशे तन्नाम्नि ।। 4-2-67 ।।

`तत् इति प्रथमा समर्थविभक्तिः । `अस्मिन् इति प्रत्ययार्थः । `अस्ति इति प्रकृत्यर्थविशेषणम् । इतिकरणो विवक्षार्थः । `देशेतन्नाम्नि इति प्रत्ययार्थविशेषणम् । तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थमस्ति चेत्तद्भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत्स तन्नामा भवति - प्रत्ययान्तनामा, इतिकरणस्ततश्चेद्विवक्षा । उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः । बाल्बजः । पार्वतः । मत्वर्थीयापवादो योगः ।।

तेन निर्वृत्तम् ।। 4-2-68 ।।

`तेन इति तृतीयासमर्थात् `निर्वृत्तम् इत्यस्मिन्विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । `देशे तन्नाम्नि(4-4-67>-70) इति चतुर्ष्वपि योगेषु सम्बध्यते । सहस्रेण निर्वृत्ता साहस्री परिखा । कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । हेतौ कर्तरि च यथायोगं तृतीया समर्थविभक्तिः ।।

तस्य निवासः ।। 4-2-69 ।।

`तस्य इति षष्ठीसमर्थात् `निवासः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । निवसत्यस्मिन्निति निवासः । ऋजुनावां निवासो देश आर्जुनावो देशः । शैबः । औदिष्ठः ।।

अद्‌रभवश्च ।। 4-2-70 ।।

पूर्वा समर्थविभक्तिरनुवर्तते । तस्येति षष्ठीसमर्थाद् `अदूरभवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । विदिश्या अदूरभवं नगरं वैदिशम् । हैमवतम् ।

चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः । तेनोत्तरेषु चत्वारोऽप्यर्थाः सम्बद्‌ध्यन्ते ।।

ओरञ् ।। 4-2-71 ।।

चत्वारोऽर्था(4-2-67>-70) अनुवर्तन्ते । उवर्णान्तात्प्रातिपदिकाद्यथाविहितं समर्थविभक्तियुक्तादञ् प्रत्ययो भवति `तदस्मिन्नस्ति इत्येवमादिष्वर्थेषु । अणोऽपवादः । अरडु - आरडवम् । कक्षतु - काक्षतवम् । कर्कटेलु - कार्कटेलवम् । नद्यास्तु परत्वान्मतुब्भवति - इक्षुमती ।

अञधिकारः - प्राक् सुवास्त्वादिभ्योऽणः(4-2-77/1289) ।।

मतोश्च बह्वजङ्गात् ।। 4-2-72 ।।

बह्वज् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । ऐषुकावतम् । सैध्रकावतम् ।।

बह्वजङ्गादिति किम् ? आहिमतम् । यावमतम् ।

अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा विज्ञायते, मत्वन्तविशेषणं मा विज्ञायीति । मालावतां निवासो मालावतम् ।।

बह्वचः कूपेषु ।। 4-2-73 ।।

बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु । अणोऽपवादः । यथासम्भवमर्थाः सम्बध्यन्ते । दीर्घवरत्रेण निर्वृत्तः कूपः, दैर्घवरत्रः । कापिलवरत्रः ।।

उदक्च विपाशः ।।। 4-2-74 ।।

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेष्वञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । अबह्वजर्थ आरम्भः । दत्तेन निवृत्तः कूपो दात्तः । गौप्तः ।

उदगिति किम् ? दक्षिणतो विपाशः ।

कूपेष्वणेव - दात्तः । गौप्तः । स्वरे विशेषः । महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य ! ।।

सङ्कलादिभ्यश्च ।। 4-2-75 ।।

`कूपेषु इति निवृत्तम् । `सङ्कल इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः ।

यथासम्भवमर्थसम्बन्धः । सङ्गतः कलः सङ्कलः, सङ्कलेन निवृत्तः साङ्कलः । पौष्कलः ।

सङ्कल । पुष्कल । उद्वप । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपिङ्गल । सिकता । पूतीकी । पूलास । कूलास । पलाश । निवेश । गवेष । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । भल्ल । माल । वृत् ।।

स्त्रीषु सौवीरसाल्वप्राक्षु ।। 4-2-76 ।।

`देशे तन्नान्नि इत्यस्य विशेषणम् - सौवीरादयः, स्त्रीत्वं च । ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि । सौवीरे तावत् - दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री । साल्वे - विधूमाग्निना निर्वृत्ता वैधूमाग्नी । प्राचि खल्वपि - ककन्देन निर्वृत्ता काकन्दी । माकन्दी । माणिचरी । जारुषी ।।

सुवास्त्वादिभ्योऽण् ।। 4-2-77 ।।
`सुवास्तु इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः । अत्र उवर्णान्तलक्षणस्य कूपलक्षणस्य चापवादः । सुवास्तोरदूरभवं नगरं सौवास्तवम् । वार्णवम् ।
अण्ग्रहणं नद्यां मतुपो बाधनार्थम् । सौवास्तवी नदी ।
सुवास्तु । वर्णु । भण्डु । खण्डु । सेचालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह्य । अहिसक्थ । वृत् ।।
रोणी ।। 4-2-78 ।।
रोणीशब्दादण्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्यात्रोऽपवादः । रोणीति कोऽयं निर्देशः, यावता प्रत्ययविधौ पञ्चमी युक्ता ? सर्वावस्थप्रतिपत्त्यर्थमेवमुच्यते - रोणीशब्दः सर्वावस्थोऽण्प्रत्ययमुत्पादयति, केवलस्तदन्तश्च । रौणः । आजकरोणः । सैंहिकरोणः ।।
कोपधाच्च ।। 4-2-79 ।।
ककारोपधाच्च प्रातिपदिकादण्प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्योवर्णलक्षणस्य चात्रोऽपवादः । कार्णच्छिद्रिकः कूपः । कार्णवेष्टकः । कृकवाकुना निर्वृत्तं कार्कवाकवम् । त्रैशङ्कवम् ।।
वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।। 4-2-80 ।।
वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः । आदिशब्दः प्रत्येकमभिसम्बध्यते । तत्र यथासङ्ख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्यया भवन्ति चातुरर्थिकाः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । अरीहणादिभ्यो वुञ्प्रत्ययो भवति । आरीहणकम् । द्रौघणकम् ।
अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । साम्परायण । क्रौष्टायण । भास्त्रायण । मैत्रायण । त्रैगर्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । वैमतायन । सौसायन । शाण्डिल्यायन । शिरीष । बधिर । अरीहणादिः ।।
कृशाश्वादिभ्यश्छण्प्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः ।
कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । अवनत । विकुघास । अरुस् । अवयास । मौद्गल्य । कृशाश्वादिः ।।
ऋश्यादिभ्यः कः प्रत्ययो भवति । ऋश्यक । न्यग्रोधकः ।
ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह । परिवंश । वेणु । वीरण । ऋश्यादिः ।।
कुमुदादिभ्यष्ठच्प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् ।
कुमुद । शर्करा । न्यग्रोध । इत्कट । गर्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत । कुमुदादिः ।।
काशादिभ्य इलः प्रत्ययो भवति । काशिलम् । वाशिलम् ।
काश । वाश । अश्वत्थ । पलाश । पीयूष । विश । तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गृह । काशादिः ।
तृणादिभ्यः शः प्रत्ययो भवति । तृणशः । नडशः ।
तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन । तृणादिः ।
प्रेक्षादिभ्य इनिप्रत्ययो भवति । प्रेक्षी । हलकी ।
प्रेक्षा । हलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट । प्रेक्षादिः ।
अश्मादिभ्यो रप्रत्ययो भवति । अश्मरः ।
अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा । अश्मादिः ।
सख्यादिभ्यो ढञ् प्रत्ययो भवति । साखेयम् । साखिदत्तेयम् ।
सखि । सखिदत्त । वायुदत्त । गोहित । भल्ल । पाल । चक्रपाल । चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल । सख्यादिः ।
सङ्काशादिभ्यो ण्यप्रत्ययो भवति । साङ्काश्यम् । काम्पिल्यम् ।
संकाश । काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । बिरत । चिकार । विरह । नासिका । सङ्काशादिः ।
बलादिभ्यो यः प्रत्ययो भवति । बल्यः। कुल्यम् ।
बल । वुल । तुल । उल । डुल । कवल । वन । कुल । बलादिः ।।
पक्षादिभ्यः फक् प्रत्ययो भवति । पाक्षायणः । तौषायनः ।
पक्ष । तुष । अण्ड। कम्बलिक । चित्र । अश्मन् । अतिस्वन् । पथिन्पन्थच । पक्षादिः ।
कर्णादिभ्यः फिञ्प्रत्ययो भवति । कार्णायनिः । वासिष्ठायनिः ।
कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जीवन्ती । जित्व । आण्डीवत् । कर्णादिः ।
सुतङ्गमादिभ्य इञ्प्रत्ययो भवति । सौतङ्गमिः । मौनिचित्तिः ।
सुतङ्गम । मुनिचित्त । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन् । अर्जुन । अजिर । जीव । सुतङ्गमादिः ।
प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति । प्रागद्यम् ।
प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । प्रगद्यादिः ।
वराहादिभ्यः कक् प्रत्ययो भवति । वाराहकम् । पालाशकम् ।
वराह । पलाश । शिरीष । पिनद्ध । स्थूण। विदग्ध । विजग्ध । विभग्न । बाहु । खदिर। शर्करा । वराहादिः ।।

कमुदादिभ्यष्ठक् प्रत्ययो भवति । कौमुदिकम् ।
कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण । कुमुदादिः ।
शिरीषशब्दोऽरीहणादिषु कुमुदादिषु वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल्लुब्भवति । तथा चोक्तम् - शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति ।।
जनपदे लुप् ।। 4-2-81 ।।
`देशे तन्नाम्नि इति यश्चातुरर्थिकः प्रत्ययो भवति, तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति । ग्रामसमुदायः = जनपदः । पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः । मत्स्याः । अङ्गाः । वङ्गाः । मगधाः । सुह्माः । पुण्ड्राः ।
इह कस्मान्न भवति - उदुम्बरा अस्मिन्सन्ति, औदुम्बरो जनपदः, वैदिशो जनपद इति ? तन्नाम्नीति वर्तते । न चात्र लुबन्तं तन्नामधेयं भवति ।।
वरणादिभ्यश्च ।। 4-2-82 ।।
`वरण इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब्भवति । अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः । शृङ्गी । शाल्मलयः । चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी । शिरीषाः काञ्ची ।
वरणाः । पूर्वौ गौदौ । आलिङ्ग्यायन । पर्णी । शृङ्गी । शाल्मलयः । सदाण्वी । वणिकि । वणिक । जालपद । मथुरा । उज्जयिनी । गया । तक्षशिला । उरशा । आकृत्या ।।
शर्कराया वा ।। 4-2-83 ।।
शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति ।
वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति ? एवं तर्हि एतज्ज्ञापयति - शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति । शर्करा । शार्करम् । गणपाठाच्च श्रवणम्, उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ । तदेवं षड् रूपाणि भवन्ति - शर्करा, शार्करम्, शर्करिकम्, शार्करकम्, शार्करिकम्, शर्करीयमिति ।।
ठक्छौ च ।। 4-2-84 ।।
शर्कराशब्दाट्ठक्, छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ । यथासम्भवमर्थसम्बन्धः । शार्करिकम् । शर्करीयम् ।।
नद्यां मतुप् ।। 4-2-85 ।।
नद्यामभिधेयायां मतुत्प्रत्ययो भवति चातुरर्थिकः । तन्नाम्नो देशस्य विशेषणं नदी । उदुम्बरा यस्यां सन्ति उदुम्बरावती । मशकावती । वीरणावती । पुष्करावती । इक्षुमती । द्रुमती ।
इह कस्मान्न भवति - भागीरथी, भैमरथी ? मतुबन्तस्यातन्नामधेयत्वात् ।
मध्वादिभ्यश्च ।। 4-2-86 ।।
`मधु इत्येवमादिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः । अनद्यर्थ आरम्भः । मधुमान् । विसवान् ।
मधु । विस । स्थाणु । मुष्टि । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । मध्वादिः ।।
कुमुदनडवेतसेभ्यो ड्मतुप् ।। 4-2-87 ।।
`कुमुद, `नड, `वेतस इत्येतेभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् ।

- महिषाच्चेति वक्तव्यम् * (म.भा.2.288)। महिष्मान्नाम देशः ।।

नडशादाड् ड्वलच् ।। 4-2-88 ।।
नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नड्वलम् । शाद्वलम् ।।
शिखाया वलच् ।। 4-2-89 ।।
शिखाशब्दाद्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । शिखावलं नाम नगरम् । मतुप्प्रकरणेऽपि शिखाया वलचं(5-2-113/1920) वक्ष्यति, तददेशार्थं वचनम् ।।
उत्करादिभ्यश्छः ।। 4-2-90 ।।
उत्कर इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । उत्करीयम् । शफरीयम् ।
उत्कर । सम्फल । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । शकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त । शाल । अन्य । जन्या । अजिन । मञ्च । चर्मन् । उत्क्रोश । शान्त । खदिर । शूर्पणाय । श्यावनाय । नैव । बक । नितान्त । वृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । अर्जुनवृक्ष । उत्करादिः ।।
नडादीनां कुक् च ।। 4-2-91 ।।
`नड इत्येवमादीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नडकीयम् । प्लक्षकीयम् ।
नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । तृण । इक्षु । काष्ठ । कपोत । * क्रुञ्चाया ह्रस्वत्वं च * (ग.सू.92)। * तक्षन्नलोपश्च * (ग.सू.93)।
शेषे ।। 4-2-92 ।।
`शेषे इत्यधिकारोऽयम् । यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः ।
उपयुक्तादन्यः शेषः । अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः (म.भा.2.291)। तस्येदंविशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते ।
किञ्च - सर्वेषु जातादिषु घादयो यथा स्युरनन्तरेणैवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायीति साकल्यार्थं शेषवचनम् । वक्ष्यति - राष्ट्रावारपाराद् घखौ(4-2-93/1313) । राष्ट्रियः । अवारपारीणः । `शेषे इति लक्षणं चाधिकारश्च । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । दृषदि पिष्टाः दार्षदाः सक्तवः । उलूखले क्षुण्णः औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति ।।

राष्ट्रावारपाराद् घखौ ।। 4-2-93 ।।
`राष्ट्र `अवारपार इत्येताभ्यां यथासङ्ख्यं घ-खावित्येतौ प्रत्ययौ भवतः । राष्ट्रियः । अवारपारीणः । * विगृहीतादपीष्यते * (म.भा.2.291)अवारीणः । पारीणः । * विपरीताच्च * (म.भा.2.291)पारावारीणः ।
प्रकृतिविशेषोपादानमात्रेण तावत्प्रत्यया विधीयन्ते । तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते ।
ग्रामाद्यखञौ ।। 4-2-94 ।।
ग्रामशब्दाद्य, खञ् इत्येतौ प्रत्ययौ भवतः । ग्राम्यः । ग्रामीणः ।।
कत्र्यादिभ्यो ढकञ् ।। 4-2-95 ।।
`कत्त्रि इत्येवमादिभ्यो ढकञ् प्रत्ययो भवति । कात्त्रेयकः । औम्भेयकः ।
कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती । ग्राम । उख्या । * कुड्याया यलोपश्च * (ग.सू.94) । कत्र्यादिः ।।
कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।। 4-2-96 ।।
कुलकुक्षिग्रीवाशब्देभ्यो यथासङ्ख्यं `श्वन्, `असि, `अलङ्कार इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति । कौलेयको भवति श्वाचेत्, कौलोऽन्यः । कौक्षेयको भवत्यसिश्चेत्, कौक्षोऽन्यः । ग्रैवेयको भवत्यलङ्कारश्चेत्, ग्रैवोऽन्यः ।।
नद्यादिभ्यो ढक् ।। 4-2-97 ।।
`नदी इत्येवमादिभ्यो ढक् प्रत्ययो भवति । नादेयम् । माहेयम् ।
पूर्वनगरीशब्दोऽत्र पठ्यते । पौर्वनगरेयम् ।
केचितु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति - पौरेयम्, वानेयम्, गैरेयमिति; तदुभयमपि दर्शनं
प्रमाणम् ।
नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नवकौशाम्बी । काशफरी । खादिरी । पूर्वनगरी । पावा । मावा । साल्वा । दार्वा । दाल्वा । वासेनकी । * वडवाया वृषे* (ग.सू.95) ।।
दक्षिणापश्चात्पुरसस्त्यक् ।। 4-2-98 ।।
दक्षिणा, पश्चात्, पुरस् इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।
कापिश्याः ष्फक् ।। 4-2-99 ।।
कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः । षकारो ङीषर्थः । कापिशायनं मधु । कापिशायनी द्राक्षा ।।

- बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् * (म.भा.2.292)। बाह्लायनी । और्दायनी । पार्दायनी ।।

रङ्कोरमनुष्येऽण् च ।। 4-2-100 ।।
रङ्कुशब्दादण् प्रत्ययो भवति, चकारात्ष्फक्च शैषिकोऽमनुष्येऽभिधेये । राङ्कवो गौः । राङ्कवायणो गौः ।
अमनुष्य इति किम् ? राङ्कवको मनुष्यः ।
ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च मनुष्यतत्स्थयोर्वुञ्(4-2-134/1358) इति मनुष्ये परत्वाद्वुञैव भवितव्यम्, कच्छादिपाठादमनुष्येऽणपि सिद्धः, किमिह मनुष्यप्रतिषेधेनाण्ग्रहणेन च ? तदुच्यते; नैवायं मनुष्यप्रतिषेधः, किं तर्हि ? नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते । तेन राङ्कवः, कम्बल इति ष्फग्न भवति ।
विशेषविहितेन च ष्फकाऽणो बाधा मा भूदित्यण्ग्रहणमपि क्रियते ।।
द्युप्रागपागुदक्प्रतीचो यत् ।। 4-2-101 ।।
दिव, प्राच्, अपाच्, उदच्, प्रत्यच् इत्येतेभ्यो यत्प्रत्ययो भवति शैषिकः । दिव्यम् । प्राच्यम् । अवाच्यम् । उदीच्यम् प्रतीच्यम् ।
अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः । प्राक्तनम् ।
कन्थायाष्ठक् ।। 4-2-102 ।।
कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः । कान्थिकः ।।
वर्णौ वुक् ।। 4-2-103 ।।
`कन्थायाः इत्येव । वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः । ठकोऽपवादः । वर्णुर्नाम नदस्तत्समीपो देशो वर्णुः । तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः । तथाहि जातं हिमवत्सु कान्थकम् ।
अव्ययात्त्यप् ।। 4-2-104 ।।
अव्ययात् त्यप् प्रत्ययो भवति शैषिकः ।
`अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ।
निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा ।।(म.बा.2.292)
अमात्यः । इहत्यः । क्वत्यः । इतस्त्यः । तत्रत्यः । यत्रत्यः ।
परिगणनं किम् ? औपरिष्टः । पौरस्तः । पारस्तः । वृद्धात्तु छो भवति - आरातीयः ।

- त्यब्नेर्ध्रुवे * (म.भा.2.293)। नियतं ध्रुवम् - नित्यम् ।
- निसो गते * (म.भा.2.293)। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः ।

</12-2-54>

- आविसश्छन्दसि * (म.भा.2.293)। आविस् शब्दाच्छन्दसि त्यप्प्रत्ययो भवति । `आविष्ट्यो वर्द्धते चारुरासु(ऋ.<1-95-5>)।
- अरण्याण्णो वक्तव्यः * (म.भा.2.293)। आरण्याः सुमनसः ।
- दूरादेत्यः * (म.भा.2.293)। दूरेत्यः पथिकः ।
- उत्तरादाहञ् । * (म.भा.2.293)। औत्तराहम् ।।

ऐषमोह्यःश्वसोऽन्यतरस्याम् ।। 4-2-105 ।।
ऐषमस्, ह्यस्; श्वस् इत्येतेभ्योऽन्यतरस्यां त्यप्प्रत्ययो भवति शैषिकः । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । श्वसस्तुट् च(4-3-15/1385) इति ठञपि तृतीयो भवति - शौवस्तिकम् ।।
तीररूप्योत्तरपदादञ्ञौ ।। 4-2-106 ।।
तीरोत्तरपदाद् रूप्योत्तरपदाच्च प्रातिपदिकाद् यथासङ्ख्यमञ्, ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ । अणोऽपवादौ । काकतीरम् । पाल्वलतीरम् । रूप्योत्तरपदात् - वार्करूप्यम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम्, बहुच्प्रत्ययपूर्वाद् मा भूदिति । बाहुरूप्यम् । अणेव भवति ।।
दिक्पूर्वपदादसंज्ञायां ञः ।। 4-2-107 ।।
असंज्ञायामिति प्रकृतिविशेषणम् । दिक्पूर्वपदात्प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति शैषिकः । अणोऽपवादः । पौर्वशालः । दाक्षिणशालः । आपरशालः ।
असंज्ञायामिति किम् ? पूर्वैषुकामशमः । अपरैषुकामशमः । दिक्सङ्ख्ये संज्ञायाम्(2-1-50/727) इति समासः । प्राचां ग्रामनगराणाम्(7-3-14/1400) इत्युत्तरपदवृद्धिः । पदग्रहणं स्वरूपविधिनिरासार्थम् ।।
मद्रेभ्योऽञ् ।। 4-2-108 ।।
`दिक्पूर्वपदात् इत्येव । दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति शैषिकः । पौर्वमद्रः । आपरमद्रः । दिशो मद्राणाम्(7-3-13/1399) इति पर्युदासादादिवृद्धिरेव ।।
उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।। 4-2-109 ।।
दिग्ग्रहणं निवृत्तम् । उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः । अणोऽपवादः । शैवपुरम् । माण्डवपुरम् ।।
उदीच्यग्रामादिति किम् ? माथुरम् । बह्वच इति किम् ? ध्वजी । ध्वाजम् । अन्तोदात्तादिति किम् ? शार्करीधानम् । शर्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः ।।
प्रस्थोत्तरपदपलद्यादिकोपधादण् ।। 4-2-110 ।।
प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः । उदीच्यग्रामलक्षणस्याञोऽपवादः । माद्रीप्रस्थः । माहकीप्रस्थः । पलद्यादिभ्यः - पालदः । पारिषदः । ककारोपधात् - नैलीनकः । चैयातकः । पलद्यादिषु यो वाहीकग्रामस्ततष्ठञ्ञिठयोः (4-2-117/1341)अपवादः, यथा - गौष्ठी, नैतकीति ।
गोमतीशब्दः पठ्यते, ततः रोपधेतोः प्राचाम्(4-2-123/2347) इति वुञोऽपवादः । वाहीकशब्दः कोपधोऽपि पुनः पठ्यते परं छं (4-2-114/1337) बाधितुम् । अण्ग्रहणं बाधकबाधनार्थम् ।
पलदी । परिषत् । यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । कलकीट । मलकीट । कमलकीट । कमलभिदा । गोष्ठी कमलकीर । बाहुकीट । नैतकी । परिखा । शूरसेन । गोमती । उदयान । पलद्यादिः ।।
कण्वादिभ्यो गोत्रे ।। 4-2-111 ।।
गोत्रमिह न प्रत्ययार्थः, न च प्रकृतिविशेषणम् । तर्ह्येवं सम्बध्यते - कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः । छस्यापवादः । काण्वाश्छात्राः । गौकक्षाः ।।
इञश्च ।। 4-2-112 ।।
`गोत्रे इत्येव । गोत्रे य इञ्विहितस्तदन्तात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः । छस्यापवादः । दाक्षाः । प्लाक्षाः । माहकाः ।
गोत्र इत्येव - सौतङ्गमेरिदं सौतङ्गमीयम् ।।
न द्वयचः प्राच्यभरतेषु ।। 4-2-113 ।।
द्वयचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिद्ध्यते । पैङ्गीयाः । प्रौष्ठीयाः । चैदीयाः । पौष्कीयाः । काशीयाः । पाशीयाः ।
द्व्यच इति किम् ? पान्नागाराः । प्राच्यभरतेष्विति किम् ? दाक्षाः ।
काशीया इति कथमुदाहृतम् । यावता काश्यादिभ्यष्ठिञ्ञिठाभ्यां (4-2-116/1340)भवितव्यम् ? नैतदस्ति; देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, चैदिशब्देन साहचर्यात् । गोत्रात्तु वृद्धाच्छः(4-2-114/1337) एव भवति ।
ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम् ।।
वृद्धाच्छः ।। 4-2-114 ।।
`गोत्रे इति नानुवर्त्तते । सामान्येन विधानम् । वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । गार्गीयः । वात्सीयः । शालीयः । मालीयः । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधींस्तु (4-2-104>,106,109,110)परत्वाद् बाधते ।।
भवतष्ठक्छसौ ।। 4-2-115 ।।
`वृद्धात् इत्येव । भवच्छब्दात् वृद्धात् ठक्, छस् - इत्येतौ प्रत्ययौ भवतः शैषिकौ छस्यापवादौ । सकारः पदसंज्ञार्थः । भवतस्त्यदादित्वाद् वृद्धसंज्ञा । भावत्कः । भवदीयम् ।
अवृद्धात्तु भवतः शतुरणेव भवति - भावतः ।।

काश्यादिभ्यष्ठञ्ञिठौ ।। 4-2-116 ।।
`काशि इत्येवमादिभ्यः ठञ्, ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ । इकार उच्चारणार्थः । ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः । स्त्रीप्रत्यये विशेषः । काशिकी, काशिका । बैदिकी, बैदिका ।
`वृद्धात् इत्यत्रानुवर्त्तते । ये त्ववृद्धाः पठ्यन्ते, वचनप्रामाण्यात्तेभ्यः प्रत्ययविधिः ।
देवदत्तशब्दः पठ्यते, तस्य एङ् प्राचां देशे(1-1-75/1338) इति वृद्धसंज्ञा - दैवदत्तिकः । वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा - दैवदत्तः । कथं भाष्य उदाहृतम् - `वा नामधेयस्य वृद्धसंज्ञा वेदितव्या; देवदत्तीया, दैवदत्ताः इति, यावता वृद्धसंज्ञापक्षे काश्यादित्वाद्दञ्ञिठाभ्यां भवितव्यम् ? तत्रैवं वर्णयन्ति - `वा नामधेयस्येति व्यवस्थितविभाषेयम्, सा छे कर्त्तव्ये भवति, ठञ्ञिठयोर्न भवति इति ।
काशी । चेदि । संज्ञा । संवाह । अच्युत । मोहमान । शकुलाद । हस्तिकर्षू । कुदामन् । हिरण्य । करण । गोधाशन । भौरिकि । भौलिङ्गि । अरिन्दम । सर्वमित्र । देवदत्त । साधुमित्र । दासमित्र । दासग्राम । सौधावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । * आपदादिपूर्वपदात्कालात् * (ग.सू.96)। आपत्कालिकी, आपत्कालिका । और्ध्वकालिकी, और्ध्वकालिका । तात्कालिकी, तात्कालिका ।।
वाहीकग्रामेभ्यश्च ।। 4-2-117 ।।
`वृद्धात् इत्येव । वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ छस्यापवादौ । शाकलिकी, शाकलिका । मान्थाविकी, मान्थविका ।।
विभाषोशीनरेषु ।। 4-2-118 ।।
`वृद्धात् इति वर्तते, `वाहीकग्रामेभ्यः इति च । उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः । आह्वजालिकी, आह्वजालिका, आह्वजालीया । सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया ।।
ओर्देशेठञ् ।। 4-2-119 ।।
`वृद्धात् इति नानुवर्त्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणात् । उवर्णान्ताद् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। नैषादकर्षुकः । शाबरजम्बुकः । देश इति किम् ? पटोश्छात्त्राः पाटवाः ।
ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम् ।।
वृद्धात्प्राचाम् ।। 4-2-120 ।।
`ओर्देशे इत्येव । उवर्णान्ताद् वृद्धात्प्राग्देशवाचिनः प्रातिपदिकाद्दञ् प्रत्ययो भवति शैषिकः ।
आढकजम्बुकः । शाकजम्बुकः । नापितवास्तुकः (म.भा.2.297)। पूर्वेणैव ठञि सिद्धे नियमार्थं वचनम् - वृद्धादेव प्राचामवृद्धान्न भवतीति । मल्लवास्तु - माल्लवास्तवः ।।
धन्वयोपधाद् वुञ् ।। 4-2-121 ।।
`वृद्धात् इति वर्तते, देश इति च । धन्ववाचिनो यकारोपधाच्च देशाभिधायिनो वृद्धात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः । धन्वशब्दो मरुदेशवचनः । पारेधन्वकः । ऐरावतकः । योपधात् - साङ्काश्यकः (म.भा.2.297)। काम्पिल्यकः ।।
प्रस्थपुरवहान्ताच्च ।। 4-2-122 ।।
`वृद्धात् इत्येव, `देशे इति च; अन्तशब्दः प्रत्येकमभिसम्बद्ध्यते । प्रस्थ, पुर, वह इत्येवमन्तादेशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ्प्रत्ययो भवति शैषिकः । छस्यापवादः । मालाप्रस्थकः । नान्दीपुरकः (म.भा.2.298)। कान्तीपुरकः । पैलुवहकः । फाल्गुनीवहकः ।
पुरान्तो रोपधः, तत उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह ग्रहणम् ।।
रोपधेतोः प्राचाम् ।। 4-2-123 ।।
`वृद्धात् इत्येव, `देशे इति च । तद्विशेषणं प्राग्ग्रहणम् । रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः । छस्यापवादः । पाटलिपुत्रकाः । ऐकचक्रकाः । ईतः खल्वपि - काकन्दी, काकन्दकः । माकन्दी, माकन्दकः ।
प्राचामिति किम् ? दात्तामित्त्रीयः ।
तपरकरणं विस्पष्टार्थम् ।।
जनपदतदवध्योश्च ।। 4-2-124 ।।
`वृद्धात् इत्येव, `देशे इति च । तद्विशेषणं जनपदतदवधी । वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः । छस्यापवादः । आभिसारकः । आदर्शकः । जनपदावधेः खल्वपि - औपुष्टकः । श्यामायनकः ।
तदवधेरपि जनपद एव गृह्यते, न ग्रामः । किमर्थं तर्हि ग्रहणम् ? बाधकबाधनार्थम् । गर्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति । त्रैगर्त्तकः ।।
अवृद्धादपि बहुवचनविषयात् ।। 4-2-125 ।।
`जनपदतदवध्योः इत्येव । अवृद्धाद्, वृद्धाच्च जनपदात्तदवधिवाचिनश्च बहुवचनविषयात्प्रातिपदिकाद् वुञ्प्रत्ययो भवति शैषिकः । अण्छयोरपवादः । अवृद्धाज्जनपदात्तावत् - अङ्गाः । वङ्गाः । कलिङ्गाः । आङ्गकः । वाङ्गकः । कालिङ्गकः । अवृद्धाज्जनपदावधेः - अजमीढाः । अजक्रन्दाः । आजमीढकः । आजक्रन्दकः । वृद्धाज्जनपदात् - दार्वाः । जाम्ब्वाः । दार्वकः । जाम्ब्वकः । वृद्धाज्जनपदावधेः - कालञ्जराः । वैकुलिशाः । कालञ्जरकः । वैकूलिशकः ।
विषयग्रहणमनन्यत्र भावार्थम् । जनपदैकशेषबहुत्वे मा भूत् । वर्तन्यः । वार्तनः ।
अपिग्रहणं किम् । यावता वृद्धात्पूर्वेणैव सिद्धम् ? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते ।।
कच्छाग्निवक्त्रगर्तोत्तरपदात् ।। 4-2-126 ।।
`देशे इत्येव । उत्तरपदशब्दः प्रत्येकमभिसम्बद्ध्यते । कच्छाद्युत्तरपदाद्देशवाचिनः प्रातिपदिकाच्च वृद्धादवृद्धाच्च वुञ् प्रत्ययो भवति शैषिकः । छाणोरपवादः । दारुकच्छकः । पैप्पलीकच्छकः । काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः । सैन्धुवक्त्रकः । बाहुगर्तकः । चाक्रगर्तकः ।।
धूमादिभ्यश्च ।। 4-2-127 ।।
धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिकः । अणादेरपवादः । धौमकः । खाण्डकः ।
पाथेयशब्दः पठ्यते, तस्य योपधात्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम् ।

तथा विदेहानर्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः । विदेहानां क्षत्त्रियाणां स्वं वैदेहकम् । आनर्तकम्
।
समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते - सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र न भवति - सामुद्रं जलमिति ।
धूम । खण्ड । शशादन । आर्जुनाद । दाण्डायनस्थली । माहकस्थली । घोषस्थली । माषस्थली । राजस्थली । राजगृह । सत्रासाह । भक्षास्थली । मद्रकूल । गर्तकूल । आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीय । वर्वर । वर्चगर्त । विदेह । आनर्त । माठर । पाथेय । घोष । शिष्य । मित्र । वल । आराज्ञी । धार्तराज्ञी । अवयात । तीर्थ । * कूलात्सौवीरेषु * (ग.सू.97)। * समुद्रान्नावि मनुष्ये *(ग.सू.98) । कुक्षि । अन्तरीप । द्वीप । अरुण । उज्जयिनी । दक्षिणापथ । साकेत ।
नगरात्कुत्सनप्रावीण्ययोः ।। 4-2-128 ।।
नगरशब्दात् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च गम्यमाने । प्रत्ययार्थविशेषणं चैतत् - कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति । कुत्सनम् = निन्दनम् । प्रावीण्यम् = नैपुण्यम् ।।
केनेदं मुषितः पन्था गात्रे पक्ष्मालिधूसरः ।
इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । चौरा हि नगरका भवन्ति ।
केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत् ।
इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । प्रवीणा हि नागरका भवन्ति ।
कुत्सनप्रावीण्ययोरिति किम् ? नागरा ब्राह्मणाः । कत्त्र्यादिषु तु संज्ञाशब्देन साहचर्यात्संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम् ।।
अरण्यान्मनुष्ये ।। 4-2-129 ।।
अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये । औपसङ्ख्यानिकस्य णस्यापवादः । आरण्यको मनुष्यः ।

- पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् * (म.भा.2.299)। आरण्यकः पन्थाः । आरण्यकोऽध्यायः । आरण्यको न्यायः । आरण्यको विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती ।
- वा गोमयेषु * । आरण्याः, आरण्यका गोमयाः ।

एतेष्विति किम् ? आरण्याः पशवः ।।
विभाषा कुरुयुगन्धराभ्याम् ।। 4-2-130 ।।
कुरु, युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः । कौरवकः, कौरवः । यौगन्धरकः, यौगन्धरः (म.भा.2.300)। जनपदशब्दावेतौ, ताभ्याम् `अवृद्धादपि इति नित्ये वुञि प्राप्ते विकल्प उच्यते ।
कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति । सैषा युगन्धरार्था विभाषा । मनुष्यतस्थयोः(4-2-134/1358)तु कुरुशब्दान्नित्य एव वुञ्प्रत्ययो भवति । कौरवको मनुष्यः, कौरवकमस्य हसितमिति(म.भा.2.300) ।।
मद्रवृज्योः कन् ।। 4-2-131 ।।
मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । मद्रेषु जातः मद्रकः । वृजिकः ।।
कोपधादण् ।। 4-2-132 ।।
`देशे इत्येव । ककारोपधात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । अन्यत्र जनपदं मुक्त्वा पूर्वेणैव कोपधादणि सिद्धम् । ऋषिकेषु जातः आर्षिकः । माहिषिकः ।
अण्ग्रहणमुवर्णान्तादपि स्यात् - इक्ष्वाकुषु जातः ऐक्ष्वाकः ।।
कच्छादिभ्यश्च ।। 4-2-133 ।।
`देशे इत्येव । `कच्छ इत्येवमादिभ्यो देशवाचिभ्योऽण्प्रत्ययो भवति शैषिकः । वुञादेरपवादः । काच्छः । सैन्धवः । वार्णवः ।
कच्छशब्दो न बहुवचनविषयः, तस्य मनुष्यतत्स्थयोर्वुञर्थः पाठः । विजापकशब्दः पठ्यते,तस्य कोपधत्वादेवाणि
सिद्धे इह ग्रहणमुत्तरार्थम् ।
कच्छ । सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । कुरु । रङ्कु । अणु । खण्ड । द्वीप । अनूप । अजवाह । विजापक । कुलून । कच्छादिः ।।
मनुष्यतत्स्थयोर्वुञ् ।। 4-2-134 ।।
`कच्छादिभ्यः इत्येव । मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति । अणोऽपवादः । काच्छको मनुष्यः । काच्छकमस्य हसितं, जल्पितम् । काच्छिका चूडा । सैन्धवको मनुष्यः । सैन्धवकमस्य हसितं, जल्पितम् । सैन्धविका चूडा ।
मनुष्यतत्स्थयोरिति किम् ? काच्छो गौः । सैन्धवो वार्णवः ।।
अपदातौ साल्वात् ।। 4-2-135 ।।
साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोर्वुञि सिद्धे नियमार्थं वचनम् । अपदातावेव मनुष्ये मनुष्यस्थे च साल्वशब्दाद् वुञ्प्रत्ययो भवति । साल्वको मनुष्यः । साल्वकमस्य हसितं, जल्पितम् ।
अपदाताविति किम् ? साल्वः पदातिर्व्रजति ।।
गोयवाग्वोश्च ।। 4-2-136 ।।
गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ्प्रत्ययो भवति शैषिकः । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ।।
गर्तोत्तरपदाच्छः ।। 4-2-137 ।।
`देशे इत्येव । गर्तोत्तरपदाद्देशवाचिनः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते ।

वृकगर्त्तीयम् । शृगालगर्त्तीयम् । श्वाविद्गर्त्तीयम् ।
उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् - बाहुगर्तम् ।।
गहादिभ्यश्च ।। 4-2-138 ।।
`गह इत्येवमादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति शैषिकः । अणादेरपवादः । गहीयः । अन्तःस्थीयः । देशाधिकारेऽपि सम्भवापेक्षं विशेषणम्, न सर्वेषाम् । `मध्यमध्यमं चाण् चरणे इति पठ्यते, तस्यायमर्थः मध्यशब्दः प्रत्ययसन्नियोगेन मध्यममापद्यते । मध्यमीयाः । चरणे तु प्रत्ययार्थेऽण् भवति - माध्यमा इति । तदेतद्विशेष एव स्मर्यते पृथिवीमध्यस्य मध्यमभावः । चरणसम्बन्धेन निवासलक्षणोऽणिति च (म.भा.2.301)।

- मुखपार्श्वतसोर्लोपश्च * । मुखतीयम् । पार्श्वतीयम् ।
- कुग्जनस्य परस्य च * । जनकीयम् । परकीयम् ।
- देवस्य चेति वक्तव्यम् * । देवकीयम् ।
- वेणुकादिभ्यश्छण् वक्तव्यः * । आकृतिगणोऽयम् । वैणुकीयम् ।

वैत्रकीयम् । औत्तरपदकीयम् । प्रास्थकीयम् । माध्यमकीयम् ।
गह । अन्तःस्थ । सम । विषम । * मध्यमध्यमं चाण्यरणे * (ग.सू.99)। उत्तम । अङ्ग । वङ्ग । मगध । पूर्वपक्ष । अपरपक्ष । अधमशाख । उत्तमशाख । समानशाख । एकग्राम । एकवृक्ष । एकपलाश । इष्वग्र । इष्वनी । अवस्यन्दी । कामप्रस्थ । खाडायनि । कावेरणि । शैशिरि । शौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैदजि । भौजि । आढ्यश्वि । आनृशंसि । सौवि । पारकि । अग्निशर्मन् । देवशर्मन् । श्रौति । आरटकि । वाल्मीकि । क्षेमवृद्धिन् । उत्तर । अन्तर । * मुखपार्श्वतसोर्लोपः * (ग.सू.100)। * जनपरयोः कुक्च *(ग.सू.101) । * दैवस्य च * (ग.सू.102)। * वेणुकादिभ्यश्छण् * (ग.सू.103) । गहादिः ।।
प्राचां कटादेः ।। 4-2-139 ।।
`देशे इत्येव । तद्विशेषणं प्राग्ग्रहणम् । प्राग्देशवाचिनः कटादेः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ।।
राज्ञः क च ।। 4-2-140 ।।
असम्भवाद्देशाधिकारः, न विशेषणम् । राज्ञः ककारश्चान्तादेशो भवति छश्च प्रत्ययः । राजकीयम् ।
आदेशमात्रमिह विधेयम्, प्रत्ययस्तु वृद्धाच्छः(4-2-114/1337) इत्येव सिद्धः ।।
वृद्धादकेकान्तखोपधात् ।। 4-2-141 ।।
`देशे इत्येव । वृद्धाद्देशवाचिनोऽक, इक इत्येवमन्तात् खकारोपधाच्च प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । कोपधलक्षणस्याणोऽपवादः । वाहीकग्रामलक्षणस्य च प्रत्ययस्य, `रोपधेतोः प्राचाम् इति च । अकान्तात्तावत् - आरीहणकीयम् । द्रौघणकीयम् । इकान्तात् - आश्वपथिकीयम् । शाल्मलिकीयम् । खोपधात् - कौटिशिखीयम् । आयोमुखीयम् ।।

- अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् * । सौसुकीयम् । मौसुकीयम् । ऐन्द्रवेणुकीयम् ।।

कन्थापलदनगरग्रामह्रदोत्तरपदात् ।। 4-2-142 ।।
`देशे इत्येव, `वृद्धात् इति च । कन्थाद्युत्तरपदाद्देशवाचिनो वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । वाहीकग्रामादिलक्षणस्य प्रत्ययस्यापवादः । दाक्षिकन्थीयम् । माहिकिकन्थीयम् । दाक्षिपलदीयम् । माहिकिपलदीयम् । दाक्षिनगरीयम् । माहिकिनगरीयम् । दाक्षिग्रामीयम् । माहिकिग्रामीयम् । दाक्षिह्रदीयम् । माहिकिह्रदीयम् ।।
पर्वताच्च ।। 4-2-143 ।।
पर्वतशब्दाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । पर्वतीयो राजा । पर्वतीयः पुरुषः ।।
विभाषाऽमनुष्ये ।। 4-2-144 ।।
पर्वतशब्दाच्छः प्रत्ययो भवति वा, अमनुष्ये वाच्ये । पूर्वेण नित्ये प्राप्ते विकल्प उच्यते - पर्वतीयानि फलानि, पार्वतानि फलानि । पर्वतीयमुदकम्, पार्वतमुदकम् । अमनुष्ये इति किम् ? पर्वतीयो मनुष्यः ।।
कृकणपर्णाद्भारद्वाजे ।। 4-2-145 ।।
`देशे इत्येव । भारद्वाजशब्दोऽपि देशवचन एव, न गोत्रशब्दः । प्रकृतिविशेषणं चैतन्न प्रत्ययार्थः । कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः । कृकणीयम् । पर्णीयम् ।
भारद्वाज इति किम् ? कार्कणम् । पार्णम् ।।
इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य द्वितीयः पादः

# काशिका/चतुर्थोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pbl
< काशिका | चतुर्थोऽध्यायः
अथ चतुर्थाध्याये तृतीयः पादः
युष्मदस्मदोरन्यतरस्यां खञ्च ।। 4-3-1 ।।
देशाधिकारो निवृत्तः । युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः । चकाराच्छश्च । अन्यतरस्याङ्ग्रहणाद् यथाप्राप्तम् । तदेते त्रयः प्रत्यया भवन्ति, तत्र वैषम्याद्यथासङ्ख्यं न भवति । त्यदादित्वाद् वृद्धसंज्ञकयोर्युष्मदस्मदोश्छे (4-2-114/1337)प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते - यौष्माकीणः, आस्माकीनः । युष्मदीयः, अस्मदीयः । यौष्माकः, आस्माकः ।।
तस्मिन्नणि च युष्माकास्माकौ ।। 4-3-2 ।।
तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते, न चकारानुकृष्टश्छः । तस्मिन्खञि अणि च युष्मदस्मदोर्यथासङ्ख्यं युष्माक, अस्माक - इत्येतावादेशौ भवतः ।
निमित्तयोरादेशौ प्रति यथासङ्ख्यं कस्मान्न भवति ? योगविभागः करिष्यते - `तस्मिन्, खञि युष्मदस्मदोर्युष्माकास्माकौ भवतः । ततः `अणि च इति । यौष्माकीणः, आस्माकीनः । यौष्माकः, आस्माकः ।
तस्मिन्नणि चेति किम् ? युष्मदीयः । अस्मदीयः ।।
तवकममकावेकवचने ।। 4-3-3 ।।
एकवचनपरयोर्युष्मदस्मदोस्तवक, ममक - इत्येतावादेशौ भवतो यथासङ्ख्यं तस्मिन्खञि अणि च परतः । निमित्तयोस्तु यथासङ्ख्यं पूर्ववदेव न भवति ।
ननु च न लुमातङ्गस्य(1-1-63/263) इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता युष्मदस्मदोर्न सम्भवति ? वचनात्प्रत्ययलक्षणं भविष्यति । अथ वा - नैवेदं प्रत्ययलक्षणम्, किं तर्हि ? अन्वर्थग्रहणम् । एकवचने युष्मदस्मदी एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः । तावकीनः, मामकीनः । तावकः, मामकः ।
तस्मिन्नणि चेत्येव - त्वदीयः, मदीयः ।।
आर्धाद्यत् ।। 4-3-4 ।।
अर्द्धशब्दाद् यत् प्रत्ययो भवति शैषिकः । अणोऽपवादः । अर्द्ध्यम् ।

- सपूर्वपदाट्ठञ्वक्तव्यः * (म.भा.2.303)। बालेयार्द्धिकम् । गौतमार्द्धिकम् ।।

परावराधमोत्तमपूर्वाच्च ।। 4-3-5 ।।
पर, अवर, अधम, उत्तम इत्येवम्पूर्वाच्चार्धाद्यत् प्रत्ययो भवति शैषिकः । परार्द्ध्यम् । अवरार्द्ध्यम् । अधमार्द्ध्यम् । उत्तमार्द्ध्यम् ।
पूर्वग्रहणं किम्, `परावराधमोत्तमेभ्यः इत्येवोच्यते, अर्धादिति वर्त्तते, तस्य तत्पूर्वता विज्ञास्यते ? परावरशब्दावदिग्ग्रहणावपि स्तः - परं सुखम्, अवरं सुखमिति । तत्र कृतार्थत्वाद् दिक्छब्दपक्षे परेण ठञ्यतौ स्याताम् । अस्मात्पूर्वग्रहणाद्यत्प्रत्ययो भवति - परार्द्ध्यम्, अवरार्द्ध्यमिति ।
दिक्पूर्वपदाट्ठञ्च ।। 4-3-6 ।।
दिक्पूर्वपदादर्धान्तात्प्रादिपदिकात् ठञ् प्रत्ययो भवति, चकाराद्यच्च शैषिकः । अणोऽपवादः । पूर्वार्द्ध्यम्, पौर्वार्द्धिकम् । दक्षिणार्द्ध्यम्, दाक्षिणार्द्धिकम् ।
पदग्रहणं स्वरूपविधिनिवारणार्थम् ।।
ग्रामजनपदैकदेशादञ्ठञौ ।। 4-3-7 ।।
`दिक्पूर्वपदात् इत्येव । ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदादर्द्धान्तादञ्ठञौ प्रत्ययौ भवतः, शैषिकौ यतोऽपवादौ । इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः । दाक्षिणार्धाः, दाक्षिणार्धिकाः ।।
मध्यान्मः ।। 4-3-8 ।।
मध्यशब्दान्मः प्रत्ययो भवति शैषिकः । अणोऽपवादः । मध्यमः ।।

- आदेश्चेति वक्तव्यम् * । आदिमः ।
- अवोऽधसोर्लोपश्च * । अवमम् । अधमम् ।।

अ साम्प्रतिके ।। 4-3-9 ।।
अकारः प्रत्ययो भवति मध्यशब्दात्साम्प्रतिके जातादौ प्रत्ययार्थे । मस्यापवादः । साम्प्रतिकम् = न्याय्यम्, युक्तम्, उचितम्, सममुच्यते । नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः । मध्या स्त्री ।।
द्वीपादनुसमुद्रं यञ् ।। 4-3-10 ।।
समुद्रसमीपे यो द्वीपस्तस्माद् यञ् प्रत्ययो भवति शैषिकः । कच्छादिपाठाद् अणो(4-2-133>य1357) मनुष्यवुञः(4-2-134/1358) चापवादः । द्वैप्यम् । द्वैप्यं भवन्तोऽनुचरन्ति चक्रम् ।

अनुसमुद्रमिति किम्? द्वैपकम्। द्वैपमन्यत्।।
कालाट्ठञ्।। 4-3-11।।
कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। वृद्धात् तु छं परत्वाद्बाधते। मासिकः। आर्द्धमासिकः। सांवत्सरिकः।
यथाकथञ्चिद् गुणवृत्त्यापि काले वर्त्तमानात्प्रत्यय इष्यते। कादम्बपुष्पिकम्। व्रैहिपलालिकम्। तत्र जातः(4-3-25/1393) इति प्रागतः कालाधिकारः।।
श्राद्धे शरदः।। 4-3-12।।
शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः। ऋत्वणः(4-3-16/1387) पवादः। `श्राद्धे इति च कर्म गृह्यते, न श्रद्धावान्पुरुषः; अनभिधानात्। शारदिकं श्राद्धम्। शारदमन्यत्।।
विभाषा रोगातपयोः।। 4-3-13।।
`शरदः इत्येव। रोगे, आतपे चाभिधेये शरच्छब्दाट्ठञ् प्रत्ययो वा भवति शैषिकः। ऋत्वणोऽपवादः। शारदिको रोगः। शारदिक आतपः। शारदो रोगः। शारद आतपः।
रोगातपयोरिति किम्? शारदं दधि।।
निशाप्रदोषाभ्यां च।। 4-3-14।।
निशाप्रदोषशब्दाभ्यां विभाषा ठञ् प्रत्ययो भवति शैषिकः। कालाट्ठञ्(4-3-11/1381) इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशम्, नैशिकम्। प्रादोषम्, प्रादोषिकम्।।
श्वसस्तुट् च।। 4-3-15।।
`विभाषा इत्येव। श्वःशब्दाद्विभाषा ठञ् प्रत्ययो भवति, तस्य च तुडागमो भवति। त्यप्प्रत्ययोऽप्यतो विहितः ऐषमोह्यः श्वसोऽन्यतरस्याम्(4-2-105/1326) इति; एताभ्यां मुक्ते ट्युट्युलावपि भवतः - शौवस्तिकः, श्वस्त्यः, श्वस्तनः।।
सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्।। 4-3-16।।
`कालात् इत्येव सन्धिवेलादिभ्यः, ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण्प्रत्ययो भवति शैषिकः। ठञोऽपवादः। अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम्। सन्धिवेलादिभ्यस्तावत् - सान्धिवेलम्। सान्ध्यम्। ऋतुभ्यः - ग्रैष्मम्। शैशिरम्। नक्षत्रेभ्यः - तैषम्। पौषम्।
सन्धिवेला। सन्ध्या। अमावास्या। त्रयोदशी। चतुर्दशी। पञ्चदशी। पौर्णमासी। प्रतिपत्।

- संवत्सरात्फलपर्वणोः * (ग.सू.104)। सांवत्सरं फलम्। सांवत्सरं पर्व।।

प्रावृष एण्यः।। 4-3-17।।
प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। प्रावृषेण्यो बलाहकः।।
वर्षाभ्यष्ठक्।। 4-3-18।।
वर्षाशब्दाट्ठक् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। वार्षिकं वासः। वार्षिकमनुलेपनम्।।
छन्दसि ठञ्।। 4-3-19।।
</>
वर्षाशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। स्वरे भेदः। `नभश्च नभस्यश्च वार्षिकावृतू(तै.सं.<4-4-11>.1)।।
वसन्ताच्च।। 4-3-20।।
</4-4-11>
`छन्दसि इत्येव। वसन्तशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। `मधुश्च माधवश्च वासन्तिकावृतू(तै.सं.<4-4-11>.1)।।
हेमन्ताच्च।। 4-3-21।।
</4-4-11>
`छन्दसि इत्येव। हेमन्तशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। `सहश्च सहस्यश्च हैमन्तिकावृतू(तै.सं.<4-4-11>.1)।
योगविभाग उत्तरार्थः।।
सर्वत्राण् च तलोपश्च।। 4-3-22।।
हेमन्तशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन चास्य तकारलोपः। हैमनं वासः। हैमनमुपलेपनम्।
सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। छन्दसि भाषायां च सर्वत्रैतद् भवति।
ननु च छन्दसीति नानुवर्तिष्यते? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्धार्थम्। हैमन्तकमिति हि भाषायामपि ठञं स्मरन्ति।
</4-4-11>
अत `अण्च इति चकार किमर्थः? अण्, यथाप्राप्तं च ऋत्वणिति। कः पुनरनयोरणोर्विशेषः? ऋत्वणि हि तकारलोपो नास्ति - हैमन्ती पङ्क्तिः(म.भा.2.304) इति, तदेवं त्रीणि रूपाणि भवन्ति - `हैमन्तिकम्(तै.सं.<4-4-11>.1), `हैमन्तम्(पै.<17-19-11>), `हैमनम्(अ.वे.<15-

4-14>) इति ।।
सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।। 4-3-23 ।।
`कालाद् इत्येव । सायम्, चिरम्, प्राह्णे, प्रगे इत्येवमादिभ्योऽव्ययेभ्यश्च ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोस्तुडागमो भवति । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम्। अव्ययेभ्यः - दोषातनम् । दिवातनम् । सायमिति मकारान्तं पदमव्ययम्, ततोऽव्ययत्वादेव सिद्धः प्रत्ययः । यस्तु स्यतेरन्तकर्मणो घञि सायशब्दः, तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते । दिवसावसानम् = सायः । चिरशब्दस्यापि मकारान्तत्वं निपात्यते । प्राह्णे, प्रगे इत्येकारान्तत्वम् ।

- चिरपरुत्परारिभ्यस्त्नो वक्तव्यः * (म.बा.2.304 )। चिरत्नम् । परुत्नम् । परारित्नम् ।
- प्रगस्य छन्दसि गलोपश्च * (म.भा.2.304)। प्रत्नम् ।
- अग्रपश्चाड्डिमच् * (म.भा.2.304)। अग्रिमम् । पश्चिमम् ।
- अन्ताच्चेति वक्तव्यम् * (म.भा.2.304)। अन्तिमम् ।।

विभाषा पूर्वाह्णापराह्णाभ्याम् ।। 4-3-24 ।।
पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतस्तुट् च तयोरागमः । कालाट्ठञ्(4-3-11/1381) इति ठञि प्राप्ते वचनम्, पक्षे सोऽपि भवति । पूर्वाह्णेतनम् । अपराह्णेतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । घकालतनेषु कालनाम्नः(6-3-17/975) इति सप्तम्या अलुक् । यदा तु न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढोऽस्येति, तदा पूर्वाह्णतन इति भवितव्यम् ।।
तत्र जातः ।। 4-3-25 ।।
अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते । तत्रेति सप्तमीसमर्थात् `जातः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्ने जातः स्रौघ्नः । माथुरः (4-1-83/1073) । औत्सः । औदपानः (4-1-86/1078)। राष्ट्रियः । अवारपारीणः (4-2-93/1313)। शाकलिकः । माकलिकः (4-2-117/1341)। ग्राम्यः । ग्रामीणः (4-2-94/1314)। कात्त्रेयकः । औम्भेयकः
(4-2-95/1315)।।
प्रावृषष्ठप् ।। 4-3-26 ।।
प्रावृट्शब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति । एण्यस्य (4-3-17/1388)अपवादः । पकारः स्वरार्थः । प्रावृषि जातः प्रावृषिकः ।।
संज्ञायां शरदो वुञ् ।। 4-3-27 ।।
शरच्छब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति, ऋत्वणः (4-3-16/1387)अपवादः समुदायेन चेत्संज्ञा गम्यते । शारदका दर्भाः । शारदका मुद्गाः । दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा ।
संज्ञायामिति किम् ? शारदं सस्यम् ।
संज्ञाधिकारं केचित् कृतलब्धक्रीतकुशलाः(4-3-38/1413) इति यावदनुवर्त्तयन्ति ।।
पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् ।। 4-3-28 ।।
पूर्वाह्णादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति तत्र जातः(4-3-25/1394) इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम् । पूर्वाह्णकः । अपराह्णकः । विभाषा पूर्वाह्णापराह्णाभ्याम्(4-3-24/1392) इत्यस्यापवादः । आर्द्रकः । मूलकः । नक्षत्राणः(4-2-3/1204)अपवादः । प्रदोषकः । निशाप्रदोषाभ्यां च(4-3-14/1384) इत्यस्यापवादः । अवस्करकः । औत्सर्गिकस्याणः(4-1-83/1073) अपवादः । असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति ।।
पथः पन्थ च ।। 4-3-29 ।।
पथिशब्दाद्वुन् प्रत्ययो भवति `तत्र जातः इत्येतस्मिन्विषये, अणोऽपवादः । प्रत्ययसन्नियोगेन च पथः `पन्थ इत्ययमादेशो भवति । पथि जातः पन्थकः ।।
अमावास्याया वा ।। 4-3-30 ।।
अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा `तत्र जातः इत्येतस्मिन्विषये । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्(4-3-16/1387) इत्यादिषु पाठादणोऽपवादः । अमावास्यकः, आमावास्यः ।
एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति । अमावस्यकः । आमावस्यः ।
अ च ।। 4-3-31 ।।
अमावास्याशब्दादकारः प्रत्ययो भवति तत्र जातः(4-3-25/1393) इत्येतस्मिन् विषये । पूर्वेण वुन्नणोः प्राप्तयोरयं तृतीयः प्रत्ययो विधीयते । अमावास्यः । अमावास्यकः । आमावास्यः । अमावस्यः । अमावस्यकः । आमावस्यः ।।
सिन्ध्वपकाराभ्यां कन् ।। 4-3-32 ।।
सिन्धुशब्दादपकरशब्दाच्च कन् प्रत्ययो भवति तत्र जातः(4-3-25/1393) इत्येतस्मिन्विषये । सिन्धुशब्दः कच्छादिः, ततोऽणि मनुष्यवुञि च(4-2-133>,134/1357,1358) प्राप्ते विधानम्, अपकरशब्दादप्यौत्सर्गिकेऽणि । सिन्धुकः । अपकरकः ।।
अणञौ च ।। 4-3-33 ।।
सिन्ध्वपकरशब्दाभ्यां यथासङ्ख्यमणञौ प्रत्ययौ भवतः तत्र जातः(4-3-25/1393) इत्येतस्मिन्विषये । पूर्वेण कनि प्राप्ते वचनम् । सैन्धवः ।

श्वगणशब्दाट्ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, `चरति इत्येतस्मिन्नर्थे । ठकोऽपवादः । श्वगणेन चरति श्वागणिकः, श्वागणिकी । ठन्--श्वगणिकः, श्वगणिका । श्वादेरिञि(7-3-8/1560) इत्यत्र वक्ष्यति---`इकारादिग्रहणं च कर्तव्यं श्वागणिकाद्यर्थम्(7-3-8/1560) इति । तेन ठञि द्वारादिकार्यं न भवति ।।

वेतनादिभ्यो जीवति ।। 4-4-12 ।।

`तेन इति तृतीयासमर्थेभ्यो वेतनादिभ्यः शब्देभ्यः `जीवति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः कर्मकरः । धनुर्दण्डग्रहणमत्र सङ्घातविगृहीतार्थम् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ।

वेतन । वाह । अर्धवाह । धनुर्दण्ड । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रक् । पाद । उपस्थान । वेतनादिः ।।

वस्नक्रयविक्रयाट्ठन् ।। 4-4-13 ।।

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति `जीवति इत्येतस्मिन्विषये । ठकोऽपवादः । वस्नेन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्---क्रयविक्रयिकः, क्रयिकः, विक्रयिकः ।।

आयुधाच्छ च ।। 4-4-14 ।।

आयुधशब्दाच्छप्रत्ययो भवति, चकाराट्ठँश्च `जीवति इत्येतस्मिन्विषये । आयुधेन जीवति आयुधीयः । आयुधिकः ।।

हरत्युत्सङ्गादिभ्यः ।। 4-4-15 ।।

`तेन इत्येव । उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यः `हरति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । हरतिर्देशान्तरप्रापणे वर्तते । उत्सङ्गेन हरति औत्सङ्गिकः । औडुपिकः ।

उत्सङ्ग । उडुप । उत्पत । पिटक । उत्सङ्गादिः ।।

भस्त्रादिभ्यः ष्ठन् ।। 4-4-16 ।।

`भस्त्रा इत्येवमादिभ्यस्तृतीयासमर्थेभ्यः `हरति इत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति । भस्त्रया हरति भस्त्रिकः, भस्त्रिकी । भरटिकः, भरटिकी ।

भस्त्रा । भरट । भरण । शीर्षभार । शीर्षेभार । अम्सभार । अंसेभार । भस्त्रादिः ।।

विभाषा विवधवीवधात् ।। 4-4-17 ।।

`हरति इत्येव । विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति । तेन मुक्ते प्रकृतष्ठग्भवति । विवधेन हरति विवधिकः, विवधिकी । वीवधिकः, वीवधिकी । ठक् खल्वपि--वैवधिकः, वैवधिकी ।

विवधवीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्तते ।।

अण् कुटिलिकायाः ।। 4-4-18 ।।

`हरति इत्येव । कुटिलिकाशब्दात्तृतीयासमर्थादण् प्रत्ययो भवति `हरति इत्येतस्मिन्नर्थे । कुटिलिकया हरति मृगो व्याधं कौटिलिको मृगः । कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः ।

कुटिलिका=वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते ।।

निर्वृत्तेऽक्षद्यूतादिभ्यः ।। 4-4-19 ।।

`तेन इत्येव । अक्षद्यूतादिभ्यस्तृतीयासमर्थेभ्यः `निर्वृत्ते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तम्, आक्षद्यूतिकं वैरम् । जानुप्रहृतिकम् ।

अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । अक्षद्यूतादिः ।।

क्त्रेर्मम्नित्यम् ।। 4-4-20 ।।

`निर्वृत्ते इत्येव, ड्वितः क्त्रिः(3-3-88/3266) इत्यय त्रिशब्दो गृह्यते । त्र्यन्तान्नित्यं मप् प्रत्ययो भवति `तेन निर्वृत्ते इत्येतस्मिन्नर्थे । `डुपचष्पाके(धा.पा.997)--पक्त्रिमम् । `डुवप्(धा.पा.1003)--उप्त्रिमम् । `डुकृञ्(धा.पा.1473)--कृत्रिमम् ।

नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम् । तेन त्र्यन्तं नित्यं मप्प्रत्ययान्त--मेव भवति, विषयान्तरे न प्रयोक्तव्यम्(म.भा.2.330)इति ।।

- भावप्रत्ययान्तादिमब्वक्तव्यः * (म.भा.2.330)। पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् । सेकिमम् । कुट्टिमम् ।।

अपमित्यायाचिताभ्यां कक्कनौ ।। 4-4-21 ।।

`निर्वृत्ते इत्येव । अपमित्ययाचितशब्दाभ्यां यथासङ्ख्यं कक्, कन्--इत्येतौ प्रत्ययौ भवतः `निर्वृत्ते इत्येतस्मिन्नर्थे । आपमित्यकम् । याचितकम् ।।

संसृष्टे ।। 4-4-22 ।।

`तेन इत्येव । तृतीयासमर्थात् `संसृष्टे इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । संसृष्टम्=एकीभूतम्, अभिन्नमित्यर्थः । दध्ना संसृष्टं दाधिकम् । मारिचिकम् । शार्ङ्गवेरिकम् । पैप्पलिकम् ।।

चूर्णादिनिः ।। 4-4-23 ।।

चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्टे । ठकोऽपवादः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः । चूर्णिनो धानाः ।।

लवणाल्लुक् ।। 4-4-24 ।।

संसृष्टे(4-3-22/1572) इत्यनेनोत्पन्नस्य ठको लवणशब्दाल्लुग्भवति । लवणः सूपः । लवणं शाकम् । लवणा यवागूः ।

द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची ।।

मुद्गादण् ।। 4-4-25 ।।
मुद्गशब्दादण् प्रत्ययो भवति `संसृष्टे इत्येतस्मिन्विषये । ठकोऽपवादः । मौद्ग ओदनः । मौद्गी यवागूः ।।
व्यञ्जनैरुपसिक्ते ।। 4-4-26 ।।
`तेन इत्येव । व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यस्तृतीयासमर्थेभ्यः `उपसिक्ते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दध्ना उपसिक्तं दाधिकम् । सौपिकम् । खारिकम् ।
व्यञ्जनैरिति किम् ? उदकेनोपसिक्त ओदनः ।।
ओजः सहोम्भसा वर्त्तते ।। 4-4-27 ।।
औजस्, सहस्, अम्भस् इत्येतेभ्यस्तृतीयासमर्थेभ्यः `वर्त्तते इत्यर्थे ठक्प्रत्ययो भवति । ओजसा वर्त्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ।।
तत्प्रत्यनुपूर्वमीपलोमकूलम् ।। 4-4-28 ।।
`तत् इति द्वितीया समर्थविभक्तिः । `प्रति `अनु--इत्येवम्पूर्वेभ्य ईप, लोम, कूल-शब्देभ्यो द्वितीयासमर्थेभ्यः `वर्त्तते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।
ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः ? क्रियाविशेषणकर्मकाणामपि कर्म भवति ।
प्रतीपं वर्त्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः ।।
परिमुखं च ।। 4-4-29 ।।
परिमुखशब्दाद् द्वितीयासमर्थाद् `वर्त्तते इत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । परिमुखं वर्त्तते पारिमुखिकः ।
चकारोऽनुक्तसमुच्चयार्थः । पारिपार्श्विकः ।
प्रयच्छति गर्ह्यम् ।। 4-4-30 ।।
`तत् इति द्वितीयासमर्थात् `प्रयच्छति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, यद् द्वितीयासमर्थं गर्ह्यं चेत्तद्भवति । द्विगुणार्थम्=द्विगुणम्, तादर्थ्यात्ताच्छब्द्यम् । द्विगुणं प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।

- वृद्धेर्वृधुषिभावो वक्तव्यः * (म.भा.2.331)। वार्धुषिकः । प्रकृत्यन्तरं वा वृद्धिपर्यायो वृधुषिशब्दः ।

गर्ह्यमिति किम् ? द्विगुणं प्रयच्छत्यधमर्णः ।।
कुसीददशैकादशात् ष्ठन्ष्ठचौ ।। 4-4-31 ।।
`प्रयच्छति गर्ह्यम् इत्येव । कुसीदम्=वृद्धिः, तदर्थद्रव्यं कुसीदम् । एकादशार्था दश दशैकादशशब्देनोच्यन्ते । कुसीद, दशैकादशशब्दाभ्यां यथासङ्ख्यं ष्ठन्, ष्ठज्--इत्येतौ प्रत्ययौ भवतः `प्रयच्छति गर्ह्यम् इत्येतस्मिन्विषये । ठकोऽपवादौ । कुसीदं प्रयच्छति कुसीदिकः, कुसीदिकी । दशैकादशिकः, दशैकादशिकी ।।
उञ्छति ।। 4-4-32 ।।
`तत् इति द्वितीयासमर्थात् `उञ्छति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः । भूमौ पतितस्यैकैकस्य कणस्योपादानम्=उञ्छः । कणानुञ्छति काणिकः ।।
रक्षति ।। 4-4-33 ।।
`तत् इति द्वितीयासमर्थाद् `रक्षति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । समाजं रक्षति सामाजिकः । सान्निवेशिकः ।।
शब्ददर्दुरं करोति ।। 4-4-34 ।।
`तत् इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां `करोति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । दार्दुरिकः कुम्भकारः ।।
पक्षिमत्स्यमृगान्हन्ति ।। 4-4-35 ।।
`तत् इत्येव । पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो `हन्ति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । स्वरूपस्य पर्यायाणां च तद्विशेषाणां च ग्रहणमिहेष्यते । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । तैत्तिरिकः । मत्स्य--मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः । मृग--मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः ।।
परिपन्थं च तिष्ठति ।। 4-4-36 ।।
परिपन्थशब्दात्तदिति द्वितीयासमर्थात् `तिष्ठति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । परिपन्थं तिष्ठति पारिपन्थिकश्चौरः ।
चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति । परिपन्थं हन्ति पारिपन्थिकः ।
समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्, परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति, स विषयान्तरेऽपि प्रयोक्तव्यः ।।
माथोत्तरपदपदव्यनुपदं धावति ।। 4-4-37 ।।
माथशब्दोत्तरपदात्प्रातिपदिकात् पदवी, अनुपद---इत्येताभ्यां च `धावति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दण्डमाथं धावति दाण्डमाथिकः । शौल्कमाथिकः । पादविकः । आनुपदिकः । माथशब्दः पथिन्पर्यायः ।।
आक्रन्दाट्ठञ्च ।। 4-4-38 ।।
आक्रन्दन्त्येतस्मिन्नित्याक्रन्दः=देशः, अथ वा---आक्रन्द्यत इत्याक्रन्दः--आर्त्तायनमुच्यते; विशेषाभावाद् द्वयोरपि ग्रहणम् ।

आक्रन्दशब्दात्तदिति द्वितीयासमर्थात् `धावति इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति, चकाराट्ठक्च । स्वरे विशेषः । आक्रन्दं धावति आक्रन्दिकः, आक्रन्दिकी ।।
पदोत्तरपदं गृह्णाति ।। 4-4-39 ।।
पदशब्द उत्तरपदं यस्य तस्मात्पदोत्तरपदशब्दात् `तत् इति द्वितीयासमर्थाद् `गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ।
पदान्तादिति नोक्तम् , बह्वच्पूर्वान्मा भूदिति ।।
प्रतिकण्ठार्थललामं च ।। 4-4-40 ।।
प्रतिकण्ठार्थललामशब्देभ्यस्तदिति द्वितीयासमर्थेभ्यः `गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।।
धर्मं चरति ।। 4-4-41 ।।
धर्मशब्दात्तदिति द्वितीयासमर्थात् `चरति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिरासेवायाम्, नानुष्ठानमात्रे । धर्मं चरति धार्मिकः ।

- अधर्माच्च वक्तव्यम् * (म.भा.2.331)। आधर्मिकः ।।

प्रतिपथमेति ठँश्च ।। 4-4-42 ।।
प्रतिपथशब्दाद् द्वितीयासमर्थाद् `एति इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट्ठक् च । प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः ।।
समवायान् समवैति ।। 4-4-43 ।।
समवायवाचिभ्यः शब्देभ्यः `तत् इति द्वितीयासमर्थेभ्यः `समवैति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।
समवायः समूह उच्यते, न सम्प्रधारणा । `समवायान् इति बहुवचनं स्वरूपविधिनिरासार्थम् । समवैति, आगत्य तदेकदेशीभवतीत्यर्थः ।
समवायान्समवैति सामवायिकः । सामाजिकः । सामूहिकः । सान्निवेशिकः ।।
परिषदो ण्यः ।। 4-4-44 ।।
परिषदो ण्यः प्रत्ययो भवति `समवायान् समवैति इत्येतस्मिन् विषये । ठकोऽपवादः । परिषदं समवैति पारिषद्यः ।।
सेनाया वा ।। 4-4-45 ।।
सेनाशब्दाद् वा ण्यः प्रत्ययो भवति `समवायान्समवैति इत्येतस्मिन्नर्थे । ठकोऽपवादः । पक्षे सोऽपि भवति । सेनां समवैति सैन्यः, सैनिकः ।।
संज्ञायां ललाटकुक्कुट्यौ पश्यति ।। 4-4-46 ।।
ललाट-कुक्कुटीशब्दाभ्यां तदिति द्वितीयासमर्थाभ्याम् `पश्यति इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, संज्ञायां विषये । संज्ञाग्रहणमभिधेयनियमार्थम्, न तु रूढ्यर्थम् । ललाटं पश्यति ललाटिकः सेवकः । कौक्कुटिको भिक्षुः ।
सर्वावयवेभ्यो ललाटं दूरे दृश्यते, तदनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषः कार्येष्वनुपस्थायित्वं लक्ष्यते । लालाटिकः सेवकः । स्वामिनः कार्येषु नोपतिष्ठत इत्यर्थः ।
कुक्कुटीशब्देनापि कुक्कुटीपातो लक्ष्यते । देशस्याल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्चति स उच्यते कौक्कुटिक इति ।।
तस्य धर्म्यम् ।। 4-4-47 ।।
`तस्य इति षष्ठीसमर्थाद् `धर्म्यम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । धर्म्यं न्याय्यम् । आचारयुक्तमित्यर्थः । शुल्कशालाया धर्म्यं शौल्कशालिकम् । आकरिकम् । आपणिकम् । गौल्मिकम् ।।
अण् महिष्यादिभ्यः ।। 4-4-48 ।।
`महीषी इत्येवमादिभ्योऽण् प्रत्ययो भवति `तस्य धर्म्यम् इत्येतस्मिन् विषये । ठकोऽपवादः । महिष्या धर्म्यं माहिषम् । प्राजावतम् ।
महिषी । प्रजावती । प्रलेपिका । विलेपिका । अनुलेपिका । पुरोहित । मणिपाली । अनुचारक । होतृ । यजमान । महिष्यादिः ।।
ऋतोऽञ् ।। 4-4-49 ।।
ऋकारान्तात्प्रातिपदिकादञ् प्रत्ययो भवति `तस्य धर्म्यम् इत्येतस्मिन्विषये । ठकोऽपवादः । पोतुर्धर्म्यं पौत्रम् । औद्गात्रम् ।

- नराच्चेति वक्तव्यम् * (म.भा.2.331)। नरस्य धर्म्या नारी ।
- विशसितृरिड्लोपश्च * (म.भा.2.331)। विशसितुर्धर्म्यं वैशस्त्रम् ।
- विभाजयितुर्णिलोपश्च * (म.भा.2.331)। विभाजयितुर्धर्म्यं वैभाजित्रम् ।।

अवक्रयः ।। 4-4-50 ।।
`तस्य इत्येव । षष्ठीसमर्थाद् `अवक्रयः इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अवक्रीणीतेऽनेनेत्यवक्रयः=पिण्डक उच्यते । शुल्कशालाया अवक्रयः शौल्कशालिकः । आकरिकः । आपणिकः । गौल्मिकः ।
नन्ववक्रयोऽपि धर्म्यमेव ? नैतदस्ति; लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति ।।
तदस्य पण्यम् ।। 4-4-51 ।।
`तत् इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत्तद्भवति । अपूपाः पण्यमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः ।

पण्यमिति विशेषणं तद्धितवृत्तावन्तर्भूतम्, अतः पण्यशब्दो न प्रयुज्यते ।।
लवणाट्ठञ् ।। 4-4-52 ।।
लवणशब्दाट्ठञ् प्रत्ययो भवति `तदस्य पण्यम् इत्येतस्मिन्विषये । ठकोऽपवादः । स्वरे विशेषः । लवणं पण्यमस्य लावणिकः ।।
किशरादिभ्यः ष्ठन् ।। 4-4-53 ।।
`किशर इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति `तदस्य पण्यम् इत्येतस्मिन्विषये । ठकोऽपवादः । किशरादयो गन्धविशेषवचनाः । किशराः पण्यमस्य किशरिकः । किशरिकी । नरदिकः । नरदिकी ।
किशर । नरद । नलद । सुमङ्गल । तगर । गुग्गुलु । उशीर । हरिद्रा । हरिद्रायणी । किशरादिः ।।
शलालुनोऽन्यतरस्याम् ।। 4-4-54 ।।
शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति `तदस्य पण्यम् इत्येतद्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । शलालुशब्दो गन्धविशेषवचनः । शलालुपण्यमस्य शलालुकः, शलालुकी । शालालुकः, शालालुकी ।।
शिल्पम् ।। 4-4-55 ।।
`तत् इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति । शिल्पम् = कौशलम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । वैणिकः (म.भा.2.332)।
मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति । शिल्पं तद्धितवृत्तावन्तर्भवति ।।
मड्डुकझर्झरादणन्यतरस्याम् ।। 4-4-56 ।।
`मड्डुक, `झर्झर शब्दाभ्यामन्यतरस्यामण् प्रत्ययो भवति, `तदस्य शिल्पम् इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ।।
प्रहरणम् ।। 4-4-57 ।।
`तदस्य इत्येव । `तत् इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति । असिः प्रहरणमस्य आसिकः । प्रासिकः । चाक्रिकः । धानुष्कः ।।
परश्वधाट्ठञ् च ।। 4-4-58 ।।
परश्वधशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक् । स्वरे विशेषः । परश्वधः प्रहरणमस्य पारश्वधिकः ।।
शक्तियष्ट्योरीकक् ।। 4-4-59 ।।
शक्ति, यष्टिशब्दाभ्यामीकक्प्रत्ययो भवति, `तदस्य प्रहरणम् इत्येतस्मिन्विषये । ठकोऽपवादः । शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः ।।
अस्तिनास्तिदिष्टं मतिः ।। 4-4-60 ।।
`तदस्य इत्येव । `तत् इति प्रथमासमर्थेभ्यः `अस्ति, `नास्ति, `दिष्ट--इत्येतेभ्यः शब्देभ्यः `अस्य इति
षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं मतिश्चेत्तद्भवति । अस्ति मतिरस्य आस्तिकः । नास्ति मतिरस्य नास्तिकः । दैष्टिकः ।
न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि ? परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः, तद्विपरीतो नास्तिकः । प्रमाणानुपातिनी यस्य गतिः स दैष्टिकः । तदेतदभिधानशक्तिस्वभावाल्लभ्यते ।
अस्ति, नास्ति-शब्दौ निपातौ, वचनसामर्थ्याद्वा आख्याताद्वाक्याच्च प्रत्ययः ।।
शीलम् ।। 4-4-61 ।।
`तदस्य इत्येव । `तत् इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शीलं चेत्तद्भवति । शीलम् = स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः ।
भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति ।।
छत्त्रादिभ्यो णः ।। 4-4-62 ।।
`छत्त्र इत्येवमादिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति, `तदस्य शीलम् इत्येतस्मिन्विषये । ठकोऽपवादः । छत्त्रं शीलमस्य छात्त्रः । छादनादावरणाच्छत्त्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तश्छत्त्रशीलः शिष्यश्छात्त्रः ।
स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वो गृह्यते - आस्था, संस्था, अवस्थेति ।
छत्त्र । बुभुक्षा । शिक्षा । पुरोह । स्था । चुरा । उपस्थान । ऋषि । कर्मन् । विश्वधा । तपस् । सत्य । अनृत । शिबिका । छत्त्रादिः ।।
कर्माध्ययने वृत्तम् ।। 4-4-63 ।।
`तदस्य इत्येव । `तत् इति प्रथमासमर्थात् `अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं कर्म चेत्तद्वृत्तमध्ययनविषयं भवति । एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः । द्वैयन्यिकः । त्रैयन्यिकः ।
एकमन्यदिति विगृह्य `तद्धितार्थ इति समासः, ततश्च ठक् प्रत्ययः । `अध्ययने कर्म वृत्तम् इत्येतत्सर्वं तद्धितवृत्तावन्तर्भवति । यस्याध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति । एवं द्वैयन्यिकः, त्रैयन्यिक इति ।।
बह्वच्पूर्वपदाट्ठच् ।। 4-4-64 ।।
बह्वच् पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति `तदस्य कर्माध्ययने वृत्तम् इत्येतस्मिन्नर्थे । ठकोऽपवादः । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । चतुर्दशान्यिक इति । चतुर्दशापपाठा अस्य जाता इत्यर्थः ।
उदात्ते कर्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ।।
हितं भक्षाः ।। 4-4-65 ।।

`तदस्य इत्येव । `तत् इति प्रथमासमर्थात् `अस्य इति ष्ष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः ।
ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं ष्ष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति ।
अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ।।
तदस्मै दीयते नियुक्तम् ।। 4-4-66 ।।
`तत् इति प्रथमासमर्थाद् `अस्मै इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं तच्चेद् दीयते नियुक्तम् । नियोगेनाव्यभिचारेण दीयत इत्यर्थः । अव्यभिचारः = नियोगः । अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः । आपूपिकः । शाष्कुलिकः ।
केचित्तु नियुक्तम् = नित्यमाहुः । अपूपा नित्यमस्मै दीयन्ते आपूपिकः ।।
श्राणामांसौदनाट्टिठन् ।। 4-4-67 ।।
`श्राणा, `मांसौदन- शब्दाभ्यां टिठन् प्रत्ययो भवति, `तदस्मै दीयते नियुक्तम् इत्येतस्मिन्नर्थे ।
ठकोऽपवादः । इकार उच्चारणार्थः । टकारो ङीबर्थः । श्राणा नियुक्तमस्मै दीयते श्राणिकः, श्राणिकी । मांसौदनिकः, मांसौदनिकी ।
अथ ठञेव कस्मान्नोक्तः, न ह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः - ओदनिकः, ओदनिकी ।।
भक्तादणन्यतरस्याम् ।। 4-4-68 ।।
भक्तशब्दादण् प्रत्ययो भवत्यन्यतरस्यां `तदस्मै दीयते नियुक्तम् इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । भक्तमस्मै दीयते नियुक्तं भाक्तः, भाक्तिकः ।।
तत्र नियुक्तः ।। 4-4-69 ।।
`तत्र इति सप्तमीसमर्थात् `नियुक्तः इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । नियुक्तः=अधिकृतः, व्यापारित इत्यर्थः । शुल्कशालायां नियुक्तः शौल्कशालिकः । आकरिकः । आपणिकः । गौल्मिकः । दौवारिकः ।।
अगारान्ताट्ठन् ।। 4-4-70 ।।
अगारशब्दान्तात्प्रातिपदिकाट्ठन् प्रत्ययो भवति, `तत्र नियुक्तः इत्येतस्मिन्विषये । ठकोऽपवादः । देवागारे नियुक्तो देवागारिकः । कोष्ठागारिकः । भाण्डागारिकः ।
अध्यायिन्यदेशकालात् ।। 4-4-71 ।।
`तत्र इत्येव । सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकादकालवाचिनश्चाध्यायिन्यभिधेये ठक् प्रत्ययो भवति । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम् । श्मशानेऽधीते श्माशानिकः । चातुष्पथिकः । अकालात्--चतुर्दश्यामधीते चातुर्दशिकः । आमावास्यिकः ।
अदेशकालादिति किम् ? सुघ्नेऽधीते । पूर्वाह्णेऽधीते ।।
कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।। 4-4-72 ।।
`तत्र इत्येव । कठिनशब्दान्तात्सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति, `व्यवहरति इत्येतस्मिन्नर्थे । व्यवहारः=क्रियातत्त्वम्, यथा---लौकिकव्यवहार इति । वंशकठिने व्यवहरति वांशकठिनिकश्चक्रचरः । वार्धकठिनिकः । प्रास्तारिकः । सांस्थानिकः ।।
निकटे वसति ।। 4-4-73 ।।
निकटशब्दात्सप्तमीसमर्थाद् `वसति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । यस्य शास्त्रतो निकटवासस्तत्रायं विधिः । `आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यम् इति शास्त्रम् । निकटे वसति नैकटिको भिक्षुः ।।
आवसथात् ष्ठल् ।। 4-4-74 ।।
`तत्र इत्येव । आवसथशब्दात्सप्तमीसमर्थाद् `वसति इत्येतस्मिन्नर्थे ष्ठल्प्रत्ययो भवति । लकारः स्वरार्थः, षकारो ङीषर्थः । आवसथे वसति आवसथिकः । आवसथिकी ।
ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो, विधीयते ।।
प्राग्घिताद्यत् ।। 4-4-75 ।।
तस्मै हितम्(5-1-5/1665) इति वक्ष्यति । प्रागेतस्माद्धितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति - तद्वहति रथयुगप्रासङ्गम्(4-4-76/1627)। रथ्यः । युग्यः । प्रासङ्ग्यः ।।
तद्वहति रथयुगप्रासङ्गम् ।। 4-4-76 ।।
`तत् इति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यः `वहति इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ।
`रथसीताहलेभ्यो यद्विधौ(कात्या.वा.1) इति तदन्तविध्युपसङ्ख्यानात् परमरथ्य इत्यपि भवति ।।
धुरो यड्ढकौ ।। 4-4-77 ।।
`तद्वहति इत्येव । `धूर् इत्येतस्माद् द्वितीयासमर्थाद् `वहति इत्येतस्मिन्नर्थे यत्, ढक्-इत्येतौ प्रत्ययौ
भवतः । धुरं वहतीति धुर्यः, धौरेयः ।।
खः सर्वधुरात् ।। 4-4-78 ।।
`तद्वहति इत्येव । सर्वधुराशब्दाद् द्वितीयासमर्थाद् `वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति । सर्वधुरां वहति सर्वधुरीणः ।
स्त्रीलिङ्गे न्याय्ये `सर्वधुरात् इति प्रातिपदिकमात्रापेक्षो निर्देशः । `खः इति योगविभागः कर्त्तव्य इष्टसंग्रहार्थः । उत्तरधुरीणः । दक्षिणधुरीणः ।।

एकधुराल्लुक् च ।। 4-4-79 ।।
`तद्वहति इत्येव । एकधुराशब्दाद् द्वितीयासमर्थाद् `वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति तस्य च लुग्भवति । वचनसामर्थ्यात्पक्षे लुग्भवति । एकधुरां वहति एकधुरीणः । एकधुरः ।।
शकटादण् ।। 4-4-80 ।।
`तद्वहति इत्येव । शकटशब्दाद् द्वितीयासमर्थाद् `वहति इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति । शकटं वहति शाकटो गौः ।।
हलसीराट्ठक् ।। 4-4-81 ।।
`तद्वहति इत्येव । हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां `वहति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । हलं वहति हालिकः । सौरिकः ।
संज्ञायां जन्याः ।। 4-4-82 ।।
`तद्वहति इत्येव । जनीशब्दात् द्वितीयासमर्थाद् `वहति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । जनीं वहति जन्या=जामातुर्वयस्या । सा हि विवाहादिषु जामातृसमीपं प्रापयति। जनी=वधूरुच्यते ।
विध्यत्यधनुषा ।। 4-4-83 ।।
`तत् इति द्वितीयासमर्थाद् `विद्ध्यति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद्धनुष्करणं भवति । पादौ विद्ध्यन्ति पद्याः शर्कराः । ऊरव्याः कण्टकाः ।
अधनुषेति किम् ? पादौ विद्ध्यति धनुषा ।
नन्वसमर्थत्वादनभिधानाच्च प्रत्ययो न भवति, न हि धनुषा पद्य इत्युक्ते विवक्षितोऽर्थः प्रतीयते ? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्या धनुष्करणं न सम्भाव्यते इति । तेनेह न भवति--चौरं विध्यति, शत्रुं विध्यति देवदत्त इति ।।
धनगणं लब्धा ।। 4-4-84 ।।
`तत् इत्येव । धनगणशब्दाभ्यां द्वितीयासमर्थाभ्याम् `लब्धा इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । धन्यः । गण्यः । लब्धेति तृनन्तम्, तेन द्वितीया समर्था विभक्तिर्युज्यते ।।
अन्नाण्णः ।। 4-4-85 ।।
अन्नशब्दात् `तत् इति द्वितीयासमर्थात् `लब्धा इत्येतस्मिन्नर्थे णः प्रत्ययो भवति । अन्नं लब्धा आन्नः ।।
वशं गतः ।। 4-4-86 ।।
वशशब्दात् `तत् इति द्वितीयासमर्थाद् `गतः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । वशं गतः वश्यः=कामप्राप्तः, विधेय इत्यर्थः ।।
पदमस्मिन् दृश्यम् ।। 4-4-87 ।।
निर्देशादेव प्रथमा समर्थविभक्तिः । पदशब्दात्प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्प्रत्ययो भवति । पदं दृश्यमस्मिन् पद्यः कर्दमः । पद्याः पांसवः । शक्यार्थे कृत्यप्रत्यः । शक्यते यस्मिन् पदं द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः । कर्दमस्यावस्थोच्यते--नातिद्रवो नातिशुष्क इति ।।
मूलमस्यावर्हि ।। 4-4-88 ।।
मूलशब्दात्प्रथमासमर्थाद् `आबर्हि इत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत्प्रत्ययो भवति । मूलमेषामावर्हि
मूल्या माषाः । मूल्या मुद्गाः । `वृहू उद्यमे(धा.पा.1348), येषां मूलमावृह्यते उत्पाट्यते ते मूल्याः, सुष्ठु निष्पन्नाः । मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्ते इत्यर्थः ।।
संज्ञायां धेनुष्या ।। 4-4-89 ।।
`धेनुष्या इति निपात्यते संज्ञायां विषये । संज्ञाग्रहणमभिधेयनियमार्थम् । धेनोः षुगागमो यश्च प्रत्ययो निपात्यते । अन्तोदात्तोऽपि ह्ययमिष्यते । या धेनुरुत्तमर्णाय ऋणप्रदानाद्दोहनार्थं दीयते सा धेनुष्या । पीतदुग्धेति यस्याः प्रसिद्धिः । धेनुष्यां भवते ददामि ।।
गृहपतिना संयुक्ते ञ्यः ।। 4-4-90 ।।
निर्देशादेव तृतीया समर्थविभक्तिः । गृहपतिशब्दात् तृतीयासमर्थात् `संयुक्ते इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति । गृहपतिना संयुक्तः गार्हपत्योऽग्निः ।
अन्यस्यापि गृहपतिना संयोगोऽस्ति, तत्र संज्ञाधिकारादतिप्रसङ्गनिवृत्तिः ।।
नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ।। 4-4-91 ।।
नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासङ्ख्यं यत्प्रत्ययो भवति । प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते । नावा तार्यं नाव्यमुदकम् । नाव्या नदी । शक्यार्थे कृत्यः ।
वयसा तुल्यो वयस्यः सखा । संज्ञाधिकारोऽभिधेयनियमार्थः, तेन वयसा तुल्ये शत्रौ न भवति ।
धर्मेण प्राप्यं धर्म्यम् । ननु च धर्मादनपेते(4-4-92/1644) इति वक्ष्यमाणेनैव सिद्धम् ? नैतदस्ति; धर्मं यदनुवर्त्तते तद्धर्मादनपेतमित्युच्यते, फलं तु धर्मादपेत्यैव; कार्यविरोधित्वाद्धर्मस्य ।
विषेण वध्यो विष्यः । विषेण वधमर्हतीत्यर्थः ।
मूलेनानाम्यं मूल्यम् । आनाम्यम् = अभिभवनीयम् । पटादीनामुत्पत्तिकारणं मूलम्, तेन तदभिभूयते शेषीक्रियते । मूलं हि सगुणं मूल्यं करोति । पोरदुपधात्(3-1-98/2844) इति यति प्राप्ते आनाम्यमिति निपातनाण्ण्यत् । मूलेन समो मूल्यः पटः । उपादानेन समानफल इत्यर्थः ।
सीतया समितं सीत्यं क्षेत्रम् । समितम् = सङ्गतमित्यर्थः ।।
`रथसीताहलेभ्यो यद्विधौ(कात्या.वा.1) इति तदन्तविधिरपीष्यते । परमसीत्यम् । उत्तमसीत्यम् । द्विसीत्यम् । त्रिसीत्यम् ।

तुलया सम्मितं तुल्यम् । सम्मितम्=समानम्, सदृशमित्यर्थः ।
यथा--तुला परिच्छिनत्ति परम्, एवं तदपीति ।।
धर्मपथ्यर्थन्यायादनपेते ।। 4-4-92 ।।
निर्देशादेव पञ्चमी समर्थविभक्तिः । धर्मादिभ्यः पञ्चमीसमर्थेभ्यः-`अनपेतः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।
संज्ञाधिकारादभिधेयनियमः ।।
छन्दसो निर्मिते ।। 4-4-93 ।।
प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः । छन्दः शब्दात् तृतीयासमर्थात् `निर्मिते इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । निर्मितः = उत्पादितः । छन्दसा निर्मितश्छन्दस्यः । इच्छया कृत इत्यर्थः ।
इच्छापर्यायश्छन्दःशब्द इह गृह्यते ।।
उरसोऽण् च ।। 4-4-94 ।।
उरः शब्दात्तृतीयासमर्थात् `निर्मिते इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकाराद्यच्च । उरसा निर्मित औरसः पुत्रः, उरस्यः पुत्रः ।
संज्ञाधिकारादभिधेयनियमः ।।
हृदयस्य प्रियः ।। 4-4-95 ।।
निर्देशादेव समर्थविभक्तिः । हृदयशब्दात्षष्ठीसमर्थात् `प्रियः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हृदयस्य प्रियो हृद्यो देशः । हृद्यं वनम् ।
संज्ञाधिकारादभिधेयनियमः । इह न भवति---हृदयस्य प्रियः पुत्र इति ।।
बन्धने चर्षौ ।। 4-4-96 ।।
`हृदयस्य इत्येव । `बन्धने इति प्रत्ययार्थः । तद्विशेषणमृषिग्रहणम् । बद्ध्यते येन तद्बन्धनम् । हृदयशब्दात्षष्ठीसमर्थाद्बन्धने ऋषावभिधेये यत् प्रत्ययो भवति । ऋषिः= वेदो गृह्यते । हृदयस्य बन्धनमृषिः हृद्यः । परहृदयं येन बद्ध्यते वशीक्रियते स वशीकरणमन्त्रः=हृद्य इत्युच्यते ।।
मतजनहलात् करणजल्पकर्षेषु ।। 4-4-97 ।।
मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासङ्ख्यं यत्प्रत्ययो भवति । प्रत्ययार्थसामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः । मतम् = ज्ञानम्, तस्य करणं मत्यम्, भावसाधनं वा । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । द्विहल्यः । त्रिहल्यः । कर्षणं कर्षः, भावसाधनं वा ।।
तत्र साधुः ।। 4-4-98 ।।
`तत्र इति सप्तमीसमर्थात् `साधुः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । सामसु साधुः सामान्यः । वेमन्यः । कर्मण्यः । शरण्यः ।
साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः; तत्र हि परत्वात् तस्मै हितम्(5-1-5/1665) इत्यनेन विधिना भवितव्यम् ।।
प्रतिजनादिभ्यः खञ् ।। 4-4-99 ।।
प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति, `तत्र साधुः इत्येतस्मिन्नर्थे । यतोऽपवादः । प्रतिजने साधुः प्रातिजनीनः । जनेजने साधुरित्यर्थः । ऐदंयुगीनः । सांयुगीनः ।
प्रतिजन । इदंयुग । संयुग । समयुग । परयुग । परकुल । परस्यकुल । अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । महाजन । प्रतिजनादिः ।।
यत्र हितार्थ एव साध्वर्थः, तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते ।।
भक्ताण्णः ।। 4-4-100 ।।
भक्तशब्दाद् णः प्रत्ययो भवति, `तत्र साधुः इत्येतस्मिन्विषये । यतोऽपवादः । भक्ते साधुः भाक्तः शालिः । भाक्तास्तण्डुलाः ।।
परिषदो ण्यः ।। 4-4-101 ।।
परिषद्-शब्दाद् ण्यः प्रत्ययो भवति, `तत्र साधुः इत्येतस्मिन् विषये । यतोऽपवादः । परिषदि साधुः पारिषद्यः ।
णप्रत्ययोऽप्यत्रेष्यते । तदर्थं योगविभागः क्रियते---`परिषदः णो भवति । परिषदि साधुः पारिषदः, ततः `ण्यः, परिषद इत्येव ।।
कथादिभ्यष्ठक् ।। 4-4-102 ।।
कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति `तत्र साधुः इत्येतस्मिन्विषये । यतोऽपवादः । कथायां साधुः काथिकः । वैकथिकः ।
कथा । विकथा । वितण्डा । कुष्टचित् । जनवाद । जनेवाद । वृत्ति । सद्गृह । गुण । गण । आयुर्वेद । कथादिः ।।
गुडादिभ्यष्ठञ् ।। 4-4-103 ।।
गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति `तत्र साधुः इत्येतस्मिन्विषये । यतोऽपवादः । गुडे साधुः गौडिक इक्षुः । कौल्माषिको मुद्गः । साक्तुको यवः ।
गुड । कुल्माष । सक्तु । अपूप । मांसौदन । इक्षु । वेणु । सङ्ग्राम । सङ्घात । प्रवास । निवास । उपवास । गुडादिः ।।
पथ्यतिथिवसतिस्वपतेर्ढञ् ।। 4-4-104 ।।
पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति `तत्र साधुः इत्येतस्मिन्विषये । यतोऽपवादः । पथि साधु
पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ।।
सभाया यः ।। 4-4-105 ।।
सभाशब्दाद्यः प्रत्ययो भवति `तत्र साधुः इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । सभायां साधुः सभ्यः ।।
ढश्छन्दसि ।। 4-4-106 ।।
सभाशब्दाड्ढः प्रत्ययो भवति `तत्र साधुः इत्येतस्मिन्विषये छन्दसि । यस्यापवादः । `सभेयो युवाऽस्य यजमानस्य वीरो

जायताम्(वा.सं.22.22) ।।
समानतीर्थे वासी ।। 4-4-107 ।।
`साधुः इति निवृत्तम् । `वासी इति प्रत्ययार्थः । समानतीर्थ शब्दात्तत्रेति सप्तमीसमर्थाद् `वासी इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । समाने तीर्थे वासीति सतीर्थ्यः । समानोपाध्याय इत्यर्थः । तीर्थशब्देनेह गुरुरुच्यते । समानस्य सभावः, तीर्थे यः ।।
समानोदरे शयित ओ चोदात्तः ।। 4-4-108 ।।
समानोदरशब्दात्सप्तमीसमर्थात् `शयितः इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, ओकारश्चोदात्तः । शयितः=स्थित इत्यर्थः । समानोदरे शयितः समानोदर्यो भ्राता ।।
सोदराद्यः ।। 4-4-109 ।।
सोदरशब्दात्सप्तमीसमर्थात् `शयितः इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । विभाषोदरे(6-3-88/1016) इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः । समानोदरे शयितः सोदर्यो भ्राता । `ओ चोदात्तः इति नानुवर्त्तते । यकारे स्वरः ।।
भवे छन्दसि ।। 4-4-110 ।।
`तत्र इत्येव । सप्तमीसमर्थाद् `भवे इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति । अणादीनां घादीनां चापवादः । सति दर्शने तेऽपि भवन्ति; सर्वविधीनां छन्दसि व्यभिचारात् । `नमो मेघ्याय च विद्युत्याय च नमः(तै.सं.4-5-7.16) ।
आपादपरिसमाप्तेश्छन्दोऽधिकारः । भवाधिकारश्च समुद्राभ्राद्घः(4-4-118/3464) इति यावत् ।।
पाथोनदीभ्यां ड्यण् ।। 4-4-111 ।।
पाथशब्दान्नदीशब्दाच्च ड्यण् प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्नर्थे । यतोऽपवादः । पाथसि भवः `पाथ्यो वृषा(ऋ.6-16-15) । `नाद्यो गिरो मे प्रयच्छति(ऋ.2-35-1) । पाथोऽन्तरिक्षम् ।।
वेशन्तहिमवद्भ्यामण् ।। 4-4-112 ।।
वेशन्तशब्दाद्धिमवच्छब्दाच्चाण् प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्विषये । यतोऽपवादः । `वैशन्तीभ्यः स्वाहा(तै.सं.7-4-13.9) । `हैमवन्तीभ्यः स्वाहा(शौ.19-2-1) ।
स्रोतसो विभाषा ड्यड्ड्यौ ।। 4-4-113 ।।
स्रोतशब्दाद्विभाषा `ड्यत्, `ड्य- इत्यतौ प्रत्ययौ भवतः `तत्र भवः इत्येतस्मिन्विषये । यतोऽपवादः । पक्षे सोऽपि भवति । स्रोतसि भवः `स्रोत्यः(ऋ.10-104-8) । `स्रोतस्यः(अ.19-2-4) । ड्यड्ड्ययोः स्वरे विशेषः ।।
सगर्भसयूथसनुताद्यन् ।। 4-4-114 ।।
`सगर्भ, `सयूथ, `सनुत-शब्देभ्यो यन् प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । `अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः(तै.सं.1-2-4.2) । `यो नः सनुत्यः(ऋ.2-30-9) । सर्वत्र समानस्य छन्दसि(6-3-84/1012) इति सभावः ।।
तुग्राद् घन् ।। 4-4-115 ।।
तुग्रशब्दाद्घन् प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्विषये । यतोऽपवादः । `त्वमग्ने वृषभस्तुग्रियाणाम् । अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः ।।
अग्राद्यत् ।। 4-4-116 ।।
अग्रशब्दाद्यत् प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्विषये । अग्रे भवम् `अग्र्यम्(खि.1-3-7) । किमर्थमिदम्, यावता सामान्येन यद्विहित एव ? घच्छौ च(4-4-117/3463) इति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुनर्विधीयते ।।
घच्छौ च ।। 4-4-117 ।।
अग्रशब्दाद्यत्, घच्छौ प्रत्ययौ भवन्ति, `तत्र भवः इत्येतस्मिन्विषये । `अग्र्यम्(खि.1-3-7), `अग्रियम्(ऋ.1-13-10), `अग्रीयम्(मै.2-7-13.13) ।
चकारः `तुग्राद्घन् इत्यस्यानुकर्षणार्थः । अग्रियम् । स्वरे विशेषः ।।
समुद्राभ्राद् घः ।। 4-4-118 ।।
समुद्रशब्दाद्, अभ्रशब्दाच्च घः प्रत्ययो भवति `तत्र भवः इत्येतस्मिन्नर्थे । यतोऽपवादः । `समुद्रिया नदीनाम्(ऋ.7-87-1) । `अभ्रियस्येव घोषः(ऋ.10-68-1) ।
अभ्रशब्दास्यापूर्वनिपातः; तस्य लक्षणस्य व्यभिचारित्वात् ।।
बर्हिषि दत्तम् ।। 4-4-119 ।।
`भवः इति निवृत्तम् । बर्हिः - शब्दात्सप्तमीसमर्थात् `दत्तम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । `बर्हिष्येषु निधिषु प्रियेषु(ऋ.10-15-5) ।।
दूतस्य भागकर्मणी ।। 4-4-120 ।।
निर्देशादेव समर्थविभक्तिः । दूतशब्दात् षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययो भवति । भागः = अंशः । कर्म = क्रिया । `यत्ते अग्ने दूत्यम्(ऋ.1-12-4) । दूतभागः, दूतकर्म वा ।।
रक्षोयातूनां हननी ।। 4-4-121 ।।
निर्देशादेव समर्थविभक्तिः । रक्षः शब्दाद्यातुशब्दाच्च षष्ठीसमर्थात् `हननी इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हन्यतेऽनयेति हननी । `यावां मित्रावरुणौ रक्षस्या तनूः(मै.2-3-1) । रक्षसां हननी । `यातव्या(मै.2-3-1) । यातूनां हननी ।
बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम् । बहूनां रक्षसां हननेन तनूः स्तूयते ।।
रेवतीजगतीहविष्याभ्यः प्रशस्ये ।। 4-4-122 ।।

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति । प्रशंसनं प्रशस्यम्, भावे क्यप् प्रत्ययो भवति । `यद्वो रेवती रेवत्यम्(काठ.सं.1.8) । `यद्वो जगती जगत्यम्(काठ.सं.1.8) । `यद्वो हविष्या हविष्यम्(काठ.सं.1.8) । हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम् । यस्येति लोपे कृते हलो यमा यमि लोपः(8-4-64/60) इति लोपः ।।

असुरस्य स्वम् ।। 4-4-123 ।।

असुरशब्दात्षष्ठीसमर्थात् `स्वम् इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । अणोऽपवादः । `असुर्यं वा एतत्पात्रम्, यच्चक्रधृतं कुलालकृतम्(मै.सं.1-8-3) ।।

मायायामण् ।। 4-4-124 ।।

असुरशब्दात्षष्ठीसमर्थात् `मायायाम् स्वविशेषेऽण्प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । `आसुरी माया स्वधया कृतासि(वा.सं.11.69) ।।

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ।। 4-4-125 ।।

`तद्वान् इति निर्देशादेव समर्थविभक्तिः । मतुबन्तात्प्रातिपदिकात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति । यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । `लुक्च मतोः इति प्रकृतिनिर्ह्रासः । इतिकरणस्ततश्चेद्विवक्षा । `तद्वान् इत्यवयवेन समुदायो निर्दिश्यते । वर्चः शब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् । उपधीयते येन स उपधानः । चयनवचन इत्यर्थः । वर्चस्वानुपधानमन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते - `वर्चस्या(तै.ब्रा.1-8-9.1) उपदधाति,

`तेजस्या(तै.ब्रा.1-8-1.9) उपदधाति । `पयस्याः(तै.सं.2-3-13.1) । `रेतस्याः(ष.विं.21) ।

तद्वानिति किम् ? मन्त्रसमुदायादेव मा भूत् । उपधान इति किम् ? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र मा भूत् । मन्त्र इति किम् ? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत् । इष्टकास्विति किम् ? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत् ।

इतिकरणो नियमार्थः । अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते, न सर्वेण ।।

अश्विमानण् ।। 4-4-126 ।।

अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्, अश्विमच्छब्दादण् प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्याण्विधीयते, तत्र मतुपो लुकि कृते इनण्यनपत्ये(6-4-164/1245) इति प्रकृतिभावः । `आश्विनीरुपदधाति(श.ब्रा.8-2-1.11) ।।

वयस्यासु मूर्ध्नो मतुप् ।। 4-4-127 ।।

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । यस्मिन्मन्त्रे वयः शब्दो मूर्द्धन्शब्दश्च विद्यते, स वयस्वानपि भवति, मूर्द्धन्वानपि; यथा - `मूर्द्धावयः प्रजापतिच्छन्द(वा.सं.14.9) इति । तत्र वयस्वच्छब्दादिव मूर्द्धन्वच्छब्दादपि यति प्राप्ते मतुब् विधायते - `मूर्द्धन्वतीरुपदधाति(तै.सं.5-3-8.3), वयस्या एव मूर्द्धन्वत्यः ।

वयस्यास्विति किम् ? यत्र मूर्द्धन्शब्द एव केवलो न वयः शब्दः, तत्र मा भूत् ।

`मर्द्धन्वतः इति वक्तव्ये `मूर्ध्नः इत्युक्तम्--मतुपो लुकं भाविनं चित्ते कृत्वा ।।

मत्वर्थे मासतन्वोः ।। 4-4-128 ।।

यस्मिन्नर्थे मतुब्विहितस्तस्मिंश्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः । प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो भवति । मत्वर्थीयानामपवादः । नभांसि विद्यन्ते यस्मिन्मासे `नभस्यो(तै.सं.1-4-14.1) मासः । `सहस्यः(तै.सं.1-4-14.1) । `तपस्यः(तै.सं.1-4-14.1) । `मधव्यः(तै.सं.5-2-9.3) । नभः शब्दोऽभ्रेषु वर्त्तते । तन्वां खल्वपि--ओजोऽस्यां विद्यते `ओजस्या तनूः, रक्षस्या(मै.सं.2-3-1) ।

मासतन्वोरिति किम् ? मधुमता पात्रेण चरति ।

`मासतन्वोरनन्तरार्थे वा(म.भा.2.334) । मध्वस्मिन्नस्ति, मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः ।

- लुगकारेकाररेफाश्च वक्तव्याः * (म.भा.2.335)। लुक्तावत्-`तपश्च तपस्यश्च(तै.सं.1-4-14.1) । `नभश्च नभस्यश्च(तै.सं.1-4-14.1) । `सहश्च सहस्यश्च(तै.सं.1-4-14.1) । नपुंसकलिङ्गं छान्दसत्वात् । अकारः - `इषो मासः(तै.सं.1-4-14.1) । `ऊर्जो मासः(तै.सं.1-4-14.1) । इकारः - `शुचिर्मासः(तै.सं.1-4-14.1) । रेफः - `शुक्रो मासः(तै.सं.1-4-14.1) ।

मधोर्ञ च ।। 4-4-129 ।।

मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति, चकाराद्यच्च । उपसङ्ख्यानाल्लुक्च । `माधवः(तै.सं.1-4-14.1), `मधव्यः(तै.सं.1-4-14.1), `मधुः(तै.सं.1-4-14.1) । तन्वां खल्वपि - माधवा, मधव्या, मधुः तनूः ।।

ओजसोऽहनि यत्खौ ।। 4-4-130 ।।

`मत्वर्थे इत्येव । ओजः शब्दान्मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये । ओजस्यमहः । ओजसीनमहः ।।

वेशोयशआदेर्भगाद्यल् ।। 4-4-131 ।।

`मत्वर्थे इत्येव । वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् प्रत्ययो भवति । लकारः स्वरार्थः । वेशोभगो विद्यते यस्य स वेशोभग्यः । यशोभग्यः ।

वेशः = इति बलमुच्यते । श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । वेशश्चासौ भगश्च श्रीप्रभृतिर्वेशोभगः, सोऽस्यास्तीति वेशोभग्यः ।।

ख च ।। 4-4-132 ।।

वेशोयशआदेर्भगान्तात्प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति । योगविभागो यथासङ्ख्यनिरासार्थ उत्तरार्थश्च । चकाराद्यत् । वेशोभग्यः,

वेशोभगीनः । यशोभग्यः । यशोभगीनः ।।
पूर्वैः कृतमिनयौ च ।। 4-4-133 ।।
`मत्वर्थे इति निवृत्तम् । निर्देशादेव समर्थविभक्तिः । पूर्वशब्दात् तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थे `इन, `य इत्येतौ प्रत्ययौ भवतः । चकारात्ख च । `गम्भीरेभिः पथिभिःपूर्विणेभिः(काठ.सं.9-6-19)। `पूर्व्यैः(तै.1-8-5.2) । पूर्वीणैः ।
`पूर्वैः इति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते । तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा ।।
अद्भिः संस्कृतम् ।। 4-4-134 ।।
निर्देशादेव समर्थविभक्तिः । अप्शब्दात्तृतीयासमर्थात् `संस्कृतम् इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । `यस्येदमप्यं हविः(ऋ.10-86-12) । अद्भिः संस्कृतमिति ।।
सहस्रेण संमितौ घः ।। 4-4-135 ।।
निर्देशादेव समर्थविभक्तिः । सहस्रशब्दात्तृतीयासमर्थात् `सम्मितौ इत्येतस्मिन्नर्थे घः प्रत्ययो भवति । सम्मितस्तुल्यः सदृशः । `अयमग्निः सहस्रियः(तै.सं.4-7-13.4) । सहस्रतुल्य इत्यर्थः ।
केचित्तु `समितौ इति पठन्ति । तत्रापि समित्या सम्मित एव लक्षयितव्यः; तत्र छन्दसि प्रयोगदर्शनात् ।।
मतौ च ।। 4-4-136 ।।
मत्वर्थे च सहस्रशब्दात् घः प्रत्ययो भवति । सहस्रमस्य विद्यते सहस्रियः । तपः सहस्राभ्यां विनीनी(5-2-102/1909), अण् च(5-2-103/1910) इत्यस्यापवादः ।।
सोमम्र्हति यः ।। 4-4-137 ।।
निर्देशादेव समर्थविभक्तिः । सोमशब्दाद् द्वितीयासमर्थाद् `अर्हति इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । सोमम्र्हन्ति `सोम्या ब्राह्मणाः(तै.सं.2-1-2.9) । यज्ञार्हा इत्यर्थः । यति प्रकृते यग्रहणं स्वरे विशेषः ।।
मये च ।। 4-4-138 ।।
सोमग्रहणम्, यश्चानुवर्तते । `मये इति मयडर्थो लक्ष्यते । सोमशब्दान्मयडर्थे यः प्रत्ययो भवति ।
आगतविकारावयवप्रकृता मयडर्थाः - हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः(4-3-81/1461), मयट् च(4-3-82/1462), मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः(4-3-143/1523), तत्प्रकृतवचने मयट्(5-4-21/2089) इति । तत्र यथायोगं समर्थविभक्तिः । `सोम्यं मधुपिबन्ति(ऋ.8-24-13) । सोममयमित्यर्थः ।।
मधोः ।। 4-4-139 ।।
यशब्दो निवृत्तः । मधुशब्दान्मयडर्थे यत्प्रत्ययो भवति । मधव्यान् स्तोकान्(पै.1-88-2) । मधुमयानित्यर्थः ।
वसोः समूहे च ।। 4-4-140 ।।
वसुशब्दात्समूहे वाच्ये यत्प्रत्ययो भवति चकारान्मयडर्थे च । यथायोगं समर्थविभक्तिः । वसव्यः समूहः । मयडर्थो वा ।

- अक्षरसमूहे छन्दसः स्वार्थे उपसङ्ख्यानम् * (म.भा.2.335)। `ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः(मै.सं.1-4-11) । सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः । छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यत्प्रत्ययः ।
- वसुशब्दादपि यद्वक्तव्यः * (म.भा.2.335)। `हस्तौ गृहीतस्य बहुभिर्वसव्यैः(तै.सं.1-2-13.2) । वसुभिरित्यर्थः । `अग्निरीशे वसव्यस्य(ऋ.4-55-8) । वसोरित्यर्थः ।

नक्षत्राद् घः ।। 4-4-141 ।।
नक्षत्रशब्दाद्घः प्रत्ययो भवति स्वार्थे । `समूहे इति नानुवर्तते । `नक्षत्रियेभ्यः स्वाहा(वा.सं.12.28) ।।
सर्वदेवात्तातिल् ।। 4-4-142 ।।
सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति, छन्दसि विषये स्वार्थिकः । `सर्वतातिम्(ऋ.10.36) । `देवतातिम्(ऋ.3-19-2) ।।
शिवशमरिष्टस्य करे ।। 4-4-143 ।।
करोतीति करः, प्रत्ययार्थः । तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः । शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः `करे इत्येतस्मिन्नर्थे तातिल्प्रत्ययो भवति । शिवं करोतीति `शिवतातिः(पै.5-36-1) । `शन्तातिः(ऋ.8-18-7) । `अरिष्टतातिः(ऋ.10-60-8) ।।
भावे च ।। 4-4-144 ।।
भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल्प्रत्ययो भवति । शिवस्य भावः `शिवतातिः(पै.5-36-1) । `शन्तातिः(ऋ.8-18-7) । `अरिष्टतातिः(ऋ.10-60-8) । यतः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययोऽधिक्रियते ।।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य चतुर्थः पादः

# काशिका/पञ्चमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pbo
< काशिका | पञ्चमोऽध्यायः
।। पञ्चमाध्याये प्रथमः पादः।।
प्राक् क्रीताच्छः ।। <5-1-1> ।।
तेन क्रीतम्(5-1-37/1702) इति वक्ष्यति, प्रागेतस्मात्क्रीतसंशब्दनाद्यानिति ऊर्ध्वमनुक्रमिष्यामश्छप्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति- तस्मै हितम्(5-1-5/1665) इति। वत्सेभ्यो हितो वत्सीयो गोधुक्। करभीय उष्ट्रः। अकरभीयः। अवत्सीयः।
अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः। तेन `प्राक् ठञश्छः इति नोक्तम्।।

</5-1-1>
उगवादिभ्यो यत् ।। <5-1-2> ।।
`प्राक् क्रीतात् इत्येव। उवर्णान्तात्प्रातिपदिकाद् गवादिभ्यश्च यत्प्रत्ययो भवति, प्राक्क्रीतीयेष्वर्थेषु। छस्यापवादः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। गवादिभ्यः खल्वपि-गव्यम्। हविष्यम्। सनङ्गुर्नाम चर्मविकारः, ततः परत्वात् चर्मणोऽञ्(5-1-15/1677) इत्येष विधिः प्राप्नोति; तथा चरुर्नाम हविः; सक्तुः=अन्नविकारः, अपूपादिषु `अन्नविकारेभ्यश्च(ग.सू.109) इति पठ्यते, ततः विभाषा हविरपूपादिभ्यः(5-1-4/1664) इत्येष विधिः प्राप्नोति; तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्प्रत्यय एवेष्यते--सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धाना इति।
गवादिषु `नाभि नभं च इति पठ्यते, तस्यायमर्थः---`नाभिशब्दो यत्प्रत्ययमुत्पादयति नभं चादेशमापद्यते इति। नाभये हितो नभ्योऽक्षः। नभ्यमञ्जनम्। यस्तु शरीरावयवो नाभिशब्दः, ततः शरीरावयवाद्यत्(5-1-6/1666) इति यति कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम्। गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति।
गो। हविस्। बर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। * नाभि नभं च *(ग.सू.106)। * शुनः सम्प्रसारणं वा दीर्घत्वं च तत्सन्नियोगेन चान्तोदात्तत्वम् *(ग.सू.107)। शुन्यम्, शून्यम्। चकारस्यानुक्तसमुच्चयार्थत्वात् नस्तद्धिते(6-4-144/679) इति लोपो न स्यात्। * ऊधसोऽनङ् च *। ऊधन्यः कूपः। उदर। खर। स्खद। अक्षर। विष। गवादिः ।।

</5-1-2>
कम्बलाच्च संज्ञायाम् ।। <5-1-3> ।।
कम्बलात्प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति संज्ञायां विषये। छस्यापवादः। कम्बल्यमूर्णापलशतम्। संज्ञायामिति किम्? कम्बलीया ऊर्णाः।

</5-1-3>
विभाषा हविरपूपादिभ्यः ।। <5-1-4> ।।
हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति। आमिक्ष्यं दधि, आमिक्षीयं दधि। पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः। हविश्शब्दात्तु गवादिपाठान्नित्यमेव भवति। अपूपादिभ्यः--अपूप्यम्, अपूपीयम्। तण्डुल्यम्, तण्डुलीयम्।
अपूप। तण्डुल। अभ्यूष। अभ्योष। पृथुक। अभ्येष। अर्गल। मुसल। सूप। कटक। कर्णवेष्टक। किण्व। *अन्नविकारेभ्यश्च*(ग.सू.109)। पूप। स्थूणा। पीप। अश्व। पत्त्र। अपूपादिः ।।

</5-1-4>
तस्मै हितम् ।। <5-1-5> ।।
`तस्मै इति चतुर्थीसमर्थाद् `हितम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सेभ्यो हितो गोधुक् वत्सीयः।
अवत्सीयः। पटव्यम्। गव्यम्। हविष्यम्। अपूप्यम्। अपूपीयम्।।

</5-1-5>
शीरीरावयवाद्यत् ।। <5-1-6> ।।
शरीरम्=प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद्यत् प्रत्ययो भवति `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। नाभ्यम्। नस्यम्।

</5-1-6>
खलयवमाषतिलवृषब्रह्मणश्च ।। <5-1-7> ।।
खलादिभ्यो यत्प्रत्ययो भवति `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्।

ब्रह्मण्यम्।
वृष्णे हितम्, ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति। छप्रत्ययोऽपि न भवति, अनभिधानात्।
चकारोऽनुक्तसमुच्चयार्थः-रथाय हिता रथ्या।।

</5-1-7>
अजाविभ्यां थ्यन् ।। <5-1-8> ।।
अज, अवि-इत्येताभ्यां थ्यन् प्रत्ययो भवति `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। अजथ्या यूथिः। अविथ्या।।

</5-1-8>
आत्मन्विश्वजनभोगोत्तरपदात् खः ।। <5-1-9> ।।
आत्मन्, विश्वजन-इत्येताभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्खः प्रत्ययो भवति `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। आत्मन् इति नलोपो न कृतः प्रकृतिपरिमाणज्ञापनार्थम्। तेनोत्तरपदग्रहणं भोगशब्देनैव सम्बध्यते, न तु प्रत्येकम्। आत्मने हितम् आत्मनीनम्(पै.5-14-8)। आत्माध्वानौ खे(6-4-169/1671) इति प्रकृतिभावः। विश्वजनेभ्यो हितं विश्वजनीनम्। कर्मधारयादेवेष्यते। षष्ठीसमासाद्बहुव्रीहेश्च छ एव भवति। विश्वजनाय हितं विश्वजनीयम्।
* पञ्चजनादुपसंख्यानम् *(म.भा.2-340)। पञ्चजनाच्च खः। अत्रापि कर्मधारयादिष्यते। पञ्चजनीनम्। अन्यत्र-पञ्चजनीयम्। * सर्वजनाट्ठञ् खश्च *(म.भा.2-340)। सार्वजनिकम्, सर्वजनीनम्,। अत्रापि कर्मधारयादेव। सर्वजनीयम्-अन्यत्।
* महाजनान्नित्यं ठञ्वक्तव्यः *(म.भा.2-340)। महाजनाय हितं माहाजनिकम्। तत्पुरुषादेव। बहुव्रीहेस्तु छ एव भवति-महाजनीयम्।
भोगोत्तरपदात्खल्वपि-मातृभोगीणः। पितृभोगीणः। भोगशब्दः शरीरवाची केवलेभ्यो मात्रादिभ्यश्छ एव भवति। मात्रीयम्। पित्रीयम्।
* महाजनान्नित्यं ठञ्वक्तव्यः *(म.भा.2-340)। महाजनाय हितं महाजनिकम्। तत्पुरुषादेव। बहुव्रीहेस्तु छ एव भवति-महाजनीयम्।
भोगोत्तरपदात्कल्वपि-मातृभोगीणः। पितृभोगीणः। भोगशब्दः शरीरवाची केवलेभ्यो मात्रआदिभ्यश्छ एव भवति। मात्रीयम्। पित्रीयम्।
* राजाचार्याभ्यां तु नित्यम् *(म.भा.2-340)। भोगोत्तरपदाभ्यामेव प्रत्यय इष्यते, न केवलाभ्याम्। राजभोगीनः।
* आचार्यादणत्वं च *(म.भा.2-340)। आचार्यभोगीनः। केवलाभ्यां वाक्यमेव भवति-राज्ञे हितम्, आचार्याय हितमिति ।।

</5-1-9>
सर्वपुरुषाभ्यां णढञौ ।। <5-1-10> ।।
सर्वपुरुषाभ्यां यथासंख्यं णढञौ प्रत्ययौ भवतः, `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। सर्वस्मै हितं सार्वम्। पौरुषेयम्।
* सर्वाण्णस्य वा वचनम् *(म.भा.2-341)। सर्वीयम्।
* पुरुषाद्वधविकारसमहतेनकृतेष्विति वक्तव्यम् *(म.भा.2-341)। पौरुषेयो वधः, विकारः, समूहो वा, तेनकृतः पौरुषेयो ग्रन्थः ।।

</5-1-10>
माणवचरकाभ्यां खञ् ।। <5-1-11> ।।
माणवचरकशब्दाभ्यां खञ् प्रत्ययो भवति, `तस्मै हितम् इत्येतस्मिन्विषये। छस्यापवादः। माणवाय हितं माणवीनम्। चारकीणम्।।

</5-1-11>
तदर्थं विकृतेः प्रकृतौ ।। <5-1-12> ।।
प्रकृतिः=उपादानकारणम्, तस्यैव उत्तरमवस्थान्तरम्=विकृतिः। विकृतिवाचिनः प्रातिपदिकात्प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति। `तदर्थम् इति प्रत्ययार्थविशेषणम्। तदिति सर्वनाम्ना विकृतिः परामृश्यते, विकृत्यर्थायां प्रकृतौ प्रत्ययः। तदर्थग्रहणेन प्रकृतेरनन्यार्थताऽऽख्यायते, न प्रकृतिविकारसंभवमात्रे प्रत्ययः, किं तर्हि? प्रकृतेरनन्यार्थत्वे विवक्षिते। प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः। केचित्तु तस्मै हितम्(5-1-5/1665) इत्यनुवर्तयन्ति। अङ्गारेभ्यो हितानि एतानि काष्ठानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। पङ्कव्यं दारु। पिचव्यः कार्पासः।
तदर्थमिति किम्? यवानां धानाः। धानानां सक्तवः। प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता, न तादर्थ्यम्। धानानां सक्तवो न लाजानामिति।
विकृतेरिति किम्? उदकार्थः कूपः। वलिकृतिग्रहणेऽक्रियमाणे या काचित्प्रकृतिर्गृह्यते, नोपादानकारणमेव। भवति च कूप उदकस्य प्रकृतिः; तत्रोत्पादनात्। न तु उदकं तस्य विकृतिः; अत्यन्तभेदात्।
प्रकृताविति किम्? अस्यर्था कोशी। असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृतिर्भवति। द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते ।।

</5-1-12>
छदिरुपधिबलेर्ढञ् ।। <5-1-13> ।।
छदिरादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ(5-1-12/1674) इत्येतस्मिन्विषये। छस्यापवादः। छादिषेयाणि तृणानि।

औपधेयं दारु। बालेयास्तण्डुलाः।
उपधिशब्दात्स्वार्थे प्रत्ययः। उपधीयत इत्युपधिः=रथाङ्गम्। औपधेयमपि तदेव दारु।।

</5-1-13>
ऋषभोपानहोर्ञ्यः ।। <5-1-14> ।।
ऋषभ, उपानह-इत्येताभ्यां ञ्यः प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ(5-1-12/1674) इत्येतस्मिन्विषये। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः।
चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयमेवेष्यते---औपानह्यं चर्म।

</5-1-14>
चर्मणोऽञ् ।। <5-1-15> ।।
`चर्मणः इति षष्ठी। चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकादञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ(5-1-12/1674) इत्येतस्मिन्विषये। छस्यापवादः। वार्ध्रं चर्म। वारत्रं चर्म ।।

</5-1-15>
तदस्य तदस्मिन्स्यादिति ।। <5-1-16> ।।
`तत् इति प्रथमा समर्थविभक्तिः, `अस्य इति प्रत्ययार्थः, `स्यात् इति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। एवं द्वितीयेऽपि वाक्ये। सप्तम्यर्थे तु प्रत्यय इत्येतावान्विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं स्याच्चेत्तद्भवति। इतिकरणस्ततश्चेद्विवक्षा। प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि-प्राकारोऽस्मिन्देशे स्यात् प्राकारीयो देशः। प्रासादीया भूमिः।
स्यादिति संभावनायां लिङ् संभावनेऽलमिति चेत्(3-3-154/2811) इत्यादिना, इष्टकानां बहुत्वेन तत्संभाव्यते। प्राकार आसामिष्टकानां स्यादिति देशस्य च गुणेन संभाव्यते-प्रासादोऽस्मिन्देशे स्यादिति।
प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितम्, किं तर्हि? योग्यतामात्रम्; तेन पूर्वस्यायमविषयः। द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्। अनेकस्मिन्प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति।
अथेह कस्मान्न भवति--प्रासादो देवदत्तस्य स्यादिति? गुणवानयं सम्भाव्यते, प्रासादलाभोऽस्येति। `इतिकरणो विवक्षार्थः इत्युक्तम्।।

</5-1-16>
परिखाया ढञ् ।। <5-1-17> ।।
परिखाशब्दाद् ढञ् प्रत्ययो भवति तदस्य तदस्मिन्स्यादिति(5-1-16/1678) एतस्मिन्नर्ते। छस्यापवादः। पारिखेयी भूमिः।
छयतोः पूर्णोऽवधिः। इतः परमन्यः प्रत्ययो विधीयते।।

</5-1-17>
प्राग्वतेष्ठञ् ।। <5-1-18> ।।
तेन तुल्यं क्रिया चेद्वतिः(5-1-115/1778) इति वक्ष्यति। प्रागेतस्माद्वतिसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठञ् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति-पारायणतुरायणचान्द्रायणं वर्त्तयति(5-1-72/1736)। पारायणिकः। तौरायणिकः। चान्द्रायणिकः।।

</5-1-18>
आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ।। <5-1-19> ।।
तदर्हति(5-1-63/1728) इति वक्षयति। आ एतस्मादर्हसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः, गोपुच्छादीन्वर्जयित्वा। अभिविधौ वायमाकारः, तेनार्हत्यर्थेऽपि ठग्भवत्येव। ठञधिकारमध्ये तदपवादः ठग्विधीयते। वक्ष्यति-तेन क्रीतम्(5-1-37/1702) नैष्किकम्। पाणिकम्।
अगोपुच्छसंख्यापरिमाणादिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम्।
संख्या-षाष्टिकम्। परिमाण-प्रास्थिकम्। कौडविकम्। ठञ् प्रत्युदाह्रियते।
संख्यापरिमाणयोः को विशेषः? भेदगणनम्=संख्या, एकत्वादिः। गुरुत्वमानम्=उन्मानं पलादिः।
आयाममानम्=प्रमाणं वितस्त्यादिः। आरोहपरिणाहमानम्=परिमाणं प्रस्थादि।।
`ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः।।(म.भा.2-343)

</5-1-19>

असमासे निष्कादिभ्यः ।। <5-1-20> ।।
आर्हात्(5-1-19/1681) इत्येव। निष्कादिभ्यः शब्देभ्योऽसमासे ठक्प्रत्ययो भवति आर्हियेष्वर्थेषु। ठञोऽपवादः। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्।
असमास इति किम्? परमनैष्किकम्। उत्तमनैष्किकम्। ठञेव भवति, परिमाणान्तस्य(7-3-17/1683) इत्युत्तरपदवृद्धिः।
अथ किमर्थमसमास इत्युच्यते, यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते? निष्कादिष्वसमासग्रहणं ज्ञापकम्-पूर्वत्र तदन्ताप्रतिषेधस्य। उगवादिभ्यो यत्(5-1-2/1662)-गव्यम्, सुगव्यम्, अतिसुगव्यम्। विभाषा हविरपूपादिभ्यः(5-1-4/1664)--अपूप्यम्, अपूपीयम्। यवापूप्यम्, यवापूपीयम्। शरीरावयवाद्यत्(5-1-6/1666)--दन्त्यम्, राजदन्त्यम् इत्येवमादि सिद्धं भवति।
इत उत्तरं च संख्यापूर्वपदानां तदन्तविधिरिष्यते। पारायणतुरायणचान्द्रयणं वर्तयति(5-1-72/1736) द्वैपारायणिकः, त्रैपारायणिकः। लुगान्तायास्तु प्रकृतेर्नेष्यते। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतमिति तदन्तविधिप्रतिषेधात् शूर्पादञन्यतरस्याम्(5-1-26/1691) इत्यञ् न भवति, सामान्यविहितष्ठञेव भवति। द्विशौर्पिकम्।
ठञो द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः। तथा चोक्तम्--`प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि(म.भा.2-346) इति।
निष्क। पण। पाद। माष। वाह। द्रोण। षष्टि। निष्कादिः।।

</5-1-20>
शताच्च ठन्यतावशते ।। <5-1-21> ।।
`आर्हाद् इत्येव। शतशब्दात् ठन्यतौ प्रत्ययौ भवतः अशतेऽभिधेये, आर्हीयेष्वर्थेषु। कनोऽपवादः। शतेन क्रीतं शतिकम्। शत्यम्।
अशते इति किम्? शतं परिमाणमस्य शतकं निदानम्। प्रत्ययार्थोऽत्र सङ्घः। शतमेव वस्तुतः प्रकृत्यर्थान्न भिद्यते। इह तु न भवतिशतेन क्रीतं शत्यं शाटकशतम्, शतिकं शाटकशतमिति। वाक्येन ह्यत्र प्रत्ययार्थस्य तत्त्वं गम्यते, न श्रुत्या। तथा चोक्तम्--`शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः(म.भा.2-346) इति।
चकारोऽसमास इत्यनुकर्षणार्थः। द्वौ च शतं च द्विशतम्, द्विशतेन क्रीतं द्विशतकम्। त्रिशतकम्।
`प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि(म.भा.2-346) इत्यनया इष्ट्या समासादपि प्राप्नोति।।

</5-1-21>
संख्याया अतिशदन्तायाः कन् ।। <5-1-22> ।।
भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। पञ्चभिः क्रीतः पञ्चकः पटः। बहुकः। गणकः।
अतिशदन्ताया इति किम्? साप्ततिकः। चात्वारिंशत्कः।
अर्थवतस्तिशब्दस्य ग्रहणाड्डतेः पर्युदासो न भवति-कतिकः।।

</5-1-22>
वतोरिड् वा ।। <5-1-23> ।।
वत्वन्तस्य संख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य कनो वा इडागमो भवति आर्हीयेष्वर्थेषु। तावतिकः, तावत्कः। यावतिकः, यावत्कः ।।

</5-1-23>
विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ।। <5-1-24> ।।
विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति, असंज्ञायां विषये, आर्हीयेष्वर्थेषु। विंशकः। त्रिंशकः। ति विंशतेर्डिति(6-4-142/844) इति तिलोपः।
असंज्ञायामिति किम्? विशतिकः। त्रिंशत्कः।
कथं पुनरत्र कन्, यावता `अतिशदन्तायाः इति पर्युदासेन भवितव्यम्?(म.भा.2-347) योगविभागः करिष्यते--विंशतित्रिंशद्भ्याम् कन् प्रत्ययो भवति, ततः ड्वुनसंज्ञायाम्(म.भा.2-347) इति।।

</5-1-24>
कंसाट्टिठन् ।। <5-1-25> ।।
कंसाट्टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। टकारो ङीबर्थः। इकार उच्चारणार्थः। नकारः स्वरार्थः। कंसिकः। कंसिकी।

- अर्द्धाच्चेति वक्तव्यम् *(म.भा.2-347)। अर्द्धिकः। अर्द्धिकी।
- कार्षापणाट्टिठन्वक्तव्यः *। कार्षापणिकः। कार्षापणिकी ।।
- प्रतिशब्दश्चास्यादेशो वा वक्तव्यः *। प्रतिकः। प्रतिकी ।।

</5-1-25>
शूर्पादञन्यतरस्याम् ।। <5-1-26> ।।
शूर्पशब्दादन्यतरस्यामञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। पक्षे सोऽपि भवति। शूर्पेण क्रीतं शौर्पम्, शौर्पिकम् ।।

</5-1-26>
शतमानविंशतिकसहस्रवसनादण् ।। <5-1-27> ।।
शतमानादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठक्ठञोरपवादः। शतमानेन क्रीतं शातमानं शतम्। वैंशतिकम्। साहस्रम्। वासनम्।।

</5-1-27>
अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ।। <5-1-28> ।।
`आर्हात् इत्येव। अध्यर्धशब्दः पूर्वो यस्मिंस्तस्मादध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च परस्य आर्हीयस्य लुग् भवति, असंज्ञायां विषये। आध्यर्धकंसम्। द्विकंसम्। त्रिकंसम्। अध्यर्धशूर्पम्। द्विशूर्पम्। त्रिशूर्पम्।
असंज्ञायामिति किम्? पाञ्चलौहितिकम्। पाञ्चकलापिकम्। लोहिनीशब्दस्य `भस्याऽढे तद्धिते(6-3-35/836) इति पुंवद्भावः।
प्रत्ययान्तस्य विशेषणमसंज्ञाग्रहणम्-न चेत्प्रत्ययान्तं संज्ञेति।
अद्ध्यर्धशब्दः संख्यैव, किमर्थं भेदेनोपादीयते? ज्ञापकार्थम् क्कचिदस्य संख्याकार्यं न भवति, संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्(5-4-17/2085) इति।।

</5-1-28>
विभाषा कार्षापणसहस्राभ्याम् ।। <5-1-29> ।।
अध्यर्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। पूर्वेण लुकि नित्ये प्राप्ते विकल्प्यते। अध्यर्धकार्षापणम्, अध्यर्धकार्षापणिकम्। द्विकार्षापणम्, द्विकार्षापणिकम्। औपसंख्यानिकस्य टिठनो लुक्। अलुक्पक्षे च प्रतिरादेशो विकल्पितः। अध्यर्धप्रतिकम्। द्विप्रतिकम्। त्रिप्रतिकम्। सहस्रात्--अध्यर्धसहस्रम्, अध्यर्धसाहस्रम्। द्विसहस्रम्, द्विसाहस्रम्। अलुक्पक्षे संख्यायाः संवत्सरसंख्यस्य च(7-3-15) इत्युत्तरपदवृद्धिः।

- सुवर्णशतमानयोरुपसंख्यानम् *(म.भा.2-349)। अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम्। द्विसुवर्णम्, द्विसौवर्णिकम्। अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम्। परिमाणान्तस्य(7-3-17/1683) इत्युत्तरपदवृद्धिः ।।

</5-1-29>
द्वित्रिपूर्वान्निष्कात् ।। <5-1-30> ।।
`द्विगोः इत्येव। द्वित्रिपूर्वाद्द्विगोर्निष्कान्तातार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विनिष्कम्। द्विनैष्किकम्। त्रिनिष्कम्। त्रिनैष्किकम्।

- बहुपूर्वाच्चेति वक्तव्यम् *(2-349)। बहुनिष्कम्, बहुनैष्किकम्। परिमाणान्तस्य(7-3-17/1683) इत्युत्तरपदवृद्धिः।।

</5-1-30>
बिस्ताच्च ।। <5-1-31> ।।
`द्वित्रिपूर्वात् इति चकारेणानुकृष्यते। द्वित्रिपूर्वाद्बिस्तान्ताद् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विबिस्तम्, द्विबैस्तिकम्। त्रिबिस्तम्, त्रिबैस्तिकम्। बहुबिस्तम्, बहुबैस्तिकम्।।

</5-1-31>
विंशतिकात्खः ।। <5-1-32> ।।
अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः प्रत्ययो भवति। अध्यर्धविंशतिकीनम्। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। विधानसामर्थ्यादस्य लुग्न भवति ।।

</5-1-32>
खार्या ईकन् । <5-1-33> ।।
`अध्यर्धपूर्वाद् द्विगोः इत्येव। अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च कारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति। अध्यर्धखारीकम्। द्विखारीकम्।

- केवलायाश्चेति वक्तव्यम् *(म.भा.2-349)। खारीकम्।

- काकिण्याश्चोपसंख्यानम् *(म.भा.2-350)। अध्यर्धकाकिणीकम्। द्विकाकिणीकम्। त्रिकाकिणीकम् ।।
- केवलायाश्च *(म.भा.2-350)। काकिणीकम् ।।

</5-1-33>
पणपादमाषशताद्यत् ।। <5-1-34> ।।
`अध्यर्धपूर्वाद् द्विगोः इत्येव। अध्यर्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्तादार्हीयेष्वर्थेषु यत् प्रत्ययो भवति। अध्यर्धपण्यम्, द्विपण्यम्, त्रिपण्यम्। पाद-अध्यर्धपाद्यम्, द्विपाद्यम्, त्रिपाद्यम्। पद्भावो न भवति-पद्यत्यतदर्थे(6-3-53/991) इति; प्राण्यङ्गस्य(6-3-52/990) स इष्यते, इदं तु परिमाणम्। माष-अध्यर्धमाष्यम्, द्विमाष्यम्, त्रिमाष्यम्। शत-अध्यर्धशत्यम्, द्विशत्यम्, त्रिशत्यम् ।।

</5-1-34>
शाणाद्वा ।। <5-1-35> ।।
`अध्यर्धपूर्वाद् द्विगोः इत्येव। शाणशब्दादध्यर्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति। ठञोऽपवादः। पक्षे सोऽपि भवति, तस्य च लुक्। अध्यर्धशाण्यम्। अध्यर्धशाणम्। द्विशाण्यम्। द्विशाणम्। त्रिशाण्यम्। त्रिशाणम्।

- शताच्चेति वक्तव्यम् * । अध्यर्धशत्यम्, अध्यर्धशतम्। दिशत्यम्, द्विशतम्। त्रिशत्यम्, त्रिशतम् ।।

</5-1-35>
द्वित्रिपूर्वादण्च ।। <5-1-36> ।।
शाणाद्वा(5-1-35/1700) इत्येव। द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकगाराद्यच्च वा। तेन त्रैरूप्यं सम्पद्यते-द्वैशाणम्, द्विशाणम्, द्विशाण्यम्। त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम्। परिमाणान्तस्यासंज्ञाशाणयोः(7-3-17/1683) इति पर्युदासादादिवृद्धिरेव भवति।।

</5-1-36>
तेन क्रीतम् ।। <5-1-37> ।।
ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः, तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते। `तेन इति तृतीयासमर्थात् `क्रीतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतं साप्ततिकम्। आशीतिकम्। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। शत्यम्। शतिकम्। द्विकम्। त्रिकम्।

`तेन इति मूल्यात्करणे तृतीया समर्थविभक्तिः। अन्यत्रानभिधानान्न भवति--देवदत्तेन क्रीतम्, पाणिना क्रीतमिति।
द्विवचनबहुवचनान्तात्प्रत्ययो न भविति--प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतमिति; अनभिधानादेव।
अत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति, तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति--द्वाभ्यां क्रीतं द्विकम्, त्रिकम्, पञ्चकम्। तथा--मुदगैः क्रीतं मौद्गिकम्, माषिकम्; न ह्येकेन मुद्गेन क्रयः संभवति (म.भा.2-350)।।

</5-1-37>
तस्य निमिचं संयोगोत्पातौ ।। <5-1-38> ।।
`तस्य इति षष्ठीसमर्थात् `निमित्तम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत्स भवति उत्पातो वा। संयोग=सम्बन्धः प्राणिनां शुभाशुभसूचकः। महाभूतपरिणामः=उत्पातः। शतस्य निमित्तं धनपतिना संयोगः शत्यः शतिकः। साहस्रः। उत्पातः खल्वपि--शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम् शत्यम्, शतिकम्। साहस्रम्।

- तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् *(म.भा.2-351)। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्।
- सन्निपाताच्चेति वक्तव्यम् *(म.भा.2-351)। सान्निपातिकम् ।

</5-1-38>
गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ।। <5-1-39> ।।
गोशब्दाद् द्व्यचश्च प्रातिपदिकात्संख्यापरिमाणाश्वादिविवर्जितायत् प्रत्ययो भवति तस्य निमित्तं संयोगोत्पातौ(5-1-38/1704) इत्येतस्मिन्नर्थे। ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः खल्वपि--धन्यम्। स्वर्ग्यम्। यशस्यम्। आयुष्यम्। असंख्यापरिमाणाश्वादेरिति किम्? पञ्चानां निमित्तं पञ्चकम्। सप्तकम्। अष्टकम्। परिमाण---प्रास्थिकम्। खारीकम्। अश्वादि---आश्विकः।

- ब्रह्मवर्चसादुपसंख्यानम् *(म.भा.2-351)। ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यम्।

अश्व। अश्मन्। गण। ऊर्णा। उमा। वसु। वर्ष। भङ्ग। अश्वादिः।।

</5-1-39>
पुत्राच्छ च ।। <5-1-40> ।।
पुत्रशब्दाच्छः प्रत्ययो भवति चकाराद्यच्च तस्य निमित्तं संयोगोत्पातौ(5-1-38/1704) इत्येतस्मिन्विषये। द्व्यचः(5-1-39/1705) इति नित्ये यति प्राप्ते वचनम्। पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयम्। पुत्र्यम् ।।

</5-1-40>
सर्वभूमिपृथिवीभ्यामणञौ ।। <5-1-41> ।।
सर्वभूमि-पृथिवी-शब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः तस्य निमित्तं संयोगोत्पातौ(5-1-38/1704) इत्येतस्मिन्विषये। ठकोऽपवादौ। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। पार्थिवः। सर्वभूमेरनुशतिकादि(7-3-20/1438)पाठादुभयपदवृद्धिः ।।

</5-1-41>
तस्येश्वरः ।। <5-1-42> ।।
`तस्य इति षष्ठीसमर्थाभ्यां सर्वभूमि-पृथिवी-शब्दाभ्यामणञौ प्रत्ययौ भवतः `ईश्वरः इत्येतस्मिन्विषये। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः। षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये; अन्यथा संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं सम्भाव्येत ।।

</5-1-42>
तत्र विदित इति च ।। <5-1-43> ।।
`तत्र इति सप्तमीसमर्थाभ्यां सर्वभूमि-पृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः `विदितः इत्येतस्मिन्नर्थे। विदितः=ज्ञातः, प्रकाशित इत्यर्थः। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः ।।

</5-1-43>
लोकसर्वलोकाट्ठञ् ।। <5-1-44> ।।
लोक-सर्वलोक-शब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां `विदितः इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति। लोके विदितः लौकिकः। सार्वलौकिकः। अनुशतिकादित्वात्(7-3-20/1438) उभयपदवृद्धिः ।।

</5-1-44>
तस्य वापः ।। <5-1-45> ।।
`तस्य इति सप्तमीसमर्थाद् `वापः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। उप्यतेऽस्मिन्वापः, क्षेत्रमुच्यते। प्रस्थस्य वापः क्षेत्रं प्रास्थिकम्। द्रौणिकम्। खारीकम् ।।

</5-1-45>
पात्रात्ष्ठन् ।। <5-1-46> ।।
पात्रशब्दात्ष्ठन् प्रत्ययो भवति `तस्य वापः इत्येतस्मिन्विषये। ठञोऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। पात्रशब्दः परिमाणवाची। पात्रस्य वापः पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्रभक्तिः ।।

</5-1-46>
तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ।। <5-1-47> ।।
`तत् इति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं वृद्ध्यादि चेत्तद्दीयते। `दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसम्बध्यते। तत्र यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भागः=आयः। पटादीनामुपादानमूलादतिरिक्तं द्रव्यं=लाभः। रक्षानिर्वेशो राजभागः=शुल्कः। उत्कोचः=उपदा। पञ्चास्मिन्वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः। सप्तकः। शत्यः। शतिकः। साहस्रः।
चतुर्थ्यर्थ उपसंख्यानम्*(म.भा.2-351)।। पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चको देवदत्तः।
सिद्धं त्वधिकरणत्वेन विवक्षितत्वात्। सममब्राह्मणे दानमिति यथा।।

</5-1-47>

पूरणार्धाट्ठन् ।। <5-1-48> ।।
पूरणवाचिनः शब्दादर्धशब्दाच्च ठन् प्रत्ययो भवति, तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते(5-1-47/1713) इत्येतस्मिन्नर्थे। यथायथं ठक्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः। तृतीयिकः। पञ्चमिकः। सप्तमिकः। अर्धशब्दो रूपकार्धस्य रूढिः।।

</5-1-48>
भागाद्यच्च ।। <5-1-49> ।।
भागशब्दाद्यत् प्रत्ययो भवति, चकाराट्ठँश्च, तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते(5-1-47/1713) इत्येतस्मिन्नर्थे। ठञोऽपवादः। भागो वृद्ध्यादिरस्मिन्दीयते भाग्यम्, भागिकं शतम्। भाग्या, भागिका विंशतिः। भागशब्दोऽपि रुपकार्धस्य वाचकः।।

</5-1-49>
तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।। <5-1-50> ।।
`तत् इति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। प्रकृतिविशेषणम्--`भाराद्वंशादिभ्यः इति, वंशादिभ्यः परो यो भारशब्दस्तदन्तात्प्रातिपदिकादिति। वंशभारं हरति वहत्यावहति वा वंशभारिकः। कौटजभारिकः। बाल्वजभारिकः।
भारादिति किम्? वंशं हरति। वंशादिभ्य हति किम्? व्रीहिभारं हरति।
अपरा वृत्तिः---भाराद्वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः। भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान्वंशान् हरति वांशिकः। कौटजिकः। बाल्वजिकः। भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? भारभूतान् व्रीहीन् वहति।
सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः, तदुभयमपि ग्राह्यम्। हरति देशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयतीत्यर्थः। आवहति उत्पादयतीत्यर्थः।
वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु । खट्वा। वंशादिः।।

</5-1-50>
वस्नद्रव्याभ्यां ठन्कनौ ।। <5-1-51> ।।
वस्न-द्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन्, कन्--इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा वस्निकः। द्रव्यकः ।।

</5-1-51>
संभवत्यवहरति पचति ।। <5-1-52> ।।
`तत् इति द्वितीया समर्थविभक्तिरनुवर्तते। तदिति द्वितीयासमर्थात्सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्राधेयस्य प्रमाणानतिरेकः=सम्भवः। उपसंहरणम्=अवहारः। विक्लेदनम्=पाकः। प्रस्थं संभवति अवहरति पचति वा प्रास्थिकः। कौडविकः। खारीकः।
ननु च पाके च सम्भवोऽस्ति? नास्त्यत्र नियोगः---प्रस्थं पचति ब्राह्मणी प्रास्थिकी।

- तत्पचतीति द्रोणादण्च *(म.भा.2-352)। द्रोणं पचति द्रौणी। द्रौणिकी ।।

</5-1-52>
आढकाचितपात्रात्खोऽन्यतरस्याम् ।। <5-1-53> ।।
आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्दर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। पक्षे सोऽपि भवति। आढकं संभवत्यवहरति पचति वा आढकीना, आढकिकी। आचितीना, आचितिकी। पात्रीणा, पात्रिकी।।

</5-1-53>
द्विगोष्ठँस्च ।। <5-1-54> ।।
`आढकाचितपात्रात् इत्येव। आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति चकारात्खः, अन्यतरस्याम्। विधानसामर्थ्यादनयोर्लुग्न भवति। ठञ्स्तु पक्षेऽनुज्ञातस्य अध्यर्धपूर्वद्विगोः(5-1-28/1693) इति लुग्भवत्येव। नकारः स्वरार्थः। षकारो ङीषर्थः। द्व्याढकिकी, द्व्याढकीना, द्व्याढकी। द्व्याचिकिकी, द्व्याचितीना, द्व्याचिता। अपरिमाणबिस्ताचित(4-1-22/480) इति ङीषः प्रतिषेधः। द्विपात्रिकी, द्विपात्रीणा, द्विपात्री।।

</5-1-54>
कुलिजाल्लुक्खौ च ।। <5-1-55> ।।
`द्विगोः इत्येव। कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः। चकारात्ष्ठँश्च। `अन्यतरस्याम् ग्रहणानुवृत्त्या लुगपि विकल्प्यते, ठञः पक्षे श्रवणं भवति। तेन चातूरूप्यं संपद्यते--द्वेकुलिजे संभवत्यवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजा, द्वैकुलिजिकी।।

परिमाणान्तस्यासंज्ञाशाणयोः(7-3-17/1683) इत्यत्र कुलिजग्रहणमपीष्यते, तेनोत्तरपदवृद्धिरपि न भवति।।

</5-1-55>
सोऽस्यांशवस्नभृतयः ।। <5-1-56> ।।
`स इति प्रथमासमर्थात् `अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति। अंशः=भागः। वस्नम्=मूल्यम्। भृतिः=वेतनम्। पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः। सप्तकः। साहस्रः ।।

</5-1-56>
तदस्य परिमाणम् ।। <5-1-57> ।।
`तत् इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं परिमाणं चेत्तद्भवति। प्रस्थः परिमाणमस्य प्रास्थिको राशिः। खारशतिकः। शत्यः, शतिकः। साहस्रः। द्रौणिकः। कौडविकः। वर्षशतं परिमाणमस्य वार्षशतिकः। वार्षसहस्रिकः। षष्टिर्जीवितपरिमाणमस्येति षाष्टिकः। साप्ततिकः।

समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेवानुवर्त्तिष्यते, किमर्थं पुनरनयोरुपादानम् ? पुनर्विधानार्थम्। द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः। द्विसाप्ततिकः। पुनर्विधानसामर्थ्याद् अध्यर्धपूर्वद्विगोर्लुक्(5-1-28/1693) न भवति।।

</5-1-57>
संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ।। <5-1-58> ।।
तदस्य परिमाणम्(5-1-57/1723) इति वर्त्तते। संख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात्प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। `संज्ञासङ्घसूत्राध्ययनेषु इति प्रत्ययार्थविशेषणम्।
तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः-पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः।
सङ्घ---पञ्च परिमाणमस्य, पञ्चकः सङ्घः। अष्टकः।
सूत्र-अष्टावध्यायाः परिममाणमस्य सूत्रस्य अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। त्रिकं काशकृत्स्नम्। ननु चाध्यायसमूहः सूत्रसङ्घ एव भवति? नैददस्ति; प्राणिसमूहे सङ्घशब्दो रूढः।
अध्ययन--पञ्चकोऽधीतः। सप्तकोऽधीतः। अष्टकः। नवकः।
अधीतिः=अध्ययनम्, तस्य संख्यापरिमाणं पञ्चावृत्तयः=पञ्च वाराः, पञ्चरूपाण्यस्याध्ययनस्य पञ्चकमध्ययनम्।

- स्तोमे डविधिः पञ्चदशाद्यर्थः *(म.भा.2-354)। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशः। एकविंशः।
- शन्शतोर्डिनिश्छनदसि *(म.भा.2-354)। `पञ्चदशिनोऽर्द्धमासाः(तै.सं.7-5-201)। `त्रिंशिनो मासाः(तै.सं.7-5-201)।
- विंशतेश्चेति वक्तव्यम् *। विंशिनोऽङ्गिरसः ।।

</5-1-58>
पंक्तिविशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।। <5-1-59> ।।
तदस्य परिमाणम्(5-1-47/1723) इति वर्त्तते। पंक्त्यादयः शब्दा निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। पञ्चानां टिलोपः, तिः प्रत्ययः। पञ्च परिमाणमस्य पंक्तिश्छन्दः। द्वयोर्द्दशतोर्विन्भावः शतिश्च प्रत्ययः-द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः। त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः---त्रयो दशतः परिमाणमस्य त्रिंशत्। चतुर्णां दशतां चत्वारिन्भावः शच्च प्रत्ययः---चत्वारो दशतः परिमाणमस्य चत्वारिंशत्। पञ्चानां दशतां पञ्चाभावः शच्च प्रत्ययः---पञ्च दशतः परिमाणमस्य पञ्चाशत्। षण्णां दशतां षड्भावः, तिः प्रत्ययः, अपदत्वं च--षड् दशतः परिमाणमस्य षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च-सप्तदशतः परिमाणमस्य सप्ततिः। अष्टानां दशतामशीभावस्तिः प्रत्ययश्च--अष्टौ दशतः परिमाणमस्य अशीतिः। नवानां दशतां नवभावस्तिः प्रत्ययश्च--तवदशतः परिमाणमस्य नवतिः। दशानां शभावः तश्च प्रत्ययः---दश दशतः परिमाणमस्य सङ्घस्य शतम्।
विंशत्यादयो गुणशब्दाः, ते यथाकथञ्चिद्व्युत्पाद्याः। नात्रावयवार्थेऽभिनिवेष्टव्यम्। तथा हि- पङ्तिः इति क्रमसंनिवेशेऽपि वर्तते, ब्राह्मणपङ्तिः,पिपीलिकापङ्तिरिति। न चात्रावयवार्थः कश्चिदस्ति। या चैषां विषयभेदेन
गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसंख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव।
सहस्रादयोऽप्येवञ्जातीयकास्तद्वदेव द्रष्टव्याः। उदाहरणमात्रमेतदिति ।।

</5-1-59>
पञ्चद्दशतौ वर्गे वा ।। <5-1-60> ।।
`पञ्चत्, `दशत्-इत्येतौ वा निपात्येते `तदस्य परिमाणम् इत्येतस्मिन्विषये वर्गेऽभिधेये। संख्यायाः(5-1-58/1724) इति कनि प्राप्ते डतिर्निपात्यते। वावचनात्पक्षे सोऽपि भवति। पञ्च परिमाणमस्य पञ्चद् वर्गः, दशद्वर्गः। पञ्चको वर्गः, दशको वर्गः ।।

</5-1-60>
सप्तनोऽञ् छन्दसि ।। <5-1-61> ।।
`वर्गे इत्येव। `तदस्य परिमाणम् इति च। सप्तन्-शब्दाच्छन्दसि विषयेऽञ् प्रत्ययो भवति वर्गेऽभिधेये। `सप्त साप्तान्यसृजन्(तै.सं.5-4-7-5) ।।

</5-1-61>
त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।। <5-1-62> ।।
`तदस्य परिमाणम् इत्येव। `वर्गे इति निवृत्तम्। त्रिंशच्चत्वारिंशच्छब्दाभ्यां संज्ञायां विषये डण्प्रत्ययो भवति `तदस्य परिमाणम् इत्येतस्मिन्विषये ब्राह्मणेऽऽभिधेये। अभिधेयसप्तम्येषा, न विषयसप्तमी। तेन मन्त्रभाषयोरपि भवति। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि। कानिचिदेव ब्राह्मणान्युच्यन्ते ।।

</5-1-62>
तदर्हति ।। <5-1-63> ।।
`तत इति द्वितीयासमर्थात् `अर्हति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। वास्त्रयुग्मिकः(5-1-18/1681)। शत्यः। शतिकः(5-1-21/1686)। साहस्रः(5-1-27/1692) ।।

</5-1-63>
छेदादिभ्यो नित्यम् ।। <5-1-64> ।।
नित्यग्रहणं प्रत्ययार्थविशेषणम्। छेदादिभ्यो द्वितीयासमर्थेभ्यो `नित्यमर्हति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। छेदं नित्यमर्हति छैदिकः। भैदिकः।
छेद। भेद। द्रोह। दोह। वर्त्त। कर्ष। सम्प्रयोग। विप्रयोग। प्रेषण। सम्प्रश्न। विप्रकर्ष। * विराग विरङ्गं च *(ग.सू.110) (वैरङ्गिकः।) छेदादिः ।।

</5-1-64>
शीर्षच्छेदाद्यच्च ।। <5-1-65> ।।
शीर्षच्छेदशब्दाद् द्वितीयासमर्थात् `नित्यमर्हति इत्यस्मिन्नर्थे यत्प्रत्ययो भवति, चकाराद्यथाविहितञ्च। शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते ।।

</5-1-65>
दण्डादिभ्यो यः ।। <5-1-66> ।।
`नित्यम् इति निवृत्तम्। दण्डादिभ्यो द्वितीयासमर्थेभ्यः `अर्हति इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। ठकोऽपवादः। दण्डमर्हति दण्ड्यः। मुसल्यः।
दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेघा। मेघ। युग। उदक। वध। गुहा। भागा। इभ। दण्डादिः ।।

</5-1-66>
छन्दसि च ।। <5-1-67> ।।
प्रातिपदिकमात्राच्छन्दसि विषये `तदर्हति इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। ठञादीनामपवादः। उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः ।।

</5-1-67>
पात्राद् घँश्च ।। <5-1-68> ।।
पात्रशब्दाद् घन् प्रत्ययो भवति, चकाराद्यच्च, `तदर्हति इत्येतस्मिन्नर्थे। ठक्ठञोरपवादः। पात्रं परिमाणमप्यस्ति। पात्रमर्हति पात्रियः। पात्र्यः ।।

</5-1-68>
कडङ्गरदक्षिणाच्छ च ।। <5-1-69> ।।
कडङ्गर-दक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद्यच्च `तदर्हति इत्येतस्मिन्विषये। ठकोऽपवादः। कडङ्गरमर्हति कडङ्गरीयो गौः। कडङ्गर्यः। दक्षिणामर्हति दक्षिणीयो भिक्षुः। दक्षिण्यो ब्राह्मणः।
दक्षिणशब्दस्य अल्पाच्तरस्य पूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति ।।

</5-1-69>
स्थालीबिलात् ।। <5-1-70> ।।
छयतावनुवर्त्तेते। स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः `तदर्हति इत्येतस्भिन्नर्थे। ठकोऽपवादौ। स्थालीबिलमर्हन्ति

स्थालीबिलीयास्तण्डुलाः। स्थालीबिल्याः। पाकयोग्या इत्यर्थः ।।

</5-1-70>
यज्ञर्त्विग्भ्यां घखञौ ।। <5-1-71> ।।
यज्ञशब्दाद, ऋत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः
`तदर्हिति इत्येतस्मिन्विषये। ठकोऽपवादः। यज्ञियो ब्राह्मणः। आर्त्विजीनो ब्राह्मणः।

- यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् *(म.भा.2-357)। यज्ञकर्मार्हति यज्ञियो देशः। ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राम्हणकुलम्।

आर्हीयाणां ठगदीनां पूर्णोऽवधिः। अतः परं प्राग्वतीयष्ठञेव भवति ।।

</5-1-71>
पारायणतुरायणचान्द्रायणं वर्तयति ।। <5-1-72> ।।
समर्थविभक्तिरनुवर्तते। `अर्हति इति निवृत्तम्। पारायणादिभ्यो द्वितीयासमर्थेभ्यः `वर्त्तयति इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति। पारायणं वर्त्तयत्यधीते पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी ।।

</5-1-72>
संशयमापन्नः ।। <5-1-73> ।।
संशयशब्दाद् द्विदीयासमर्थाद् `आपन्नः इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः ।।

</5-1-73>
योजनं गच्छति ।। <5-1-74> ।।
योजनशब्दाद् द्वितीयासमर्थाद् `गच्छति इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः।।

- क्रोशशत-योजनशतयोरुपसंख्यानम् *(म.भा.2-358)। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः।

ततोऽभिगमनमर्हतीति च क्रोशशत-योजनशतयोरुपसंख्यानम् *(म.भा.2-358)
क्रोशशतादभिगमनमर्हिति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः ।।

</5-1-74>
पथः ष्कन् ।। <5-1-75> ।।
पथिन्शब्दाद् द्वितीयासमर्थाद् `गच्छति इत्येतस्मिन्नर्थे ष्कन्प्रत्ययो भवति। नकारः स्वरार्थः। षकारो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी।।

</5-1-75>
पन्थो ण नित्यम् ।। <5-1-76> ।।
नित्यग्रहणं प्रत्ययार्थविशेषणम्। पथः पन्थ इत्ययमादेशो भवति भवति, णश्च प्रत्ययः, `नित्यं गच्छति इत्येतस्मिन्विषये। पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते।
नित्यमिति किम्? पथिकः ।।

</5-1-76>
उत्तरपथेनाहृतं च ।। <5-1-77> ।।
निर्देशादेव समर्थविभक्तिः उत्तरपथशब्दातृतीयासमर्थाद् `आहृतम् इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति। चकारः प्रत्ययार्थसमुच्चये, गच्छतीति च। अत्रापि तृतीयैव समर्थविभक्तिः। उत्तरपथेनाहृतम् औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः।

- आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् *(?Bम.भा.2-358)।

वारिपथेनाहृतं वारिपथिकम्। वारिपथेन गच्छति वारिपथिकः।
जङ्गलपथेनाहृतं जाङ्गलपथिकम्। जङ्लपथेन गच्छति जाङ्गलपथिकः। स्थलपथेनाहतं स्थालपथिकम्। स्थलपथेन गच्छति स्थालपथिकः। कान्तारपथेनाहृतं कान्तारपथिकम्। कान्तारपथेन गच्छति कान्तारपथिकः।

- अजपथशंकुपथाभ्यां चोपसंख्यानम् *(म.भा.2-359)। अजपथेनाहृतं गच्छति वा आजपथिकः। शंकुपथेनाहृतं गच्छति वा शांकुपथिकः।
- मधुकमरिचयोरण् स्थलात् *(म.भा.2-359)। स्थलपथेनाहृतं स्थालपथं मधुकम्। स्थालपथं मरिचम् ।।

</5-1-77>
कालात् ।। <5-1-78> ।।
`कालात् इत्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः कालादित्येवं वक्ष्यति--तेन निर्वृत्तम्(5-1-79/1743)। मासेन निर्वृत्तं मासिकम्। सांवत्सरिकम्।
`कालात् इत्यधिकारः व्युष्टादिभ्योऽण्(5-1-97/1761) इति यावत्।।

</5-1-78>
तेन निर्वृत्तम् ।। <5-1-79> ।।
`तेन इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् `निर्वृत्तम् इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। अह्ना निर्वृत्तम् आह्निकम्। आर्द्धमासिकम्। सांवत्सरिकम् ।।

</5-1-79>
तमधीष्टो भृतो भूतो भावी ।। <5-1-80> ।।
`तम् इति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् `अधीष्टो भृतो भूतो वा भावी इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अधीष्टः=सत्कृत्य व्यापारितः। भृतः=वेतनेन क्रीतः। भूतः=स्वसत्तया व्याप्तकालः। भावी=तादृश एवानागतः। कालाध्वनोरत्यन्तसंयोगे(2-3-5/558) इति द्वितीया। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः।
ननु चाध्येषणं भरणं च मूहूर्तं क्रियते, तेन कथं मासो व्याप्यते? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते ।।

</5-1-80>
मासाद्वयसि यत्खञौ ।। <5-1-81> ।।
मासशब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः। ठञोऽपवादः। अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् `भूतः इत्येवाभिसम्बध्यते। मासं भूतो मास्यः , मासीनः।
वयसीति किम्? मासिकम् ।।

</5-1-81>
द्विगोर्यप् ।। <5-1-82> ।।
`मासाद्वयसि इति वर्तते। मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये। द्वौ मासौ भूतः द्विमास्यः। त्रिमास्यः ।।

</5-1-82>
षण्मासाण्ण्यच्च ।। <5-1-83> ।।
`वयसि इत्येव। षण्मासशब्दाद्वयस्यभिधेये ण्यत्प्रत्ययो भवति, यप् च। औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः। स्वरितत्वाच्चानन्तरोऽनुवर्तिष्यते। तेन त्रैरूप्यं भवति-षाण्मास्यः, षण्मास्यः, षाण्मासिकः ।।

</5-1-83>
अवयसि ठँश्च ।। <5-1-84> ।।
षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति। चकारेणानन्तरस्य ण्यस्य समुच्चयः क्रियते। षण्मासिको रोगः। षाण्मास्यः ।।

</5-1-84>
समायाः खः ।। <5-1-85> ।
अधीष्टादयश्चत्वारोऽर्था अनुवर्तन्ते। समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। समामधीष्टो भृतो भूतो भावी वा समीनः।
केचित्तु तेन निर्वृत्तम्(5-1-79/1743) इति सर्वत्रानुवर्तयन्ति। समया निर्वृत्तः समीनः ।।

</5-1-85>
द्विगोर्वा ।। <5-1-86> ।।
समायाः खः(5-1-85/1749) इत्येव। समाशब्दान्ताद् द्विगोर्निवृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति। पूर्वेण नित्यः प्राप्तो विकल्प्यते। `प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि(7-3-17/1683) इति प्राप्तिरस्त्येव। खेन मुक्ते पक्षे ठञपि भवति। द्विसमीनः, द्वैसमिकः।

त्रिसमीनः, त्रैसमिकः ।।

</5-1-86>
रात्र्यहस्संवत्सराच्च ।। <5-1-87> ।।
`द्विगोः इत्येव। रात्रि, अहः, संवत्सर-इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः , द्वैरात्रिकः। त्रिरात्रोणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैयह्निकः। द्विसंवत्सरीणः, द्विसांवत्सरिकः। त्रिसंवत्सरीणः, त्रिसांवत्सरिकः। `संख्यायाः संवत्सरसंख्यस्य च(7-3-15/1752) इत्युत्तरपदवृद्धिः ।।

</5-1-87>
वर्षाल्लुक् च ।। <5-1-88>।।
`द्विगोः इत्येव। वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। पक्षे ठञ्। तयोश्च वा लुग्भवति। एवं त्रीणि रूपाणि भवन्ति-द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः; त्रिवर्षः। वर्षस्याभविष्यति(7-3-16/1754) इत्युत्तरपदवृद्धिः। भाविनि तु त्रैवर्षिकः ।।

</5-1-88>
चित्तवति नित्यम् ।। <5-1-89> ।।
चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्तांद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य नित्यं लुग्भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः।
चित्तवतीति किम्? द्विवर्षिणो व्याधिः ।।

</5-1-89>
षष्टिकाः षष्टिरात्रेण पच्यन्ते ।। <5-1-90> ।।
षष्टिकशब्दो निपात्यते। बहुवचनमतन्त्रम्। षष्टिरात्रशब्दात्तृतीयासमर्थात्कन् प्रत्ययो निपात्यते `पच्यन्ते इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञैषा धान्यविशेषस्य। तेन मुद्गादिष्वतिप्रसङ्गो न भवति ।।

</5-1-90>
वत्सरान्ताच्छश्छन्दसि ।। <5-1-91> ।।
वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छःप्रत्ययो भवति। ठञोऽपवादः। इद्वत्सरीयः, `इदावत्सरीयः(काठ.सं.13-15-71) ।।

</5-1-91>
संपरिपूर्वात्ख च ।। <5-1-92> ।।
संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच्छश्च।
`संवत्सरीणः(तै.सं.4-3-13-4), `परिवत्सरीणः(ऋ.7-103-8)। `संवत्सरीयः(काठ.सं.13-15-71)। `परिवत्सरीयः(काठ.सं.13-15-71) ।।

</5-1-92>
तेन परिजय्यलभ्यकार्यसुकरम् ।। <5-1-93> ।।
`तेन इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् `परिजय्य, लभ्य, कार्य, सुकर
इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासेन परिजय्यः, शक्यते जेतुं मासिको व्याधिः। सांवत्सरिकः। मासेन लभ्यो मासिकः पटः। मासेन कार्यं मासिकं चान्द्रायणम्। मासेन सुकरो मासिकः प्रासादः ।।

</5-1-93>
तदस्य ब्रह्मचर्यम् ।। <5-1-94> ।।
`तत् इति द्वितीया समर्थविभक्तिः, सा चात्यन्तसंयोगे। अस्येति प्रत्ययार्थः। `ब्रह्मचर्यम् इति द्वाभ्यामपि सम्बध्यते। कालस्य व्यापकम्, प्रत्ययार्थस्य च स्वमिति। तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् `अस्य इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, ब्रह्मचर्यं चेद् गम्यते। मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी। आर्द्धमासिकः। सांवत्सरिकः।
अपरा वृत्तिः---
तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। आर्धमासिकम्। सांवत्सरिकम्।
पूर्वत्र ब्रह्मचारी प्रत्ययार्तः, उत्तरत्र ब्रह्मचर्यमेव। उभयमपि प्रमाणमुभयथा सूत्रप्रणयनात्।

- महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम् *(म.भा.2-360)। माहानामिकम्। गौदानिकम्। आदित्यव्रतिकम्।

- तत्चरतीति च *(म.भा.2-360)। महानाम्न्य ऋचः, तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति माहानामिकः। आदित्यव्रतिकः, गौदानिकः। `भस्याढे(6-3-35/836 वा.) इति पुंवद्भावेन ङीपि निवृत्ते नस्तद्धिते(6-1-144/679) इति टिलोपः।

- अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः *(म.भा.2-360)। अवान्तरदीक्षां चरति आवान्तरदीक्षी। तिलव्रती।
- अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः *(म.भा.2-360)। अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति, अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी।
- चातुर्मास्यानां यलोपश्च ड्वुँश्च डिनिश्च वक्तव्यः *(म.भा.2-360)। चातुर्मास्यानि चरति चातुर्मासकः। चातुर्मासी ।।
- चतुर्मासाण्ण्यो यज्ञे तत्र भवे *(म.भा.2-360)। चतुर्षु मासेषु भवानि चातुर्मास्यानि ।।
- संज्ञायामण्वक्तव्यः * (म.भा.2-360)। चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी। आषाढी। कार्तिकी। फाल्गुनी ।।

</5-1-94>
तस्य च दक्षिणा यज्ञाख्येभ्यः ।। <5-1-95> ।।
`तस्य इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यः `दक्षिणा इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी।
आख्याग्रहणमकालादपि यज्ञवाचिनो यथा स्यादिति; इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन्। `प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि(7-3-17/1683 वा.) इति कालाधिकरेऽपि द्वादशाहादिष्वस्ति प्राप्तिः ।।

</5-1-95>
तत्र च दीयते कार्यं भववत् ।। <5-1-96> ।।
`तत्र इति सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद् दीयते, कार्यम्--इत्येतयोरर्थयोर्भववत्प्रत्ययो भवति। यथा--मासे भवं मासिकम्। सांवत्सरिकम्। प्रावृषेण्यम्। वासन्तिकम्, वासन्तम्। हैमनम्। हेमन्तम्। हैमन्तिकम्। शरदम्। वतिः सर्वसादृश्यार्थः।
योगविभागश्चात्र कर्तव्यः---`तत्र च दीयते, `यज्ञाख्येभ्यः इति। आग्निष्टोमिकं भक्तम्। राजसूयिकम्। वाजपेयिकम्।
कालाधिकारस्य पूर्णोऽवधिः। अतः परं सामान्येन प्रत्ययविधानम्।

</5-1-96>
व्युष्टादिभ्योऽण् ।। <5-1-97> ।।
`तत्र इति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते, कार्यम्--इत्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम् ।।

- अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम् *(म.भा.2-362) आग्निपदम्। पैलुमूलम्। किं वक्तव्यम्? वक्तव्यम्; अत्रैव ते पठितव्याः।

व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। सम्भ्रम। आस्तरण। संग्राम। संघात। अग्निपद। पीलूमूल। प्रवास। उपसंक्रमण। व्युष्टादिः ।।

</5-1-97>
तेन यथाकथाचहस्ताभ्यां णयतौ ।। <5-1-98> ।।
`दीयते, कार्यम् इति वर्त्तते। तेनेति तृतीयासमर्थाभ्यां यथाकथाच-हस्तशब्दाभ्यां यथासंख्यं णयतौ प्रत्ययौ भवतः। दीयते, कार्यमित्येतयोरर्थयोः प्रत्येकमभिसम्बन्धः, यथासंख्यं नेष्यते। यथाकथाचशब्दोऽव्ययसमुदायोऽनादरेवर्त्तते। तृतीयार्थमात्रं चात्र सम्भवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम् ।।

</5-1-98>
सम्पादिनि ।। <5-1-99> ।।
`तेन इत्येव। तृतीयासमर्थात्सम्पादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः=सम्पत्तिः। आवश्यके णिनिः(3-3-170/3311)। कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखम्। वास्त्रयुगिकं शरीरम्। वस्त्रयुगेण विशेषतः शोभते इत्यर्थः ।।

</5-1-99>
कर्मवेषाद्यत् ।। <5-1-100> ।।
कर्मन्, वेष-शब्दाभ्यां तृतीयासमर्थाभ्यां यत्प्रत्ययो भवति `सम्पादिनि इत्येतस्मिन्विषये। ठञोऽपवादः। कर्मणा सम्पद्यते कर्मण्यं शरीरम्। वेषेण संपद्यते वेष्यो नटः ।।

</5-1-100>
तस्मै प्रभवति सन्तापादिभ्यः ।। <5-1-101> ।।
`तस्मै इति चतुर्थीसमर्थेभ्यः `सन्तापादिभ्यः प्रभवति इत्यस्मिन्विषये ठञ् प्रत्ययो भवति। समर्थः, शक्तः=प्रभवतीत्युच्यते। अलमर्थे चतुर्थी। सन्तापाय प्रभवति सान्तापिकः। सान्नाहिकः।
सन्ताप। संनाह। संग्राम। संयोग। संपराय। संपेष। निष्पेष। निसर्ग। असर्ग। विसर्ग। उपसर्ग। उपवास। प्रवास। संघात। संमोदन। सक्तुमांसौदनाद्विगृहीतादपि ।।

</5-1-101>
योगाद्यच्च ।। <5-1-102> ।।
योगशब्दाद्यत्प्रत्ययो भवति, चकाराद् ठञ् `तस्मै प्रभवति इत्येतस्मिन्विषये। योगाय प्रभवति योग्यः, यौगिकः ।।

</5-1-102>
कर्मण उकञ् ।। <5-1-103> ।।
कर्मन्शब्दादुकञ् प्रत्ययो भवति `तस्मै प्रभवति इत्येतस्मिन्नर्थे। ठञोऽपवादः। कर्मणे प्रभवति कार्मुकं धनुः।
धनुषोऽन्यत्र न भवति, अनभिधानात् ।।

</5-1-103>
समयस्तदस्य प्राप्तम् ।। <5-1-104> ।।
समयशब्दात् तदिति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्राप्तं चेत्तद्भवति। समयः प्राप्तोऽस्य सामयिकं कार्यम्। उपनतकालमित्यर्थः।

</5-1-104>
ऋतोर्ण् ।। <5-1-105> ।।
`तदस्य प्राप्तम् इत्यनुवर्त्तते। ऋतुशब्दात्तदिति प्रथमासमर्थाद् `अस्य इति षष्ठ्यर्थेऽण् प्रत्ययो भवति `तदस्य प्राप्तम् इत्येतस्मिन् विषये। ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम्।

- तदस्य प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम् *। उपवस्ता प्राप्तोऽस्य औपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम् ।।

</5-1-105>
छन्दसि घस् ।। <5-1-106> ।।
ऋतुशब्दाच्छन्दसि विषये घस् प्रत्ययो भवति `तदस्य प्राप्तम् इत्येतस्मिन्विषये। अणोऽपवादः। `अयं ते योनिर्ऋत्वियः(ऋ.3.29.10) ।।

</5-1-106>
कालाद्यत् ।। <5-1-107> ।।
कालशब्दाद्यत्प्रत्ययो भवति `तदस्य प्राप्तम् इत्यस्मिन्विषये। कालः प्राप्तोऽस्य काल्यस्तापः। काल्यं शीतम् ।।

</5-1-107>
प्रकृष्टे ठञ् ।। <5-1-108> ।।
`कालात् इत्येव, `तदस्य इति च। प्राप्तम् इति निवृत्तम्। प्रकर्षेण कालो विशेष्यते। प्रकर्षे वर्तमानात्कालात्प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति। प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम्। कालिकं वैरम्।
ठञ्ग्रहणं विस्पष्टार्थम् ।।

</5-1-108>
प्रयोजनम् ।। <5-1-109> ।।
`तदस्य इत्येव। तदिति प्रथमासमर्थाद् `अस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्रयोजनं चेत्तद्भवति। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। गाङ्गामहिकम् ।।

</5-1-109>

विशाखाषाढादण्मन्थदण्डयोः ।। <5-1-110> ।।
विशाखाषाढाशब्दाभ्यामण् प्रत्ययो भवति `तदस्य प्रयोजनम् इत्येतस्मिन्विषये यथासंख्यं मन्थदण्डयोरभिधेययोः। विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढो दण्डः।

- चूडादिभ्य उपसंख्यानम् * चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम् ।।

</5-1-110>
अनुप्रवचनादिभ्यश्छः ।। <5-1-111> ।।
अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति `तदस्य प्रयोजनम् इत्येतस्मिन्विषये। ठञोऽपवादः। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्। उत्थापनीयम् ।।

- विशिपूरिपतिरुहि प्रकृतेरनात्सपूर्वपदादुपसंख्यानम् *(म.भा.2-362) गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम्। प्रपापूरणीयम्। अश्वप्रपतनीयम्। प्रासादारोहणीयम्।
- स्वर्गादिभ्यो यद्वक्तयः *(म.भा.2-362)। स्वर्गः प्रयोजनमस्य स्वर्ग्यम्। यशस्यम्। आयुष्यम्। काम्यम्। धन्यम्।
- पुण्याहवाचनादिभ्यो लुग्वक्तव्यः *(म.भा.2-362) पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम्। स्वस्तिवाचनम्। शान्तिवाचनम्।

अनुप्रवचन। उत्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन। संवेशन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। आरम्भण। आरोहण। प्ररोहण। अन्वारोहण। अनुप्रवचनादिः ।।

</5-1-111>
समापनात्सपूर्वपदात् ।। <5-1-112> ।।
समापनशब्दात् सपूर्वपदाद् विद्यमानपूर्वपदाच्छः प्रत्ययो भवति `तदस्य प्रयोजनम् इत्येतस्मिन्विषये। ठञोऽपवादः। छन्दःसमापनं प्रयोजनमस्य छन्दःसमापनीयम्। व्याकरणसमापनीयम्।
पदग्रहणं बहुच्पूर्वनिरासार्थम् ।।

</5-1-112>
ऐकागारिकट् चौरे ।। <5-1-113> ।।
`ऐकागारिकट् इति निपात्यते चौरेऽभिधेये। एकागारं प्रयोजनमस्य ऐकागारिकः चौरः। ऐकागारिकी।
किमर्थमिदं निपात्यते, यावता `प्रयोजनम् इत्येव सिद्धष्ठञ्? चौरे नियमार्थं वचनम्। इह मा भूत्--एकागारं प्रयोजनमस्य भिक्षोरिति।
टकारः कार्यावधारणार्थः--ङीबेव भवति, न ञित्स्वर इति।
अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति ।।

</5-1-113>
आकालिकडाद्यन्तवचने ।। <5-1-114> ।।
`आकालिकट् इति निपात्यते आद्यन्तवचने। समानकालशब्दस्याकालशब्द आदेशः। आद्यन्तयोस्चैतद्विशेषणम्।
इकट् प्रत्ययश्च निपात्यते। समानकालावाद्यन्तावस्य आकालिकः स्तनयित्ुः। आकालिकी विद्युत्। जन्मना तुल्यकालविनाशा। उत्पादानन्तरं विनाशिनीत्यर्थः।

- आकालाट् ठँश्च *। चात् ठञ्च। आकालिका विद्युत्। ठञः पूर्णोऽवधिः ।।

</5-1-114>
तेन तुल्यं क्रिया चेद्वतिः ।। <5-1-115> ।।
तेनेति तृतीयासमर्थातुल्यमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति यत्तुल्यंक्रिया चेत्सा भवति। ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवत्। राजवत्।
क्रियाग्रहणं किम् ? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यो गोमान् ।।

</5-1-115>
तत्र तस्येव ।। <5-1-116> ।।
तत्रेति सप्तमीसमर्थात् `तस्य इति षष्ठीसमर्थाच्च इवार्थे वतिः प्रत्ययो भवति। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। पाटलिपुत्रवत्साकेते परिखा। षष्ठीसमर्थात्--देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः। यज्ञदत्तस्येव देवदत्तस्य दन्ताः यज्ञदत्तवत् ।।

</5-1-116>
तदर्हम् ।। <5-1-117> ।।
तदिति द्वितीयासमर्थात् `अर्हम् इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। राजानमर्हति राजवत्पालनम्। ब्राह्मणवत्। ऋषिवत्। क्षत्त्रियवत् ।।

</5-1-117>
उपसर्गाच्छन्दसि धात्वर्थे ।। <5-1-118> ।।
उपसर्गात्ससाधने धात्वर्थे वर्त्तमानात्स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। `यदुद्वतो निवतो यासि वप्सद्(ऋ.10-142-4), `उद्वतानि निगतानि च(म.भा.2-365) ।।

</5-1-118>
तस्य भावस्त्वतलौ ।। <5-1-119> ।।
तस्येति षष्ठीसमर्थाद् `भावः इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः। भवतोऽस्मादभिधानप्रत्ययाविति भावः। शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते। अश्वस्य भावः अश्वत्वम्, अश्वता। गोत्वम्, गोता ।।

</5-1-119>
आ च त्वात् ।। <5-1-120> ।।
ब्रह्मणस्त्वः(5-1-136/1801) इति वक्ष्यति। आ एतस्मात्त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ। वक्ष्यति--पृथ्वादिभ्य इमनिज्वा(5-1-122/1784) इति। प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता। म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता।
अपवादैः सह समावेशार्थं वचनम्। कर्मणि च विधानार्थम् गुणवचनब्राह्मणादिभ्यः कर्मणि च(5-1-124/1788) इति। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। पुंसो भावः पुंस्त्वम्, पुंस्ता, पौस्नम् ।।

</5-1-120>
न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः ।। <5-1-121> ।।
इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात्तत्पुरुषान्न भवन्ति चतुरादीन्वर्जयित्वा। वक्ष्यति--पत्यन्तपुरोहितादिभ्यो यक्(5-1-128/1793) इति। अपतित्वम्, अपतिता। अपटुत्वम्, अपटुता। अरमणीयत्वम्, अरमणीयता।
नञ्पूर्वादिति किम् ? बार्हस्पत्यम्। प्राजाप्रत्यम्। तत्पुरुषादिति किम् ? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम्। आलघवम्। अचतुरादिभ्य इति किम् ? आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आबुध्यम्। आकत्यम्। आरस्यम्। आलस्यम् ।।

</5-1-121>
पृथ्वादिभ्य इमनिज्वा ।। <5-1-122> ।।
`पृथु-इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच्प्रत्ययो भवति वा `तस्य भावः इत्येतस्मिन्नर्थे। वावचनमणादेः समावेशार्थम्। पृथोर्भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम्। तुरिष्ठेमेयस्सु(6-4-154/2008) टेः(6-4-155/1786) इति टिलोपः। र ऋतो हलादेर्लघोः(6-4-161/1785) इति रेफादेशः। त्वतलौ सर्वत्र भवत एव---पृथुत्वम्, पृथुता। मृदुत्वम्, मृदुता।

पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आसु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। चण्ड। बाल। अकिञ्चन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र। पृथ्वादिः ।।

</5-1-122>
वर्णदृढादिभ्यः ष्यञ् च ।। <5-1-123> ।।
वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढदिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारादिमनिच्च, `तस्य भावः इत्येतस्मिन्विषये। शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता। काष्ण्र्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता। दृढादिभ्यः---दार्ढ्यम्, दृढिमा, दृढत्वम्, दृढता।
षकारो ङीषर्थः---औचिती, याथाकामी।
दृढ। परिवृढ। भृश। कृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक।* वेर्यातलाभमतिमनःशारदानाम् *(ग.सू.111)। `समो मतिमनसोर्जवने(ग.सू.112)। दृढादिः ।।

</5-1-123>
गुणवचनब्राह्मणादिभ्यः कर्मणि च ।। <5-1-124> ।।

गुणमुक्तवन्तो गुणवचनाः। गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति। चकाराद् भावे च। कर्मन्शब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणादिभ्यः खल्वपि-ब्राह्मण्यम्। माणव्यम्। आ पादपरिसमाप्तेर्भावकर्माधिकारः। ब्राह्मणादिराकृतिगणः। आदिशब्दः प्रकारवचनः।

- चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम् *(म.भा.2-370)। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैलोक्यम्। त्रैस्वर्यम्। षाडगुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। सौख्यम्।

ब्राह्मण। वाडव। माणव। चोर। मूक। आराधय। विराधय। अपराधय। उपराधय। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। समस्थ। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर।
कुशल। कपि। चपल। अक्षेत्रज्ञ। निपुण। * अर्हतो नुम् च *(ग.सू.113) आर्हन्त्यम् । संवादिन्। संवेशिन्।
बहुभाषिन्। बालिश। दुष्पुरुष। कापुरुष। दायाद। विशसि। धूर्त। राजन्। सम्भाषिन्। शीर्शपातिन्। अधिपति। अलस। पिशाच। पिशुन। विशाल। गणपति। धनपति। नरपति। गडुल। निव। निधान। विष। * सर्ववेदादिभ्यः स्वार्थे *(ग.सू.114)। * चतुर्वेदस्योभयपदवृद्धिश्च *(ग.सू.115)। चातुर्वैद्यम् । ब्राह्मणादिः ।।

</5-1-124>
स्तेनाद्यन्नलोपश्च ।। <5-1-125> ।।
स्तेनशब्दात्षष्ठीसमर्थाद्भावकर्मणोर्यत्प्रत्ययो भवति, नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम्।
`स्तेनात् इति केचिद् योगविभागं कुर्वन्ति। स्तेनात्ष्यञ् भवति-स्तैन्यम्। ततः `यन्नलोपश्च स्तेनादित्येव--स्तेयम् ।।

</5-1-125>
सख्युर्यः ।। <5-1-126> ।।
सखिशब्दाद् यः प्रत्ययो वति भावकर्मणोरर्थयोः। सख्युर्भावः कर्म वा सख्यम्।

- दूतवणिग्भ्यां चेति वक्तव्यम् *। दूत्यम्। वणिज्यम्। कथं वाणिज्यम् ? ब्राह्मणादित्वात् ।।

</5-1-126>
कपिज्ञात्योर्ढक् ।। <5-1-127> ।।
कपि, ज्ञाति-शब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः। कपेर्भावः कर्म वा कापेयम्। ज्ञातेयम् ।
यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते ।।

</5-1-127>
पत्यन्तपुरोहितादिभ्यो यक् ।। <5-1-128> ।।
पत्यन्तात्प्रातिपदिकात्पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेर्भावः कर्म वा सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्। पौरोहित्यम्। राज्यम्।
पुरोहित। राजन्। संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्त्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्त्रिक। प्रतिक। अजानिक। सलनिक। सूचिक। शाक्वर। सूचक। पक्षिक। सारथिक। जलिक। सूतिक। अञ्जलिक। *राजासे* (ग.सू.116)। पुरोहितादिः ।।

</5-1-128>
प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।। <5-1-129> ।।
प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् प्रत्ययो भवति भावकर्मणोरर्थयोः। अश्वस्य भावः कर्म वा आश्वम्। औष्ट्रम्। वयोवचनेभ्यः--कौमारम्। कैशोरम्। उद्गात्रादिभ्यः--औद्गात्रम्। औन्नेत्रम्।
उद्गातृ। उन्नेतृ। प्रतिहर्तृ। रथगणक। पक्षिगणक। सुष्ठु। दुष्ठु। अध्वर्यु। वधू। * सुभगा मन्त्रे *(ग.सू.117)। उद्गात्रादिः ।।

</5-1-129>
हायनान्तयुवादिभ्योऽण् ।। <5-1-130> ।।
हायनान्तेभ्यः प्रातिपदिकेभ्यो युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। युवादिभ्यः---यौवनम्। स्थाविरम्।

- श्रोत्रियस्य यलोपश्च वाच्यः *(म.भा.2-371)। श्रोत्रियस्य भावः कर्म वा श्रौत्रम् ।

युवन्। स्थविर। होतृ। यजमान। कमण्डलु। * पुरुषासे *(ग.सू.118)। सुहृत्। यात्। श्रवण । कुस्त्री।
सुस्त्री। सुहृदय। सुभ्रातृ। वृषल।
दुर्भ्रातृ। * हृदयासे *(ग.सू.119)। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस। युवादिः ।।

</5-1-130>
इगन्ताच्च लघुपूर्वात् ।। <5-1-131> ।।
लघुपूर्वग्रहणेन स एव विशेष्यते, पश्चात्तेन प्रातिपदिकस्य तदन्तविधिरिति। अस्मिन्व्याख्याने-अन्तग्रहणमतिरिच्यते। `लघुपूर्वादिकः इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। नागरम्। हारीतकम्। पाटवम्। लाघवम्।
इगन्तादिति किम्? घटत्वम्। पटत्वम्। लघुपूर्वादिति किम्? कण्डूत्वम्। पाण्डुत्वम्।
कथं काव्यमिति ? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः।

</5-1-131>
योपधाद् गुरुपोत्तमाद् वुञ् । <5-1-132> ।।
त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम्। गुरुरुपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारोपधाद् गुरूपोत्तमाद्वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। वासनीयकम्।
योपधादिति किम् ? विमानत्वम्। गुरूपोत्तमादिति किम् ? क्षत्त्रियत्वम्।

- सहायाद्वेति वक्तव्यम् *(म.भा.2-372)। साहायकम्। साहाय्यम् ।।

</5-1-132>
द्वन्द्वमनोज्ञादिभ्यश्च ।। <5-1-133> ।।
द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः। गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका। मनोज्ञादिभ्यः---मानोज्ञकम्, काल्याणकम्।
मनोज्ञ। कल्याण। प्रियरूप। छान्दस। छात्त्र। मेधाविन्। अभिरूप। आढ्य। कुलपुत्र। श्रोत्रिय। चोर। धूर्त्त। वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपुत्र। कुशल। मनोज्ञादिः ।।

</5-1-133>
गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।। <5-1-134> ।।
गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु, तत्र श्लाघा=विकत्थनम्। अत्याकारः=पराधिक्षेपः, तदवेतः=तत्प्राप्तः, तज्ज्ञो वा। तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते। तत्प्राप्तस्तदवगतवान् `तदवेतः इत्युच्यते। श्लाघायां तावत्--गार्गिकया श्लाघते काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थत इत्यर्थः। अत्याकारे-गार्गिकयात्याकुरुते। काठिकयात्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपतीत्यर्थः। तदवेतः--गार्गिकामवेतः। काठिकामवेतः। गार्ग्यत्वं कठत्वं च प्राप्त इत्यर्थः। तद्वाऽवगतवानित्यर्थः।
श्लाघादिष्विति किम् ? गार्ग्यत्वम्। कठत्वम् ।।

</5-1-134>
होत्राभ्यश्छः ।। <5-1-135> ।।
होत्राशब्द ऋत्विग्विशेषवचनः। ऋत्विग्विशेषवाचिभ्यश्छः प्रत्ययो भवति भावकर्मणोः। अच्छावाकस्य भावः कर्म वा
अच्छावाकीयम्। मित्त्रावरुणीयम्। ब्राह्मणाच्छंसीयम्। आग्नीध्रीयम्। प्रतिप्रस्थात्रीयम्। त्वष्ट्रीयम्। पोत्रीयम्।
बहुवचनं स्वरूपविधिनिरासार्थम् ।।

</5-1-135>
ब्रह्मणस्त्वः ।। <5-1-136> ।।
`होत्राभ्यः इत्यनुवर्त्तते। ब्रह्मन्शब्दाद्धोत्रवाचिनस्त्वः प्रत्ययो भवति भावकर्मणोः। छस्यापवादः। ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्।
`न इति वक्तव्ये त्ववचनं तलो बाधनार्थम्। यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दः, ततस्त्वतलौ भवत एव-ब्रह्मत्वम्, ब्रह्मता।
भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः ।।
इति काशिकावृतौ
पञ्चमस्याध्यायस्य प्रथमः पादः
</5-1-136>

# काशिका/पञ्चमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pbp
< काशिका | पञ्चमोऽध्यायः

अथ पञ्चमाध्याये द्वितीयः पादः

धान्यानां भवने क्षेत्रे खञ् ।। <5-2-1>।।
निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति, तच्चेद्भवनं क्षेत्रं भवति। भवनमिति-भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्। कौद्रवीणम्। कौलत्थीनम्।
धान्यानामिति किम्? तृणानां भवनं क्षेत्रमित्यत्र न भवति। क्षेत्रमिति किम्? मुद्गानां भवनं कुसूलम्।
बहुवचनं स्वरूपविधिनिरासार्थम् ।।

</5-2-1>
व्रीहिशाल्योर्ढक् ।। <5-2-2> ।।
व्रीहि, शालि-शब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। शालेयम् ।।

</5-2-2>
यवयवकषष्टिकाद्यत् ।। <5-2-3> ।।
यवादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्।

</5-2-3>
विभाषा तिलमाषोमाभङ्गाणुभ्यः ।। <5-2-4> ।।
तिल, माष, उमा, भङ्गा, अणु--इत्येतेभ्यो विभाषा यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञिप्राप्ते वचनम्, पक्षे सोऽपि भवति।
उमाभङ्गयोरपि धान्यत्वमाश्रितमेव। तिल, माष, उमा, भङ्गा, अणु एषां भवनं क्षेत्रं तिल्यम्, तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यम्, भाङ्गीनम्। अणव्यम्, आणवीनम्।

</5-2-4>
सर्वचर्मणः कृतः खखञौ ।। <5-2-5> ।।
सर्वचर्मन्शब्दात्तृतीयासमर्थात् `कृतः इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा।
तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृत इत्येतस्मिन्वाक्यार्थे वृत्तिः। सर्वचर्मीणः, सार्वचर्मीणः ।।

</5-2-5>
यथामुखसम्मुखस्य दर्शनः खः ।। <5-2-6> ।।
यथामुखशब्दात्सम्मुखशब्दात्षष्ठीसमर्थाद् `दर्शनः इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यतेऽस्मिन्निति दर्शनः=आदर्शादिः, प्रतिबिम्बाश्रय उच्यते। निपातनात्सादृश्येऽव्ययीभावः। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः ।।

</5-2-6>
तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।। <5-2-7> ।।
`तत् इति द्वितीया समर्थविभक्तिः। `व्याप्नोति इति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सर्वादेः प्रातिपदिकात् पथिन्, अङ्ग, कर्मन्, पत्त्र, पात्र-इत्येवमन्ताद् द्वितीयासमर्थात् `व्याप्नोति इत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्त्रीणः सारथिः। सर्वपात्रीण ओदनः ।।
९
</5-2-7>
आप्रपदं प्राप्नोति ।। <5-2-8> ।।
`प्रपदम् इति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः। आप्रपदशब्दात्तदिति द्वितीयासमर्थात् `प्राप्नोति इत्यस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यायते ।।

</5-2-8>
अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।। <5-2-9> ।।
अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यम् `बद्धा, `भक्षयति, `नेय-इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुरायामे, सादृश्ये वा। अनुपदं बद्धा उपानत् अनुपदीना। पदप्रमाणेत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः=प्रदक्षिणम्। अनयः= प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परशारैः पदानामसमावेशः सोऽयानयः। अयानयं नेयः अयानयीनः शारः। फलकशिरसि स्थित इत्यर्थः ।।

</5-2-9>
परोवरपरम्परपुत्रपौत्रमनुभवति ।। <5-2-10> ।।
परोवर, परम्पर, पुत्रपौत्र-इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्यः `अनुभवति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। परोवरेति परस्योत्वं प्रत्ययसन्नियोगेन निपात्यते। परांश्चावरांश्चानुभवति परोवरीणः(म.भा.2-373)।
परपरतराणां च परम्परभावो निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः।
परम्परशब्दो विनापि प्रत्ययेन दृश्यते--मन्त्रिपरम्परा मन्त्रं भिनत्तीति। तच्छब्दान्तरमेव द्रष्टव्यम्।।

</5-2-10>
अवारपारात्यन्तानुकामं गामी ।। <5-2-11> ।।
अवारपार, अत्यन्त, अनुकाम--इत्येतेभ्यो द्वितीयासमर्थेभ्यः `गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। गमिष्यतीति गामी। भविष्यति गम्यादयः(3-3-3/3171) इति। अकेनोर्भविष्यदाधमर्ण्ययोः(3-2-70/628) इति षष्ठीप्रतिषेधः। अवारपारं गामी अवारपारीणः।

- विगृहीतादपीष्यते *। विपरीताच्च *। अवारीणः। पारावारीणः।

अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः ।।

</5-2-11>
समांसमां विजायते ।। <5-2-12> ।।
`समांसमाम् इति वीप्सा, सुबन्तसमुदायः प्रकृतिः, विजायते गर्भं धारयतीति प्रत्ययार्थः। गर्भदारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे(2-1-29/691) द्वितीया। समांसमां विजायते समांसमीना गौः। समांसमीना वडवा।

- पूर्वपदे सुपोऽलुग्वक्तव्यः *।

केचित्तु `समायां समायां विजायते इति विगृह्णन्ति, `गर्भमोचने विजनिर्वर्त्तते इत्याहुः, तेषां पूर्वपदे यलोपमात्रं
निपात्यते, परिशिष्टस्यालुग्वक्तव्यः।

- अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः *(म.भा.2-374)। समांसमां विजायते। समायां समायां विजायत इति वा।।

</5-2-12>
अद्यश्वीनावष्टब्धे ।। <5-2-13> ।।
`विजायते इति वर्त्तते। `अद्यश्वीनः इति निपात्यते अवष्टब्धे विजने=आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते-- अवाच्चालम्बनाविदूर्ययोः(8-3-68/2273) इति। अद्य वा श्वो वा विजायते अद्यश्वीना गौः। अद्यश्वीना वडवा।
केचित्तु-`विजायते इति नानुवर्त्तते, अवष्टब्धमात्रे निपातनम् इत्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति।।

</5-2-13>
आगवीनः ।। <5-2-14> ।।
`अगवीनः इति निपात्यते। गोराङ्पूर्वाद् आ तस्य गोः प्रतिपादनात् कारिणि खः प्रत्ययो निपात्यते(म.भा.2-374)। आगवीनः कर्मकरः। यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात् ।।

</5-2-14>
अनुग्वलङ्गामी ।। <5-2-15> ।।
गोः पश्चाद् `अनुगु। अनुगुशब्दाद् `अलङ्गामी इत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः ।।

</5-2-15>
अध्वनो यत्खौ ।। <5-2-16> ।।

तदिति द्वितीया समर्थविभक्तिरनुवर्त्तते, अलङ्गामीति च प्रत्ययार्थः। अध्वन्शब्दाद् द्वितीयासमर्थाद् `अलङ्गामी इत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानमलङ्गामी अध्वनीनः, अध्वन्यः। ये चाभावकर्मणोः(6-4-168/1154), आत्माध्वनौ खे(6-4-169/1671) इति प्रकृतिभावः ।।

</5-2-16>
अभ्यमित्राच्छ च ।। <5-2-17> ।।
अभ्यमित्रशब्दाद् द्वितीयासमर्थाद् `अलङ्गामी इत्येतस्मिन्नर्थे छः प्रत्ययो भवति। चकाराद्यत्खौ च। अभ्यमित्रमलङ्गामी अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ।।

</5-2-17>
गोष्ठात्खञ् भूतपूर्वे ।। <5-2-18> ।।
गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते। भूतपूर्वग्रहणं तस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात्स्वार्थे खः प्रत्ययो भवति। गोष्ठीनो देशः।
भूतपूर्वग्रहणं किम्? गोष्ठो वर्तते ।।

</5-2-18>
अश्वस्यैकाहगमः ।। <5-2-19> ।।
निर्देशादेव समर्थविभक्तिः। अश्वशब्दात्षष्ठीसमर्थाद् `एकाहगमः इत्येतदर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमोऽध्वा आश्वीनः। `आश्वीनानि शतं पतित्वा(तां.ब्रा.21-1-9) ।।

</5-2-19>
शालीनकौपीने अधृष्टाकार्ययोः ।। <5-2-20> ।।
शालीन, कौपीन-शब्दौ निपात्येते यथासंख्यमधृष्टे, अकार्ये चाभिधेये। अधृष्टः=अप्रगल्भः। अकार्यम्=अकरणार्हं विरुद्धम्। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ।
शालाप्रवेशनमर्हति, कूपावतारमर्हति--इत्यर्थयोः खञ्प्रत्यय उत्तरपदलोपश्च निपात्यते। शालीनो जडः। कौपीनं पापम् ।।

</5-2-20>
व्रातेन जीवति ।। <5-2-21> ।।
निर्देशादेव तृतीया समर्थविभक्तिः। व्रातशब्दात्तृतीयासमर्थात् `जीवति इत्यस्मिन्नर्थे खञ् प्रत्ययो भवति। नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः=व्राताः(म.भा.2-374)। उत्सेधः=शरीरम्, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म व्रातम्। तेन व्रातेन जीवति व्रातीनः। तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन जीवति तत्र नेष्यते ।।

</5-2-21>
साप्तपदीनं सख्यम् ।। <5-2-22> ।।
`साप्तपदीनम् इति निपात्यते सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। `सख्यं जनाः साप्तपदीनमाहुः।
कथं साप्तपदीनः सखा, साप्तपदीनं मित्त्रमिति ? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे सत्कर्मणि च वर्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्तते तदा पुरुषेण सामनाधिकरण्यं भवति।।

</5-2-22>
हैयङ्गवीनं संज्ञायाम् ।। <5-2-23> ।।
`हैयङ्गवीनम् इति निपात्यते संज्ञायां विषये। ह्यो गोदोहस्य हियङ्गवादेशः, तस्य विकारे खञ् प्रत्ययो भवति संज्ञायाम्। ह्यो गोदोहस्य विकारः हैयङ्गवीनम्, घृतस्य संज्ञा। तेनह न भवति-होगोदोहस्य विकार उदश्वित् (म.भा.2-375)।।

</5-2-23>
तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।। <5-2-24> ।।
`तस्य इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब्, जाहच्-इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः--कर्णस्य मूलं कर्णजाहम्।
पीलु। कर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः।
कर्ण। अक्षि। नख। मुख। मख। केश। पाद। गुल्फ। भ्रूभङ्ग। दन्त। ओष्ठ। पृष्ठ। अङ्गुष्ठ। कर्णादिः ।।

</5-2-24>
पक्षात्तिः ।। <5-2-25> ।।
`तस्य इत्येव। तस्येति षष्ठीसमर्थात्पक्षशब्दाद् मूलेऽभिधेये तिः प्रत्ययो भवति। मूलग्रहणमनुवर्त्तते, न पाकग्रहणम्;(म.भा.2-375) `एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते(व्या.प.23) इति। पक्षस्य मूलं पक्षतिः=प्रतिपत् ।।

</5-2-25>
तेन वित्तश्चुञ्चुप्चणपौ ।। <5-2-26> ।।
`तेन इति तृतीयासमर्थाद् `वित्त इत्येतस्मिन्नर्थे चुञ्चुप्, चणप् इत्येतौ प्रत्ययौ भवतः। वित्तः = प्रतीतः, ज्ञात इत्यर्थः। विद्यया वित्तः विद्याचुञ्चुः। विद्याचणः ।।

</5-2-26>
विनञ्भ्यां नानाञौ नसह ।। <5-2-27> ।।
वि, नञ् - इत्येताभ्यां यथासंख्यं ना, नाञ्-इत्येतौ प्रत्ययौ भवतः। `नसह इति प्रकृतिविशेषणम्। असहार्थे पृथग्भावे वर्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना ।।

</5-2-27>
वेः शालच्छङ्कटचौ ।। <5-2-28> ।।
विशब्दात् शालच्, शङ्ट्च्-इत्येतौ प्रत्ययौ भवतः। ससाधनक्रियावचनादुपसर्गात्स्वार्थे प्रत्ययौ भवतः। विगते शृङ्गे विशाले। विशङ्कटे। तद्योगाद् गौरपि विशालः, विशङ्कट इत्युच्यते।
परमार्थतस्तु गुणशब्दा एते यथाकथञ्चिद्व्युत्पाद्यन्ते। नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः ।।

</5-2-28>
संप्रोदश्च कटच् ।। <5-2-29> ।।
सम्, प्र, उद्-इत्येतेभ्यः कटच् प्रत्ययो भवति। चकाराद्वेश्च। सङ्कटः। प्रकटः। उत्कटः। विकटः।

- कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् *। अलाबूनां रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्।
- गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम् *। गवां स्थानं गोगोष्ठम्। महिषीगोष्ठम्।
- सङ्घाते कटच् वक्तव्यः *। अवीनां सङ्घातः अविकटम्।
- विस्तारे पटच् वक्तव्यः *। अविपटम्।
- द्वित्वे गोयुगच् *। उष्ट्रगोयुगम्। अश्वगोयुगम्।
- प्रकृत्यर्थस्य षट्त्वे षड्वच् *। हस्तिषड्गवम्। अश्वषड्गवम्।
- विकारे स्नेहे तैलच् *। एरण्डतैलम्। इङ्गुदतैलम्। तिलतैलम्।
- भवेने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ *। इक्षुशाकटम्। इक्षुशाकिनम्। मूलशाकटम्। मूलशाकिनम् ।।

</5-2-29>
अवात्कुटारच्च ।। <5-2-30> ।।
अवशब्दात् कुटारच्प्रत्ययो भवति। चकारात् कटच्। अवकुटारम्। अवकटम् ।।

</5-2-30>
नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।। <5-2-31> ।।
`अवात् इत्येव। नमनम्=नतम्। नासिकायाः सम्बन्धिनि नतेऽभिधेये टीटच्, नाटच्, भ्रटच्--प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकापि। पुरुषोऽपि
तथोच्यते-अवटीटः, अवनाटः, अवभ्रट इति ।।

</5-2-31>
नेर्बिडज्बिरीसचौ ।। <5-2-32> ।।
`नते नासिकायाः इत्यनुवर्त्तते, `संज्ञायाम् इति च। निशब्दान्नासिकाया नतेऽभिधेये बिडच्, बिरीसच्-इत्येतौ प्रत्ययौ भवतः। निबिडम्।

निबिरीसम्। तद्योगान्नासिकापि। पुरुषोऽपि--निबिडः, निबिरीसः।
कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद्भविष्यति ।।

</5-2-32>
इनच्पिटच्चिक चि च ।। <5-2-33> ।।
`नेः इत्येव, `नते नासिकायाः इति च। निशब्दान्नासिकाया नतेऽभिधेये इनच्, पिटच्-इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक, चि-इत्येतावादेशौ भवतः। चिकिनः। चिपिटः।

- ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्याऽऽदेशः *(म.भा.2-377)। चिक्कः। तथा चोक्तम्-`इनच्पिटच्काश्चिकचिचिकादेशाश्च वक्त्व्याः(म.भा.2-377) इति ।।
- क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी *(म.भा.2-377)। क्लिन्नस्य चिल्, पिल्--इत्येतावादशौ भवतो लश्च प्रत्ययः `अस्य चक्षुषी इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः। पिल्लः ।।
- चुलादेशो वक्तव्यः *(म.भा.2-377)। चुल्लः।

अस्येत्येनेन नार्थः। चक्षुषोरेवाभिधाने प्रत्यय इष्यते। क्लिन्ने चक्षुषी चिल्ले। पिल्ले। चुल्ले। तद्योगात्तु पुरुषस्तथोच्यते ।।

</5-2-33>
उपाधिभ्यां त्यकन्नासन्नारूढयोः ।। <5-2-34> ।।
उप, अधि--इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययो भवति। संज्ञाधिकाराच्च नियतविषयमासन्नारूढं गम्यते। पर्वतस्यासन्नम्=उपत्यका। तस्यैवाऽऽरूढम्=अधित्यका। प्रत्ययस्थात्कात्पूर्वस्य(7-3-44/463) इतीत्वमत्र न भवति, संज्ञाधिकारादेव ।।

</5-2-34>
कर्मणि घटोऽठच् ।। <5-2-35> ।।
निर्देशादेव समर्थविभक्तिः। कर्मशब्दात्सप्तमीसमर्थाद् `घटः इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति। घटत इति घटः। कर्मणि घटते कर्मठः पुरुषः ।।

</5-2-35>
तदस्य सञ्जातं तारकादिभ्य इतच् ।। <5-2-36> ।।
तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः `अस्य इति षष्ठ्यर्थे इतच् प्रत्ययो भवति। सञ्जातग्रहणं प्रकृतिविशेषणम्। तारकाः सञ्जाता अस्य नभसः तारकितं नभः। पुष्पितो वृक्षः।
तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। सूचक। रोग। विचार। व्याधि। निष्क्रमण मूत्र। पुरीष। किसलय। कुसुम। प्रचार। तन्द्रा। वेग। पुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। * गर्भादप्राणिनि *(ग.सू.120)।। तारकादिराकृतिगणः ।।

</5-2-36>
प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।। <5-2-37> ।।
`तदस्य इत्यनुवर्त्तते। तदिति प्रथमासमर्थाद् `अस्य इति षष्ठ्यर्थे द्वयसच्, दघ्नच्, मात्रच्-इत्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति। ऊरुः प्रमाणमस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम्। जानुमात्रम्, जानुद्वयसम्, जानुदघ्नम् ।।
`प्रथमस्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।(म.भा.2-377)
ऊरूद्वयसमुदकम्। ऊरुदघ्नमुदकम्। मात्रच्पुनरविशेषेण, प्रस्थमात्रमित्यपि भवति।

- प्रमाणे लो वक्तव्यः *(म.भा.2-378)। प्रमाणशब्दा इति ये प्रसिद्धास्तेभ्य उत्पन्नस्य प्रत्ययस्य लुग्भवति। शमः प्रमाणमस्य शमः। दिष्टिः। वितस्तिः।
- द्विगोर्नित्यम् *(म.भा.2-378)। द्वौ शमौ प्रमाणमस्य द्विशमः। त्रिशमः। द्विवितस्तिः। नित्यग्रहणं किम्? संशये श्राविणं वक्ष्यति, तत्रापि द्विगोर्लुगेव यथा स्यात्। द्वे दिष्टी स्यातां वा न वा, द्विदिष्टिः।
- डट् स्तोमे वक्तव्य *(म.भा.2-378)। पञ्चदशस्तोमः। पञ्चदशी रात्रिः। टित्वाद् ङीप्।
- शन्शतोर्डिनिर्वक्तव्यः *(म.भा.2-378)। `पञ्चदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः(तै.सं.7-5-20-1)।
- विंशतेश्चेति वक्तव्यम् *(म.भा.2-378)। `विंशिनोऽङ्गिरसः(गो.ब्रा.1-1-8-1)।

- प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः *(म.भा.2-378)। शममात्रम्। दिष्टिमात्रम्। प्रस्थमात्रम्। कुडवमात्रम्। पञ्चमात्रम्। दशमात्रा गावः।
- वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् *(म.भा.2-378)। तावदेव तावद्द्वयसम्। तावन्मात्रम्। एतावद्द्वयसम्। एतावन्मात्रम्। यावद्द्वयसम्। यावन्मात्रम् ।।

</5-2-37>
पुरुषहस्तिभ्यामण्च ।। <5-2-38> ।।
`तदस्य इत्येव, `प्रमाणे इति च। पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति, चकाराद् द्वयसजादयश्च। पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदघ्नम्, पुरुषमात्रम्। हस्तिनम्, हस्तिद्वयसम्, हस्तिदघ्नम्, हस्तिमात्रम्। द्विगोर्नित्यं लुक्--द्विपुरुषमुदकम्, त्रिपुरुषमुदकम्। द्विहस्ति, त्रिहस्ति। द्विपुरुषी, त्रिपुरुषी। द्विहस्तिनी, त्रिहस्तिनी ।।

</5-2-38>
यत्तदेतेभ्यः परिमाणे वतुप् ।। <5-2-39> ।।
`तदस्य इत्येव। यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः `अस्य इति षष्ठ्यर्थे वतुप् प्रत्ययो भवति। यत्परिमाणमस्य यावान्। तावन्। एतावान्।
प्रमाणग्रहणेऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात् ।।
`डावतावर्थवैशेष्यान्निर्देशः पृथगुच्चते।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः(म.भा.2-378) ।।

- वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् *(म.भा.2-379)। `न त्वा वा अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते(ऋ.7-32-23)। `त्वावतः पुरुवसो(ऋ.8-46-1) `यज्ञं विप्रस्य मावतः(ऋ.1-142-2)। त्वत्सदृशस्य मत्सदृशस्येत्यर्थः ।।

</5-2-39>
किमिदम्भ्यां वो घः ।। <5-2-40> ।।
किमिदम्भ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति। कियान्। इयान्।
एतदेव चादेशविधानं ज्ञापकम्-किमिदम्भ्यां वतुप्प्रत्ययो भवतीति। अथ वा-योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते ।।

</5-2-40>
किमः संख्यापरिमाणे डति च ।। <5-2-41> ।।
संख्यायाः परिमाणम्, संख्यापरिच्छेद इत्यर्थः। संख्यापरिमाणे वर्त्तमानात् किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः प्रत्ययो भवति। चकाराद्वतुप् च। तस्य च वकारस्य घादेशो भवति। पृच्छ्यमानत्वात् परिच्छेदोपाधिकायां संख्यायां वर्त्तमानात्किमः प्रत्ययो विज्ञायते। का संख्या परिमाणमेषां ब्राह्मणानां कति ब्राह्मणाः। कियन्तो ब्राह्मणाः।
अथ वा-संख्यैव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते--का संख्या परिमाणं येषामिति।
ननु च संख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते ? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति। क्षेपे हि परिच्छेदो नास्ति-केयमेषां संख्या दशानामिति ।।

</5-2-41>
संख्याया अवयवे तयप् ।। <5-2-42> ।।
`तदस्य इत्येव। संख्याया अवयवे वर्त्तमानाया अस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति अवयवा अवयविनः सम्बन्धिन इति सामर्थ्यादवयवी प्रत्ययार्थो विज्ञायते। पञ्च अवयवा अस्य पञ्चतयम्। दशतयम्। चतुष्टयम्। चतुष्टयी ।।

</5-2-42>
द्वित्रिभ्यां तयस्यायज्वा ।। <5-2-43> ।।
पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वाऽयजादेशो भवति। द्वाववयवावस्य द्वयम्, द्वितयम्। त्रयम्, त्रितयम्।
तयग्रहणं स्थानिनिर्देशार्थम्; अन्यथा प्रत्ययान्तरमयज्विज्ञायेत।
तत्र को दोषः ? त्रयी गतिरिति तयनिबन्धन ईकारो(4-1-15/470) न स्यात्, प्रथमचरमतयाल्पार्धकतिपयनेमाश्च(1-1-33/226) इत्येष विधिश्च न स्यात्। द्वये, द्वयाः। चकारः स्वरार्थः।

</5-2-43>
उभादुदात्तो नित्यम् ।। <5-2-44> ।।
उभशब्दात्परस्य तयपो नित्यमयजादेशो भवति स चोदात्तः। वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते।
उभशब्दो यदि लौकिकी संख्या, ततः पूर्वेणैव विहितस्य तयप आदेशविधानार्थं वचनम्। अथ न संख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते। उभयो मणिः, `उभये देवमनुष्याः(तै.सं.1-6-8-1) ।।

</5-2-44>
तदस्मिन्नधिकमिति दशान्ताड्डः ।। <5-2-45> ।।
तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात्प्रातिपदिकाद् डः प्रत्यो भवति यत्तत्प्रथमासमर्थमधिकं चेत्तद्भवति। इतिकरणस्ततश्चेद्विवक्षा। एकादश अधिका अस्मिन् शते एकादशं शतम्। एकादशं सहस्रम्। द्वादशं शतम्। द्वादशं सहस्रम्।
दशान्तादिति किम् ? पञ्चाधिका अस्मिन् शते। अन्तग्रहणं किम् ? दशाधिका अस्मिन् शते।
प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते---
एकादश कार्षापणा अधिका अस्मिन् कार्षापणशते एकादशं कार्षापणशतमिति।
इह तु न भवति-एकादश माषा अधिका अस्मिन्कार्षापणशत इति(म.भा.2-380)।
शतसहस्रयोश्चेष्यते(म.भा.2-380)। इह न भवति--एकादशाधिका अस्यां त्रिंशतीति।
`इतिकरणो विवक्षार्थः इत्युक्तम्, तत इदं सर्वं लभ्यते।
कथमेकादशं शतसहस्रमिति ? शतानां सहस्रम्, सहस्राणां वा शतमिति शतसहस्रमित्युच्यते। तत्र `शतसहस्रयोः इत्येव सिद्धम्।
`अधिके समानजाताविष्टं शतसहस्रयोः।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम(म.भा.2-380) ।।

</5-2-45>
शदन्तविंशतेश्च ।। <5-2-46> ।।
`तदस्मिन्नधिकम् इत्यनुवर्तते, `डः इति च। शदन्तान्प्रातिपदिकाद्विंशतेश्च डः प्रत्ययो भवति `तदस्मिन्नधिकम् इत्येतस्मिन् विषये। त्रिंशदधिका अस्मिन् शते त्रिंशं शतम्।
शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम्। एकत्रिंशं शतम्। एकचत्वारिंशं शतम्। संख्याग्रहणं च कर्त्तव्यम्। इह मा भूद्--गोत्रिंशदधिका अस्मिन् गोशते इति।

- विंशतेश्च * (म.भा.2-381)विंशं शतम्।
- तदन्तादपीति वक्तव्यम् *()म.भा.2-381। एकविंशं शतम्।
- संख्याग्रहणं च कर्त्तव्यम् *(म.भा.2-381)। इह मा भूत्-- गोविंशतिरधिकाऽस्मिन्गोशते इति ।।

</5-2-46>
संख्याया गुणस्य निमाने मयट् ।। <5-2-47> ।।
`तदस्य इत्यनुवर्तते तदस्य सञ्जातम्(5-2-36/1837) इत्यतः। तदिति प्रथमासमर्थात्संख्यावाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत्तत्प्रथमासमर्थं गुणस्य निमाने चेत्तद् वर्तते। गुणः=भागः। निमानम्=मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद्भाग एव विज्ञायते। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम्। त्रिमयम्। चतुर्मयम्। भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे। तेन सामानाधिकरण्यं भवति--द्विमयमुदश्विदिति। गुणस्येति चैकत्वं विवक्षितम्, तेनेह न भवति--द्वौ भागौ यवानां त्रय उद्श्वित इति।

- भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते *(म.भा.2-381)। इह न भवति-एको भागो निमानमस्येति। भूयस इति च प्रत्ययार्थात्प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्। बहुत्वमतन्त्रम्, तेन द्विशब्दादपि भवति।

गुणशब्दः समानावयववचनः। तेनेह भवति--द्वौ भागौ यवानामध्यर्द्धं उदश्वित इति।

- निमेये चापि दृश्यते *(म.भा.2-382)। निमेये वर्त्मानायाः संख्याया निमाने प्रत्ययो दृश्यते। उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा उदश्वितः। चतुर्मयाः।

गुणस्येति किम् ? द्वौ व्रीहियवौ निमानमस्योदश्वितः। निमान इति किम् ? द्वौ गुणौ क्षीरस्यैकस्तैलस्य द्विगुणं तैलं पच्यते क्षीरेणेत्यत्र मा भूत् ।।

</5-2-47>
तस्य पूरणे डट् ।। <5-2-48> ।।

तस्येति षष्ठीसमर्थात्संख्यावाचिनः प्रातिपदिकात् `पूरणे इत्यस्मिन्नर्थे डट् प्रत्ययो भवति। पूर्यतेऽनेनेति पूरणम्। येन संख्या संख्यानं पूर्यते सम्पद्यते स तस्याः पूरणः। एकादशानां पूरण एकादशः। त्रयोदशः। यस्मिन्नुपसञ्जातेऽन्या संख्या सम्पद्यते स प्रत्ययार्थः। इह न भवति---पञ्चानां मुष्टिकानां पूरणो घट इति ।।

</5-2-48>
नान्तादसंख्यादेर्मट् ।। <5-2-49> ।।
`डट् इति वर्तते। नकारान्तात्संख्यावाचिनः प्रातिपदिकादसंख्यादेः परस्य डटो मडागमो भवति। नान्तादिति पञ्चमी डट आगमसम्बन्धे षष्ठीं प्रकल्पयति। पञ्चानां पूरणः पञ्चमः। सप्तमः।
नान्तादिति किम्? विंशतेः पूरणो विंशः। असंख्यादेरिति किम्? एकादशानां पूरण एकादशः।।

</5-2-49>
थट् चच्छन्दसि ।। <5-2-50> ।।
नान्तादसंख्यादेः परस्य डटश्छन्दसि विषये थडागमो भवति। चकारात्पक्षे मडपि भवति। `पर्णमयानि पञ्चथानि भवन्ति(काठ.सं.8-2)। `पञ्चथः(काठ.सं.9-3)। `सप्तथः(काठ.सं.37-11)। मट्--`पञ्चममिन्द्रियमस्यापाक्रामन्(काठ.सं.9-12) ।।

</5-2-50>
षट्कतिकतिपयचतुरां थुक् ।। <5-2-51> ।।
`डट् इत्यनुवर्तते, तदिह सप्तम्या विपरिणम्यते। षट्, कति, कतिपय, चतुर्-इत्येतेषां डटि परतस्थुगागमो भवति। कतिपयशब्दो न संख्या। तस्यास्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते। षण्णां पूरणः षष्ठः। कतिथः। कतिपयथः। चतुर्थः।

- चतुरश्छयतावाद्यक्षरलोपश्च *(म.भा.2-384)। चतुर्णां पूरणः तुरीयः, तुर्यः ।।

</5-2-51>
बहुपूगगणसङ्घस्य तिथुक् ।। <5-2-52> ।।
`डटि इत्येव। बहु, पूग, गण, सङ्घ-इत्येतेषां डटि परतस्तिथुगागमो भवति। पूगसङ्घशब्दयोरसंख्यात्वादिदमेव ज्ञापकं डटो भावस्य। बहूनां पूरणो बहुतिथः। पूगतिथः। गणतिथः। सङ्घतिथः ।।

</5-2-52>
वतोरिथुक् ।। <5-2-53> ।।
`डटि इत्येव। वतोर्डटि परत इथुगागमो भवति। वत्वन्तस्य संख्यात्वात्पूर्वेण डड्विहितस्तस्मिन्नयमागमो विधीयते। यावतां पूरणो यावतिथः। तावतिथः। एतावतिथः ।।

</5-2-53>
द्वेस्तीयः ।। <5-2-54> ।।
द्विशब्दात्तीयः प्रत्ययो भवति `तस्य पूरणे इत्यस्मिन्विषये। डटोऽपवादः। द्वयोः पूरणो द्वितीयः ।।

</5-2-54>
त्रेः संप्रसारणं च ।। <5-2-55> ।।
त्रिशब्दात्तीयः प्रत्ययो भवति `तस्य पूरणे इत्येतद्विषये। तत्सन्नियोगेन त्रेः संप्रसारणं च भवति। डटोऽपवादः। त्रयाणां पूरणस्तृतीयः। हल(6-4-2/2559) इति संप्रसारणस्य दीर्घत्वं न भवति। `अणः इति तत्रानुवर्त्तते--ढ्रलोपे(6-3-111/174) इत्यतः, पूर्वेण च णकारेणाण्ग्रहणम् ।।

</5-2-55>
विंशत्यादिभ्यस्तमडन्यतरस्याम् ।। <5-2-56> ।।
विंशत्यादिभ्यः परस्य डटस्तमडागमो भवत्यन्यतरस्याम्। पूरणाधिकाराद् डट् प्रत्यय आगमी विज्ञायते। विंशतेः
पूरणः विंशतितमः, विंशः। एकविंशतितमः, एकविंशः। त्रिविंशतितमः, त्रिविंशः। त्रिंशत्तमः, त्रिंशः। एकत्रिंशत्तमः, एकत्रिंशः।
विंशत्यादयो लौकिकाः संख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसन्निविष्टाः। तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्; ग्रहणवता प्रातिपदिकेन तदन्तविदिप्रतिषेधात्(व्या.प.89)। एवं च सति षष्ट्यादेश्चासंख्यादेः(5-2-58/1858) इति पर्युदासो युज्यत एव ।।

</5-2-56>

नित्यं शतादिमासार्धमाससंवत्सराच्च ।। <5-2-57> ।।
शतादयः संख्याशब्दा लौकिका गृह्यन्ते। शतादिभ्यो मासार्धमाससंवत्सरशब्देभ्यश्च परस्य डटो नित्यं तमडागमो भवति। मासादयः संख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकाद् डट्प्रत्ययो विज्ञायते। शतस्य पूरणः शततमः। सहस्रतमः। लक्षतमः। मासस्य पूरणो मासतमो दिवसः। अर्धमासतमः। संवत्सरतमः।
षष्ट्यादेश्चासंख्यादेः(5-2-58/1858) इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं सख्याद्यर्थम्। एकशततमः। द्विशततमः ।।

</5-2-57>
षष्ट्यादेश्चासंख्यादेः ।। <5-2-58> ।।
षष्ट्यादेः संख्याशब्दादसंख्यादेः परस्य डटो नित्यं तमडागमो भवति। विशत्यादिभ्यः (5-2-56/1856)इति विकल्पेन प्राप्ते नित्यार्थम्। षष्टितमः। सप्ततितमः।
असंख्यादेरिति किम्? एकषष्टः। एकषष्टितमः। एकसप्तः। एकसप्ततिमः ।।

</5-2-58>
मतौ छः सूक्तसाम्नोः ।। <5-2-59> ।।
`मतौ इति मत्वर्थ उच्यते। प्रातिपदिकान्मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि चाभिधेये। मत्वर्थग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषणम्, प्रत्ययार्थ इति सर्वमाक्षिप्यते। अच्छावाकशब्दोऽस्मिन्निति अच्छावाकीयं सूक्तम्। मित्त्रावरुणीयम्। यज्ञायज्ञीयं साम। वारवन्तीयम्।
अनुकरणशब्दाश्च स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति, तेनानेकपदादपि सिद्धम्--अस्यवामीयम्, कयाषुभीयम् ।।

</5-2-59>
आध्यायानुवाकयोर्लुक् ।। <5-2-60> ।।
`मतौ इत्येव। मत्वर्थ उत्पन्नस्य छस्य लुग्भवनति, अध्यायानुवाकयोरभिधेययोः। केन पुनरध्यायानुवाकयोः प्रत्ययः? इदमेव लुग्वचनं ज्ञापकं तद्विधानस्य। विकल्पेन लुगयमिष्यते। गर्दभाण्डशब्दोऽस्मिन्नस्ति गर्दभाण्डोऽध्यायः, अनुवाको वा; गर्दभाम्डीयः। दीर्घजीवितः, दीर्घजीवितीयः। पलितस्तम्भः, पलितस्तम्भीयः ।।

</5-2-60>
विमुक्तादिभ्योऽण् ।। <5-2-61> ।।
`मतौ इत्येव, `अध्यायानुवाकयोः इति च। विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति मत्वर्थे, अध्यायानुवाकयोरभिधेययोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः, अनुवाको वा। दैवासुरः।
विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्द्धान। मित्री। सोमापूषन्। अग्नाविष्णू। वृत्रहति। इडा। रक्षोसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। दशार्ह। वयस्। पतत्रि।
सोम। महित्री। हेतु। विमुक्तादिः ।।

</5-2-61>
गोषदादिभ्यो वुन् ।। <5-2-62> ।।
`मतौ इत्येव, `अध्यायानुवाकयोः इति च। गोषदादिभ्यः प्रातिपदिकेभ्यो वुन्प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोः। गोषदशब्दोऽस्मिन्नस्ति गोषदकोऽध्यायोऽनुवाको वा। इषेत्वकः। मातरिश्वकः।
गोषद। इषेत्व। मातरिश्वन्। देवस्यत्वा। देवीरापः। कृष्णोस्याखरेष्टः। दैवींधियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। कृशानु। गोषदादिः ।।

</5-2-62>
तत्र कुशलः पथः ।। <5-2-63> ।।
`वुन् इत्येव। तत्रेति सप्तमीसमर्थात्पथिन्शब्दात् `कुशलः इत्यस्मिन्नर्थे वुन्प्रत्ययो भवति। पथि कुशलः पथकः ।।

</5-2-63>
आकर्षादिभ्यः कन् ।। <5-2-64> ।।
`तत्र इत्येव, `कुशलः इति च। आकर्षादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः `कुशलः इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। आकर्षे कुशलः आकर्षकः। त्सरुकः।
आकर्ष। त्सरु। पिपासा। पिचण्ड। अशनि। अश्मन्। विचय। चय। जय। आचय। अय। नय। निपाद। गद्गद। दीप। ह्रद। ह्राद। ह्लाद। शकुनि। आकर्षादिः ।।

</5-2-64>
धनहिरण्यात्कामे ।। <5-2-65> ।।
`तत्र इत्येव, `कन् इति च। धनहिरण्यशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्याम् `कामे इत्यस्मिन्नर्थे कन्प्रत्ययो भवति। कामः=इच्छा, अभिलाषः। धने कामः धनको देवदत्तस्य। हिरण्यको देवदत्तस्य ।।

</5-2-65>
स्वाङ्गेभ्यः प्रसिते ।। <5-2-66> ।।
`तत्र इत्येव, `कन् इति च। स्वाङ्गवाचिभ्यः शब्देभ्यस्तत्रेति सप्तमीसमर्थेभ्यः `प्रसिते इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। प्रसितः=प्रसक्तः, तत्पर इत्यर्थः। केशेषु प्रसितः केशकः। केशादिरचनायां प्रसक्त एवमुच्यते।
बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा स्यात्--दन्तौष्ठकः। केशनखकः ।।

</5-2-66>
उदराट्ठगाद्यूने ।। <5-2-67> ।।
`तत्र इत्येव, `प्रसिते इति च। उदरशब्दात्सप्तमीसमर्थात् `प्रसिते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। `आद्यूते इति प्रत्ययार्थविशेषणम्। उदरेऽविजिगीषुर्भण्यते। यो बुभुक्षयाऽत्यन्तं पीड्यते स एवमुच्यते। उदरे प्रसित औदरिक आद्यूनः।
आद्यून इति किम्? उदरकः (5-2-66/1866)।।

</5-2-67>
सस्येन परिजातः ।। <5-2-68> ।।
कन्प्रत्यय इत्येव स्वर्यते, न ठक्। निर्देशादेव तृतीया समर्थविभक्तिः। सस्यशब्दात्तृतीयासमर्थात् `परिजातः इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। सस्यशब्दोऽयं गुणवाची। परिः सर्वतो भावे वर्त्तते। यो गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं नास्ति, तस्येदमभिधानम्। सस्येन परिजातः सस्यकः शालिः। सस्यकः साधुः। सस्यको मणिः। आकरशुद्ध इत्यर्थः ।।

</5-2-68>
अंशं हारी ।। <5-2-69> ।।
अंशशब्दान्निर्देशादेव द्वितीयासमर्थाद् `हारी इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। अंशं हारी अंशको दायादः। अंशकः पुत्रः।
`हारी इत्यावश्यके णिनिः(3-3-170/3311), तत्र षष्ठीप्रतिषेधाद् कर्मणि द्वितीयैव भवति ।।

</5-2-69>
तन्त्रादचिरापहृते ।। <5-2-70> ।।
तन्त्रशब्दान्निर्देशादेव पञ्चमीसमर्थाद् `अचिरादहृते इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अचिरापहृतः=स्तोककालापहृत इत्यर्थः। तन्त्रादचिरापहृतः तन्त्रकः पटः। तन्त्रकः प्रावारः। प्रत्यग्रो नव उच्यते ।।

</5-2-70>
ब्राह्मणकोष्णिके संज्ञायाम् ।। <5-2-71> ।।
ब्राह्मणक, उष्णिक-इत्येतौ शब्दौ कन्प्रत्ययान्तौ निपात्येते संज्ञायां विषये। ब्रामह्मणको देशः। उष्णिका यवागूः।
यत्रायुधजीविनो ब्राह्मणाः सन्ति तत्र `ब्राह्मणक इति संज्ञा। अल्पान्ना यवागूः `उष्णिका इत्युच्यते ।।

</5-2-71>
शीतोष्णाभ्यां कारिणि ।। <5-2-72> ।।
शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन्प्रत्ययो भवति। क्रियाविशेषणाद् द्वितीयासमर्थादयं प्रत्ययः। शीतं करोति शीतकः=अलसः, जड उच्यते। उष्णं करोति उष्णकः=शीघ्रकारी, दक्ष उच्यते ।।

</5-2-72>
अधिकम् ।। <5-2-73> ।।
`अधिकम् इति निपात्यते। अध्यारूढस्योत्तरपदलोपः कँश्च प्रत्ययः। अधिको द्रोणः खार्याम्। अधिका खारी द्रोणेन।
कर्त्तरि कर्मणि चाऽध्यारूढशब्दः।।

</5-2-73>

अनुकाभिकाभीकः कमिता ।। <5-2-74> ।।
अनुक, अभिक, अभीक---इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते `कमिता इत्येतस्मिन्नर्थे। अभेः पक्षे दीर्घत्वं च निपात्यते। अनुकामयते अनुकः। अभिकः। अभीकः ।।

</5-2-74>
पार्श्वेनान्विच्छति ।। <5-2-75> ।।
पार्श्वशब्दात्तृतीयासमर्थाद् `अन्विच्छति इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। अनृजुरुपायः पार्श्वम्,तेनार्थानन्वच्छति पार्श्वकः। मायावी। कौसृतिकः, जालिक उच्यते ।।

</5-2-75>
अयः शूलदण्डाजिनाभ्यां ठक्ठञौ ।। <5-2-76> ।।
`अन्विच्छति इत्येव। अयः शूलदण्डाजिनाभ्यां तृतीयासमर्थाभ्याम् `अन्विच्चति इत्येतस्मिन्नर्थे ठक्ठञौ प्रत्ययौ भवतः। तीक्ष्ण उपायः=अयः शूलमुच्यते, तेनान्विच्छति आयःशूलिकः। साहसिक इत्यर्थः। दम्भः=दण्डाजिनम्, तेनान्विच्छति दाण्डाजिनिकः। दाम्भिक इत्यर्थः ।।

</5-2-76>
तावतिथं ग्रहणमिति लुग्वा ।। <5-2-77>।।
तावतां पूरणं तावतिथम्। गृह्यतेऽनेनेति ग्रहणम्। प्रकृतिविशेषणं चैतत्। पूरणप्रत्ययान्तात्प्रातिपदिकाद् ग्रहणोपाधिकात्स्वार्थे कन्प्रत्ययो भवति। पूरणस्य प्रत्ययस्य वा लुक्। द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम्। त्रिकम्, तृतीयकम्। चतुष्कम्, चतुर्थकम् ।

- तावतिथेन गृह्णातीति कन्वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् *(म.भा.2-388)। षष्ठेन रुपेण ग्रन्थं गृह्णाति षट्को देवदत्तः। पञ्चकः। चतुष्कः।

इतिकरणो विवक्षार्थः। तेन ग्रन्थविषयमेव ग्रहणं विज्ञायते, नान्यविषयम्।

</5-2-77>
स एषां ग्रामणीः ।। <5-2-78> ।।
`स इति प्रथमासमर्थादेषामिति षष्ठ्यर्थे कन्प्रत्ययो भवति, यत्तत्प्रथमासमर्थं ग्रामणीश्चेत्स भवति। ग्रामणीः=प्रधानः, मुख्यः, इत्यर्थः। देवदतो ग्रामणीरेषां देवदत्तकाः। यज्ञदत्तकाः।
ग्रामणीरिति किम्? देवदत्तः शत्रुरेषाम्।।

</5-2-78>
शृङ्खलमस्य बन्धनं करभे ।। <5-2-79> ।।
शृङ्खलशब्दात्प्रथमासमर्थादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति। यत्तत्प्रथमासमर्थं बन्धनं चेत्तद्भवति, यत्तदस्येति निर्दिष्टं करभश्चेत्स भवति। शृङ्खलं बन्धनमस्य करभस्य शृङ्खलकः। उष्ट्राणां बालकाः=करभाः, तेषां काष्ठमयं पाशकं पादे व्यतिषज्यते, तदुच्यते शृङ्खलमिति।
यद्यपि रज्ज्वादिकमपि तत्रास्ति तथापि शृङ्खलमस्यास्वतन्त्रीकरणे भवति साधनमिति बन्धनमित्युच्यते ।।

</5-2-79>
उत्क उन्मनाः ।। <5-2-80> ।।
`उत्कः इति निपात्यते, उन्मनाश्चेत्स भवति। उद्गतं मनो यस्य स उन्मनाः। उच्छब्दात्ससाधनक्रियावचनात् तद्वति कन्प्रत्ययो निपात्यते। उत्को देवदत्तः। उत्कः प्रवासी। उत्सुक इत्यर्थः ।।

</5-2-80>
कालप्रयोजनाद्रोगे ।। <5-2-81> ।।
अर्थलभ्या समर्थविभक्तिः। कालात्प्रयोजनाच्च यथायोगं समर्थविभक्तियुक्ताद्रोगेऽभिधेये कन्प्रत्ययो भवति। कालः=दिवसादिः, प्रयोजनम्=कारणम्, रोगस्य फलं वा। द्वितीयेऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः।
प्रयोजनात्--विषपुष्पैर्जनितो विषपुष्पको ज्वरः। काशपुष्पकः। उष्णं कार्यमस्य उष्णकः। शीतको ज्वरः।
उत्तरसूत्रादिह संज्ञाग्रहणमपकृष्यते। तेनायं प्रकारनियमः सर्वो लभ्यते ।।

</5-2-81>

तदस्मिन्नन्नं प्राये संज्ञायाम् ।। <5-2-82> ।।
तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे कन् प्रत्ययो भवति, यत्तत्प्रथमासमर्थमन्नं चेत्प्रायविषयं तद् भवति। प्रायः=बाहुल्यम्। संज्ञाग्रहणं तदन्तोपाधिः। गुडापूपाः प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका। तिलापूपिका पौर्णमासी।

- वटकेभ्य इनिर्वक्तव्यः *(म.भा.2-388)। वटकिनी पौर्णमासी ।।

</5-2-82>
कुल्माषादञ् ।। <5-2-83> ।।
कुल्माषशब्दादञ् प्रत्ययो भवति `तदस्मिन्नन्नं प्राये संज्ञायाम् इत्येतस्मिन्नर्थे। ञकारो वृद्धिस्वरार्थः। कुल्माषाः प्रायेणान्नमस्यां कौल्माषी पौर्णमासी ।।

</5-2-83>
श्रोत्रियँस्छन्दोऽधीते ।। <5-2-84> ।।
`श्रोत्रियन् इति निपात्यते `छन्दोऽधीते इत्यस्मिन्नर्थे। नकारः स्वरार्थः। श्रोत्रियो ब्राह्मणः। `श्रोत्रियँश्छन्दोऽधीते(म.भा.2-389) इति वाक्यार्थे पदवचनम्। छन्दसो वा श्रोत्रभावः `तदधीते इति घँश्च प्रत्ययः।
कथं छन्दोऽधीते छान्दसः ? वाग्रहणमनुवर्त्तते, तावतिथं ग्रहणमिति लुग्वा(5-2-77/1877) इत्यतः ।।
</5-2-84>
श्राद्धमनेन भुक्तमिनिठनौ ।। <5-2-85> ।।
`श्राद्धम् इति प्रकृतिः, `अनेन इति प्रत्ययार्थः, `भुक्तम् इति प्रकृतिविशेषणम्। श्राद्धशब्दाद् भुक्तोपाधिकादनेनेत्यस्मिन्नर्थे इनिठनौ प्रत्ययौ भवतः। श्राद्धशब्दः कर्मनामधेयं तत्साधने द्रव्ये वर्तित्वा प्रत्ययमुत्पादयति। श्राद्धं भुक्तमनेन श्राद्धिकः।
इनिठनोः समानकालग्रहणम्--अद्य भुक्ते श्राद्धे श्वः श्राद्धिक इति प्रयोगो मा भूत् ।।

</5-2-85>
पूर्वादिनिः ।। <5-2-86> ।।
`अनेन इति प्रत्ययार्थः कर्ताऽनुवर्तते। न च क्रियामन्तरेण कर्त्ता सम्भवतीति यां काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधेयः। पूर्वाद् `अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। पूर्वं गतमनेन पीतं भुक्तं वा पूर्वी, पूर्विणौ, पूर्विणः ।।

</5-2-86>
सपूर्वाच्च ।। <5-2-87> ।।
विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः। सपूर्वात्प्रातिपदिकात्पूर्वशब्दान्तादनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। पूर्वं कृतमनेन कृतपूर्वी कटम्। भूक्तपूर्वी ओदनम्। सप्सुपा(2-1-4/649) इति समासं कृत्वा तद्धित उत्पाद्यते।
योगद्वयेन चानेन--पूर्वादिनिः(5-2-86/1886) सपूर्वाच्च(5-2-87/1887) इति, परिभाषाद्वयं ज्ञाप्यते--`व्यपदेशिवद्भावोऽप्रातिपदिकेन(शा.प.65), `ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति(व्या.प.89) इति
।।

</5-2-87>
इष्टादिभ्यश्च ।। <5-2-88> ।।
`अनेन इत्येव। इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। इष्टमनेन इष्टी यज्ञे। पूर्ती श्राद्धे। `क्तस्येन्विषयस्य कर्मणि(वा.133) इति सप्तम्युपसंख्यायते।
इष्ट। पूर्त। उपसादित। निगदित। परिवादित। निकथित। परिकथित। सङ्कलित। निपठित। सङ्कल्पित। अनर्चित। विकलित। संरक्षित। निपतित। पठित। परिकलित। अर्चित। परिरक्षित। पूजित। परिगणित। उपगणित। अवकीर्ण। परित। उपकृत। उपाकृत। आयुक्त। आम्नात। श्रुत। अधीत। आसेवित। अपवारित। अवकल्पित। निराकृत। अनुयुक्त। उपनत। अनुगुणित। अनुपठित। व्याकुलित। निगृहीत। इष्टादिः ।।

</5-2-88>
छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।। <5-2-89> ।।
परिपन्थिन्, परिपरिन्-इत्येतौ शब्दौ छन्दसि विषये निपात्येते पर्यवस्थातरि वाच्ये। पर्यवस्थाता=सम्पन्नप्रतिपक्ष उच्यते। `मा त्वा परिपन्थिनो विदन्। मा त्वा परिपरिणो विदन्(वा.सं.4-34) ।।

</5-2-89>

अनुपद्यन्वेष्टा ।। <5-2-90> ।।
`अनुपदी इति निपात्यतेऽन्वेष्टा चेत्स भवति। पदस्य पश्चादनुपदम्। अनुपदी गवाम्। अनुपदी उष्ट्राणाम् ।।

</5-2-90>
साक्षाद् द्रष्टरि संज्ञायाम् ।। <5-2-91> ।।
साक्षाच्छब्दोऽव्ययम्। तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये। संज्ञाग्रहणमभिधेयनियमार्थम्। साक्षाद् द्रष्टा साक्षी, साक्षिणौ साक्षिणः। संज्ञाग्रहणादुपद्रष्टैवोच्यते; न दाता, ग्रहीता वा ।।

</5-2-91>
क्षेत्रियच् परक्षेत्रे चिकित्स्यः ।। <5-2-92> ।।
क्षेत्रियजिति निपात्यते `परक्षेत्रे चिकित्स्यः इत्येतस्मिन् वाक्यार्थे पदवचनम्। परक्षेत्राद् तत्रेति सप्तमीसमर्थात् `चिकित्स्य इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते। परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः। क्षेत्रियं कुष्ठम्। परक्षेत्रम्=जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः। असाध्योऽप्रत्याख्येयो व्याधिरुच्यते। नामृतस्य निवर्तत इत्यर्थः।
अथ वा-क्षेत्रियं विषम्। यत्परक्षेत्रे परशरीरे संक्रमय्य चिकित्स्यते।
अथ वा--क्षेत्रियाणि तृणानि। यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि नाशयितव्यानि।
अथ वा--क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रम्, तत्र चिकित्स्यः निग्रहीतव्यः। सर्वं चैतत्प्रमाणम् ।।

</5-2-92>
इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ।। <5-2-93> ।।
इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते। रूढिरेषा चक्षुरादीनां करणानाम्। तथा च व्युत्पत्तेरनियमं दर्शयति। इन्द्रशब्दात्षष्ठीसमर्थात् `लिङ्गम् इत्येतस्मिन्नर्थे घच्प्रत्ययो भवति। इन्द्रस्य लिङ्गमिन्द्रियम्। इन्द्रः=आत्मा, स
चक्षुरादिना करणेनानुमीयते, नाकर्तृकं करणमस्ति। इन्द्रेण दृष्टम्, तृतीयासमर्थात्प्रत्ययः। आत्मना दृष्टमित्यर्थः। इन्द्रेण सृष्टम्। आत्मना सृष्टम्, तत्कृतेन शुभाशुभेन कर्मणोत्पन्नमिति कृत्वा। इन्द्रेण जुष्टम्, आत्मना जुष्टम्=सेवितम्; तद्द्वारेण विज्ञानोत्पादनात्। इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय।
इतिकरणः प्रकारार्थः। सति सम्भवे व्युत्पत्तिरन्यथापि कर्तव्या; रूढेरनियमादिति।
वाशब्दः प्रत्येकमभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति ।।

</5-2-93>
तदस्यास्त्यास्मिन्निति मतुप् ।। <5-2-94> ।।
तदिति प्रथमा समर्थविभक्तिः। अस्यास्मिन्निति प्रत्ययार्थौ।
अस्तीति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे `अस्मिन् इति सप्तम्यर्थे मतुप् प्रत्ययो भवति, यत्तत्प्रथमासमर्थमस्ति चेत्तद्भवति। अस्त्यर्थोपाधिकं चेत्तद्भवतीत्यर्थः। इतिकरणस्ततश्चेद्विवक्षा। गावोऽस्य सन्ति गोमान् देवदत्तः। वृक्षा अस्मिन्सन्ति वृक्षवान्पर्वतः। यवमान्। प्लक्षवान्।
इतिकरणाद्विषयनियमः---
`भूमनिन्द्राप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ।।(म.भा.2-393)
भूम्नि तावत्--गोमान्। निन्दायाम्--कुष्ठी, ककुदावर्त्तिनी। प्रशंसायाम्--रूपवती कन्या। नित्ययोगे--क्षीरिणो वृक्षाः। अतिशायने--उदरिणी कन्या। संसर्गे--दण्डी, छत्री। अस्तिविवक्षायाम्--अस्तिमान् ।।

- गुणवचनेभ्यो मतुपो लुग्वक्तव्यः। *(म.भा.2-394) शुक्लो गुणोऽस्यास्ति शुक्लः पटः। कृष्णः। श्वेतः ।।

</5-2-94>
रसादिभ्यश्च ।। <5-2-95> ।।
रसादिभ्यः प्रातिपदिकेभ्यो मतुप् प्रत्ययो भवति, `तदस्यास्त्यस्मिन् इत्येतस्मिन्विषये। रसवान्। रूपवान्।
किमर्थमिदमुच्यते, न पूर्वसूत्रेणैव मतुप् सिद्धः ? रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्--अन्ये मत्वर्थीया मा भूवन्निति।
कथं रूपिणी कन्या, रूपिको दारकः? प्रायिकमेतद्वचनम्।
इतिकरणो विवक्षार्थोऽनुवर्तते।
अथ वा---`गुणात्(ग.सू.121) इत्यत्र पठ्यते, तेन ये रसनेन्द्रियादिग्राह्या गुणाः, तेषामेवायं पाठः। इह मा भूत्-रूपिणी, रूपिक इति, शोभायोगः गम्यते। रसिको नटः(म.भा.2-394) इत्यत्र भावयोगः।

रस। रूप। गन्ध। स्पर्श। शब्द। स्नेह। `गुणात्(म.भा.121)। `एकाचः(ग.सू.121)। गुणग्रहणं रसादीनां विशेषणम्। रसादिः।।

</5-2-95>
प्राणिस्थादातो लजन्यतरस्याम् ।। <5-2-96> ।।
प्राणिस्थवाचिनः शब्दादाकारान्ताल्लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। चूडालः, चूडावान्। कर्णिकालः, कर्णिकावान्।
प्राणिस्थादिति किम् ? शिखावान्प्रदीपः। आदिति किम् ? हस्तवान्। पादवान्।

- प्राण्यङ्गादिति वक्तव्यम् *(म.भा.2-395)। इह मा भूत्--चिकीर्षाऽस्यास्ति, जिहीर्षाऽस्यास्ति चिकीर्षावान्, जिहीर्षावान्।

प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारः-चूडालोऽस्तीत्यत्र स्वरितो वाऽनुदात्ते पदादौ(8-2-6/3659) इति स्वरितबाधनार्थः ।।

</5-2-96>
सिध्मादिभ्यश्च ।। <5-2-97> ।।
`लजन्यतरस्याम् इति वर्त्तते। सिध्मादिभ्यः प्रातिपदिकेभ्यो लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। सिध्मलः, सिध्मवान्। गडुलः, गडुमान्। अन्यतरस्यांग्रहणेन मतुप्समुच्चीयते, न तु प्रत्ययो विकल्प्यते। तस्मादकारान्तेभ्य इनिठनौ प्रत्ययौ न भवतः।
सिध्म। गडु। मणि। नाभि। जीव। निष्पाव। पांसु। सक्तु। हनु। मासं। परशु। * पार्ष्णिधमन्योर्दीर्घश्च *(ग.सू.123)। पार्ष्णीलः। धमनीलः। पर्ण। उदक। प्रज्ञा। मण्ड। पार्श्व। गण्ड। ग्रन्थि। *वातदन्तबलललाटानामूङ् च*(ग.सू.124)। वातूलः। दन्तूलः। बलूलः। ललाटूलः। * जटाघटाकलाः क्षेपे *(ग.सू.125)। जटालः। घटालः। कलालः। सक्थि। कर्ण। स्नेह। शीत। श्याम। पिङ्ग। पित्त। शुष्क। पृथु। मृदु। मञ्जु। पत्त्र। चटु। कपि। कण्डु। संज्ञा। * क्षुद्रजन्तूपतापयोश्चेष्यते *(ग.सू.126)। क्षुद्रजन्तु---यूकालः। मक्षिकालः। उपतापात्--विचर्चिकालः। विपादिकालः। मूर्धालः। सिध्मादिः ।।

</5-2-97>
वत्सांसाभ्यां कामवले ।। <5-2-98> ।।
वत्सांसशब्दाभ्यां लचप्रत्ययो भवति यथासंख्यं कामवति, बलवति चार्थे। वत्सलः। अंसलः।
वृत्तिविषये वत्सांसशब्दौ स्वभावात्कामबलयोर्वर्त्तमानौ तद्वति प्रत्ययमुत्पादयतः। न ह्यत्र वत्सार्थः, अंसार्थो वा विद्यते; वत्सल इति स्नेहवानुच्यते--वत्सलः स्वामी, वत्सलः पितेति।
अंसल इति चोपचितमांसो बलवानुच्यते। न चायमर्थो मतुपि सम्भवतीति नित्यं लजेव भवति; अन्यत्रांसवती गौः, अंसवान् दुर्बलः ।।

</5-2-98>
फेनादिलच्च ।। <5-2-99> ।।
फेनशब्दादिलच् प्रत्ययो भवति मत्वर्थे। चकाराल्लच्च। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रैवानुवर्तते। फेनिलः, फेनलः, फेनवान् ।।

</5-2-99>
लोमादिपामादिपिच्छादिभ्यः शनेलचः ।। <5-2-100> ।।
लोमादिभ्यः पामादिभ्यः पिछादिभ्यश्च त्रिभ्यो गणेभ्यो यथासंख्यं श, न, इलच्-इत्येते प्रत्यया भवन्ति मत्वर्थे, मतुप् च। लोमादिभ्यः शो भवति-लोमशः, लोमवान्, पामादिभ्यो नो भवति-पामनः, पामवान्। पिच्छादिभ्य इलच् भवति--पिच्छिलः, पिच्छवान्। उरसिलः, उरस्वान्।
लोमन्। रोमन्। वल्गु। बभ्रु। हरि। कपि। शुनि। तरु। लोमादिः।
पामन्। वामन्। हेमन्। श्लेष्मन्। कद्रु। बलि। श्रेष्ठ। पलल। सामन्। * अङ्गात्कल्याणे *(ग.सू.127)। * शाकीपलालीदद्र्वां ह्रस्वत्वं च *(ग.सू.128)। * विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः *(ग.सू.129)। * लक्ष्म्या अच्च *(ग.सू.130)। पामादिः।
पिच्छ। उरस्। ध्रुवका। क्षुवका। * जटाघटाकलाः क्षेपे *(ग.सू.131)। वर्ण। उदक। पङ्क। प्रज्ञा। पिच्छादिः ।।

</5-2-100>
प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ।। <5-2-101> ।।
प्रज्ञा, श्रद्धा, अर्चा, वृत्ति-इत्येतेभ्यो णः प्रत्ययो भवति मतुबर्थे। मतुप्सर्वत्र समुच्चीयते। प्राज्ञः, प्रज्ञावान्। श्राद्धः, श्रद्धावान्। आर्चः, अर्चावान्। वार्त्तः, वृत्तिमान् ।।

</5-2-101>
तपः सहस्राभ्यां विनीनी ।। <5-2-102> ।।
तपः सहस्रशब्दाभ्यां विनि, इनि-इत्येतौ प्रत्ययौ भवतो मत्वर्थे। प्रत्ययार्थयोस्तु यथासंख्यं सर्वत्रैवास्मिन् प्रकरणे नेष्यते। तपोऽस्यास्मिन् वा विद्यते पतस्वी। सहस्री।

असन्तत्वाददन्तत्वाच्च सिद्धे प्रत्यये(5-2-121,115/1928,1922) पुनर्वचनमणा(5-2-103/1910) वक्ष्यमाणेन बाधा मा भूदिति। सहस्रात्तु ठनपि बाध्यते ।।

</5-2-102>
अण् च ।। <5-2-103> ।।
तपःसहस्राभ्यामण्च प्रत्ययो भवति। तापसः। साहस्रः योगविभाग उत्तरार्थः, यथासंख्यार्थश्च।

- अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् *(म.भा.2-397)। ज्योत्स्ना विद्यतेऽस्मिन्पक्षे ज्यौत्स्नः पक्षः। तामिस्रः। कौण्डलः। कौतपः। वैसर्पः। वैपादिकः ।।

</5-2-103>
सिकताशर्कराभ्यां च ।। <5-2-104> ।।
सिकताशर्कराभ्यामण्प्रत्ययो भवति मत्त्वर्थे। सैकतो घटः। शार्करं मधु।
अदेशे इहोदाहरणम्। देशे तु लुबिलचौ भविष्यतः ।।

</5-2-104>
देशे लुबिलचौ च ।। <5-2-105> ।।
सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ भवतः। चकारादण् च, मतुप् च। कस्य पुनरयं लुप् ? मतुबादीनामन्यतमस्य; विशेषाभावात्। सिकता अस्मिन्विद्यन्ते सिकता देशः, सिकतिलः, सैकतः, सिकतावान्। शर्करा देशः, शर्करिलः, शार्करः, शर्करावान्।
देश इति किम् ? सैकतो घटः। शार्खरं मधु ।।

</5-2-105>
दन्त उन्नत उरच् ।। <5-2-106> ।।
`उन्नते इति प्रकृतिविशेषणम्। दन्तशब्दादुन्नतोपाधिकादुरच् प्रत्ययो भवति मत्वर्थे। दन्ता उन्नता अस्य सन्ति दन्तुरः।
उन्नत इति किम् ? दन्तवान् ।।

</5-2-106>
ऊषसुषिमुष्कमधो रः ।। <5-2-107> ।।
ऊष, सुषि, मुष्क, मधु-इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे। ऊषरं क्षेत्रम्। सुषिरं काष्ठम्। मुष्करः पशुः। मधुरो गुडः।
इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति। इह न भवति-ऊषोऽस्मिन् घटे विद्यते, मध्वस्मिन्घटे विद्यते इति।

- रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् *(म.भा.2-397)। खमस्यास्ति कण्ठविवरं महत् खरः। मुखमस्यास्तीति

सर्वस्मिन्वक्तव्ये मुखरः। कुञ्जावस्य स्तः कुञ्चरः। इस्तिहनू कुञ्जशब्देनोच्येते।

- नगपांशुपाण्डुभ्यश्चेति वक्तव्यम् *(म.भा.2-397)। नगरम्, पांशुरम्, पाण्डुरम्।
- कच्छ्वा ह्रस्वत्वं च *। कच्छुरम् ।।

</5-2-107>
द्युद्रुभ्यां मः ।। <5-2-108> ।।
द्युद्रुशब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे। द्युमः। द्रुमः। रूढिशब्दावेतौ। रूढिषु च पुनर्मतुब्न विकल्प्यते ।।

</5-2-108>
केशाद्वोऽन्यतरस्याम् ।। <5-2-109> ।।
केशशब्दाद्वः प्रत्ययो भवति मत्वर्थेऽन्यतरस्याम्।
ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्त्तत एव ? मतुप्समुच्चयार्थं तदित्युक्तम्, अनेन त्विनिठनौ प्राप्येते। ततश्चातूरूप्यं भवति-केशवः, केशी, केशिकः, केशवानिति ।।

- वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् *(म.भा.2-397)। मणिवः। हिरण्यवः। कुररावः। कुमारावः। राजीवम्। कुञ्जावः। इष्टकावः। बिम्बावः।

- अर्णसो लोपश्च *। अर्णवः।
- छन्दसीवनिपौ च वक्तव्यौ *(म.भा.2-397)। वश्च मतुप् च। `रथीरभून्मुद्गलानी गविष्ठौ(ऋ.10-167-2)। `सुमङ्गलीरियं वधूः(ऋ.10-85-33)। वनिपु--`मघवानमीमहे(ऋ.10-167-2)। वकारमतुपौ च, उद्वा च, उद्वती च।
- मेधारथाभ्यामिरन्निरचौ वक्तव्यौ *(म.भा.2-397) `मेधिरः(ऋ.1-31-2)। `रथिरः(ऋ.3-1-17) ।।

</5-2-109>
गाण्ड्यजगात्संज्ञायाम् ।। <5-2-110> ।।
गाण्डी, अजग--इत्येताभ्यां वः प्रत्ययोः भवति संज्ञायां विषये मत्वर्थे। गाण्डीवं धनुः। ह्रस्वादपि भवति--गाण्डिवं धनुरिति। तत्र तुल्या हि संहिता दीर्घह्रस्वयोः। उभयथा च सूत्रं प्रणीतम् ।।

</5-2-110>
काण्डाण्डादीरन्नीरचौ ।। <5-2-111> ।।
काण्ड, अण्ड-इत्येताभ्यां यथासंख्यमीरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे। काण्डीरः। अण्डीरः ।।

</5-2-111>
रजःकृष्यासुतिपरिषदो वलच् ।। <5-2-112> ।।
रजः प्रभृतिभ्यः प्रातिपदिकेभ्यो वलच् प्रत्ययो भवति मत्वर्थे। रजस्वला स्त्री। कृषीवलः कुटुम्बी। आसुतीवलः शौण्डिकः। परिषद्वलो राजा। वले(6-3-118/1040) इति दीर्घत्वम्। इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते। तेनेह न भवति--रजोऽस्मिन् ग्रामे विद्यत इति।

- वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् *(म.भा.2-397)। भ्रातृवलः। पुत्रवलः। उत्साहवलः ।।

</5-2-112>
दन्तशिखात्संज्ञायाम् ।। <5-2-113> ।।
दन्त, शिखा-शब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये। दन्तावलः सैन्यः। दन्तावलो गजः। शिखावलं
नगरम्। शिखावला स्थूणा ।।

</5-2-113>
ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ।। <5-2-114> ।।
ज्योत्स्नादयः शब्दा निपात्यन्ते मत्वर्थे संज्ञायां विषये। ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते-ज्योत्स्ना चन्द्रप्रभा। तमस उपधाया इकारो रश्च-तमिस्रा रात्रिः। स्त्रीत्वमतन्त्रम्। अन्यत्रापि दृश्यते--तमिस्रं नभः। शृङ्गादिनच्प्रत्ययो निपात्यते शृङ्गिणः। ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ-ऊर्जस्वी।
ऊर्जस्वलः। गोर्मिनिप्रत्ययो निपात्यते-गोमी। मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते-मलिनः, मलीमसः ।।

</5-2-114>
अत इनिठनौ ।। <5-2-115> ।।
अकारान्तात्प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः। दण्डी, दण्डिकः। छत्री, छत्त्रिकः।
अन्यतरस्यामित्यधिकारान्मतुबपि भवति। दण्डवान्। छत्रवान्। तपरकरणं किम्? श्रद्धावान्।
`एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ।(म.भा.2-398)
एकाक्षरात्तावत्-स्ववान्। खवान्। कृतः--कारकवान्। जातेः-व्याघ्रवान्। सिंहवान्। सप्तम्याम्-दण्कडा अस्यां सन्ति दण्डवती शालेति।
`इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते इत्युक्तम्, तेन क्वचिद्भवत्यपि--कार्यी, हार्यी, तण्डुली, तण्डुलिक इति ।।

</5-2-115>
व्रीह्यादिभ्यश्च ।। <5-2-116> ।।
व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे। मतुब्भवत्येव। व्रीही, व्रीहिकः, व्रीहिमान्। मायी, मायिकः, मायावान्।
न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते, किं तर्हि ?
`शिखादिभ्य इनिर्वाच्य इकन्यवखदादिषु।(म.भा.2-398)
परिशिष्टेभ्य उभयम्।
शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन्, हंसा--इत्येतेभ्य इनिरेवेष्यते। यवखद, कुमारी, नौ-इत्येतेभ्य

इकन्नेवेष्यते। परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः।
व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते ? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते। शालयोऽस्य सन्ति शालिनः, शाली, शालिकः, शालिमान् इति ।
व्रीहिशिखादयः पूर्वं पठिताः यवखद। कुमारी। नौ। * शीर्षान्नञः *(ग.सू.132)। अशीर्षी, अशीर्षिकः ।।

</5-2-116>
तुन्दादिभ्य इलच्च ।। <5-2-117> ।।
तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे। चकारादिनिठनौ मतुप् च। तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान्। उदरिलः, उदरी, उदरिकः, उदरवान्।
तुन्द। उदर। पिचण्ड। घट। यव। व्रीहि। * स्वाङ्गाद्विवृद्धौ च *(ग.सू.133)। तुन्दादिः ।।

</5-2-117>
एकगोपूर्वाट्ठञ् नित्यम् ।। <5-2-118> ।।
एकपूर्वाद्गोपूर्वाच्च प्रातिपदिकान्नित्यं ठञ् प्रत्ययो भवति मत्वर्थे। एकशतमस्यास्तीति ऐकशतिकः। ऐकसहस्रिकः। गोपूर्वाच्च-गौशतिकः। गौसहस्रिकः।
अत इत्येव--एकविंशतिरस्यास्तीति न भवति।
कथमैकगविकः ? समासान्ते कृते भविष्यति। कथं गौशकटिकः ? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति ततो भविष्यति। अवश्यं च `अतः इत्यनुवर्त्यम्, द्वन्द्वोपतापगर्ह्यात्(5-2-128/1934) इत्येवमाद्यर्थम् ।
नित्यग्रहणं मतुपो बाधनार्थम्। कथमेकद्रव्यवत्वादिति ? नैवायं साधुः। एकेन वा द्रव्यवत्त्वादिति समर्थनीयम् ।।

</5-2-118>
शतसहस्रान्ताच्च निष्कात् ।। <5-2-119> ।।
शतान्तात् सहस्रान्ताच्च प्रातिपदिकाट्ठञ् प्रत्ययो भवति मत्वर्थे। तौ चेच्छतसहस्रशब्दौ निष्कात्परौ भवतः। निष्कशतमस्यास्ति नैष्कशतिकः। नैष्कसहस्रिकः।
सुवर्णनिष्कशतमस्यास्तीत्यनभिधानान्न भवति ।।

</5-2-119>
रूपादाहतप्रशंसयोर्यप् ।। <5-2-120> ।।
आहतप्रशंसे प्रकृत्युपाधी। आहतप्रशंसाविशिष्टार्थे वर्तमानाद्रूपशब्दाद्यप् प्रत्ययो भवति मत्वर्थे। आहतं रूपमस्य रूप्यो दीनारः। रूप्यः केदारः। रूप्यं कार्षापणम्। प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः। निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते।
आहतप्रशंसयोरिति किम् ? रूपवान्।

- यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् *(म.भा.2-399)। हिम्याः पर्वताः। गुण्या ब्राह्मणाः ।।

</5-2-120>
अस्मायामेधास्रजो विनिः ।। <5-2-121> ।।
असन्तात्प्रातिपदिकात्, माया, मेधा, स्रज्--इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे। मतुप् सर्वत्र समुच्चीयत एव। असन्तात्तावत्-- यशस्वी, तपस्वी, पयस्वी। मायावी। मेधावी। स्रग्वी।
मायाशब्दाद् व्रीह्यादिषु पाठादिनिठनावपि भवतः--मायी, मायिकः ।।

</5-2-121>
बहुलं छन्दसि ।। <5-2-122> ।।
छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे। `अग्ने तेजस्विन्(तै.सं.3-3-11)। न भवति- सूर्यो वर्चस्वान्।

- छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं चेति वक्तव्यम् *(म.भा.2-399)। `अष्ट्रावी(ऋ.10-102-8)। `मेखलावी(अ.प्रा.3-4-1)। `द्वयावी(अ.प्रा.3-4-1)। `उभयावी(ऋ.5-7-10)। रुजावी। हृदयावी। द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति।
- मर्मणश्चेति वक्तव्यम् *(म.भा.2-399)। मर्मावी।
- सर्वत्रामयस्योपसंख्यानम् *(म.भा.2-399)। छन्दसि भाषायां च। `आमयावी(तै.सं.3-2-3)।

- शृङ्गवृन्दाभ्यामारकन्वक्तव्यः *(म.भा.2-399)। शृङ्गारकः। `वृन्दारकः(श.ब्रा.14-6-11-1)।
- फलबर्हाभ्यामिनज्वक्तव्यः *(म.भा.2-399) फलिनः। बर्हिणः।
- हृदयाच्चालुरन्यतरस्याम् *(म.भा.2-399)। हृदयालुः, हृदयी, हृदयिकः, हृदयवान्।
- शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुज्वक्तव्यः *(म.भा.2-399) शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः ।
- तन्न सहत इति हिमाच्चेलुः *(म.भा.2-399) हिमं न सहते हिमेलुः।
- बलादूलच् *(म.भा.2-399) बलं न सहते बलूलः।
- वातात्समूहे च *(म.भा.2-399)। *वातं न सहत इति च *। वातानां समूहः, वातं न सहत इति वा वातूलः।
- पर्वमरुद्भ्यां तन् वक्तव्यः *(म.भा.2-400) पर्वतः। मरुत्तः।
- अर्थात्तदभावे इनिर्वक्तव्यः *। अर्थी। तदभाव इत्येव--अर्थवान्। तदेतत्सर्वं बहुलग्रहणेन सम्पद्यते ।।

</5-2-122>
ऊर्णाया युस् ।। <5-2-123> ।।
उर्णाशब्दाद्युस् प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। ऊर्णाऽस्य विद्यते `ऊर्णायुः(वा.सं.13-50)। केचिच्छन्दोग्रहणमनुवर्तयन्ति ।।

</5-2-123>
वाचो ग्मिनिः ।। <5-2-124> ।।
वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे। वाग्ग्मी, वाग्ग्मिनौ, वाग्ग्मिनः ।।

</5-2-124>
आलजाटचौ बहुभाषिणि ।। <5-2-125> ।।
वाच्-शब्दात्प्रथमासमर्थादालच्, आटच्--इत्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिण्यभिधेये। ग्मिनेरपवादः। वाचालः। वाचाटः।

- कुत्सित इति वक्तव्यम् *(म.भा.2-400)। यो हि सम्यग् बहु भाषते स वाग्गमीत्येव भवति।।

</5-2-125>
स्वामिन्नैश्वर्ये ।। <5-2-126> ।।
`स्वामिन् इति निपात्यते ऐश्वर्ये गम्यमाने। स्वशब्दादैश्वर्यवाचिनो मत्वर्थे आमिन्प्रत्ययो निपात्यते। स्वमस्यास्तीति=ऐश्वर्यमस्यास्तीति स्वामी, स्वामिनौ, स्वामिनः.
ऐश्वर्य इति किम् ? स्ववान् ।।

</5-2-126>
अर्शआदिभ्योऽच् ।। <5-2-127> ।।
`अर्शस् इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे। अर्शांसि अस्य विद्यन्ते अर्शसः। उरसः। आकृतिगणश्चायम्।
यत्राभिन्नरुपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम्।
अर्शस्। उरस्। तुन्द। चतुर। पलित। जटा। घटा। अभ्र। कर्दम। आम। लवण। * स्वाङ्गाद्धीनात् *(ग.सू.134) । * वर्णात् *(ग.सू.135)। अर्शआदिः ।।

</5-2-127>
द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।। <5-2-128> ।।
द्वन्द्वः=समासः, उपतापः=रोगः, गर्ह्यम्=निन्यम्, तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्य इनिः प्रत्ययो भवति मत्वर्थे। द्वन्द्वात्तावत्-कटकवलयिनी, शङ्खनूपुरिणी। उपतापात्-कुष्ठी, किलासी। गर्ह्यात्-ककुदावर्त्ती, काकतालुकी।
प्राणिस्थादिति किम्? पुष्पफलवान् वृक्षः।
प्राण्यङ्गान्नेष्यते--पाणिपादवती।
अत इत्यनुवर्त्तते, तेनेह न भवति-चित्रललाटिकावती।
सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ।।

</5-2-128>
वातातिसाराभ्यां कुक् च ।। <5-2-129> ।।
वातातिसारशब्दाभ्यामिनिः प्रत्ययो भवति, तत्सन्नियोगेन च तयोः कुगागमो भवति। वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे प्रत्यये कुगर्थमेवेदं वचनम्। वातकी। अतिसारकी।

- पिशाचाच्येति वक्तव्यम् *(म.भा.2-400)। पिशाचकी वैश्रवणः।

रोगे चायमिष्यते। इह न भवति--वातवती गुहेति ।।

</5-2-129>
वयसि पूरणात् ।। <5-2-130> ।।
इनिरनुवर्तते। पूरणप्रत्ययान्तात्प्रातिपदिकादिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये। पञ्चमो मासोऽस्यास्ति संवत्सरो वा पञ्चमी उष्ट्रः। नवमी। दशमी।
सिद्धे सति नियमार्थं वचनम्-इनिरेव भवति, ठन्न भवतीति। वयसीति किम्? पञ्चमवान् ग्रामरागः ।।

</5-2-130>
सुखादिभ्यश्च ।। <5-2-131> ।।
`सुख-इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो नियम्यते मत्वर्थे। सुखी। दुःखी।
`माला क्षेप(ग.सू.136) इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं वचनम्।
सुख। दुःख। तृप्र। कृच्छ्र। आम्र। अलीक। करुणा। कृपण। सोढ। प्रमीप। शील। हल। * माला क्षेपे *(ग.सू.136)। प्रणय। सुखादिः ।।

</5-2-131>
धर्मशीलवर्णान्ताच्च ।। <5-2-132> ।।
अन्तशब्दः प्रत्येकमभिसम्बध्यते, धर्माद्यन्तात्प्रातिपदिकादिनिः प्रत्ययो नियम्यते। ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी।

</5-2-132>
हस्ताज्जातौ ।। <5-2-133> ।।
हस्तशब्दादिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज्जातिरभिधीयते। हस्तोऽस्यास्तीति हस्ती, हस्तिनौ, हस्तिनः।
जाताविति किम्? हस्तवान्पुरुषः ।।

</5-2-133>
वर्णाद् ब्रह्मचारिणि ।। <5-2-134> ।।
वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते। ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेतः, स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, नियममासेवते इत्यर्थः। वर्णी, वर्णिनौ, वर्णिनः।
ब्रह्मचारिणीति किम्? वर्णवान्।
ब्राह्मणादयस्त्रयो वर्णा वर्णिन उच्यन्ते ।।

</5-2-134>
पुष्करादिभ्यो देशे ।। <5-2-135> ।।
`पुष्कर-इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद्देशोऽभिधीयते। पुष्करिणी। पद्मिनी।
देश इति किम्? पुष्करवान् हस्ती।

- इनिप्रकरणे बलाद्बाहूरुपूर्वादुपसंख्यानम् *(म.भा.2-400)। बाहुबली। ऊरुबली।
- सर्वादेश्चेति वक्तव्यम् *(म.भा.2-400) सर्वधनी। सर्वबीजी। सर्वकेशी नटः।
- अर्थाच्चासन्निहिते *(म.भा.2-401)। अर्थी। असन्निहित इति किम्? अर्थवान्।
- तदन्ताच्चेति वक्तव्यम् *। धान्यार्थी। हिरण्यार्थी।

पुष्कर। पद्म। उत्पल। तमाल। कुमुद। नड। कपित्थ। बिस। मृणाल। कर्दम। शालूक। विगर्ह। करीष। शिरीष। यवास। प्रवास। हिरण्य। पुष्करादिः ।।

</5-2-135>
बलादिभ्यो मतुबन्यतरस्याम् ।। <5-2-136> ।।
बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति। अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते। बलवान्, बली। उत्साहवान्, उत्साही।
बल। उत्साह। उद्भाव। उद्वास। उद्वाम। शिखा। पूग। मूल। दंश। कुल। आयाम। व्यायाम। उपयाम। आरोह। अवरोह। परिणाह। युद्ध। बलादिः ।।

</5-2-136>
संज्ञायां मन्माभ्याम् ।। <5-2-137> ।।
मन्नन्तात्प्रातिपदिकान्मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत्संज्ञा गम्यते। प्रथिमिनी। दामिनी। मशब्दान्तात्--होमिनी। सोमिनी।
संज्ञायामिति किम् ? सोमवान्। होमवान् ।।

</5-2-137>
कंशंभ्यां बभयुस्तितुतयसः ।। <5-2-138> ।।
कम्, शमिति मकारान्तावुदकसुखयोर्वाचकौ; ताभ्यां ब, भ, युस्, ति, तु, त, यस्-इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे। कम्बः, शम्बः। कम्भः, शम्भः। कंयुः, शंयुः। कन्तिः, शन्तिः। कन्तुः, शन्तुः। कन्तः, शन्तः। कंयः, शंयः।
सकारः पदसंज्ञार्थः, तेनानुस्वारपरसवर्णौ सिद्धौ भवतः। संज्ञायां हि सत्याम्-कम्यः, शम्य इति स्यात् ।

</5-2-138>
तुन्दिबलिवटेर्भः ।। <5-2-139> ।।
तुन्दि, बलि, वटि-इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे। तुन्दिरिति वृद्धा नाभिरुच्यते, सास्यास्तीति तुन्दिभः, बलिभः, वटिभः।
बलिशब्दः पामादिषु पठ्यते, तेन बलिन इत्यपि भवति।।

</5-2-139>
अहंशुभमोर्युस् ।। <5-2-140> ।।
`अहम् इति शब्दान्तरमहङ्कारे वर्त्तते, `शुभम् इत्यव्ययं शुभपर्यायः; ताभ्यां युस्प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। अहंयुः। अहंकारवानित्यर्थः। शुभंयुः। कल्याणवानित्यर्थः।

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
पञ्चमस्याध्यायस्य द्वितीयः पादः
</5-2-140>

# काशिका/पञ्चमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pbq
< काशिका | पञ्चमोऽध्यायः
।। अथ पञ्चमाऽध्याये तृतीयः पादः।।
प्राग्दिशो विभक्तिः ।। <5-3-1> ।।
दिक्शब्देभ्य सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः(5-3-27/1974) इति वक्ष्यति, प्रागेतस्माद्दिक्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः। वक्ष्यति-पञ्चम्यास्तसिल्(5-3-7/1953)। ततः। यतः। कुतः।
तसिलादीनां विभक्तित्वे प्रयोजनम्-त्यदादिविधयः इदमो विभक्तिस्वरश्च। इह। ऊडिदम्(6-1-176/3717) इति विभक्त्युदात्तत्वं सिद्धं भवति।
अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नोपयुज्यत इति द्वयमपि निवृत्तम्। वावचनं तु वर्त्तते एव, तेन विकल्पेन तसिलादयो भवन्ति-कुतः, कस्मात्, कुत्र, कस्मिन्नति।

</5-3-1>
किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।। <5-3-2> ।।
`प्राग्दिशः इत्येव। किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्यया वेदितव्याः। सर्वनामत्वात्प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते। कुतः, कुत्र। यतः, यत्र। ततः, तत्र। बहुतः, बहुत्र।
अद्व्यादिभ्य इति किम्? द्वाभ्याम्, द्वयोः। प्रकृतिपरिसंख्यानं किमर्थम्? वृक्षात्, वृक्षे।
प्राग्दिश इत्येव--वैयाकरणपाशः।
सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासाद्।

- बहुग्रहणे संख्याग्रहणम् *(म.भा.2-402)। इह न भवति--बहोः सूपात्, बहौ सूपे इति ।।

</5-3-2>
इदम इश् ।। <5-3-3> ।।
`प्राग्दिशः इत्येव। इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः। शकारः सर्वादेशार्थः। इह ।।

</5-3-3>
एतेतौ रथोः ।। <5-3-4> ।।
रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः। इशोऽपवादः। रेफेऽकार उच्चारणार्थः। इदमो र्हिल्(5-3-16/1965), एतर्हि। इदमस्थमुः(5-3-24/1972), इत्थम् ।।

</5-3-4>
एतदोऽश् ।। <5-3-5> ।।
`प्राग्दिशः इत्येव। एतदः प्राग्दिशीये परतोऽशित्ययमादेशो भवति। शकारः सर्वादेशार्थः। अतः। अत्र।
`एतदः इत् योगविभागः कर्त्तव्यः(म.भा.2-403)। एतदो रथोः परत एत, इत्-इत्येतावादेशौ भवतः--एतर्हि, इत्थम्। रेफादिः अनद्यतनेर्हिलन्यतरस्याम्(5-3-21/1969) इति विद्यत एव। थमुप्रत्ययः पुनरेतद् उपसंख्येयः ।।

</5-3-5>
सर्वस्य सोऽन्यतरस्यां दि ।। <5-3-6> ।।
सर्वस्य `स इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम्। सर्वदा। सदा।
प्राग्दिशीय इत्येव--सर्वं ददातीति सर्वदा ब्राह्मणी ।।

</5-3-6>
पञ्चम्यास्तसिल् ।। <5-3-7> ।।
पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिल्प्रत्ययो भवति। कुतः। यतः ततः। बहुतः ।।

</5-3-7>
तसेश्च ।। <5-3-8> ।।

प्रतियोगे पञ्चम्यास्तसिः(5-4-44/2111) अपादाने चाहीयरुहोः(5-4-45/2112) इति वक्ष्यति। तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति। कुत आगतः। यतः। ततः। बहुत आगतः।
तसेस्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च ।।

</5-3-8>
पर्यभिभ्यां च ।। <5-3-9> ।।
परि, अभि-इत्येताभ्यां तसिल् प्रत्ययो भवति।
सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः ।।

</5-3-9>
सप्तम्यास्त्रल् ।। <5-3-10> ।।
किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति। कुत्र। यत्र। तत्र। बहुत्र।
</5-3-10>
इदमो हः ।। <5-3-11> ।।
इदमः सप्तम्यन्ताद्धः प्रत्ययो भवति। त्रलोऽपवादः। इह।।

</5-3-11>
किमोऽत् ।। <5-3-12> ।।
किमः सप्तम्यन्तादत्प्रत्ययो भवति। त्रलोऽपवादः। क्व भोक्ष्यसे। क्वाग्येष्यसे।
त्रलमपि केचिदिच्छिन्ति--कुत्र। तत्कथम् ? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते ।।

</5-3-12>
वा ह चच्छन्दसि ।। <5-3-13> ।।
किमः सप्तम्यन्ताद्वा हः प्रत्ययो भवति छन्दसि विषये। यथाप्राप्तं च। क्व। `कुह(ऋ.8-73-4)। कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः ।।

</5-3-13>
इतराभ्योऽपि दृश्यन्ते ।। <5-3-14> ।।
सप्तमीपञ्चम्यपेक्षमितरत्वम्। इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते। दृशिग्रहणं प्रायिकविध्यर्थम्, तेन भवदादिभिर्योग एवैतद्विधानम्। के पुनर्भवदादयः ? भवान्दीर्घायुरायुष्मान् देवानाम्प्रिय इति। स भवान्। ततो भवान्, तत्र भवान्। तं भवन्तम्, तत्र भवन्तम्, ततो भवन्तम्। तेन भवता तत्र भवता, ततो भवता। तस्मै भवते, ततो भवते, तत्र भवते। तस्माद्भवतः, ततो भवतः, तत्र भवतः। तस्य भवतः, ततो भवतः, तत्र भवतः। तस्मिन् भवति, ततो भवति, तत्र भवति। एवं दीर्घायुःप्रभृतिष्वप्युदाहार्यम् ।।

</5-3-14>
सर्वैकान्यकिंयत्तदः काले दा ।। <5-3-15> ।।
`सप्तम्याः इति वर्त्तते, न तु `इतराभ्यः इति। सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति। त्रलोऽपवादः। सर्वस्मिन् काले सर्वदा। एकदा । अन्यदा। कदा। तदा।
काल इति किम्? सर्वत्र देशे ।।

</5-3-15>
इदमो र्हिल् ।। <5-3-16> ।।
`सप्तम्याः इत्येव। `काले इति च। इदमः सप्तम्यन्तात्काले वर्तमानाद् र्हिल् प्रत्ययो भवति। हस्यापवादः। लकारः स्वरार्थः। अस्मिन् काले एतर्हि। काले इत्येव--इह देशे ।।

</5-3-16>
अधुना ।। <5-3-17> ।।
`अधुना इति निपात्यते। इदमोऽश्भावो धुना च प्रत्ययः। अस्मिन् काले अधुना ।।

</5-3-17>
दानीं च ।। <5-3-18> ।।

इदमः सप्तम्यन्तात्काले वर्त्तमानाद्दानीं प्रत्ययो भवति। अस्मिन् काले इदानीम् ।।

</5-3-18>
तदो दा च ।। <5-3-19> ।।
तदः सप्तम्यन्तात्काले वर्त्तमानाद् दा प्रत्ययो भवति, चकारद्दानीं च। तस्मिन्काले तदा। तदानीम्।
तदो दावचनमनर्थकम्; विहितत्वात् ।।

</5-3-19>
तयोर्दार्हिलौ चच्छन्दसि ।। <5-3-20> ।।
`तयोः इति प्रातिपदिकनिर्देशः। तयोरिदमः तदश्च यथासंख्यं दा-र्हिलौ प्रत्ययौ भवतश्छन्दसि विषये। चकाराद्यथाप्राप्तं च। `इदावत्सरीयः(काठ.सं.13-15)। इदं तर्हि। इदानीम्। तदानीम् ।।

</5-3-20>
अनद्यतने र्हिलन्यतरस्याम् ।। <5-3-21> ।।
`छन्दसि इति न स्वर्यते, सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा ।।

</5-3-21>
सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।। <5-3-22> ।।
`सप्तम्याः इति, `काले इति च वर्त्तते। सद्यःप्रभृतयः शब्दा निपात्यन्ते। प्रकृतिः, प्रत्ययः, आदेशः, कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते। समानस्य सभावो निपात्यते द्यश्च प्रत्ययः, अहन्यभिधेये(मम.भा.2-407)। समानेऽह्नि सद्यः।
पूर्वपूर्वतरयोः परभावो निपात्यते, उदारी च प्रत्ययौ, संवत्सरेऽभिधेये। पूर्वस्मिन्संवत्सरे परुत्। पूर्वतरे संवत्सरे परारि।
इदम इश्भावः, समसण् प्रत्ययो निपात्यते संवत्सरेऽभिधेये। अस्मिन्संवत्सरे एषमः(म.भा.2-407)।
परस्मादेद्यविः प्रत्ययोऽहनि। परस्मिन्नहनि परेद्यवि।
इदमोऽश्भावो द्यश्च प्रत्ययोऽहनि(म.भा.2-407)। अस्मिन्नहनि अद्य।
पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस्-प्रत्ययो निपात्यतेऽहन्यभिधेये(म.भा.2-407)। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहति इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उभयोरह्नोः उभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः।

- द्युश्चोभयाद्वक्तव्यः *(म.भा.2-408)। उभयद्युः ।।

</5-3-22>
प्रकारवचने थाल् ।। <5-3-23> ।।
किंसर्वनामबहुभ्योऽद्व्यादिभ्यः(5-3-2/1948) इति वर्त्तते। `सप्तम्याः इति, `काले इति च निवृत्तम्। सामान्यस्य विशेषो भेदकः=प्रकारः। प्रकृत्यर्थविशेषणं चैतत्। प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति। तेन प्रकारेण तथा। यथा। सर्वथा।
जातीयरोऽपीदृशमेव लक्षणम्, स तु स्वभावात्प्रकारवति वर्त्तते। थाल्पुनः प्रकारमात्रे ।।

</5-3-23>
इदमस्थमुः ।। <5-3-24> ।।
इदम्-शब्दात्प्रकारवचने थमुः प्रत्ययो भवति। थालोऽपवादः। अनेन प्रकारेण इत्थम्। उकारो मकारपरित्राणार्थः ।।

</5-3-24>
किमश्च ।। <5-3-25> ।।
किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। केन प्रकारेण कथम्। योगविभाग उत्तरार्थः।।
</5-3-25>
था हेतौ चच्छन्दसि ।। <5-3-26> ।।
किंशब्दाद्धेतौ वर्तमानात्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये। हेतौ तावत्-`कथा ग्रामं न पृच्छसि(ऋ.1-146-1)। केन हेतुना न पृच्छसीत्यर्थः। प्रकारवचने--कथा देवा आसन्पुराविदः।
विभक्तिसंज्ञायाः पूर्णोऽवधिः ।।

</5-3-26>
दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।। <5-3-27> ।।
दिशां शब्दाः दिक्शब्दाः, तेभ्यो दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्योऽस्तातिः प्रत्ययो भवति स्वार्थे।
यथासंख्यमत्र नेष्यते। पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम्। अधस्ताद्वसति, अधस्तादागतः, अधस्ताद्रमणीयम्।
दिक्शब्देभ्य इति किम् ? ऐन्द्र्यां दिशि वसति। सप्तमीपञ्चमीप्रथमाभ्य इति किम् ? पूर्वं ग्रामं गतः। दिग्देशकालेष्विति किम् ? पूर्वस्मिन्गुरौ वसति।
इकारस्तकारपरित्राणार्थः ।।

</5-3-27>
दक्षिणोत्तराभ्यामतसुच् ।। <5-3-28> ।।
दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थेऽतसुच् प्रत्ययो भवति। अस्तातेरपवादः। दक्षिणाशब्दः काले न सम्भवतीति दिग्देशवृत्तिः परिगृह्यते। दक्षिणतो वसति, दक्षिणत आगतः, दक्षिणतो रमणीयम्। उत्तरतो वसति, उत्तरत आगतः, अत्तरतो रमणीयम्।
अकारो विशेषणार्थः--षष्ठ्यतसर्थप्रत्ययेन(2-3-30/609) इति।

</5-3-28>
विभाषा परावराभ्याम् ।। <5-3-29> ।।
परावरशब्दाभ्यां विभाषाऽतसुच्प्रत्ययो भवति अस्तातेरर्थे। परतो वसति, परत आगतः, परतो रमणीयम्। परस्ताद्वसति, परस्तादागतः, परस्ताद्रमणीयम्। अवरतो वसति, अवरत आगतः, अवरतो रमणीयम्। अवस्ताद्वसति, अवस्तादागतः, अवस्ताद्रमणीयम् ।।

</5-3-29>
अञ्चेर्लुक् ।। <5-3-30> ।।
अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति। प्राच्यां दिशि वसति। लुक्तद्धितलुकि(1-2-49/1408) इति स्त्रीप्रत्ययोऽपि निवर्तते।
प्राग्वसति, प्रागागतः, प्राग्रमणीयम्, प्रत्यग्वसति, प्रत्यगागतः, प्रत्यग्रमणीयम् ।।

</5-3-30>
उपर्युपरिष्टात् ।। <5-3-31> ।।
उपरि, उपरिष्टात्-इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे। ऊर्ध्वस्योपभाव रिल्-रिष्टातिलौ च प्रत्ययौ निपात्येते। उर्ध्वायां दिशि वसति उपरि वसति, उपर्यागतः, उपरि रमणीयम्। उपरिष्टाद् वसति, उपरिष्टादागतः, उपरिष्टाद्रमणीयम् ।।

</5-3-31>
पश्चात् ।। <5-3-32> ।।
`पश्चात् इत्ययं शब्दो निपात्यतेऽस्तातेरर्थे। अपरस्य पश्चभाव आतिश्च प्रत्ययः। अपरस्यां दिशि वसति पश्चाद्दिशि वसति, पश्चादागतः, पश्चाद्रमणीयम् ।

- दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः *(म.भा.2-409)। दक्षिणपश्चात्। उत्तरपश्चात् ।
- अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः *(म.भा.2-409)। दक्षिणपश्चार्धः। उत्तरपश्चार्धः।
- विनापि पूर्वपदेन पश्चभावो वक्तव्यः *(म.भा.2-409)

</5-3-32>
पश्च पश्चा चच्छन्दसि ।। <5-3-33> ।।
पश्च-पश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे। छकारात् पश्चादित्यपि भवति। अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते। परो व्याप्तो जायते पश्च सिंहः, पश्चा सिंहः, पश्चात्सिहः ।।

</5-3-33>
उत्तराधरदक्षिणादातिः ।। <5-3-34> ।।।
उत्तराधरदक्षिणशब्देभ्य अतिः प्रत्ययो भवति अस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद्वसति, उत्तरादागतः, उत्तराद्रमणीयम्। अधराद्वसति, अधरादागतः, अधराद्रमणीयम्। दक्षिणाद्वसति, दक्षिणादागतः, दक्षिणाद्रमणीयम् ।।

</5-3-34>
एनबन्यतरस्यामदूरेऽपञ्चम्याः ।। <5-3-35> ।।
उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे। अदूरे चेदवधिमामनवधेर्भवति। विभक्तित्रये प्रकृते `पञ्चम्याः इति पञ्चमी पर्युदस्यते। तेनायं सप्तमीप्रथमान्ताद्विज्ञायते प्रत्ययः। उत्तरेण वसति, उत्तराद्वसति, उत्तरतो वसति। उत्तरेण रमणीयम्, उत्तराद्रमणीयम्, उत्तरतो रमणीयम्। अधरेण वसति, अधराद्वसति, अधस्ताद्वसति। अधरेण रमणीयम्, अधराद्रमणीयम्, अधस्ताद्रमणीयम्। दक्षिणेन वसति, दक्षिणाद्वसति, दक्षिणतो वसति। दक्षिणेन रमणीयम्, दक्षिणाद्रमणीयम्, दक्षिणतो रमणीयम्।
अदूर इति किम् ? उत्तराद्वसति। अपञ्चम्या इति किम् ? उत्तरादागतः।

- अपञ्चम्या इति प्रागसेः *(5-3-39/1975)। असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति।

केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति। दिक्शब्दमात्रात्प्रत्ययं मन्यन्ते--पूर्वेण ग्रामम्, अपरेण ग्रामम् ।।

</5-3-35>
दक्षिणादाच् ।। <5-3-36> ।।
`अदूर इति न स्वर्यते। `अपञ्चम्याः इति वर्तते। दक्षिणशब्दादाच्प्रत्ययो भवति अस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्।
अपञ्चम्या इत्येव--दक्षिणत आगतः।
चकारो विशेषणार्थः, अञ्चूत्तरपदाजाहियुक्ते(2-3-29/595) इति ।।

</5-3-36>
आहि च दूरे ।। <5-3-37> ।।
दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्। दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति, दक्षिणा वसति। दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम्।
दूर इति किम् ? दक्षिणतो वसति।
अपञ्चम्या इत्येव--दक्षिणत आगतः ।।

</5-3-37>
उत्तराच्च ।। <5-3-38> ।।
उत्तरशब्दादाजाही प्रत्ययौ भवतः, अस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति। उत्तरा वसति, उत्तराहि वसति। उत्तरा रमणीयम्, उत्तराहि रमणीयम्।
दूर इत्येव---उत्तरेण प्रयाति।
अपञ्चम्या इत्येव---उत्तरादागतः ।।

</5-3-38>
पूर्वाधरावराणामसि पुरधवश्चैषाम् ।। <5-3-39> ।।
`अपञ्चम्याः इति निवृत्तम्। तिसृणां विभक्तीनामिह ग्रहणम्। पूर्वाधरावराणामसिः प्रत्ययो भवति अस्तातेरर्थे। तत्सन्नियोगेन चैषां यथासंख्यं पुर्, अध्, अव्-इत्येते आदेशा भवन्ति। असीत्यविभक्तिको निर्देशः। पुरो वसति, पुर
आगतः, पुरो रमणीयम्। अधोःवसति, अध आगतः, अधो रमणीयम्। अवो वसति, अव आगतः, अवो रमणीयम् ।।

</5-3-39>
अस्ताति च ।। <5-3-40> ।।
सप्तम्यन्तमेतत्। अस्तातिप्रत्यये परतः पूर्वादीनां यतासंख्यं पुरादय आदेशा भवन्ति। इदमेवादेशविधानं ज्ञापकम्-अस्तातिरेभ्यो भवति, असिप्रत्ययेन न बाध्यत इति। पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम्। अधस्ताद्वसति, अधस्तादागतः, अधस्ताद्रमणीयम् ।

</5-3-40>
विभाषाऽवरस्य ।। <5-3-41> ।।
पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। अवरस्यास्तातौ परतो विबाषा `अव इत्ययमादेशो भवति। अवस्ताद्वसति, अवस्तादागतः, अवस्ताद्रमणीयम्। अवरस्ताद्वसति, अवरस्तादागतः, अवरस्ताद् रमणीयम् ।।

</5-3-41>
संख्याया विधार्थे धा ।। <5-3-42> ।।

संख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्ते वर्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विदा=प्रकारः, स च सर्वक्रियाविषय एव गृह्यते। क्रियाप्रकारे वर्तमानायाः संख्याया धा प्रत्ययः। एकधा भुङ्क्ते। द्विधा गच्छति। त्रिधा। चतुर्धा। पञ्चधा ।।

</5-3-42>
अधिकरणविचाले च ।। <5-3-43> ।।
`संख्यायाः इत्येव। अधिकरणम्=द्रव्यम्, तस्य विचालः=संख्यान्तरापादनम्--एकस्यानेकीकरणम्, अनेकस्य वा एकीकरणम्। अधिकरणविचाले गम्यमाने संख्यायाः स्वार्थे धा प्रत्ययो भवति। एकं राशिं पञ्चधा कुरु, अनेकमेकधा कुरु ।।

</5-3-43>
एकाद्धो ध्यमुञन्यतरस्याम् ।। <5-3-44> ।।
एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशो भवत्यन्यतरस्याम् । एकधा राशिंकुरु, ऐकध्यं कुरु(म.भा.2-410)। एकदा भुङ्क्ते, ऐकध्यं भुङ्क्ते। प्रकरणादेव लब्धे पुनर्धाग्रहणम्---विधार्थे विहितस्यापि यथा स्यात्। अनन्तरस्यैव ह्येतत्प्राप्नोति ।।

</5-3-44>
द्वित्र्योश्च धमुञ् ।। <5-3-45> ।।
`धा इत्यनुवर्तते। द्वित्र्योः सम्बन्धिनो दाप्रत्यस्य विधार्थेऽधिकरणविचाले च विहितस्य धमुञादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्विधा, द्वैधम्। त्रिधा, त्रैधम्।

- धमुञन्तात्स्वार्थे डदर्शनम् *(म.भा.2-411)। मतिद्वैधानि संश्रयन्ते। मतित्रैधानि संश्रयन्ते ।।

</5-3-45>
एधाच्च ।। <5-3-46> ।।
द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाजादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्वेधा, द्वैधम्, द्विधा। त्रेधा, त्रैधम्, त्रिधा ।।

</5-3-46>
याप्ये पाशप् ।। <5-3-47> ।।
याप्यः=कुत्सित इत्युच्यते। याप्ये वर्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययो भवति। कुत्सितो वैयाकरणो वैयाकरणपाशः। याज्ञिकपाशः। यो व्याकरणशास्त्रे प्रवीणो दुःशीलः, तत्र कस्मान्न भवति? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः ।।

</5-3-47>
पूरणाद्भागे तीयाद् ।। <5-3-48> ।।
पूरणप्रत्ययो यस्तीयः, तदन्तात्प्रातिपदिकाद्भागे वर्तमानात् स्वार्थेऽन् प्रत्ययो भवति। स्वरार्थं वचनम्। द्वितीयो भागः द्वितीयः। तृतीयः।
भाग इति किम् ? द्वितीयम्। तृतीयम्।
पूरणग्रहणमुत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति; मुखतीयादिरनर्थकः ।।

</5-3-48>
प्रागेकादशभ्योऽच्छन्दसि ।। <5-3-49> ।।
`पूरणाद्भागे इत्येव। प्रागेकादशभ्यः संख्याशब्देभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यः स्वार्थेऽनु प्रत्ययो भवति अच्छन्दसि विषये। स्वरार्थं वचनम्। पञ्चमः। सप्तमः। नवमः। दशमः।
प्रागेकादशभ्य इति किम् ? एकादशः, द्वादशः। अच्छन्दसीति किम् ? `पञ्चममिन्द्रियस्यापाक्रामत्(मै.सं.1-9-4) ।।

</5-3-49>
षष्ठाष्टमाभ्यां ञ च ।। <5-3-50> ।।
`भागे इत्येव। `अच्छन्दसि इति च। षष्ठाष्टमाभ्यां भागेऽभिधेयेऽच्छन्दसि विषये ञः प्रत्ययो भवति। चकारादँश्च। षष्ठो भागः षाष्ठः, षष्ठः। आष्टमः, अष्टमः ।।

</5-3-50>
मानपश्वङ्गयोः कन्लुकौ च ।। <5-3-51> ।।
`भागे इत्येव। षष्ठाष्टमाभ्यां यथासंख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः। षष्ठको भागो मानं चेत्तद्भवति। अष्टमो भागः पश्वङ्गं

चेत्तद्भवति। कस्य लुक् ? ञस्य लुक्, अनो वा। चकाराद्यथाप्राप्तं च। षाष्ठः, षष्टः। अष्टमः।
मानपश्वङ्गयोरिति किम् ? षाष्ठः, षष्ठः। आष्टमः, अष्टमः।

</5-3-51>
एकादाकिनिच्चासहाये ।। <5-3-52> ।।
एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् प्रत्ययो भवति। चकारात्कन्लुकौ च। आकिनिचः, कनो वा लुग्विज्ञायते। स च विधानसामर्थ्यात्पक्षे भवति। एकाकी, एककः, एकः।
असहायग्रहणं संख्याशब्दनिरासार्थम्। तदुपादाने हि द्विबह्वोर्न स्यात्---एकाकिनौ, एकाकिनः ।।

</5-3-52>
भूतपूर्वे चरट् ।। <5-3-53> ।।।
पूर्वं भूत इति विगृह्य `सुप्सुपा इति समासः। भूतपूर्वशब्दोऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं चैतत्। भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात्स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्वः आढ्यचरः। सुकुमारचरः।
टकारो ङीबर्थः--आढ्यचरी ।।

</5-3-53>
षष्ठ्या रूप्य च ।। <5-3-54> ।।
षष्ठ्यन्तात्प्रातिपदिकाद्रूप्यः प्रत्ययो भवति, चकाराच्चरट् च। षष्ठ्यन्तात्प्रत्ययविधानात्सम्प्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणम्, न तु प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः। देवदत्तचरः।

</5-3-54>
आतिशायने तमबिष्ठनौ ।। <5-3-55> ।।
अतिशयनमतिशायनम्=प्रकर्षः। निपातनाद्दीर्घत्वम्। प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात् स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति। सर्वे इमे आढ्याः, अयमेषामतिशयेनाढ्य आढ्यतमः। दर्शनीयतमः। सुकुमारतमः। सर्व इमे पटवः, अयमेषामतिशयेन पटुः पटिष्ठः। लघिष्ठः। गरिष्ठः।
यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव---`देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे(तै.सं.1-1), युधिष्ठिरः श्रेष्ठतमः कुरूणामिति ।।

</5-3-55>
तिङश्च ।। <5-3-56> ।।
तिङन्ताच्चातिशायने द्योत्ये तमप् प्रत्ययो भवति। ङ्याप्प्रातिपदिकात्(4-1-1/282) इत्यधिकारात् तिङो न प्राप्नोतीति इदं वचनम्। सर्व इमे पचन्तीति, अयमेषामतिशयेन पचति पचतितमाम्। जल्पतितमाम्। इष्ठन् नोदाह्रियते; गुणवचने तस्य नियतत्वात्।।

</5-3-56>
द्विवचनविभज्योपपदे तरबीयसुनौ ।। <5-3-57> ।।
द्वयोरर्थयोर्वचनं द्विवचनम्। विभक्तव्यः=विभज्यः। निपातनाद् यद्भवति। द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात् तिङन्ताच्चातिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमबिष्ठनोरपवादः। यथासंख्यमत्र नेष्यते। द्वाविमावाढ्यौ, अयमनयोरतिशयेनाढ्य आढ्यतरः। सुकुमारतरः। पचतितराम्। जल्पतितराम्।
ईयसुन्खल्वपि-द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान्। लघीयान्।
विभज्ये चोपपदे--माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। दर्शनीयतराः। पटीयांसः। लघीयांसः ।।

</5-3-57>
अजादी गुणवचनादेव ।। <5-3-58> ।।
इष्ठन्नीयसुनावजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते---गुणवचनादेव भवतस्तौ नान्यस्मादिति।
पटीयान्। लघीयान्। पटिष्ठः। लघिष्ठः।
इह न भवतः---पाचकतरः, पाचकतम इति।
एवकार इष्टतोऽवधारणार्थः--प्रत्ययनियमोऽयम्, न प्रकृतिनियम इति। पटुतरः, पटुतमः ।।

</5-3-58>

तुश्छन्दसि ।। <5-3-59> ।।
`तुः इति तृन्तृचोः सामान्येन ग्रहणम्। त्रन्ताच्छन्दसि विषये अजादी प्रत्ययौ भवतः। पूर्वेण गुणवचनादेव नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते---त्रन्तादप्यजाजी भवत इति। `आसुतिं करिष्ठः(ऋ.7-97-7)। दोहीयसी धेनुः। `भस्याऽढे तद्धिते(6-3-35/836) इति पुंवद्भावे कृते तुरिष्ठेमेयस्सु(3-4-154/2008) इति तृचो निवृत्तिः ।।

</5-3-59>
प्रशस्यस्य श्रः ।। <5-3-60> ।।
प्रशस्यशब्दस्य `श्र इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः। `अजादी इति प्रकृतस्य सप्तमी विभक्तिर्विपरिणम्यते।
ननु च प्रशस्यशब्दस्यागुणवचनत्वादजादी न सम्भवतः ? एवं तर्हि आदेशविधानसामर्थ्यात् तद्विषयो नियमो न प्रवर्तते-अजादी गुणवचनादेवेति।
एवमुत्तरेष्वपि योगेषु विज्ञेयम्।
सर्व इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः श्रेष्ठः। उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः श्रेयान्। अयमस्मात् श्रेयान्। प्रकृत्यैकाच्(6-4-163/2010) इति प्रकृतिभावाच्छ्रशब्दस्य टिलोप-यस्येतिलोपौ न भवतः ।।

</5-3-60>
ज्य च ।। <5-3-61> ।।
प्रशस्यशब्दस्य `ज्य इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः। सर्व इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः ज्येष्ठः। उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः ज्यायान्। अयमस्मात् ज्यायान्। ज्यादादीयसः(6-4-160/2012) इत्याकारः ।।

</5-3-61>
वृद्धस्य च ।। <5-3-62> ।।
वृद्धशब्दस्य च `ज्य इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः। तयोश्च सत्त्वं नियमाभावेन पूर्ववत् ज्ञाप्यते। सर्व इमे वृद्धाः, अयमेषामतिशयेन वृद्धः ज्येष्ठः। उभाविमौ वृद्धौ, अयमनयोरतिशयेन वृद्धः ज्यायान्। अयमस्मात् ज्यायान्।
प्रियस्थिर(6-4-157/2016) इत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते। वचनसामर्थ्यात्पक्षे सोऽपि भवति--वर्षिष्ठः, वर्षीयानिति ।।

</5-3-62>
अन्तिकबाढयोर्नेदसाधौ ।। <5-3-63> ।।
अन्तिकबाढयोर्यथासंख्यं नेद, साध--इत्येतावादेशौ भवतोऽजाद्योः परतः। तयोश्च सत्त्वं पूर्ववद्विज्ञेयम्।
निमित्तभूतयोर्यथासंख्यमत्र नेष्यते।
सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेनान्तिकं नेदिष्ठम्। उभे इमे अन्तिके, इदमनयोरतिशयेन नेदीयः। इदमस्मान्नेदीयः। सर्व इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते साधिष्ठः. उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते साधीयः। अयमस्मात् साधीयोऽधीते ।।

</5-3-63>
युवाल्पयोः कनन्यतरस्याम् ।। <5-3-64> ।।
युवाल्पशब्दयोः कनित्ययमादेशो भवत्यन्यतरस्यामजाद्योः परतः। तयोश्च सत्त्वं पूर्ववज्ज्ञेयम्। सर्व इमे युवानः, अयमेषामतिशयेन युवा कनिष्ठः। द्वाविमौ युवानौ, अयमनयोरतिशयेन युवा कनीयान्। यविष्ठः, यवीयान्। सर्व इमेऽल्पाः, अयमेषामतिशयेनाल्पः कनिष्ठः उभाविमावल्पौ, अयमनयोरतिशयेनाल्पः कनीयान्। अयमस्मात्कनीयान्। अल्पिष्ठः, अल्पीयानिति वा ।।

</5-3-64>
विन्मतोर्लुक् ।। <5-3-65> ।।
विनो मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः। इदमेव वचनं ज्ञापकमजादिसद्भावस्य। सर्वे इमे स्रग्विणः, अयमेषामतिशयेन स्रग्वी स्रजिष्ठः। उभाविमौ स्रग्विणौ, अयमनयोरतिशयेन स्रग्वी स्रजीयान्। अयमस्मात् स्रजीयान्। सर्व इमे त्वग्वन्तः, अयमेषामतिशयेन त्वग्वी त्वचिष्ठः। उभाविमौ त्वग्वन्तौ, अयमनयोरतिशयेन त्वग्वान् त्वचीयान्। अयमस्मात्त्वचीयान्।।

</5-3-65>
प्रशंसायां रूपप् ।। <5-3-66> ।।
प्रशंसा=स्तुतिः। प्रकृत्यर्थस्य विशेषणं चैतत्। प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति। स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति। प्रशस्तो वैयाकरणो वैयाकरणरूपः। याज्ञिकरूपः।

प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति। वृषलरूपोऽयं यः पलाण्डुना सुरां पिबति। चोररूपः। दस्युरूपः, योऽक्ष्णोरप्यञ्जनं हरेत्।
तिङश्च(5-3-56/2002) इत्यनुवर्तते--पचतिरूपम्। पचतोरूपम्। क्रिया प्रधानमाख्यातम्।
एका च क्रियेति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः।
नपुंसकलिङ्गं तु भवति; लोकाश्रयत्वाल्लिङ्गस्य ।।

</5-3-66>
ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।। <5-3-67> ।।
सम्पूर्णता=पदार्थानां समाप्तिः। स्तोकेनासम्पूर्णता=ईषदसमाप्तिः। प्रकृत्यर्थविशेषणं चैतत्। ईषदसमाप्तिविशिष्टे स्वार्थे वर्तमानात् कल्पब्, देश्य, देशीयर्-इत्येते प्रत्यया भवन्ति। ईषदसमाप्तः पटुः पटुकल्पः। पटुदेश्यः। पटुदेशीयः। मृदुकल्पः। मृदुदेश्यः। मृदुदेशीयः।
तिङश्च(5-3-56/2002) इत्येव--पचतिकल्पम्। जल्पतिकल्पम् ।।

</5-3-67>
विभाषा सुपो बहुच् पुरस्तात्तु ।। <5-3-68> ।।
ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्ताद्विभाषा बहुच् प्रत्ययो भवति। स तु पुरस्तादेव भवति, न परतः। चित्करणमन्तोदात्तार्थम् । ईषदसमाप्तः पटुः बहुपटुः। बहुमृदुः। बहुगुडो द्राक्षा।
विभाषावचनात् कल्पबादयोऽपि भवन्ति। सुब्ग्रहणम्-तिङन्तान्मा भूदिति ।।

</5-3-68>
प्रकारवचने जातीयर् ।। <5-3-69> ।।
सामान्यस्य भेदको विशेषः=प्रकारः, तस्य वचने। प्रकृत्यर्थविशेषणं चैतत्। सुबन्तात्प्रकारविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति। प्रकारवति चायं प्रत्ययः। थाल्पुनः प्रकारमात्र एव भवति। पटुप्रकारः पटुजातीयः। मृदुजातीयः। दर्शनीयजातीयः ।।

</5-3-69>
प्रागिवात्कः ।। <5-3-70> ।।
इवे प्रतिकृतौ(5-3-96/2051) इति वक्ष्यति, प्रागेतस्मादिवसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, कप्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति---अज्ञाते(5-3-73/2028) इति--अश्वकः। गर्दभकः।
तिङन्तादयं प्रत्ययो नेष्यते। अकजिष्यते। तिङश्च(5-3-56/2002) इत्यनुवृत्तमुत्तरसूत्रेणैव सम्बन्धनीयम्।

</5-3-70>
अव्ययसर्वनाम्नामकच्प्राक् टेः ।। <5-3-71> ।।
तिङश्च(5-3-56/2002) इत्येव। अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच्प्रत्ययो भवति, स च प्राक् टेः, न परतः। कस्यापवादः। उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नः खल्वपि-सर्वके। उभयके।
`प्रातिपदिकात्, `सुपः-इति द्वयमिहानुवर्तते, तत्राभिधानतो व्यवस्था भवति-क्वचित्प्रातिपदिकस्य टेः प्राक् प्रत्ययो भवति, क्वचित्सुबन्तस्य टेः प्राक्प्रत्ययः। युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोः--इत्यत्र प्रातिपदिकस्य। त्वयका, मयका, त्वयकि, मयकि--इत्यत्र सुबन्तस्य।

- अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः *(म.भा.2-422)। स च मित्त्वादन्त्यादचः परो भवति। तूष्णीकामास्ते। तूष्णीकां तिष्ठिति।
- शीले को मलोपश्च वक्तव्यः * (म.भा.2-423)। तूष्णींशीलः तूष्णीकः।

तिङश्च(5-3-56/2002) इति प्रकृतमत्र सम्बध्यते-पचतकि। जल्पतकि ।।

</5-3-71>
कस्य च दः ।। <5-3-72> ।।
ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति। चकारः सन्नियोगार्थः। सामर्थ्याच्चाव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम्; ककारान्तस्य सर्वनाम्नोऽसम्भवात्। धिक्-धकित्। हिरुक्- हिरकुत्। पृथक्-पृथकत् ।।

</5-3-72>
अज्ञाते ।। <5-3-73> ।।
अज्ञातविशेषः=अज्ञातः। अज्ञातत्वोपाधिकेऽर्थे वर्तमानात्प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति। स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधानमेतत्। कस्यायमश्वः इति स्वस्वामिसम्बन्धेनाज्ञातेऽश्वे प्रत्ययः--अश्वकः। गर्दभकः। उष्ट्रकः।

एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि ।।

</5-3-73>
कुत्सिते ।। <5-3-74> ।।
कुत्सितः=गर्हितः, निन्दितः। प्रकृत्यर्थविशेषणं चैतत्। कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे यथाविहितं प्रत्ययो भवति। कुत्सितोऽश्वः अश्वकः। उष्ट्रकः। गर्दभकः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि ।।

</5-3-74>
संज्ञायां कन् ।। <5-3-75> ।।
`कुत्सिते इत्येव। कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति, प्रत्ययान्तेन चेत्संज्ञा गम्यते। कस्यापवादः। शूद्रकः। धारकः। पूर्णकः।

</5-3-75>
अनुकम्पायाम् ।। <5-3-76> ।।
कारुण्येनाभ्युपपत्तिः परस्य=अनुकम्पा, तस्यां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति। पुत्रकः। वत्सकः। दुर्बलकः। बुभुक्षितकः। स्वपितकि। श्वसितकि ।।

</5-3-76>
नीतौ च तद्युक्तात् ।। <5-3-77> ।।
सामदानादिरुपायः=नीतिः। नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद्यथाविहितं प्रत्ययो भवति। हन्त ते धानकाः। हन्त ते तिलकाः। एहकि। अद्धकि। अनुकम्प्यमानो दानेनाराधयति। पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धाद् अनुकम्प्यमानादेव प्रत्ययो विहितः; सम्प्रति व्यवहितादपि यथा स्यादिति वचनम् ।।

</5-3-77>
बह्वचो मनुष्यनाम्नष्ठज्वा ।। <5-3-78> ।।
अनुकम्पायाम्(5-3-76/2031) इति, नीतौ च तद्युक्तात्(5-3-77/2032) इति च वर्त्तते। वह्वचः प्रातिपदिकान्मनुष्यनामधेयाद्वा ठच्प्रत्ययो भवति अनुकम्पायां गम्यमानायां नीतौ च, देविकः। देवदत्तकः। यज्ञिकः, यज्ञदत्तकः।
बह्वच इति किम्? दत्तकः। गुप्तकः, मनुष्यनाम्न इति किम्? मद्रबाहुकः भद्रबाहुकः ।।

</5-3-78>
घनिलचौ च ।। <5-3-79> ।।
`अनुकम्पायाम् इत्यादि सर्वमनुवर्तते। पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। बह्वचो मनुष्यनाम्नो घन्, इलच्--इत्येतौ प्रत्ययौ भवतः। चकाराद्यथाप्राप्तं च। देवियः, देविलः। देविकः, देवदत्तकः। यज्ञियः, यज्ञिकः, यज्ञदत्तकः ।।

</5-3-79>
प्राचामुपादेरडज्वुचौ च ।। <5-3-80> ।।
पूर्ववत् सर्वमनुवर्तते। उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नः-अडच्, वुच्-प्रत्ययौ भवतः। चकाराद् घनिलचौ प्रत्ययौ भवतः, ठच्च वा। उपडः उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः।
प्राचांग्रहणं पूजार्थम्। `वा इत्येव हि वर्तते ।।

</5-3-80>
जातिनाम्नः कन् ।। <5-3-81> ।।
`बह्वचः इति नानुवर्तते। सामान्येन विधानम्। जातिशब्दो यो मनुष्यनामधेयो व्याघ्र, सिंह-हत्येवमादिः, तस्मादनुकम्पायां नीतौ च कन्प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः।
वावचनानुवृत्तेर्यथादर्शनम् अन्योऽपि भवति-व्याघ्रिलः, सिंहिलः।
नामग्रहणं स्वरूपनिवृत्त्यर्थम् ।।

</5-3-81>
अजिनान्तस्योत्तरपदलोपश्च ।। <5-3-82> ।।

`कन् इत्यनुवर्तते, `मनुष्यनाम्नः इति च। अजिनशब्दान्तात् प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन्प्रत्ययो भवति, तस्य चोत्तरपदलोपः। व्याघ्राजिनो नाम कश्चिन्मनुष्यः, सोऽनुकम्पितः व्याघ्रकः। सिंहकः ।।

</5-3-82>
ठाजादावूर्ध्वं द्वितीयादचः ।। <5-3-83> ।।
`लोप इत्यनुवर्तते। अस्मिन्प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः। यज्ञिकः, यज्ञियः, यज्ञिलः। उपडः, उपकः, उपियः, उपिलः, उपिकः। ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः। वायुदत्तः, वायुदत्तः, वायुकः। पितृदत्तः, पितृकः।

- चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः *(म.भा.2-425)। अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः, बृहस्पतियः, बृहस्पतिलः ।।
- अनजादौ विभाषा लोपो वक्तव्यः *(म.भा.2-425)। देवदत्तकः, देवकः। यज्ञदत्तकः, यज्ञकः ।
- लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः *(म.भा.2-425)। दत्तिकः, दत्तिलः, दत्तियः, दत्तकः।
- विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः * (म.भा.2-425)। देवतत्तो दत्तः, देव इति वा ।
- उवर्णाल्ल इलस्य च *(म.भा.2-425)। भानुदत्तो भानुलः। वसुदत्तो वसुलः।

`चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ।।(म.भा.2-425)

- द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्। लहोडः, लहिकः। कहोडः, कहिकः।
- एकाक्षरपूर्वपदानामुत्तरपदलोपो बक्तव्यः *(म.भा.2-425)। वागाशीः वाचिकः। स्रुचिकः। त्वचिकः।

कथं षडंगुलिदत्तः षडिक इति? * षषष्ठाजादिवचनात्सिद्धम् *।।

</5-3-83>
शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ।। <5-3-84> ।।
शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादच ऊर्ध्वस्य लोपो भवति। पूर्वस्यायमपवादः। अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः, सुपरियः, सुपरिलः। विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः। अर्यमिकः, अर्यमियः, अर्यमिलः।

- शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम् *(म.भा.2-426)। शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः-शेवलिकः, सुपरिक इति यथा स्यात; शेवलयिकः, सुपर्यिक इति मा भूत् ।।

</5-3-84>
अल्पे ।। <5-3-85> ।।
परिमाणापचये अल्पशब्दः, प्रकृतिविशेषणं चैतत्। अल्पत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकाद्यथाविहितं प्रत्ययो भवति। अल्पं तैलं तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि ।।

</5-3-85>
ह्रस्वे ।। <5-3-86> ।।
ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोगी ह्रस्वः। ह्रस्वो वृक्षो वृक्षकः। प्लक्षकः। स्तम्भकः ।।

</5-3-86>
संज्ञायां कन् ।। <5-3-87> ।।
`ह्रस्वे इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। पूर्वस्यायमपवादः। वंशकः। वेणुकः। दण्डकः ।।

</5-3-87>
कुटीशमीशुण्डाभ्यो रः ।। <5-3-88> ।।
`ह्रस्वे इत्येव। संज्ञाग्रहणं नानुवर्तते, सामान्येन विधानम्। कुटी-शमी-शुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः ।
स्वार्थिकत्वेऽपि पुंल्लिङ्गता; लोकाश्रयत्वाल्लिङ्गस्य(व्या.प.74) ।।

</5-3-88>
कुत्वा डुपच् ।। <5-3-89> ।।
`ह्रस्वे इत्येव। कुतूशब्दाद्ध्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कूतूः कुतुपम् = चर्ममयं स्नेहभाजनमुच्यते। कुतूरित्यावपनस्याख्या ।।

</5-3-89>
कासूगोणीभ्यां ष्टरच् ।। <5-3-90> ।।
`ह्रस्वे इत्येव। कासु-गोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। कस्यापवादः। षकारो ङीषर्थः। ह्रस्वा कासूः कासूतरी। गोणीतरी। कासूरिति शक्तिः, आयुधविशेष उच्यते ।।

</5-3-90>
वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।। <5-3-91> ।।
`ह्रस्वे इति निवृत्तम्। वत्स, उक्षन्, अश्व, ऋषभ-इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तस्य तनुत्वे प्रत्ययः(म.भा.2-426)। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः।
प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयसः प्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयः प्राप्तिः। अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वमन्यपितृकता। अनड्वानृषभः, तस्य तनुत्वं भारोद्वहने मन्दशक्तिता ।।

</5-3-91>
किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच् ।। <5-3-92> ।।
किं, यत् तत्-इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति। निर्धार्यमाणवाचिभ्यः स्वार्थे
प्रत्ययः। जात्या, क्रियया, गुणेन, संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। कतरो भवतोः कठः। कतरो भवतोः कारकः। कतरो भवतोः पटुः। कतरो भवतोर्देवदत्तः। यतरो भवतोः कारकः। यतरो भवतोः पटुः। यतरो भवतोर्द्देवदत्तः, ततर आगच्छतु।
महाविभाषयाऽत्र प्रत्ययो विकल्प्यते। को भवतोर्द्देवदत्तः, स आगच्छतु।
`निर्धारणे इति विषयसप्तमीनिर्देशः। `द्वयोः इति समुदायान्निर्धारणविभक्तिः। `एकस्य इति निर्द्देशः निधार्यमाणनिर्द्देशः ।।

</5-3-92>
वा बहुनां जातिपरिप्रश्ने डतमच् ।। <5-3-93> ।।
`किंयत्तदः इति वर्तते, `निर्धारणे, `एकस्य इति च। `बहूनाम् इति निर्धारणे षष्ठी। बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रशनविषयेभ्यः किमादिभ्यो वा डतमच् प्रत्ययो भवति। कतमो भवतां कठः। यतमो भवतां कठः, ततम आगच्छतु।
वावचनमकजर्थम्--यको भवतां कठः, सक आगच्छतु। महाविभाषा च प्रत्ययविकल्पार्थाऽनुवर्तत एव--को भवतां कठः। यो भवतां कठः, स आगच्छतु।
जातिपरिप्रश्न इति किम्? को भवतां देवदत्तः।
परिप्रश्नग्रहणं च किम एव विशेषणम्, न यत्तदोः; असम्भवात्। जातिग्रहणं तु सर्वैरेव सम्बध्यते।
किमोऽस्मिन्विषये डतरमपीच्छन्ति केचित्--कतरो भवतां कठः, कतरो भवतां कालाप इति। तत्र कतरकतमौ जातिपरिप्रश्ने(2-1-63/742) इति वचनात्सिद्धम् ।।

</5-3-93>
एकाच्च प्राचाम् ।। <5-3-94> ।।
एकशब्दात्प्रचामाचार्याणां मतेन डतरच्, डतमच्--इत्येतौ प्रत्ययौ भवतः स्वस्मिन्विषये। चकारो डतरचोऽनुकर्षणार्थः। द्वयोर्निर्द्धारणे डतरच्। बहूनां निर्द्धारणे डतमच्। `जातिपरिप्रश्ने इति नानुवर्तते, सामान्येन विधानम्। एकतरो भवतोर्द्देवदत्तः। एकतमो भवतां देवदत्तः।
प्राचांग्रहणं पूजार्थम्; विकल्पोऽनुवर्तते एव।

</5-3-94>
अवक्षेपणे कन् ।। <5-3-95> ।।
अवक्षिप्यते येन तदवक्षेपणम्। तस्मिन्वर्तमानात्प्रातिपदिकात्कन् प्रत्ययो भवति। व्याकरणकेन नाम त्वं गर्वितः। याज्ञिक्यकेन नाम त्वं गर्वितः।
परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम्। यत्पुनः स्वयमेव कुत्सितम्, तत्र कुत्सिते(5-3-74/2029) इत्यनेन कन्प्रत्ययो भवति-देवदत्तकः, यज्ञदत्तक इति।

प्रागिवीयस्य पूर्णोऽवधिः ।।

</5-3-95>
इवे प्रतिकृतौ ।। <5-3-96> ।।
`कन् इत्यनुवर्तते। इवार्थे यत्प्रातिपदिकं वर्तते तस्मात्कन्प्रत्ययो भवति। इवार्थः सादृश्यम्, तस्य विशेषणं प्रतिकृतिग्रहणम्। प्रतिकृतिः=प्रतिरूपकम्, प्रतिच्छन्दकम्। अश्व इवायमश्वप्रतिकृतिः अश्वकः। उष्ट्रकः। गर्दभकः।
प्रतिकृताविति किम्? गौरिव गवयः ।।

</5-3-96>
संज्ञायां च ।। <5-3-97> ।।
`इव इत्यनुवर्तते, `कन् इति च। इवार्थे गम्यमाने कन्प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। अप्रतिकृत्यर्थ आरम्भः। अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः। गर्दभकः ।।

</5-3-97>
लुम्मनुष्ये ।। <5-3-98> ।।
`संज्ञायाम् इत्येव। संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुब् भवति। चञ्चेव मनुष्यः चञ्चा। दासी। खरकुटी(म.भा.2-428)।
मनुष्य इति किम् ? अश्वकः। उष्ट्रकः। गर्दभकः।
देवपथादेराकृतिगणत्वात्तस्यैवायं प्रपञ्चो वेदितव्यः ।।

</5-3-98>
जीविकार्थे चापण्ये ।। <5-3-99> ।।
जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति। विक्रीयते यत्तत्=पण्यम्। वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः।
देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते।
अपण्य इति किम् ? हस्तिकान्विक्रीणीते। अश्वकान्। रथकान्। देवपथादेरेवायं प्रपञ्चः ।।
</5-3-99>
देवपथादिभ्यश्च ।। <5-3-100> ।।
इवे प्रतिकृतौ(5-3-96/2051) संज्ञायां च(5-3-97/2052) विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति। आदिशब्दः प्रकारे। आकृतिगणश्चायम्। देवपथः। हंसपथः।
`अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ।।
अर्चासु तावत्--शिवः, विष्णुः । चित्रिकर्मणि--अर्जुनः, दुर्योधनः। ध्वजेषु--कपिः, गरुडः, सिंहः।
देवपथ। हंसपथ। वारिपथ। जलपथ। राजपथ। शतपथ। सिंहगति। उष्ट्रग्रीवा। चामरज्जु। रज्जु। हस्त। हन्द्र। दण्ड। पुष्प। मत्स्य। देवपथादिः ।।

</5-3-100>
वस्तेढञ् ।। <5-3-101> ।।
`इव इत्यनुवर्तते। इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ च, अप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ढञ्प्रत्ययो भवति। वस्तिरिव वास्तेयः। वास्तेयी ।।

</5-3-101>
शिताया ढः ।। <5-3-102> ।।
शिलाशब्दादिवार्थे ढः प्रत्ययो भवति। शिलेव शिलेयं दधि।
केचिदत्र ढञमपीच्छन्ति, तदर्थं योगविभागः कर्त्तव्यः। `शिलायाः, ढञ्प्रत्ययो भवति--शैलेयम्। ततः `ढः---शिलेयम् ।।

</5-3-102>
शाखादिभ्यो यत् ।। <5-3-103> ।।
`शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति इवार्थे। शाखेव शाख्यः। मुख्यः। जघन्यः।
शाखा। मुख। जघन। शृङ्ग। मेघ। चरण। स्कन्ध। शिरस्। उरस्। अग्र। शरण। शाखादिः ।।

</5-3-103>

द्रव्यं च भव्वे ।। <5-3-104> ।।
द्रव्यशब्दो निपात्यते भव्येऽभिधेये। द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते। द्रव्यम् = भव्यः, आत्मवान्; अभिप्रेतानामर्थानां पात्रभूत उच्यते। द्रव्योऽयं राजपुत्रः। द्रव्योऽयं माणवकः ।।

</5-3-104>
कुशाग्राच्छः ।। <5-3-105> ।।
कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति। कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। कुशाग्रीयं वस्त्रम् ।।

</5-3-105>
समासाच्च तद्विषयात् ।। <5-3-106> ।।
तदित्यनेन प्रकृत इवार्थो निर्दिश्यते। इवार्थविषयात्समासादपरस्मिन्निवार्थे एव छः प्रत्ययो भवति। काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्तकीयम्।
अतर्कितोपनतं चित्रीकरणमुच्यते। तत्कथम्? काकस्यागमनं याद्दच्छिकम्, तालस्य पतनं च, तेन तालेन पतता काकस्य वधः कृतः; एवमेव देवदत्तस्य तत्रागमनम्, दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसद्दश इत्येक उपमार्थः। अतश्च देवदत्तस्य वधः, स काकतालवधसद्दश इति द्वितीय उपमार्थः। तत्र प्रथमे समासः, द्वितीये प्रत्ययः।
समासश्चायमस्मादेव ज्ञापकात्। न ह्यस्यापरं लक्षणमस्ति।
`सुप्सुपा इति वा समासः। स चैवंविषय एव ।।

</5-3-106>
शर्करादिभ्योऽण् ।। <5-3-107> ।।
`शर्करा--इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण्प्रत्ययो भवति। शर्करेव शार्करम्। कापालिकम्।
शर्करा। कपालिका। पिष्टिक। पुण्डरीक। शतपत्त्र। गोलोमन्। गोपुच्छ। नरालि। नकुला। सिकता। शर्करादिः ।।

</5-3-107>
अङ्गुल्यादिभ्यष्ठक् ।। <5-3-108> ।।
अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति। अङ्गुलीवाङ्गुलिकः। भारुजिकः।
अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। कपि। उदश्वित्। गोणी। उरस्। शिखा। कुलिश। अङ्गुल्यादिः ।।

</5-3-108>
एकशालायाष्ठजन्यतरस्याम् ।। <5-3-109> ।।
एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच्प्रत्ययो भवति। अन्यतरस्यां ग्रहणेनानन्तरष्ठक् प्राप्यते। एकशालेव एकशालिकः, ऐकशालिकः ।।

</5-3-109>
कर्कलोहितादीकक् ।। <5-3-110> ।।
कर्कलोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति। कर्कः=शुक्लोऽश्वः, तेन सद्दशः कार्कीकः। लौहितीकः स्फटिकः। स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते ।।

</5-3-110>
प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ।। <5-3-111> ।।
प्रत्न,पूर्व, विश्व, इम-इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये। `तं प्रत्नथा पूर्वथा विश्वथेमथा(ऋ.5-44-1) ।।

</5-3-111>
पूगाञ्ञ्योऽग्रामणीपूर्वात् ।। <5-3-112> ।।
`इवार्थे इति निवृत्तम्। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः=पूगाः, पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात्स्वार्थे ञ्यः प्रत्ययो भवति। लौहध्वज्यः, लौहध्वज्यौ, लोहध्वजाः। शैब्यः, शैब्यौ, शिबयः। चातक्यः, चातक्यौ, चातकाः।
अग्रामणीपूर्वादिति किम्? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः। यज्ञदत्तकाः ।।

</5-3-112>
व्रातच्फञोरस्त्रियाम् ।। <5-3-113> ।।

नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः=व्राताः। व्रातवाचिभ्यः प्रातिपदिकेभ्यश्च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम्। कापोतपाक्यः, कापौतपाक्यौ, कपोतपाकाः, व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमताः। च्फञः खल्वपि--कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः।
अस्त्रियामिति किम्? कपोतपाकी। व्रीहिमती। कौञ्जायनी। ब्राध्नायनी ।।

</5-3-113>
आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् ।। <5-3-114> ।।
आयुधजीविनां सङ्घः आयुधजीविसङ्घः, स वाहीकैर्विशेष्यते। वाहीकेषु य आयुधजीविसङ्घः, तद्वाचिनः प्रातिपदिकाद् ब्राह्मणराजन्यवर्जितात्स्वार्थे ञ्यट् प्रत्ययो भवति।
ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये तु स्वरूपग्रहणमेव। टकारो ङीबर्थः, तेन `स्त्रियाम् इति नानुवर्तते।
कौण्डीबृस्यः, कौण्कडीबृस्यौ, कौम्डीबृसाः। क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः। मालव्यः, मालव्यौ, मालवाः। स्त्रियाम्-कौण्डीबृसी। क्षौद्रकी। मालवी।
आयुधजीविग्रहणं किम्? मल्लाः, शयण्डाः। सङ्घग्रहणं किम् ? सम्राट्। वाहीकेष्विति किम् ? शबराः, पुलिन्दाः। अब्राह्मणराजन्यादिति किम् ? गोपालवा ब्राह्मणाः, शालङ्कायना राजन्याः ।।

</5-3-114>
वृकाट्टेण्यण् ।। <5-3-115> ।।
`आयुधजीविसङ्घात् इति वर्तते। वृकशब्दादायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो भवति। टकारो ङीबर्थः। णकारो वृद्ध्यर्थः। वार्केण्यः, वार्केण्यौ, वृकाः।
आयुधजीविसङ्घविशेषणम्--जातिशब्दान्मा भूत्।
`कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।।

</5-3-115>
दामन्यादित्रिगर्तषष्ठाच्छः ।। <5-3-116> ।।
`आयुधजीविसङ्घात् इति वर्तते। दामन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति। येषामायुधजीविनां सङ्घानां षडन्तर्वर्गाः, तत्र च त्रिगर्तः षष्ठः; त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठा इत्युच्यन्ते। तेषु चेयं स्मृतिः---
आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी।
क्रौष्टकिर्ज्जालमानिश्च ब्राह्मगुप्तोऽथ जानकिः ।। इति।
दामन्यादिभ्यस्तावत्--दामनीयः, दामनीयौ, दामनयः। औलपीयः, औलपीयौ, उलपयः। त्रिगर्तषष्ठेभ्यः खल्वपि-कौण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः। दाण्डकीयः, दाण्डकीयौ, दाण्डकयः। क्रौष्टकीयः। जालमानीयः। ब्रह्मगुप्तीयः। जानकीयः।
दामनी। औलपि। आकिदन्ती। काकरन्ति। काकदन्ति। शत्रुन्तपि। सार्वसेनि। बिन्दु। मौञ्जायन। उलभ। सावित्रीपुत्र। दामन्यादिः ।।

</5-3-116>
पर्श्वादियौधेयादिभ्यामणञौ ।। <5-3-117> ।।
`आयुधजीविसङ्घात् इत्येव। पर्श्वादिभ्यो यौधेयादिभ्यश्च प्रातिपदिकेभ्य आयुधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः। पार्शवः, पार्शवौ, पर्शवः। आसुरः आसुरौ, असुराः। यौधेयः। शौक्रेयः।
पर्शु। असुर। रक्षस्। बाल्हीक। वयस्। मरुत्। दशार्ह। पिशाच। विशाल। अशनि। कार्षापण। सत्वत्। वसु। पर्श्वादिः।
यौधेय। कौशेय। क्रोशेय। शौक्रेय। शौभ्रेय। धार्तेय। वार्तेय। जाबालेय। त्रिगर्त। भरत। उशीनर। यौधेयादिः ।।

</5-3-117>
अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।। <5-3-118> ।।
`आयुधजीविसङ्घात् इति निवृत्तम्। अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति। अभिजितोऽपत्यमित्यण्, तदन्ताद्यञ्। आभिजित्यः, आभिजित्यौ, आभिजिताः। वैदभृत्यः, वैदभृत्यौ, वैदभृताः। शालावत्यः, शालावत्यौ, शालावताः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः।
गोत्रप्रत्ययस्यात्राणो ग्रहणमिष्यते। आभिजितो मुहूर्तः, आभिजितः स्थालीपाक इत्यत्र न भवति ।।

</5-3-118>
ञ्यादयस्तद्राजाः ।। <5-3-119> ।।
पूगाञ्ञ्योऽग्रामणीपूर्वात्(5-3-112/2066) इत्यतः प्रभृति ये प्रत्ययाः ते तद्राजसंज्ञा भवन्ति। तथा चैवोदाहृतम्।
तद्राजप्रदेशाः--तद्राजस्य बहुषु(2-4-62/1193) इत्येवमादयः ।।

# काशिका/पञ्चमोऽध्यायः/चतुर्थः पादः


< काशिका | पञ्चमोऽध्यायः

अथ पञ्चमाध्याये चतुर्थः पादः

पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ।। <5-4-1> ।।
पादशतान्तस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति। तत्सन्नियोगेन चान्तस्य लोपो भवति।
यस्येति(6-4-148/311) लोपेनैव सिद्धे पुनर्वचनमनैमित्तिकार्थम्। यस्येतिलोपः परनिमित्तकः, तस्य स्थानिवद्भावात् पादः पत्(6-4-130) इति पद्भावो न स्यात्। अस्य त्वनैमित्तिकत्वान्न स्थानिवत्त्वम्।
द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति। द्वे द्वे शते ददाति, द्विशतिकां ददाति। तद्धितार्थ(2-1-51/728) इति समासः, ततः प्रत्ययः।
स्वभावाच्च वुन्प्रत्ययान्तं स्त्रियामेव वर्तते।
पादशतस्येति किम्? द्वौ द्वौ माषौ ददाति। संख्यादेरिति किम् ? पादं पादं ददाति। वीप्सायामिति किम् ? द्वौ पादौ ददाति। द्वे शते ददाति।
पादशतग्रहणमनर्थकम्; अन्यत्रापि दर्शतनात्। द्विमोदकिकां ददाति, त्रिमोदकिकां ददाति ।।
</5-4-1>
दण्डव्यवसर्गयोश्च ।। <5-4-2> ।।
दमनम्=दण्डः, दानम्=व्यवसर्गः। दण्डव्यवसर्गयोर्गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य संख्यादेर्वुन् प्रत्ययो भवति, अन्तलोपश्च। अवीप्सार्थोऽयमारम्भः। द्वौ पादौ दण्डितः द्विपदिकां दण्डितः। द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति। द्विशतिकां दण्डितः। त्रिशतिकाम्। द्विशतिकां व्यवसृजति। त्रिशतिकाम् ।।

</5-4-2>
स्थूलादिभ्यः प्रकारवचने कन् ।। <5-4-3> ।।
स्थूलादिभ्यः प्रकारवचने द्योत्ये कन् प्रत्ययो भवति। जातीयरः(5-3-69/2024) अपवादः। प्रकारः=विशेषः। स्थूलप्रकारः स्थूलकः। अणुकः।

- कन्प्रकरणे चञ्चद्-बृहतोरुपसंख्यानम् *(म.भा.2-430)। चञ्चत्प्रकारः चञ्चत्कः। बृहत्कः।

`चञ्चबृहयोः इति केचित्पठन्ति, तेषाम्-चञ्चकः, बृहक इति उदाहरणं द्रष्टव्यम्।
स्थूल। अणु। माष। इषु। * कृष्ण तिलेषु *(ग.सू.137)। `यव व्रीहिषु(ग.सू.138)। * पाद्यकालावदाताः सुरायाम् *(ग.सू.139)। * गोमूत्र आच्छादने *(ग.सू.140)। *सुराया अहौ *(ग.सू.141)। * जीर्ण शालिषु *(ग.सू.142)। * पत्त्रमूले समस्तव्यस्ते *(ग.सू.143)। कुमारीपुत्र। कुमार। श्वशुर। मणि। स्थूलादिः ।।

</5-4-3>
अनत्यन्तगतौ क्तात् ।। <5-4-4> ।।
अत्यन्तगतिः=अशेषसम्बन्धः, तदभावोऽनत्यन्तगतिः। अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन्प्रत्ययो भवति। भिन्नकः। छिन्नकः।
अनत्यन्तगताविति किम् ? भिन्नम्। छिन्नम् ।।

</5-4-4>
न सामिवचने ।। <5-4-5> ।।
सामिवचने उपपदे क्तान्तात्कन्प्रत्ययो न भवति। सामिकृतम्। सामिभुक्तम्।
वचनग्रहणं पर्यायार्थम्। अर्धकृतम्। नेमकृतम्।
सामिवचने प्रतिषेधानर्थक्यम्; प्रकृत्याभिहितत्वात् ? एवं तर्हि नैवायमनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि? स्वार्थिकस्य।
केन पुनः स्वार्थिकः कन्विहितः ? एतदेव ज्ञापकमनुमास्यते भवति स्वार्थे कन्निति। तत्र यदेतदुच्यते-`एवं हि सूत्रमभिन्नतरकं भवति, `एतैर्हि बहुतरकं व्याप्यते इत्येवमादि, तदुपपन्नं भवति ।।

</5-4-5>
बृहत्या आच्छादने ।। <5-4-6> ।।
कन्ननुवर्तते, न प्रतिषेधः। बृहतीशब्दादाच्छादने वर्तमानात् स्वार्थे कन्प्रत्ययो भवति। बृहतिका।
आच्छादने इति किम्? बृहती छन्दः ।।

</5-4-6>
अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः ।। <5-4-7> ।।
अषडक्ष, आशितङ्गु, अलङ्कर्म, अलम्पुरुष-इत्यतेभ्योऽध्युत्तरपदाच्च स्वार्थे खः प्रत्ययो भवति। अविद्यमानानि षडक्षीण्यस्येति बहुव्रीहिः, बहुव्रीहौ सक्थ्यक्ष्णोः(5-4-113/852) इति षच्, ततः खप्रत्ययः। अषडक्षीणो मन्त्रः। यो द्वाभ्यामेव क्रियते न बहुभिः। आशिता गावोऽस्मिन्नरण्ये आशितङ्गवीनमरण्यम्। निपातनात्पूर्वपदस्य मुमागमः।
अलङ्कर्मन्, अलम्पुरुष इति `पर्यादयो ग्लानाद्यर्थे चतुर्थ्या(वा.93) इति समासः। अलङ्कर्मणे अलङ्कर्मीणः। अलम्पुरुषाय अलम्पुरुषीणः।
अध्युत्तरपदस्तत्पुरुषः। अधिशब्दः शौण्डादिषु पठ्यते। राजाधीनः। नित्यश्चायं प्रत्ययः; उत्तरत्र विभाषाग्रहणात्।
अन्येऽपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते-तमबादयः(5-3-55/2001) प्राक्कनः(5-3-64/2019), ञ्यादयः(5-3-112/2066) प्राग्वुनः(5-4-1/2073), आमादयः(5-4-11/2004) प्राङ् मयटः(5-4-21/2089), बृहतीजात्यन्ताः(5-4-6/2078)(5-4-9/2081) समासान्ताश्चेति ।।

</5-4-7>
विभाषाञ्चेरदिक्स्त्रियाम् ।। <5-4-8> ।।
अञ्चत्यन्तात्प्रातिपदिकाददिक्स्त्रियां वर्तमानात्स्वार्थे विभाषा खः प्रत्ययो भवति। प्राक्, प्राचीनम्। अर्वाक्, अर्वाचीनम्।
अधिक्स्त्रियामिति किम्? प्राची दिक्। प्रतीची दिक्। दिग्ग्रहणं किम्? प्राचीना ब्राह्मणी। अवाचीना शिखा। स्त्रीग्रहणं किम् ? प्राचीनं दिग्रमणीयम्। उदीचीनं दिग्रमणीयम् ।।

</5-4-8>
जात्यन्ताच्छ बन्धुनि ।। <5-4-9> ।।

जात्यन्तात्प्रातिपदिकाद् बन्धुनि वर्त्तमानात्स्वार्थे छः प्रत्ययो भवति। बध्यतेऽस्मिञ्जातिरिति बन्धुशब्देन द्रव्यमुच्यते। येन ब्राह्मणत्वादिजातिर्व्यज्यते तद् बन्धु=द्रव्यमुच्यते। ब्राह्मणजातीयः, क्षत्त्रियजातीयः, वैश्यजतीयः, इति ब्राह्मणादिरेवोच्यते।
बन्धुनीति किम् ? ब्राह्मणजातिः शोभना ।।

</5-4-9>
स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।। <5-4-10> ।।
स्थानान्तात्प्रातिपदिकाद्विभाषा छः प्रत्ययो भवति सस्थानेन चेत् स्थानान्तमर्थवद्भवति। सस्थान इति तुल्य उच्यते, समानं स्थानमस्येति कृत्वा। पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः।
मातृस्थानीयः, मातृस्थानः।
राजस्थानीयः, राजस्थानः।
सस्थानेनेति किम् ? गोस्थानम्। अश्वस्थानम्।
इतिकरणो विवक्षार्थः। तेन बहुव्रीहिः सस्थानशब्दोऽर्थमुपस्थापयति, न तत्पुरुषः।
चेच्छब्दः सम्बन्धार्थः। द्वयोर्विभाषयोर्मध्ये नित्यविधय इति पूर्वत्र नित्यविधयः ।।

</5-4-10>
किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।। <5-4-11> ।।
किम एकारान्तात्तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङ्व्ययघः, तदन्तात्प्रातिपदिकादद्रव्यप्रकर्षे आमु प्रत्ययो भवति। यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति, तथापि क्रियागुणस्थः प्रकर्षो यदा द्रव्ये उपचर्यते तदाऽयं प्रतिषेधः। क्रियागुणयोरेवायं प्रकर्षे प्रत्ययः। किंतराम्। किंतमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्।
अद्रव्यप्रकर्ष इति किम्? उच्चैस्तरः पर्वतः। उच्चैस्तमः ।।

</5-4-11>
अमु चच्छन्दसि ।। <5-4-12> ।।
किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये। चकारादामु च। `प्रतरं न आयुः(ऋ.4-12-6)। `प्रतरां नय(वा.सं.17-51)। स्वरादिषु अम्, आम्, इति पठ्यते, तस्मात्तदन्तस्याव्ययत्वम् ।।

</5-4-12>
अनुगादिनष्ठक् ।। <5-4-13> ।।
अनुगदतीत्यनुगादी। अनुगादिन्शब्दात्स्वार्थे ठक् प्रत्ययो भवति। आनुगादिकः ।।

</5-4-13>
अचः स्त्रियामञ् ।। <5-4-14> ।।
कर्मव्यतिहारे णच् स्त्रियाम्(3-3-43/3215) इति णज्विहितः, तदन्तात्स्वार्थेऽञ् प्रत्ययो भवति स्त्रियां विषये। व्यावक्रोशी। व्यावहासी वर्त्तते।
स्त्रीग्रहणं किमर्थम्, यावता णच् स्त्रियामेव विहितः, ततः स्वार्थिकस्तत्रैव भविष्ति? एवं तर्ह्येतज् ज्ञापयति--स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति(म.भा.2-432)। तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवतेत्येवमादि उपपन्नं भवति।

</5-4-14>
अणिनुणः ।। <5-4-15> ।।
अभिविधौ भाव इनुण्(3-3-44/3218) विहितः, तदन्तास्त्वार्थेऽण् प्रत्ययो भवति। सांराविणं वर्त्तते। सांकूटिनम् ।।

</5-4-15>
विसारिणो मत्स्ये ।। <5-4-16> ।।
विसरतीति विसारी। विसारिन्-शब्दात्स्वार्थेऽण् प्रत्ययो भवति मत्स्येऽभिधेये। वैसारिणो मत्स्यः।
मत्स्य इति किम् ? विसारी देवदत्तः ।।

</5-4-16>
संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।। <5-4-17> ।।
संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति। पौनःपुन्यम्=अभ्यावृत्तिः। एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनं तत्र प्रत्ययः। पञ्चवारान् भुङ्क्ते पञ्चकृत्वः। सप्तकृत्वः।
संख्याया इति किम् ? भूरीन्वारान् भुङ्क्ते।
क्रियाग्रहणं किमर्थम्, यावताभ्यावृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोः? उत्तरार्थं क्रियाग्रहणम्।
एकस्य सकृच्च(5-4-19/2089) इत्यत्रापि क्रियैव गण्यते, नाभ्यावृत्तिः; असम्भवात्।
अभ्यावृत्तिग्रहणं किम् ? क्रियामात्रगणने मा भूत्---पञ्चपाकाः, दशपाकाः।
गणनग्रहणं किमर्थम्, यावता गणनात्मिकैव संख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात्--शतवारान्भुङ्क्ते शतकृत्व इति। इह न स्यात्---शतं वाराणां भुङ्क्त इति, न ह्यत्राभ्यावृत्तौ शतशब्दः; संख्यानमात्रवृत्तित्वात्। गणनग्रहणात्तु सर्वत्र सिद्धं भवति।

</5-4-17>
द्वित्रिचतुर्भ्यः सुच् ।। <5-4-18> ।।
द्वि, त्रि, चतुर्--इत्येतेभ्यः संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुक्तम्। चकारः स्वरार्थः।।

</5-4-18>
एकस्य सकृच्च ।। <5-4-19> ।।
एकशब्दस्य सकृदित्ययमादेशो भवति सुच्च प्रत्ययः क्रियागणने। कृत्वसुचोऽपवादः। अभ्यावृत्तिस्त्विह सम्भवति। सकृद् भुङ्क्ते। सकृदधीते ।
एकः पाकः--इत्यत्र न भवति; अनभिधानात् ।।

</5-4-19>
विभाषा बहोर्धाऽविप्रकृष्टकाले ।। <5-4-20> ।।

बहुशब्दात् क्रियाभ्यावृत्तिगणने वर्तमानात् विभाषा धा प्रत्ययो भवति। कृत्वसुचोऽपवादः। पक्षे सोऽपि भवति। अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम्। क्रियाणामुत्पत्तयश्चेदासन्नकालाः भवन्ति, न विप्रकृष्टकालाः। बहुधा दिवसस्य भुङ्क्ते। बहुकृ-त्वो दिवसस्य भुङ्क्ते।
अविप्रकृष्टकाल इति किम्? बहुकृत्वो मासस्य भुङ्क्ते ।।

</5-4-20>
तत्प्रकृतवचने मयट् ।। <5-4-21> ।।
`तत् इति प्रथमा समर्थविभक्तिः, प्राचुर्येण प्रस्तुतम्=प्रकृतम्। प्रथमासमर्थात् प्रकृतोपाधिकेऽर्थे वर्तमानात्स्वार्थे मयट् प्रत्ययो भवति। टकारो ङीबर्थः। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्। अपरे तु पुनरेवं सूत्रार्थमाहुः---प्रकृतमित्युच्यतेऽस्मिन्नति प्रकृतवचनम्। तदिति प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति। अन्नं प्रकृतमस्मिन्नन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा।
द्वयमपि प्रमाणम्; उभयथा सूत्रप्रणयनात् ।।

</5-4-21>
समूहवच्च बहषु ।। <5-4-22> ।।
`तत्प्रकृतवचने इत्येव। बहुषु प्रकृतेषूच्यमानेषु समूहवत्प्रत्यया भवन्ति। चकारान्मयट् च। मोदकाः प्रकृताः=प्राचुर्येण प्रस्तुताः मौदकिकम्(4-2-47/1256), मोदकमयम्। शाष्कुलिकम्, शष्कुलीमयम्।
अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि।
द्वितीये सूत्रार्थे--मोदकाः प्रकृता अस्मिन्यज्ञे मौदकिको यज्ञः, मोदकमयः। शाष्कुलिकः, शष्कुलीमयः ।।

</5-4-22>
अनन्तावसथेतिहभेषजाञ् ञ्यः ।। <5-4-23> ।।
अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति। अनन्त एव आनन्त्यम्। आवसथ एवावसथ्यम्। इति ह ऐतिह्यम्। निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्तते। भेषजमेव भैषज्यम्।
महाविभाषया विकल्पते प्रत्ययः ।।

</5-4-23>
देवतान्तात्तादर्थ्ये यत् ।। <5-4-24> ।।
देवताशब्दान्तात् प्रातिपदिकाच्चतुर्थीसमर्थात् तादर्थ्ये यत् प्रत्ययो भवति। तदर्थ एव तादर्थ्यम्। चातुर्वर्ण्यादित्वात्ष्यञ्। तदिति प्रकृत्यर्थो निर्दिश्यते। अग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम्। वायुदेवत्यम् ।।

</5-4-24>
पादार्घाभ्यां च ।। <5-4-25> ।।
`तादर्थ्ये इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्येऽभिधेये यत्प्रत्ययो भवति। पादार्थमुदकं पाद्यम्। अर्घ्यम्। अनुक्तसमुच्चयार्थश्चकारः। यथादर्शनमन्यत्रापि प्रत्ययो भवति--`एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिः(तै.सं.1-6-11-4)।
वसु, अयस्, ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त, यविष्ठ--इत्येतेभ्यः छन्दसि स्वार्थे यत्प्रत्ययो भवति। `अग्निरीशे वसव्यस्य(ऋ.4-58-8)। `अपस्यो वसानाः(मै.सं.2-6-8)। द्वितीयाबहुवचनस्यालुक्। अयो वसाना इत्यर्थः। `स्व ओक्ये(ऋ.1-91-13)। `कव्योऽसि(मै.सं.1-3-12)। `क्षेम्यमध्यवस्यति(तै.सं.5-2-1-7)। वायुर्वर्चस्यः। `निष्केवल्यं शंसति(का.सं.28-10)। उक्थ्यं शंसति। जन्यं ताभिः। `पूर्व्या विशः(अ.19-34-6)। `स्तोमैर्जनयामि नव्यम्(ऋ.1-109-2)। `सूर्यः(ऋ.1-23-17)। `मर्त्यः(ऋ.1-19-2)। `यविष्ठ्यः(ऋ.1-36-6) ।।

- आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम् *।
- समशब्दादावतुप्रत्ययो वक्तव्यः *। `समावद्वसति(मै.सं.2-2-7-7)।
- नवस्य नू आदेशः, त्नप्तनप्खाश्च प्रत्ययाः *। नूत्नम्। नूतनम्। नवीनम्।
- नश्च पुराणे प्रात् *। पुराणे वर्तमानात् प्रशब्दान्न प्रत्ययो भवति। चकारात् त्नप्तनप्खाश्च। प्रणम्। `प्रत्नम्(ऋ.1-36-4)। प्रतनम्। प्रीणम्।
- भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः *। भागधेयम्। रूपधेयम्। नामधेयम्।
- मित्त्राच्छन्दसि *। `मित्त्रधेयं यतस्व(तै.सं.4-1-7-2)।
- आग्नीध्रसाधारणादञ् *। `आग्नीध्रम्(तै.सं.3-1-6-1)। `साधारणम्(तै.सं.2-6-1-6)। स्त्रियां ङीप्---आग्नीध्री, `साधारणी(ऋ.1-160-4)।

वाप्रकरणाच्च विकल्पन्ते एतान्युपसंख्यानानि, तेन यथाप्राप्तमपि भवति---आग्नीध्रा शाला, साधारणा भूरिति।

- अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः *। `आयवसे रमन्ते(तै.सं.5-2-8-3)। `मारुतं शर्धः(ऋ.1-106-1) ।।

</5-4-25>
अतिथेर्ञ्यः ।। <5-4-26> ।।
`तादर्थ्ये इत्येव। अतिथिशब्दाच्चतुर्थीसमर्थात् तादर्थ्येऽभिधेये ञ्यः प्रत्ययो भवति। अतिथये इदम् आतिथ्यम् ।।

</5-4-26>
देवात्तल् ।। <5-4-27> ।।
`तादर्थ्ये इति निवृत्तम्। देवशब्दात् स्वार्थे तल् प्रत्ययो भवति। देव एव देवता।।
</5-4-27>
अवेः कः ।। <5-4-28> ।
अविशब्दात् स्वार्थे कः प्रत्ययो भवति। अविरेवाविकः ।।

</5-4-28>
यावादिभ्यः कन् ।। <5-4-29> ।।
`याव--इत्येवमादिभ्यः स्वार्थे कन् प्रत्ययो भवति। याव एव यावकः। मणिकः।
याव। मणि। अस्थि। चण्ड। पीत। स्तम्ब। * ऋतावुष्णशीते *(ग.सू.144)। * पशौ लूनवियाते *(ग.सू.145)। * अणु निपुणे *(ग.सू.146)। * पुत्र कृत्रिमे *(ग.सू.147)। * स्नात वेदसमाप्तौ *

(ग.सू.148)। * शून्य रिक्ते *(ग.सू.149)। * दान कुत्सिते *(ग.सू.150)। * तनु सूत्रे *(ग.सू.151)। * ईयसश्च *(ग.सू.152)। श्रेयस्कः। ज्ञात। * कुमारीक्रीडनकानि च *(ग.सू.153)। यावादिः ।।

</5-4-29>
लोहितान्मणौ ।। <5-4-30> ।।
लोहितशब्दान्मणौ वर्तमानात्स्वार्थे कन् प्रत्ययो भवति। लोहितो मणिः लोहितकः।।
मणौ इति किम्? लोहितः।।
</5-4-30>
वर्णे चानित्ये ।। <5-4-31> ।।
अनित्ये वर्णे वर्तमानाल्लोहितशब्दात्स्वार्थे कन्प्रत्ययो भवति। लोहितकः कोपेन। लोहितकः पीडनेन।
अनित्य इति किम् ? लोहितो गौः। लोहितं रुधिरम्।

- लोहिताल्लिङ्गबाधनं वा वक्तव्यम् *(म.भा.2-433)। लोहितिका कोपेन। लोहिनिका कोपेन ।।

</5-4-31>
रक्ते ।। <5-4-32> ।
लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात् कन्प्रत्ययो भवति। लोहितकः कम्बलः। लोहितकः पटः।
लिङ्गबाधनं वेत्येव---लोहितिका, लोहिनिका शाटी ।।

</5-4-32>
कालाच्च ।। <5-4-33> ।।
वर्णे चानित्ये(5-4-31/2099), रक्ते(5-4-32/2100) इति द्वयमप्यनुवर्तते। कालशब्दादनित्ये वर्तमानाद्रक्ते च कन् प्रत्ययो भवति। कालकं मुखं वैलक्ष्येण। रक्ते--कालकः पटः। कालिका शाटी ।।

</5-4-33>
विनयादिभ्यष्ठक् ।। <5-4-34> ।।
`विनय--इत्येवमादिभ्यः स्वार्थे कन् प्रत्ययो भवति। विनय एव वैनयिकः। सामयिकः। औपयिकः। विभाषाग्रहणेन विकल्प्यते प्रत्ययः।
विनय। समय। * उपायाद् ह्रस्वत्वं च *(ग.सू.154)। सङ्गति। कथञ्चित्। अकस्माद्। समयाचार। उपचार। समाचार। व्यवहार। सम्प्रदान। समुत्कर्ष। समूह। विशेष। अत्यय। विनयादिः ।।

</5-4-34>
वाचो व्याहृतार्थायाम् ।। <5-4-35> ।।
व्याहृतः=प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्तमानाद्वाच्शब्दात्स्वार्थे ठक् प्रत्ययो भवति। पूर्वमन्येनोक्तार्थत्वात् सन्देशवाग्=व्याहृतार्थेत्युच्यते। वाचिकं कथयति। वाचिकं श्रद्दधे।
व्याहृतार्थायामिति किम्? मधुरा वाक् देवदत्तस्य ।।

</5-4-35>
तद्युक्तात्कर्मणोऽण् ।। <5-4-36> ।।
व्याहृतार्थया वाचा यत्कर्मयुक्तं तदभिधायिनः कर्मशब्दात् स्वार्थेऽण् प्रत्ययो भवति। कर्मैव कार्मणम्। वाचिकं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणमित्युच्यते।

- अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्त्रामित्रेभ्यश्छन्दस्पुपसंख्यानम् *(म.भा.2-435)। कुलाल एव कौलालः। वारुडः। नैषादः। कार्मारः। चाण्डालः। मैत्त्रः। आमित्रः।
- सान्नाय्यानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः *। एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते।

</5-4-36>
ओषधेरजातौ ।। <5-4-37> ।।
ओषधिशब्दादजातौ वर्तमानात्स्वार्थेऽण् प्रत्ययो भवति। औषधं पिबति। औषधं ददाति।
अजाताविति किम्? ओषधयः क्षेत्रे रूढा भवन्ति ।।

</5-4-37>
प्रज्ञादिभ्यश्च ।। <5-4-38> ।।
प्रजानातीति प्रज्ञः। `प्रज्ञ-इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽण् प्रत्ययो भवति। प्रज्ञ एव प्राज्ञः। स्त्री-प्राज्ञी। यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति। प्रज्ञाश्रद्धार्चावृत्तिभ्योऽणः(5-2-101/1908) इति।
विदन्नित्यत्र पठ्यते, विदेः शत्रन्तस्य ग्रहणम्, विदेः शतुर्वसुः(7-1-36/3105) इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः।
अन्यतरस्यांग्रहणं वा तत्रानुवर्तते--तुह्योस्तातङाशिष्यन्यतरस्याम्(7-1-35/2197) इति।
प्रज्ञ। वणिक्। उशिक्। उष्णिक्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। * श्रोत्र शीरीरे *(ग.सू.155)। श्रौत्रम्। * जुहृत् कृष्णमृगे *(ग.सू.156)। चिकीर्षत्। चोर। शत्रु। योध। वक्षस्। धूर्त। वस्। एत्। मरुत्। क्रुङ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। प्रज्ञादिः ।।

</5-4-38>
मृदस्तिकन् ।। <5-4-39> ।।
मृच्छब्दात्स्वार्थे तिकन् प्रत्ययो भवति। विकल्पः सर्वत्रानुवर्तते। मृदेव मृत्तिका ।।

</5-4-39>
सस्नौ प्रशंसायाम् ।। <5-4-40> ।।
प्रशंसोपाधिकेऽर्थे वर्त्मानाद् मृच्छब्दात् स, स्न-इत्येतौ प्रत्ययौ भवतः। रूपपोऽपवादः। प्रशस्ता मृद् मृत्सा। मृत्स्ना।
नित्यश्चायं प्रत्ययः; उत्तरसूत्रेऽन्यतरस्यांग्रहणात् ।।

</5-4-40>
वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि ।। <5-4-41> ।।

`प्रशंसायाम् इत्येव। वृकज्येष्ठाभ्यां प्रसंसोपाधिकेऽर्थे वर्तमानाभ्यां यथासंख्यं तिल्-तातिलौ प्रत्ययौ भवतश्छन्दसि विषये। रूपपोऽपवादः। `वृकतिः(ऋ.4-31-4)। `ज्येष्ठतातिः(ऋ.5-44-1) ।।

</5-4-41>
बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।। <5-4-42> ।।
बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दात् शस् प्रत्ययो भवति अन्यतरस्याम्। विशेषानभिधानाच्च सर्व कर्मादिकारकं गृह्यते। बहूनि ददाति, बहुशो ददाति। अल्पं ददाति, अल्पशो ददाति। बहुभिर्द्ददाति, बहुशो ददाति। अल्पेन, अल्पशः। बहुभ्यः, बहुशः। अल्पाय, अल्पशः। इत्येवमाद्युदाहार्यम्।
बह्वल्पार्थादिति किम् ? गां ददाति। अश्वं ददाति। कारकादिति किम् ? बहूनां स्वामी। अल्पानां स्वामी।
अर्थग्रहणात् पर्यायेभ्योऽपि भवति---भूरिशो ददाति। स्तोकशो ददाति।

- बह्वल्पार्थान्मङ्गलामङ्गलवचनम् *(म.भा.2-436)। यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते। बहुशो ददातीत्याभ्युदयिकेषु कर्मसु। अल्पशो ददातीत्यनिष्टेषु कर्मसु ।।

</5-4-42>
संख्यैकवचनाच्च वीप्सायाम् ।। <5-4-43> ।।
संख्यावाचिभ्यः प्रातिपदिकेभ्य एकवचनाच्च वीप्सायां द्योत्यायां शस् प्रत्ययो भवति अन्यतरस्याम्। द्वौ द्वौ मोदकौ ददाति द्विशः। त्रिशः। एकवचनात्खल्वपि-कार्षापणं कार्षापणं ददाति कार्षापणशः। माषशः। पादशो ददाति।
एकोऽर्थ उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दा वृत्तावेकार्था एव भवन्ति ।
संख्यैकवचनादिति किम् ? घटं घटं ददाति। वीप्सायामिति किम् ? द्वौ ददाति। कार्षापणं ददाति।
`कारकात् इत्येव--द्वयोर्द्वयोः स्वामी। कार्षापणस्य कार्षापणस्य स्वामी ।।

</5-4-43>
प्रतियोगे पञ्चम्यास्तसिः ।। <5-4-44> ।।
प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युरर्जुनतः प्रति।
वाग्रहणानुवृत्तेर्विकल्पेन भवति--वासुदेवात्, अर्जुनादित्यपि भवति।

- तसिप्रकरणे आद्यादिभ्य उपसंख्यानम् *। आदौ आदितः। मध्यतः। पार्श्वतः। पृष्ठतः। आकृतिगणश्चायम् ।।

</5-4-44>
अपादाने चाहीयरुहोः ।। <5-4-45> ।।
अपादाने या पञ्चमी तस्याः पञ्चम्या वा तसिः प्रत्ययो भवति। तच्चेदपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामत आगच्छति, ग्रामात्। चोरतो बिभेति, चोरात्। अध्ययनतः पराजयते, अध्ययनात्।
अहीयरुहोरिति किम् ? सार्थाद्धीयते। पर्वतादवरोहति।
हीयते इति विकारनिर्द्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर्मा भूत्---भूमित उज्जिहीते, भूमेरुज्जिहीते।
कथम् `मन्त्रो हीनः स्वरतो वर्णतो वा(पा.शि.52) इति ? नैषा पञ्चमी; किं तर्हि, तृतीया। स्वरेण वर्णेन हीन इत्यर्थः ।।

</5-4-45>
अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।। <5-4-46> ।।
अतिक्रम्य ग्रहः=अतिग्रहः। अचलनम्=अव्यथनम्। क्षेपः=निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद्वा तसिः प्रत्ययो भवति, सा चेत् कर्तरि न भवति। वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते। चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते। सुष्ठु वृतवानन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः।
अव्यथने--वृत्तेन न व्यथते वृत्ततो न व्यथते। चारित्रेण न व्यथते चारित्रतो न व्यथते। वृत्तेन न चलतीत्यर्थः।
क्षेपे---वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः।
अकर्तरीति किम्? देवदत्तेन क्षिप्तः ।।

</5-4-46>
हीयमानपापयोगाच्च ।। <5-4-47> ।।
अकर्तरि तृतीययाः(5-4-46/2113) इत्येव। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात्परा या तृतीया विभक्तिरकर्तरि तदन्ताद्वा तसिः प्रत्ययो भवति। वृत्तेन हीयते वृत्ततो हीयते। चारित्रेण हीयते चारित्रतो हीयते। पापयोगात्---वृत्तेन पापः वृत्ततः पापः। चारित्रेण पापः चारित्रतः पापः।
क्षेपस्य चाविवक्षायां तत्त्वाख्यायामिदमुदाहरणम्। क्षेपे हि पूर्वेणैव सिद्धम्।
अकर्तरीत्येव--देवदत्तेन हीयते ।।

</5-4-47>
षष्ठ्या व्याश्रये ।। <5-4-48> ।।
नानापक्षसमाश्रयः=व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्दजुनस्य पक्षे, कर्णस्य पक्ष इत्यर्थः।
व्याश्रय इति किम् ? वृक्षस्य शाखा ।।

</5-4-48>
रोगाच्चापनयने ।। <5-4-49> ।।
रोगः=व्याधिः। तद्वाचिनः शब्दाद्या षष्ठीविभक्तिः तदन्ताद्वा तसिः प्रत्ययो भवति अपनयने गम्यमाने। अपनयनम्=प्रतीकारः, चिकित्सेत्यर्थः। प्रवाहिकातः कुरु। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः।
अपनयन इति किम् ? प्रवाहिकायाः प्रकोपनं कुरु।

</5-4-49>
अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ।। <5-4-50> ।।

कारणस्य विकाररूपेणाभूतस्य तदात्मना भावः=अभूततद्भावः। सम्पद्यतेः कर्त्ता सम्पद्यकर्ता। सम्पद्यकर्तरि वर्तमानात् प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः प्रत्ययो भवति। अशुक्लः शुक्लः सम्पद्यते, तं करोति शुक्लीकरोति। मलिनं शुक्लीकरोति। शुक्लीभवति। शुक्लीस्यात्। घटीकरोति मृदम्। धटीभवति। घटीस्यात्।
अभूततद्भाव इति किम्? शुक्लं करोति। नात्र प्रकृतिर्विवक्षिता। कृभ्वस्तियोग इति किम्? अशुक्लः शुक्लो जायते।
सम्पद्यकर्तरीति किम्, यावता अभूततद्भावसामर्थ्याल्लब्धमेव सम्पद्यकर्तृत्वम् ? कारकान्तरसम्पत्तौ मा भूत्-अदेवगृहे देवगृहे सम्पद्यते। देवगृहस्याधेयविशेषसम्बन्धेन अभूततद्भावः सत्वाधिकरणस्य, न कर्तुरिति ।।

</5-4-50>
अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।। <5-4-51> ।।
अरुःप्रभृतीनामन्तस्य लोपो भवति च्विश्च प्रत्ययः। अत्र सर्वविशेषणसम्बन्धात्पूर्वेणैव प्रत्ययः सिद्धः, लोपमात्रार्थ आरम्भः। अनररुरुः सम्पद्यते, तं करोति अरूकरोति। अरूभवति। अरूस्यात्। मनस्-उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। चक्षुषु--उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात्। चेतस्--विचेतीकरोति। विचेतीभवति। विचेतीस्यात्। रहस्-विरहीकरोति। विरहीभवति। विरहीस्यात्। रजस्-विरजीकरोति। विरजीभवति। विरजीस्यात्।

</5-4-51>
विभाषा साति कात्स्न्र्ये ।।<5-4-52> ।।
`अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि इति सर्वमनुवर्तते। अस्मिन्विषये विभाषा सातिः प्रत्ययो भवति कात्स्न्र्ये गम्यमाने। यदि प्रकृतिः कृत्स्नां विकारात्मतामापद्यते इत्यर्थः। अग्निसाद्भवति शस्त्रम्। अग्नीभवति शस्त्रम्। उदकसाद्भवति लवणम्। उदकीभवति लवणम्।
कात्स्न्र्ये इति किम्? एकदेशेन पटः शुक्लीभवति। विभाषाग्रहणं च्वेः प्रापकम्। प्रत्ययविकल्पस्तु महाविभाषयैव सिद्धः ।।

</5-4-52>
अभिविधौ सम्पदा च ।। <5-4-53> ।।
अभिविधिः=अभिव्याप्तिः। अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदा योगे, चकारात् कृभ्वस्तिभिश्च।
विभाषाग्रहणानुवृत्तेश्च्विरप्यभ्यनुज्ञायते। स तु कृभ्वस्तियोग एव भवति, न सम्पदा। अग्निसात्सम्पद्यते। अग्निसाद्भवति। उदकसात्सम्पद्यते। उदकसाद्भवति लवणम्। अग्नीभवति। उदकीभवति।
अथाभिविधेः कात्स्न्र्यस्य च को विशेषः ? यत्रैकदेशेनापि सर्वाप्रकृतिर्विकारमापद्यते सोऽभिविधिः। यथा--अस्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात्सम्पद्यते, वर्षासु सर्वं लवणमुदकसात्सम्पद्यत इति। कात्स्न्र्ये तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति।

</5-4-53>
तदधीनवचने ।। <5-4-54> ।।
`अभूततद्भावे इति निवृत्तम्; अर्थान्तरोपादानात्। `कृभ्वस्तियोगे, `सम्पदा च इति वर्तते। तदधीनम्=तदायत्तम्, तत्स्वामिकमित्यर्थः। स्वामिसामान्यम्, ईशितव्यसामान्यं च तदधीनशब्देन निर्दिश्यते। स्वामिविशेषवाचिनः
प्रातिपदिकादीशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे। राजाधीनं करोति राजसात्करोति। राजसाद्भवति। राजसात्स्यात्। राजसात्सम्पद्यते। ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्सम्पद्यते।

</5-4-54>
देये त्रा च ।। <5-4-55> ।।
`तदधीनवचने इत्यनुवर्तते, तस्य विशेषणं देयग्रहणम्। दातव्यम्=देयम्, तदधीने देये त्रा प्रत्ययो भवति, चकारात्सातिश्च कृभ्वस्तिभिः सम्पदा च योगे। ब्राह्मणेभ्यो देयमिति यद्विज्ञातम्, तद्यदा तेषां समर्पणेन तदधीनं क्रियते तदा `त्रा प्रत्ययः। ब्राह्मणाधीनं देयं करोति ब्राह्मणसात्करोति। ब्राह्मणत्राकरोति। ब्राह्मणत्राभवति। ब्राह्मणत्रास्यात्। ब्राह्मणत्रासम्पद्यते।
देये इति किम् ? राजसाद्भवति राष्ट्रम् ।।

</5-4-55>
देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।। <5-4-56> ।।
`सातिः निवृत्तः, त्राप्रत्ययोऽनुवर्तते। देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो भवति बहुलम्। `कृभ्वस्तिभिः इति नात्र सम्बध्यते। सामान्येन विधानम्। देवान् गच्छति देवत्रागच्छति। देवेषु वसति देवत्रावसति। मनुष्यान् गच्छति मनुष्यत्रागच्छति। मनुष्येषु वसति मनुष्यत्रावसति। एवमन्येऽप्युदाहार्याः---पुरुषान्गच्छति पुरुषत्रागच्छति। पुरुषेषु वसति पुरुषत्रावसति। पुरून्गच्छति पुरुत्रागच्छति। पुरुषु वसति पुरुत्रावसति। मर्त्यान् गच्छति मर्त्यत्रा गच्छति। मर्त्येषु वसति मर्त्यत्रावसति।
बहुलवचनादन्यत्रापि भवति---`बहुत्रा जीवतो मनः(पै.सं.19-34-4) इति ।।

</5-4-56>
अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच् ।। <5-4-57> ।।
यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः। तस्यानुकरणमव्यक्तानुकरणम्। द्व्यच् अवरार्द्धं यस्य तद् द्व्यजवरार्धम्। अवरशब्दोऽपकर्षे। यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्द्धद्व्यच्कं सम्पद्यते, तस्मादव्यक्तानुकरणादनितिपराड्डाच्प्रत्ययो भवति। `कृभ्वस्तियोगे इत्यनुवर्तते। तस्य च द्विर्वचने कृते द्व्यजवरार्धम्, ततः प्रत्ययः।
`डाचि बहुलं द्वे भवतः(6-1-99/82 वा.) इति विषयसप्तमी। डाचि विवक्षिते द्विर्वचनमेव पूर्वं क्रियते, पश्चात्प्रत्ययः। पटपटाकरोति। पटपटाभवति। पटपटास्यात्। दमदमाकरोति। दमदमाभवति। दमदमास्यात्। अव्यक्तानुकरणादिति किम् ? दृषत्करोति। द्व्यजवरार्द्धादिति किम् ? श्रत्करोति। अवरग्रहणं किम् ? खरटखरटाकरोति। त्रपटत्रपटाकरोति। अनिताविति किम् ? पटिति करोति।
चकारः स्वरार्थः, स्वरितबाधनार्थः। पटपटासि--अत्र स्वरितो वानुदात्तेऽपदादौ(8-2-6/3659) इति स्वरितो न भवति।
केचित्-`द्व्यजवराध्र्यात् इति यकारं पठन्ति, स स्वार्थिको विज्ञेयः ।।

</5-4-57>
कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ।। <5-4-58> ।।
द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे, नान्यत्र। पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थम्। द्वितीयाकरोति। द्वितीयं कर्षणं विलेखनं करोतीत्यर्थः। तृतीयाकरोति। शम्बाकरोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थः। बीजाकरोति। सह बीजेन विलेखनं करोतित्यर्थः।
कृषाविति किम् ? द्वितीयं करोति पदम् ।।

</5-4-58>
संख्यायाश्च गुणान्तायाः ।। <5-4-59> ।।
`कृञः इत्यनुवर्तते, `कृषौ इति च। संख्यावाचिनः शब्दस्य गुणशब्दोऽन्ते=समीपे यत्र सम्भवति सा संख्या गुणान्तेत्युच्यते। तादृशात्प्रातिपदिकात्कृषावभिधेयायां डाच्प्रत्ययो भवति कृञो

योगे। द्विगुणं विलेखनं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रम्। त्रिगुणाकरोति।
कृषाविति किम् ? द्विगुणां करोति रज्जुम् ।।

</5-4-59>
समयाच्च यापनायाम् ।। <5-4-60> ।।
`कृञः इत्येव। `कृषौ इति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः=समयः, तस्यातिक्रमणम्=यापना। समयशब्दाद्यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे। समयाकरोति। समयं यापयति, कालक्षेपं करोतीत्यर्थः।
यापनायामिति किम् ? समयं करोति ।।

</5-4-60>
सपत्त्रनिष्पत्त्रादतिव्यथने ।। <5-4-61> ।।
`कृञः इत्येव। सपत्त्रनिष्पत्त्रशब्दाभ्यामतिव्यथने डाच् प्रत्ययो भवति कृञो योगे सति। अतिव्यथनम्=अतिपीडनम्। सपत्त्राकरोति मृगं व्याधः। सपत्त्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्त्राकरोति। शरीराच्छरमपरपार्श्वे निष्कामयतीत्यर्थः ।
अतिव्यथन इति किम्? सपत्त्रं वृक्षं करोति जलसेचकः। निष्पत्त्रं वृक्षतलं करोति भूमिशोधकः ।।

</5-4-61>
निष्कुलान्निष्कोषणे ।। <5-4-62> ।।
`कृञः इत्येव। निष्कुलशब्दान्निष्कोषणे वर्तमानात्कृञो योगे डाच् प्रत्ययो भवति। निष्कोषणम्=अन्तरवयवानां बहिर्निष्कासनम्। निष्कुलाकरोति पशून्। निष्कुष्णातीत्यर्थः।

निष्कोषण इति किम् ? निष्कुलान् करोति शत्रून् ।।

</5-4-62>
सुखप्रियादानुलोम्ये ।। <5-4-63> ।।
सुख-प्रिय-शब्दाभ्यामानुलोम्ये वर्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति। आनुलोम्यम्=अनुकूलता, आराध्यचित्तानुवर्तनम्। सुखाकरोति। प्रियाकरोति। स्वाम्यादेश्चित्तमाराधयतीत्यर्थः। सुखं प्रियं वा कुर्वन्नप्यानुलोम्येऽवस्थित एवमुच्यते।
आनुलोम्य इति किम् ? सुखं करोति, प्रियं करोत्यौषधपानम् ।।

</5-4-63>
दुःखात्प्रातिलोम्ये ।। <5-4-64> ।।
`कृञः इत्येव। दुःखशब्दात्प्रातिपदिकात् प्रातिलोम्ये गम्यमाने डाच् प्रत्ययो भवति कृञो योगे।
प्रातिलोम्यम्=प्रतिकूलता, स्वाम्यादेश्चित्तपीडनम्। दुःखाकरोति भृत्यः।
प्रातिलोम्य इति किम् ? दुःखं करोति कदन्नम् ।।

</5-4-64>
शूलात्पाके ।। <5-4-65> ।।
`कृञः इत्येव। शूलशब्दात्पाकविषये डाच् प्रत्ययो भवति कृञो योगे। शूले पचति शूलाकरोति मांसम्।
पाक इति किम्? शूलं करोति कदन्नम् ।।

</5-4-65>
सत्यादशपथे ।। <5-4-66> ।।
`कृञः इत्येव। सत्यशब्दादशपथे डाच् प्रत्ययो भवति कृञो योगे। सत्यशब्दोऽनृतप्रतिपक्षवचनः। क्वचित्तु शपथे च वर्तते--सत्येन शापयेद्विप्रमिति, तस्यायं प्रतिषेधः। सत्याकरोति वणिक् भाण्डम् । `मयैतत्क्रेतव्यम्--इति तथ्यं करोति।
अशपथ इति किम्? सत्यं करोति ब्राह्मणः ।।

</5-4-66>
मद्रात्परिवापणे ।। <5-4-67> ।।
<K.4.376>
`कृञः इत्येव। मद्रशब्दात्परिवापणे डाच् प्रत्ययो भवति कृञो योगे। परिवापणम्=मुण्डनम्। मद्रशब्दो मङ्गलार्थः। मङ्गलं मुण्डनं करोति, मद्राकरोति।

- भद्राच्चेति वक्तव्यम् *(म.भा.2-437)। भद्राकरोति नापितः कुमारम्।

परिवापण इति किम्? भद्रं करोति ।।

</5-4-67>
समासान्ताः ।। <5-4-68> ।।
अधिकारोऽयम्। आ पादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्यान्तावयवा एकदेशा भवन्ति = तद्ग्रहणेन गृह्यन्त इति वेदितव्यम्। प्रयोजनम् - अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः। अधिराजम्, उपराजम्। नाव्ययीभावद् इत्येष विधिर्भवति, अनश्च इति टच्। द्विपुरी, त्रिपुरी इति। द्विगोः इति ङीब्भवति। कटकवलयिनी। शङ्खनूपुरिणी। कोशनिषदिनी। स्रक्त्वचिनी। द्वन्द्वोपतापगर्ह्यात् इतीनिर्भवति। <K.4.378>
विधुरः। प्रधुरः। तत्पुरुषे तुल्यार्थ इत्येष स्वरो भवति। उच्चैर्धुरः। नीचैर्धुरः। बहुव्रीहौ प्रकृत्या पूर्वपदम् इत्येतद्भवति ।।

</5-4-68>
न पूजनात् ।। <5-4-69> ।।
यान् शब्दानुपादाय समासान्ता विधीयन्ते राजाहःसखिभ्यष्टच् इत्येवमादीन्, यदा ते पूजनात् = पूजनवचनात्परे भवन्ति तदा समासान्तो न भवति। सुराजा। अतिराजा। सुगौः। अतिगौः। <K.4.379> * पूजायां स्वतिग्रहणं कर्तव्यम् *। इह मा भूत् -- परमराजः, परमगवः इति। * प्राग्बहुव्रीहिग्रहणं च कर्तव्यम् *। बहुव्रीहौ सक्थ्यक्ष्णोः इत्येवमादौ प्रतिषेधो न भवति -- सुसक्थः, अतिसक्थः, स्वक्षः, अत्यक्षः ।।

</5-4-69>
किमः क्षेपे ।। <5-4-70> ।।
क्षेपे यः किंशब्दस्ततः परस्य समासान्तो न भवति। किंराजा यो न रक्षति। किंसखा योऽभिद्रुह्यति। किंगौः यो न वहति। किंक्षेपे इति समासः। क्षेप इति किम्? कस्य राजा किंराजः। किंसखः। किंगवः ।।

</5-4-70>
नञस्तत्पुरुषात् ।। <5-4-71> ।।
नञः परे वक्ष्यमाणा ये राजादयस्तदन्तात् तत्पुरुषात् समासान्तो न भवति। अराजा। असखा। अगौः। <K.4.380> तत्पुरुषादिति किम्? अनृचः माणवकः। अधुरं शकटम् ।।

</5-4-71>
पथो विभाषा ।। <5-4-72> ।।
नञस्तत्पुरुषात् इति वर्तते। नञः परो यः पथिन् - शब्दस्तदन्तात्तत्पुरुषात् समासान्तो विभाषा न भवति। पूर्वेण नित्यः प्रतिषेधः प्राप्तो विकल्प्यते। अपथम्, अपन्थाः।।

</5-4-72>
बहुव्रीहौ संख्येये डजबहुगणात् ।। <5-4-73> ।।
संख्येये यो बहुव्रीहिर्वर्तते तस्मादबहुगणान्ताड्डच् प्रत्ययो भवति। संख्ययाव्ययासन्न इति यो बहुव्रीहिस्तस्येदं ग्रहणम्। उपदशाः। उपविंशाः। उपत्रिंशाः। आसन्नदशाः। अदूरदशाः। अधिकदशाः। द्वित्राः। पञ्चषाः। पञ्चदशाः। <K.4.381> संख्येय इति किम्? चित्रगुः। शबलगुः। अबहुगणादिति किम्? उपबहवः। उपगणाः। अत्र स्वरे विशेषः। * डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यं निस्त्रिंशाद्यर्थम् *। निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य। <K.4.382> निश्चत्वारिंशानि यज्ञदत्तस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।।

</5-4-73>
ऋक्पूरब्धूःपथामानक्षे ।। <5-4-74> ।।
`बहुव्रीहौ इति न स्वर्य्यते, सामान्येन विधानम्। ऋक्। पुर, अप्, धुर, पथिन् -- इत्येवमन्तानां समासानामकारः प्रत्ययो भवति समासान्तोऽक्षे न। सामर्थ्याद्धुर एतद्विशेषणम्, ऋगादीनां न भवति। <K.4.383> अक्षसम्बन्धिनी या धूस्तदन्तस्य न भवति। अनृचः। बह्वृचः। अर्धर्चः। पुर् --- ललाटपुरम्। नान्दीपुरम्। अप् -- द्वीपम्। अन्तरीपम्। समीपम्। धुर् -- राजधुरा। महाधुरः। पथिन् -- स्थलपथः। जलपथः। अनक्षे इति किम्? अक्षस्य धूः अक्षधूः। दृढधूः अक्षः। <K.4.384> अनृचो माणवको ज्ञेयो, बह्वृचश्चरणाख्यायाम्। अनृचः माणवकः। बह्वृचः ब्राह्मणः। अनृक्कं साम, बह्वृक्कं सूक्तम् इत्यत्र न भवति।।

</5-4-74>
अच् प्रत्यन्ववपूर्वात्सामलोम्नः ।। <5-4-75> ।।
प्रति, अनु, अव -- इत्येवम्पूर्वात्सामान्ताल्लोमान्ताच्च समासादच् प्रत्ययो भवति। प्रतिसामम्, अनुसामम्, अवसामम्। प्रतिलोमम्, अनुलोमम्, अवलोमम्।
कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ।।
<K.4.385> कृष्णभूमः। पाण्डुभूमः। उदग्भूमः। पञ्चनदम्। पञ्चगोदावरम्। नदीभिश्च इत्यव्ययीभावः। भूमेरपि संख्यापूर्वाया अच् प्रत्यय इष्यते --- द्विभूमः प्रासादः, त्रिभूमः। दशभूमकं सूत्रम्। अन्यत्रापि च दृश्यते।
पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। समरात्रः। अरात्रः। तदेतत्सर्वमिह `अच् इति योगविभागं कृत्वा साधयन्ति।

</5-4-75>
अक्ष्णोऽदर्शनात् ।। <5-4-76> ।।
`अच् इत्यनुवर्तते। दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् प्रत्ययो भवति। लवणाक्षम्। पुष्कराक्षम्। उपमितं व्याघ्रादिभिः इति समासः। अदर्शनादिति किम् ? ब्राह्मणाक्षि। कथं कबराक्षम्, गवाक्षम् इति; अश्वादीनां मुखप्रच्छादनार्थं <K.4.386> बहुच्छिद्रं कबराक्षम्, तेनापि हि दृश्यते, गवाक्षेण च? नैष दोषः; चक्षुः पर्यायवचनो दर्शनशब्दः, प्राण्यङ्गवचन इहाश्रीयते ।।

</5-4-76>
अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।। <5-4-77> ।।
अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते। समासे व्यवस्थाऽपि निपातनादेव प्रतिपत्तव्या। आद्यास्त्रयो बहुव्रीहयः। अदृश्यान्यविद्यमानानि वा चत्वारि यस्य सः अचतुरः। विगतानि चत्वारि यस्य स विचतुरः। शोभनानि चत्वारि यस्य स सुचतुरः।
<K.4.387>
ततः परे एकादश द्वन्द्वाः। स्त्री च पुमांश्च स्त्रीपुंसौ। इह न भवति - स्त्रियाः पुमान् स्त्रीपुमान् इति। धेनुश्च अनड्वांश्च धेन्वनडुहौ। ऋक्च साम च ऋक्सामे। वाक्च मनश्च वाङ्मनसे। अक्षि च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। टिलोपो निपात्यते। पादौ च अष्ठीवन्तौ च पदष्ठीवम्। पादस्य पद्भावो निपात्यते। नक्तं च दिवा च नक्तन्दिवम्। सप्तम्यर्थवृत्तयोरव्यययोः समासोऽपि निपातनादेव। रात्रौ च दिवा च रात्रिन्दिवम्। पूर्वपदस्य मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। ननु च पर्यायावेतौ, कथमनयोर्द्वन्द्वः? वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। एकोऽव्ययीभावः।
साकल्ये --- सरजसम् अभ्यवहरति। बहुव्रीहौ न भवति -- सह रजसा सरजः = पङ्कजमिति, ततस्तत्पुरुषः।
<K.4.388>
निश्चितं श्रेयो निःश्रेयसम्। निःश्रेयस्कः पुरुष इत्यत्र न भवति। ततः षष्ठीसमासः।
पुरुषस्यायुः पुरुषायुषम्। द्वन्द्वे न भवति --- पुरुषश्च आयुश्च पुरुषायुषी। ततो द्विगू - द्वे आयुषी समाहृते द्व्यायुषम्। त्र्यायुषम्। इह न भवति - द्वयोरायुः द्व्यायुः, त्र्यायुरिति। ततो द्वन्द्वः। ऋक्च यजुश्च ऋग्यजुषम्। इह न भवति - ऋग्यजुरस्योन्मुग्धस्य ऋग्यजुः उन्मुग्धः।
जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः। बहुव्रीहौ न भवति -- जातोक्षा ब्राह्मणः। महोक्षा, वृद्धोक्षेति। ततोऽव्ययीभावः। शुनः समीपमुपशुनम्। टिलोपाभावः, सम्प्रसारणं च निपातनादेव। ततः सप्तमीसमासः। गोष्ठे श्वा गोष्ठश्वः। * चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यातम् *। त्रिचतुराः। उपचतुराः ।।

</5-4-77>
<K.4.389>
ब्रह्महस्तिभ्यां वर्चसः ।। <5-4-78> ।।
ब्रह्महस्तिभ्यां परो यो वर्चःशब्दः तदन्तात् समासादच् प्रत्ययो भवति। ब्रह्मवर्चसम्। हस्तिवर्चसम्।

- पल्यराजभ्यां चेति वक्तव्यम् *। पल्यवर्चसम्। राजवर्चसम् ।।

</5-4-78>
अवसमन्धेभ्यस्तमसः ।। <5-4-79> ।।
अव, सम्, अन्ध - इत्येतेभ्यो यः परस्तमःशब्दस्तदन्तात्समासाद् अच् प्रत्ययो भवति। अवतमसम्। सन्तमसम्। अन्धतमसम् ।।

</5-4-79>
श्वसो वसीयःश्रेयसः ।। <5-4-80> ।।
श्वसः परौ यौ वसीयस् - श्रेयःशब्दौ तदन्तात्समासादच् प्रत्ययो भवति। श्वोवसीयसम्। श्वःश्रेयसम्। मयूरव्यंसकादित्वात्समासः। स्वभावाच्चेह श्वःशब्द उत्तरपदार्थस्य प्रशंसामाशीर्विषयमाचष्टे। <K.4.390> श्वःश्रेयसं ते भूयात्। शोभनं श्रेयस्ते भूयादित्यर्थः। श्वोवसीयसम् इत्यस्यैवायं पर्यायः ।।

</5-4-80>
अन्ववतप्ताद्रहसः ।। <5-4-81> ।।
अनु, अव, तप्त - इत्येतेभ्यः परो यो रहश्शब्दस्तदन्तात् समासाद् अच्प्रत्ययो भवति। अनुरहसम्। अवरहसम्। तप्तरहसम् ।।

</5-4-81>
प्रतेरुरसः सप्तमीस्थात् ।। <5-4-82> ।।
प्रतेः परो य उरःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति, स चेदुरःशब्दः सप्तमीस्थो भवति। सप्तम्यर्थे वर्त्तत इत्यर्थः। उरसि वर्त्तते। विभक्त्यर्थे अव्ययम् इति समासः। प्रत्युरसम्। सप्तमीस्थादिति किम्? प्रतिगतमुरः प्रत्युरः ।।

</5-4-82>
<K.4.391>
अनुगवमायामे ।। <5-4-83> ।।
`अनुगवम् इत्यच्प्रत्ययान्तं निपात्यते आयामेऽभिधेये। अनुगवं यानम्। यस्य चायामः इति समासः।
आयाम इति किम्? गवां पश्चाद् अनुगु ।।

</5-4-83>
द्विस्तावा त्रिस्तावा वेदिः ।। <5-4-84> ।।
`द्विस्तावा, `त्रिस्तावा इति निपात्यते वेदिश्चेद् अभिधेया भवति। अच्प्रत्ययः, टिलोपः, समासश्च निपात्यते। यावती प्रकृतौ वेदिस्ततो द्विगुणा वा त्रिगुणा वा कस्याञ्चिद्विकृतौ तत्रेदं निपातनम्। द्विस्तावा वेदिः। त्रिस्तावा वेदिः। <K.4.392> वेदिरिति किम्? द्विस्तावती, त्रिस्तावती रज्जुः ।।

</5-4-84>
उपसर्गादध्वनः ।। <5-4-85> ।।
उपसर्गात्परो योऽध्वन् - शब्दस्तदन्तात् समासाद् अच् प्रत्ययो भवति। प्रगतोऽध्वानं प्राध्वः रथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्। उपसर्गादिति किम्? परमाध्वा। उत्तमाध्वा ।।

</5-4-85>
तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।। <5-4-86> ।।
अङ्गुलिशब्दान्तस्य तत्पुरुषस्य संख्यादेरव्ययादेश्चाच् प्रत्ययो भवति। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्।
त्र्यङ्गुलम्। तद्धितार्थ इति समासः। `प्रमाणे लो द्विगोर्नित्यम् इति मात्रचो लोपः। अव्ययादेः --- निर्गतमङ्गुलिभ्यो निरङ्गुलम्। अत्यङ्गुलम्। तत्पुरुषस्येति किम्? पञ्चाङ्गुलिः। अत्यङ्गुलिः पुरुषः।
तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तात् इति यावत् ।।

</5-4-86>
<K.4.393>
अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।। <5-4-87> ।।
अहरादिभ्यः परो यो रात्रिशब्दस्तदन्तस्य तत्पुरुषस्याच् प्रत्ययो भवति, चकारात्संख्यादेरव्ययादेश्च। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्च अहोरात्रः। सर्वरात्रः। एकदेशे -- पूर्वं रात्रेः पूर्वरात्रः। अपररात्रः। पूर्वपरावर इति समासः। सङ्ख्याता रात्रिः सङ्ख्यातरात्रः। विशेषणं विशेष्येण इति समासः। एवं पुण्या रात्रिः पुण्यरात्रः। संख्याव्ययादेः खल्वपि -- द्वे रात्री समाहृते द्विरात्रः। त्रिरात्रः। अतिक्रान्तो रात्रिम् अतिरात्रः। नीरात्रः ।।

</5-4-87>
अह्नोऽह्न एतेभ्यः ।। <5-4-88> ।।
<K.4.394>
राजाहः सखिभ्यष्टच् इति वक्ष्यति, तस्मिन् परभूते अहन्नित्येतस्य `अह्न इत्ययमादेशो भवति एतेभ्य उत्तरस्य। संख्याव्ययादयः प्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते। सामर्थ्याच्चाहःशब्दः पूर्वत्वेन नाश्रीयते। परिशिष्टानां ग्रहणम्। न ह्यहः शब्दात् परोऽहःशब्दः सम्भवति। संख्यायास्तावत् - द्वयोरह्नोर्भवः द्व्यह्नः। त्र्यह्नः। अव्ययात् - अहरतिक्रान्तः अत्यह्नः। निरह्नः। सर्वाह्णः। पूर्वाह्णः। अपराह्णः। संख्याताह्नः।
पुण्यशब्दात्प्रतिषेधं वक्ष्यति ।।

</5-4-88>
<K.4.395>
न संख्यादेः समाहारे ।। <5-4-89> ।।
संख्यादेस्तत्पुरुषस्य समाहारे वर्त्तमानस्याहःशब्दस्याह्नादेशो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। समाहार इति किम्? द्वयोरह्नोर्भवो द्व्यह्नः। त्र्यह्नः। तद्धितार्थ इति समासे कृतेऽणः आगतस्य द्विगोर्लुगनपत्ये इति लुक् ।।

</5-4-89>
उत्तमैकाभ्यां च ।। <5-4-90> ।।
उत्तमैकशब्दाभ्यां च परस्याह्न इत्ययमादेशो न भवति। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे; पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम् । पुण्याहः। एकाहः। केचित्तु उपोत्तमस्यापि प्रतिपत्त्यर्थं

वर्णयन्ति। तेन संख्यातशब्दादपि परस्य न भवति -- संख्याताहः इति ।।

</5-4-90>
<K.4.396>
राजाहस्सखिभ्यष्टच् ।। <5-4-91> ।।
राजन्, अहन्, सखि -- इत्येवमन्तात्प्रातिपदिकात् टच् प्रत्ययो भवति। महाराजः। मद्रराजः। परमाहः। उत्तमाहः। राज्ञः सखा राजसखः। ब्राह्मणसखः। इह कस्मान्न भवति - मद्राणां राज्ञी मद्रराज्ञी, लिङ्गविशिष्टपरिभाषया प्राप्नोति ? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजन् - शब्दस्य सवर्णदीर्घार्थं प्रथमं प्रयोगं कुर्वन्नेतद् ज्ञापयति --
यस्याकारेण सवर्णदीर्घत्वं सम्भवति तस्येदं ग्रहणमिति ।।

</5-4-91>
गोरतद्धितलुकि ।। <5-4-92> ।।
गोशब्दान्तात्तत्पुरुषाट्टच् प्रत्ययो भवति स चेत्तत्पुरुषस्तद्धितलुग्विषयो न भवति। परमगवः। उत्तमगवः। पञ्चगवम्। दशगवम्। अतद्धितलुकीति किम्? पञ्चभिर्गोभिः क्रीतः पञ्चगुः। दशगुः। तेन क्रीतम् इत्यागतस्यार्हीयस्य ठकः अध्यर्द्धपूर्वद्विगोः इति लुक्। <K.4.397> तद्धितग्रहणं किम्? सुब्लुकि प्रतिषेधो मा भूत् -- राजगवमिच्छति राजगवीयति। लुग्ग्रहणं किम्? तद्धित एव मा भूत्पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम्, पञ्चगवमयम्। दशगवरूप्यम्, दशगवमयम् ।।

</5-4-92>
अग्राख्यायामुरसः ।। <5-4-93> ।।
उरःशब्दान्तात्तत्पुरुषाट्टच् प्रत्ययो भवति, स चेदुरःशब्दोऽग्राख्यायां भवति। अग्रम् = प्रधानमुच्यते। यथा शरीरावयवानामुच्यते उरः प्रधानम्, एवमन्योऽपि प्रधानभूत उरःशब्देनोच्यते। अश्वानामुरः अश्वोरसम्। हस्त्युरसम्। रथोरसम्। अग्राख्यायामिति किम्? देवदत्तस्योरः देवदत्तोरः ।।

</5-4-93>
अनोऽश्मायस्सरसां जातिसंज्ञयोः ।। <5-4-94> ।।
अनस्, अश्मन्, अयस्, सरस् - इत्येवमन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति जातौ संज्ञायां च विषये। उपानसम् इति जातिः। महानसम् इति संज्ञा। अमृताश्म इति जातिः। पिण्डाश्म इति संज्ञा। <K.4.398> कालायसम् इति जातिः। लोहितायसम् इति संज्ञा। मण्डूकसरसम् इति जातिः। जलसरसम् इति संज्ञा। `जातिसंज्ञयोः इति किम्? सदनः। सदश्मा। सत्सरः ।।

</5-4-94>
ग्रामकौटाभ्यां च तक्ष्णः ।। <5-4-95> ।।
`जातिसंज्ञयोः इति नानुवर्तते। ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति। ग्रामस्य तक्षा ग्रामतक्षः। बहूनां साधारण इत्यर्थः। कुट्यां भवः कौटः, तस्य तक्षा कौटतक्षः। स्वतन्त्रः कर्मजीवी, न कस्यचित्प्रतिबद्ध इत्यर्थः। ग्रामकौटाभ्यामिति किम्? राज्ञस्तक्षा राजतक्षा ।।

</5-4-95>
अतेः शुनः ।। <5-4-96> ।।
अतिशब्दात्परो यः श्वन् - शब्दः तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति। अतिक्रान्तः श्वानम् अतिश्वः वराहः। जववानित्यर्थः। अतिश्वः सेवकः। सुष्ठु स्वामिभक्त इत्यर्थः. अतिश्वी सेवा। अतिनीचेत्यर्थः ।।

</5-4-96>
उपमानादप्राणिषु ।। <5-4-97> ।।
उपमानवाची यः श्वन् - शब्दोऽप्राणिषु वर्त्तते तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति। आकर्षः श्वेव आकर्षश्वः। फलकश्वः। उपमितं व्याघ्रादिभिः इति समासः। <K.4.399> उपमानादिति किम्? न श्वा अश्वा लोष्टः। अप्राणिष्विति किम्? वानरः श्वेव वानरश्वा ।।

</5-4-97>
उत्तरमृगपूर्वाच्च सक्थ्नः ।। <5-4-98> ।।
उत्तर, मृग, पूर्व - इत्येतेभ्यः परो यः सक्थिशब्दश्चकारादुपमानं च, तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति समासान्तः। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। उपमानात्खल्वपि - फलकमिव सक्थि फलकसक्थम् ।।

</5-4-98>
नावो द्विगोः ।। <5-4-99> ।।
नौशब्दान्ताद् द्विगोष्टच्प्रत्ययो भवति समासान्तः। द्वे नावौ समाहृते द्विनावम्। त्रिनावम्। द्विनावधनः। पञ्चनावप्रियः। द्वाभ्यां नौभ्यामागतं द्विनावरूप्यम्। द्विनावमयम्। द्विगोरिति किम्? राजनौः।
अतद्धितलुकीत्येव -- पञ्चभिर्नौभिः क्रीतः पञ्चनौः। दशनौः ।।

</5-4-99>
अर्धाच्च ।। <5-4-100> ।।
<K.4.400>
अर्द्धशब्दात्परो यो नौशब्दस्तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति। अर्द्धं नावः अर्धनावम्। अर्द्धं नपुंसकम् इति समासः। परवल्लिङ्गं न भवति; लोकाश्रयत्वाल्लिङ्गस्य ।।

</5-4-100>
खार्याः प्राचाम् ।। <5-4-101> ।।
`द्विगोः, `अर्द्धाच्च इति द्वयमप्यनुवर्त्तते। खारीशब्दान्ताद् द्विगोरर्द्धाच्च परो यः खारीशब्दस्तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति प्राचामाचार्याणां मतेन। द्वे खार्यौ समाहृते द्विखारम्, द्विखारि। त्रिखारम्, त्रिखारि। अर्द्धं खार्या अर्ध खारम्, अर्धखारी ।।

</5-4-101>
द्वित्रिभ्यामञ्जलेः ।। <5-4-102> ।।
द्वित्रिभ्यां परो योऽञ्जलिशब्दः तदन्तात्पुरुषाट्टच्प्रत्ययो भवति। द्वावञ्जली समाहृतौ द्व्यञ्जलम्। त्र्यञ्जलम्।
द्विगोरित्येव -- द्वयोरञ्जलिः द्व्यञ्जलिः। अतद्धितलुकीत्येव - द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचामित्येव --- द्व्यञ्जलिप्रियः ।।

</5-4-102>
<K.4.401>
अनसन्तान्नपुंसकाच्छन्दसि ।। <5-4-103> ।।
अन्नन्ताद्, असन्ताच्च नपुंसकलिङ्गात्तत्पुरुषाट्टच् प्रत्ययो भवति छन्दसि विषये। हस्तिचर्मे जुहोति। `ऋषभचर्मेऽभिषिञ्चति(काठ.सं.37-3)। असन्तात्--`देवच्छन्दसानि(मै.सं.3-2-9)। `मनुष्यच्छन्दसानि(तै.सं.5-4-8-6)। अनसन्तादिति किम्? बिल्वदारु जुहोति। नपुंसकादिति किम्? `सुत्रामाणं पृथिवीं द्यामनेहसम्(ऋ.10-63-10)। * अनसन्तान्नपुंसकाच्छन्दसि वावचनम् *(म.भा.2-441)। `ब्रह्मसाम(तां.ब्रा.4-3-1)। `देवच्छन्दः(शां.ब्रा.1-5)। `ब्रह्मसामम्(तै.सं.1-8-18-1)। `देवच्छन्दसम्(तै.सं.5-4-8-5) ।।

</5-4-103>
ब्रह्मो जानपदाख्यायायाम् ।। <5-4-104> ।।
ब्रह्मन् - शब्दान्तात्तत्पुरुषाट्टच्प्रत्ययो भवति समासेन चेद्ब्रह्मणो जानपदत्वमाख्यायते। जनपदेषु भवो जानपदः। यस्य तत्पुरुषस्य <K.4.402> जनपदशब्दः पूर्वपदं तस्मादेतत्प्रत्ययविधानम्। सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः। योगविभागात्सप्तमीसमासः। जानपदाख्यायामिति किम्? देवब्रह्मा नारदः ।।

</5-4-104>
कुमहद्भ्यामन्यतरस्याम् ।। <5-4-105> ।।
कुमहद्भ्यां परो यो ब्रह्मा तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवत्यन्यतरस्याम्। कुब्रह्मः, कुब्रह्मा। महाब्रह्मः, महाब्रह्मा। ब्राह्मणपर्यायो ब्रह्मन्शब्दः ।।

</5-4-105>
द्वन्द्वाच्चुदषहान्तात्समाहारे ।। <5-4-106> ।।
तत्पुरुषाधिकारो निवृत्तः। द्वन्द्वाच्चवर्गान्ताद्, दकारान्तात्, षकारान्तात्, हकारान्ताच्च टच् प्रत्ययो भवति, स चेद् द्वन्द्वः समाहारे वर्तते, नेतरेतरयोगे। वाक्च त्वक्च वाक्त्वचम्। स्रक्च त्वक्च स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। वागूर्जम्। समिद्दृषदम्। सम्पद्विपदम्। वाग्विप्रुषम्। छत्रोपानहम्। धेनुगोदुहम्।
<K.4.403>
द्वन्द्वादिति किम्? तत्पुरुषान्मा भूत् - पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तादिति किम्? वाक्समित्। समाहार इति किम्? प्रावृट्शरदौ ।।

</5-4-106>
अव्ययीभावे शरत्प्रभृतिभ्यः ।। <5-4-107> ।।
`शरद् इत्येवमादिभ्यः प्रातिपदिकेभ्यष्टच् प्रत्ययो भवत्यव्ययीभावे। शरदः समीपम् उपशरदम्। प्रतिशरदम्। उपविपाशम्। प्रतिविपाशम्। अव्ययीभाव इति किम्? परमशरत्। येऽत्र झयन्ताः पठ्यन्ते, तेषां नित्यार्थं ग्रहणम्। स्वर्यते चेदमव्ययीभावग्रहणं प्राग्बहुव्रीहेः। शरत्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। चतुर्। यद्। तद्। * जराया जरश्च *। सदृश्। * प्रतिपरसमनुभ्योऽक्ष्णः *। पथिन्। प्रत्यक्षम् । परोक्षम्। <K.4.404> समक्षम्। अन्वक्षम्। प्रतिपथम्। सम्पथम्। अनुपथम्। शरदादिः ।।

</5-4-107>
अनश्च ।। <5-4-108> ।।
अन्नन्तादव्ययीभावाट्टच् प्रत्ययो भवति समासान्तः। उपराजम्। प्रतिराजम्। अध्यात्मम्। प्रत्यात्मम् ।।

</5-4-108>
नपुंसकादन्यतरस्याम् । <5-4-109> ।।
`अनः इत्येव। नपुंसकग्रहणमुत्तरपदविशेषणम्। अन्नन्तं यन्नपुंसकं तदन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति समासान्तः। पूर्वेण नित्ये प्राप्ते विकल्प्यते। प्रतिचर्मम्, प्रतिचर्म। उपचर्मम्, उपचर्म ।।

</5-4-109>
नदीपौर्णमास्याग्रहायणीभ्यः ।। <5-4-110> ।।
नदी, पौर्णमासी, आग्रहायणी - इत्येवमन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति। नद्याः समीपम् उपनदम्, उपनदि। उपपौर्णमासम्, उपपौर्णमासि। उपाग्रहायणम्, उपाग्रहायणि ।।

</5-4-110>
<K.4.405>
झयः ।। <5-4-111> ।।
`झयः इति प्रत्याहारग्रहणम्। झयन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति। उपसमिधम्, उपसमित्। उपदृषदम्, उपदृषत् ।।

</5-4-111>
गिरेश्च सेनकस्य ।। <5-4-112> ।।
गिरिशब्दान्तादव्ययीभावाट्टच् प्रत्ययो भवति सेनकस्याचार्यस्य मतेन। अन्तर्गिरम्, अन्तर्गिरि। उपगिरम्, उपगिरि। सेनकग्रहणं पूजार्थम्, विकल्पोऽनुवर्तत एव ।

</5-4-112>
बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । <5-4-113> ।।
स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तदन्ताद् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तः। अयमर्थोऽभिप्रेतः। सूत्रे तु दुःश्लिष्टविभक्तीनि <K.4.406> पदानि। दीर्घं सक्थि यस्य दीर्घसक्थः। कल्याणाक्षः। लोहिताक्षः। विशालाक्षः।
बहुव्रीहाविति किम्? परमसक्थिः। परमाक्षिः। सक्थ्यक्ष्णोरिति किम्? दीर्घजानुः। सुबाहुः। स्वाङ्गादिति किम् ? दीर्घसक्थि शकटम्। स्थूलाक्षिः इक्षुः। टचि प्रकृते षज्ग्रहणं स्वरार्थम् -- चक्रसक्थी स्त्री, दीर्घसक्थी <K.4.407> स्त्री। सक्थं चाक्रान्तात् इति विभाषयोत्तरपदस्यान्तोदात्तता विधीयते। तत्र यस्मिन्पक्षे नास्त्युदात्तत्वं तत्र ङीपि सत्युदात्तनिवृत्तिस्वरस्याभावादनुदात्तः श्रूयेत। ङीषि तु सर्वत्रोदात्तः सिद्धो भवति।
बहुव्रीहिग्रहणमापादपरिसमाप्तेरनुवर्तते ।।

</5-4-113>
अङ्गुलेर्दारुणि ।। <5-4-114> ।।
अङ्गुलिशब्दान्ताद्बहुव्रीहेः षच्प्रत्ययो भवति समासान्तो दारुणि समासार्थे। द्व्यङ्गुलं दारु। त्र्यङ्गुलं दारु। पञ्चाङ्गुलम्। अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठमुच्यते। <K.4.408> यस्य तु द्वे अङ्गुली प्रमाणं दारुणस्तत्र तद्धितार्थ इति समासे कृते तत्पुरुषस्याङ्गुलेः इत्यचा भवितव्यम्। दारुणीति किम्? पञ्चाङ्गुलिर्हस्तः ।।

</5-4-114>
द्वित्रिभ्यां ष मूर्द्ध्नः ।। <5-4-115> ।।
द्वित्रिभ्यां परो यो मूर्द्धन् - शब्दस्तदन्ताद्बहुव्रीहेः षः प्रत्ययो भवति समासान्तः। द्विमूर्धः। त्रिमूर्धः।
<K.4.409>
द्वित्रिभ्यामिति किम्? उच्चैर्मूर्धा ।।

</5-4-115>
अप्पूरणीप्रमाण्योः ।। <5-4-116> ।।
पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः शब्दाः पूरणीग्रहणेन गृह्यन्ते। `प्रमाणी इति स्वरूपग्रहणम्। पूरण्यन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् प्रत्ययो भवति समासान्तः। कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमाः रात्रयः।
कल्याणीदशमाः रात्रयः। स्त्री प्रमाणी एषां स्त्रीप्रमाणाः कुटुम्बिनः। भार्याप्रधाना इत्यर्थः।

- अपि प्रधानपूरणीग्रहणं कर्तव्यम् *। यत्रान्यपदार्थे पूरण्यनुप्रविशति न केवलं वर्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यम् । <K.4.410> पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते। इह न भवति -- कल्याणी पञ्चमी अस्मिन्पक्षे कल्याणपञ्चमीकः पक्ष इति ।। * नेतुर्नक्षत्र उपसंख्यानम् *। मृगो नेता आसां रात्रीणां मृगनेत्राः रात्रयः। पुष्यनेत्राः। नक्षत्र इति किम्? देवदत्तनेतृकाः ।। * छन्दसि च नेतुरुपसंख्यानम् *। बृहस्पतिनेत्राः देवाः । सोमनेत्राः। * मासाद् भृतिप्रत्ययपूर्वपदाट्ठज्विधिः *। पञ्चको मासोऽस्य <K.4.411> पञ्चकमासिकः कर्मकरः। दशकमासिकः। सोऽस्यांशवस्नभृतयः इति संख्याया अतिशदन्तायाः कन्।।

</5-4-116>
अन्तर्बहिर्भ्यां च लोम्नः ।। <5-4-117> ।।
अन्तर्, बहिस् - हत्येताभ्यां परो यो लोमन्शब्दः तदन्ताद्बहुव्रीहेरप्प्रत्ययो भवति। अन्तर्गतानि लोमान्यस्य अन्तर्लोमः प्रावारः। बहिर्लोमः पटः ।।

</5-4-117>
अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।। <5-4-118> ।।
नासिकान्ताद्बहुव्रीहेरच्प्रत्ययो भवति नासिकाशब्दश्च नसमादेशमापद्यते। `अस्थूलात् इति नासिकाविशेषणम् -- न चेत्स्थूलशब्दात्परा नासिका भवतीति। `संज्ञायाम् इति समुदायोपाधिः। द्रुरिव नासिकाऽस्य द्रुणसः। वाध्रीणसः। पूर्वपदात्संज्ञायामगः इति णत्वम्। गोनसः।
<K.4.412> संज्ञायामिति किम्? तुङ्गनासिकः। अस्थूलादिति किम्? स्थूलनासिकः वराहः। * खुरखराभ्यां नस् वक्तव्यः *। खुरणाः। खरणाः। पक्षेऽच्प्रत्ययोऽपीष्यते। खुरणसः। खरणसः ।। शितिनाः, अहिनाः, अर्चनाः - इति निगम इष्यते ।।

</5-4-118>
उपसर्गाच्च ।। <5-4-119> ।।
उपसर्गात्परो यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् प्रत्ययो भवति नासिकाशब्दश्च नसमापद्यते। असंज्ञार्थं वचनम्। उन्नता नासिकाऽस्य उन्नसः। प्रणसः। उपसर्गाद्बहुलम् इति णत्वम्। * वेर्ग्रो वक्तव्यः *। विगता नासिकाऽस्य विग्रः ।।

</5-4-119>
<K.4.413>
सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ।। <5-4-120> ।।
सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते। अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम्। शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः। शोभनं दिवाऽस्य `सुदिवः। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः। अजस्येव पादावस्य अजपदः। प्रोष्ठः = गौः, तस्येव पादावस्य प्रोष्ठपदः ।।

</5-4-120>
नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।। <5-4-121> ।।
नञ्, दुस्, सु - इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ तदन्ताद्बहुव्रीहेरन्यतरस्यामच् प्रत्ययो भवति समासान्तः। अविद्यमाना हलिरस्य <K.4.414> अहलः, अहलिः। दुर्हलः, दुर्हलिः। सुहलः, सुहलिः। अविद्यमानं सक्थ्यस्य
असक्थः, असक्थिः। दुःसक्थः, दुःसक्थिः। सुसक्थः, सुसक्थिः। `हलिशक्त्योः इति केचित्पठन्ति। अविद्यमाना शक्तिरस्य अशक्तः, अशक्तिः। विरूपा शक्तिरस्य दुःशक्तः, दुःशक्तिः। शोभना शक्तिरस्य सुशक्तः। सुशक्तिः ।।

</5-4-121>
नित्यमसिच् प्रजामेधयोः ।। <5-4-122> ।।
`नञ्दुस्सुभ्यः इत्येव। नञ्, दुस्, सु - इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद्बहुव्रीहेर्नित्यमसिच् प्रत्ययो भवति समासान्तः। अविद्यमाना प्रजाऽस्य अप्रजाः। दुष्प्रजाः। सुप्रजाः। अविद्यमाना मेधाऽस्य अमेधाः। दुर्मेधाः। सुमेधाः।
नित्यग्रहणं किम्; यावता पूर्वसूत्रेऽन्यतरस्यांग्रहणं नैव स्वर्यते ? एवं तर्हि नित्यग्रहणेनान्यत्रापि भवतीति सूच्यते।
श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधसः।
अनुवाकहता बुद्धिर्नैषा तत्वार्थदर्शिनी ।।

</5-4-122>
बपहुप्रजाश्छन्दसि ।। <5-4-123> ।।
<K.4.415>
`बहुप्रजाः इति छन्दसि निपात्यते। `बहुप्रजा निर्ऋतिमाविवेश(ऋ.1-164-32)।
छन्दसीति किम्? बहुप्रजो ब्राह्मणः ।।

</5-4-123>
धर्मादनिच् केवलात् ।। <5-4-124> ।।
केवलाद् यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्प्रत्ययो भवति समासान्तः। कल्याणो धर्मोऽस्य कल्याणधर्मा। प्रियधर्मा।

केवलादिति किम् ? परमः स्वो धर्मोऽस्य परमस्वधर्मः। यद्येवम्, त्रिपदे बहुव्रीहौ प्राप्नोति - परमः स्वो धर्मोऽस्येति? एवं तर्हि केवलादिति पूर्वपदं निर्दिश्यते - केवलात्पदाद्यो धर्मशब्दः, न पदसमुदायात्। तदन्ताद्बहुव्रीहेः प्रत्ययः ।।

</5-4-124>
जम्भा सुहरिततृणसोमेभ्यः ।। <5-4-125> ।।
बहुव्रीहौ समासे स्वादिभ्यः परं `जम्भा इति कृतसमासान्तमुत्तरपदं <K.4.416> निपात्यते। जम्भशब्दोऽभ्यवहार्यवाची, दन्तविशेषवाची च। शोभनो जम्भोऽस्य सुजम्भा देवदत्तः। शोभनाभ्यवहार्यः, शोभनदन्तो वा। एवं हरितजम्भा। तृणजम्भा। सोमजम्भा। दन्तवचने -- तृणमिव जम्भोऽस्य, सोम इव जम्भोऽस्येति विग्रहीतव्यम्।
सुहरिततृणसोमेभ्य इति किम्? पतितजम्भः ।।

</5-4-125>
दक्षिणेर्मा लुब्धयोगे ।। <5-4-126> ।।
`दक्षिणेर्मा इति कृतसमासान्तो निपात्यते बहुव्रीहौ समासे लुब्धयोगे। लुब्धः = व्याधः. दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः। ईर्मम् = व्रणमुच्यते। दक्षिणमङ्गं व्रणितमस्य व्याधेनेत्यर्थः।
लुब्धयोग इति किम्? दक्षिणेर्म शकटम् ।।

</5-4-126>
इच् कर्मव्यतिहारे ।। <5-4-127> ।।
कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् प्रत्ययो भवति। तत्र तेनेदमिति सरूपे इत्ययं बहुव्रीहिर्गृह्यते। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। दण्डादण्डि। तिष्ठद्गुप्रभृतिषु अयमिच्प्रत्ययः पठ्यते ।।

</5-4-127>
<K.4.417>
द्विदण्ड्यादिभ्यश्च ।। <5-4-128> ।।
द्विदण्ड्यादयः शब्दा इच्प्रत्ययान्ताः साधवो भवन्ति। `द्विदण्ड्यादिभ्यः इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी। द्विदण्ड्याद्यर्थमिच् प्रत्ययो भवति। तथा भवति यथा द्विदण्ड्यादयः सिध्यन्तीत्यर्थः। समुदायनिपातनाच्चार्थविशेषेऽवरुध्यन्ते। द्विदण्डि प्रहरति। द्विमुसलि प्रहरति। इह न भवति -- द्विदण्डा शालेति।
बहुव्रीह्यधिकारेऽपि तत्पुरुषात् क्वचिद्विधानमिच्छन्ति। निकुच्य <K.4.418> कर्णौ धावति निकुच्यकर्णि धावति। प्रोह्य पादौ हस्तिनं वाहयति प्रोह्यपादि हस्तिनं वाहयति। मयूर्व्यंसकादित्वात्समासः। द्विदण्डि। द्विमुसलि। उभाञ्जलि। उभयाञ्जलि। उभाकर्णि। उभयाकर्णि। उभादन्ति। उभयादन्ति। उभाहस्ति। उभयाहस्ति। उभापाणि। उभयापाणि। उभाबाहु। उभयाबाहु। एकपदि। प्रोह्यपदि। आढ्यपदि। सपदि। निकुच्यकर्णि। संहतपुच्छि। उभाबाहु उभयाबाहु इति निपातनादिच्प्रत्ययलोपः। प्रत्ययलक्षणेनाव्ययीभावसंज्ञा। द्विदण्ड्यादिः ।।

</5-4-128>
प्रसम्भ्यां जानुनोर्ज्ञुः ।। <5-4-129> ।।
प्र, सम् - इत्येताभ्यामुत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ। प्रकृष्टे जानुनी अस्य प्रज्ञुः। संज्ञुः ।।

</5-4-129>
<K.4.419>
ऊर्ध्वाद्विभाषा ।। <5-4-130> ।।
ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा `ज्ञुः इत्ययमादेशो भवति। ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः। ऊर्ध्वज्ञुः ।।

</5-4-130>
ऊधसोऽनङ् ।। <5-4-131> ।।
ऊधःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति समासान्तः। कुण्डमिव ऊधोऽस्याः सा कुण्डोध्नी। घटोध्नी।

- ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् *। इह मा भूत् -- महोधाः पर्जन्यः। घटोधः धैनुकम् ।।

</5-4-131>
धनुषश्च ।। <5-4-132> ।।
धनुःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति। शार्ङ्गं धनुरस्य शार्ङ्गधन्वा। गाण्डीवधन्वा। पुष्पधन्वा। अधिज्यधन्वा ।।

</5-4-132>
वा संज्ञायाम् ।। <5-4-133> ।।
धनुःशब्दान्ताद्बहुब्रीहेरनङादेशो वा भवति संज्ञायां विषये। <K.4.420> पूर्वेण नित्यः प्राप्तो विकल्प्यते।
शतधनुः, शतधन्वा। दृढधनुः, दृढधन्वा ।।

</5-4-133>
जायाया निङ् ।। <5-4-134> ।।
जायाशब्दान्तस्य बहुव्रीहेर्निङादेशो भवति। युवतिर्जाया यस्य युवजानिः। वृद्धजानिः ।।

</5-4-134>
गन्धस्येदुत्पूतिसुसुरभिभ्यः ।। <5-4-135>।।
उत्, पूति, सु, सुरभि - इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे। तकार उच्चारणार्थः। उद्गतो गन्धोऽस्य उद्गन्धिः। पूतिगन्धिः. सुगन्धिः। सुरभिगन्धिः।
एतेभ्य इति किम्? तीव्रगन्धः वातः।

- गन्धस्येत्त्वे तदेकान्तग्रहणम् *। तेन शोभनो गन्धोऽस्य सुगन्धः आपणिकः ।।

</5-4-135>
<K.4.421>

अल्पाख्यायाम् ।। <5-4-136> ।।
अल्पाख्यायां यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे। सूपोऽल्पोऽस्मिन् सूपगन्धि भोजनम्। अल्पमस्मिन् भोजने घृतम् घृतगन्धि। क्षीरगन्धि। अल्पपर्यायो गन्धशब्दः ।।

</5-4-136>
उपमानाच्च ।। <5-4-137> ।।
उपमानात्परो यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। उत्पलगन्धिः। करीषगन्धिः ।।

</5-4-137>
पादस्य लोपोऽहस्त्यादिभ्यः ।। <5-4-138> ।।
<K.4.422>
`उपमानात् इत्येव। उपमानाद्धस्त्यादिवर्जितात्परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे। स्थानिद्वारेण लोपस्य समासान्तता विज्ञायते। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्।
अहस्त्यादिभ्य इति किम्? हस्तिपादः। कटोलपादः। हस्तिन्। कटोल। गण्डोल। गण्डोलक। महिला। दासी। गणिका। कुसूल। हस्त्यादिः ।।

</5-4-138>
कुम्भपदीषु च ।। <5-4-139> ।।
कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते, तत्रैवं सूत्रं ज्ञेयम्। पादस्य लोपो भवति कुम्भपद्यादिविषये यथा, कुम्भपद्यादयः <K.4.423> सिद्ध्यन्ति। समुदायपाठस्य च प्रयोजनं विषयनियमः -- स्त्रियामेव, तत्र ङीष्प्रत्यये एव, नान्यदा। कुम्भपदी। शतपदी। यच्चेहोपमानपूर्वम्, संख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनम्। पादोऽन्यतरस्याम् इति विकल्पो न भवति। कुम्भपदी। शतपदी। अष्टापदी। जालपदी। एकपदी। मालापदी। मुनिपदी। गोधापदी। गोपदी। कलशीपदी। घृतपदी। दासीपदी। निष्पदी। आर्द्रपदी। कुणपदी। कृष्णपदी। द्रोणपदी। द्रुपदी। शकृत्पदी। सूपपदी। पञ्चपदी। अर्वपदी। स्तनपदी। कुम्भपद्यादिः ।।

</5-4-139>
संख्यासुपूर्वस्य ।। <5-4-140> ।।
संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः। द्वौ पादावस्य द्विपात्। त्रिपात्। शोभनौ पादावस्य सुपात् ।।

</5-4-140>
<K.4.424>
वयसि दन्तस्य दतृ ।। <5-4-141> ।।
संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दस्तस्य दतृ इत्ययमादेशो भवति समासान्तो वयसि गम्यमाने। ऋकार उगित्कार्यार्थः। द्वौ दन्तावस्य द्विदन्। त्रिदन्। चतुर्दन्। शोभना दन्ता अस्य समस्ता जाताः सुदन् कुमारः।
वयसीति किम्? द्विदन्तः कुञ्जरः। सुदन्तः दक्षिणात्यः ।।

</5-4-141>
छन्दसि च ।। <5-4-142> ।।
छन्दसि च दन्तशब्दस्य `दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। पत्त्रदतमालभेत। `उभयादत(ऋ.10-90-10) आलभते ।।

</5-4-142>
स्त्रियां संज्ञायाम् ।। <5-4-143> ।।
स्त्रियामन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य `दतृ इत्ययमादेशो भवति। अयोदती। फालदती।
संज्ञायामिति किम्? समदन्ती। स्निग्धदन्ती ।

</5-4-143>
विभाषा श्यावारोकाभ्याम् ।। <5-4-144> ।।
श्याव, अरोक - इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययमादेशो <K.4.425> भवति विभाषा समासान्तो बहुव्रीहौ। श्यावदन्, श्यावदन्तः। अरोकदन्, अरोकदन्तः। अरोकः = निर्दीप्तिः।
संज्ञायामित्येव, श्यावदन्तः। अरोकदन्तः।।
</5-4-144>
अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।। <5-4-145> ।।
`विभाषा इत्येव। अग्रान्ताच्छब्दात्, शुद्ध, शुभ्र, वृष, वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा `दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। कुड्मलाग्रदन्, कुड्मलाग्रदन्तः। शुद्धदन्, शुद्धदन्तः। शुभ्रदन्, शुभ्रदन्तः। वृषदन्, वृषदन्तः। वराहदन्, वराहदन्तः। अनुक्तसमुच्चयार्थश्चकारः। अहिदन्, अहिदन्तः। मूषिकदन्, मूषिकदन्तः। गर्दभदन्, गर्दभदन्तः। शिखरदन्, शिखरदन्तः ।।

</5-4-145>
ककुदस्यावस्थायां लोपः ।। <5-4-146> ।।
ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तोऽवस्थायां गम्यमानायाम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयः = अवस्था इत्युच्यते। असञ्जातं ककुदमस्य असञ्जातककुत्। बाल इत्यर्थः। पूर्णककुत्। मध्यमवया इत्यर्थः। उन्नतककुत्। वृद्धवया इत्यर्थः। स्थूलककुत्। बलवानित्यर्थः। यष्टिककुत्। नातिस्थूलो नातिकृश इत्यर्थः।
अवस्थायामिति किम्? श्वेतककुदः ।।

</5-4-146>
<K.4.426>
त्रिककुत्पर्वते ।। <5-4-147> ।।
त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये। त्रीणि ककुदान्यस्य त्रिककुत् पर्वतः। ककुदाकारं पर्वतस्य शृङ्गम् = ककुदमित्युच्यते। न च सर्वस्त्रिशिखरः पर्वतस्त्रिककुत्। किं तर्हि? संज्ञैषा पर्वतविशेषस्य। पर्वत इति किम्? त्रिककुदः अन्यः ।।

</5-4-147>

उद्विभ्यां काकुदस्य ।। <5-4-148> ।।
उत्, वि -- इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे। उद्गतं काकुदमस्य उत्काकुत्। विकाकुत्। तालु = काकुदमुच्यते।।

</5-4-148>
पूर्णाद्विभाषा ।। <5-4-149> ।।
<K.4.427>
पूर्णात्परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे। पूर्णं काकुदमस्य पुर्णकाकुत्, पुर्णकाकुदः ।।

</5-4-149>
सुहृद्दुर्हृदौ मित्रामित्रयोः ।। <5-4-150> ।।
सुहृत्, दुर्हृत् - इति निपात्यते यथासंख्यं मित्रामित्रयोरभिधेययोः। सुशब्दात्परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात्परस्य। शोभनं हृदयमस्य सुहृत् मित्रम्। दुष्टं हृदयमस्य दुर्हृत् अमित्रम्।
मित्रामित्रयोरिति किम्? सुहृदयः कारुणिकः। दुर्हृदयः चोरः ।।

</5-4-150>
उरःप्रभृतिभ्यः कप् ।। <5-4-151> ।।
उरःप्रभृत्यन्ताद्बहुव्रीहेः कप् प्रत्ययो भवति। व्यूढमुरोऽस्य व्युढोरस्कः। प्रियसर्पिष्कः। अवमुक्तोपानत्कः।
पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः इति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि। तत्रेदं प्रयोजनम् -- एकवचनान्तानामेव ग्रहणमिह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूदिति। तत्र शेषाद्विभाषा इति विकल्प एव भवतीति। द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः। उरस्। सर्पिस्। उपानह्। पुमान्। अनड्वान्। नौः। पयः। <K.4.428> लक्ष्मीः। दधि। मधु। शालिः। *अर्थान्नञः *। अनर्थकः । उरःप्रभृति ।।

</5-4-151>
इनः स्त्रियाम् ।। <5-4-152> ।।
इन्नन्ताद्बहुव्रीहेः कप् प्रत्ययो भवति स्त्रियां विषये। बहवो दण्डिनोऽस्यां शालायां बहुदण्डिका शाला। बहुच्छत्रिका। बहुस्वामिका नगरी। बहुवाग्मिका सभा। स्त्रियामिति किम्? बहुदण्डी राजा। बहुदण्डिकः। शेषाद्विभाषा इत्येतद्भवति।

</5-4-152>
नद्यृतश्च ।। <5-4-153> ।।
नद्यन्ताद्बहुव्रीहेर्ऋकारान्ताच्च कप् प्रत्ययो भवति। बह्व्यः कुमार्योऽस्मिन्देशे बहुकुमारिकः देशः। बहुब्रह्मबन्धूकः। ऋतः खल्वपि -- बहुकर्तृकः। तकारः मुखसुखोच्चारणार्थः ।।

</5-4-153>
शेषाद्विभाषा ।। <5-4-154> ।।
<K.4.429>
यस्माद्बहुव्रीहेः समासान्तो न विहितः स शेषः, तस्माद्विभाषा कप्प्रत्ययो भवति। बह्व्यः खट्वा अस्मिन् बहुखट्वकः, बहुमालकः, बहुवीणकः। बहुखट्वाकः, बहुमालाकः, बहुवीणाकः। बहुखट्वः, बहुमालः, बहुवीणः।
कथम् अनृक्कं साम, बह्वृक्कं सूक्तमिति, यावता विहितोऽत्र सामान्येन समासान्तः ऋक्पूः इति? नैतदस्ति; विशेषे स इष्यते -- `अनृचो माणवको ज्ञेयो बह्वृचश्चरणाख्याम् इति। शेषादिति किम्? प्रियपथः। प्रियधुरः ।।

</5-4-154>
<K.4.430>
न संज्ञायाम् ।। <5-4-155> ।।
संज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिद्ध्यते। विश्वे देवा अस्य विश्वदेवः। विश्वयशाः ।।

</5-4-155>
ईयसश्च ।। <5-4-156> ।।
ईयसन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति। सर्वा प्राप्तिः प्रतिषिध्यते। बहवः श्रेयांसोऽस्य बहुश्रेयान्। शेषाद्विभाषा इत्यस्य प्रतिषेधः। ह्रस्वत्वमपि न भवति; `ईयसो बहुव्रीहौ पुंवत् इति वचनात्।

</5-4-156>
<K.4.431>
वन्दिते भ्रातुः ।। <5-4-157> ।।
वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति। वन्दितः = स्तुतः, पूजित इत्युच्यते। शोभनो भ्राताऽस्य सुभ्राता।
वन्दित इति किम्? मूर्खभ्रातृकः। दुष्टभ्रातृकः ।।

</5-4-157>
ऋतश्छन्दसि ।। <5-4-158> ।।
ऋवर्णान्ताद् बहुव्रीहेश्छन्दसि विषये कप् प्रत्ययो न भवति। हता माताऽस्य `हतमाता(अ.वे.2-32-4)। हतपिता। `हतस्वसा(अ.वे.2-67-3)। `सुहोता(ऋ.7-67-3) ।।

</5-4-158>
नाडीतन्त्र्योः स्वाङ्गे ।। <5-4-159> ।।
स्वाङ्गे यौ नाडी - तन्त्रीशब्दौ तदन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति। बह्व्यो नाड्योऽस्य बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। धमनीवचनस्तन्त्रीशब्दः। <K.4.432> स्वाङ्गे इति किम् ? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा ।।

</5-4-159>
निष्प्रवाणिश्च ।। <5-4-160> ।।
`निष्प्रवाणिः इति नदीलक्षणस्य कपः प्रतिषेधो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी। प्रवयन्ति तयेति वा प्रवाणी। करणसाधनोऽयं ल्युट्। तन्तुवायशलाका भण्यते। निर्गता प्रवाणी अस्य

निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः = अपनीतशलाकः समाप्तवानः प्रत्यग्रो नवक उच्यते ।।

इति श्रीवामनविरचितायां काशिकावृत्तौ
पञ्चमाध्यायस्य चतुर्थः पादः
</5-4-160>

# काशिका/षष्ठोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pbt
< काशिका | षष्ठोऽध्यायः

अथ षष्ठाध्याये प्रथमः पादः

एकाचो द्वे प्रथमस्य ।। <6-1-1> ।।
अधिकारोऽयम्। `एकाचः इति च, `द्वे इति च, `प्रथमस्य इति च त्रितयमधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः प्राक्सम्प्रसारणविधानात् तत्र `एकाचः प्रथमस्य द्वे भवतः इत्येवं तद्वेदितव्यम्।
वक्ष्यति-लिटि धातोरनभ्यासस्य(6-1-8/2177) इति। तत्र धातोरवयवस्यानभ्यासस्य प्रथमस्यैकाचौ द्वे भवतः। जजागार। पपाच। इयाय। आर।

`एकाचः इति बहुव्रीहिनिर्देशः। एकोऽच् यस्य सोऽयमेकाच्---इत्यवयवेन विग्रहः। तत्र समुदायः समासार्थः। अभ्यन्तरश्च समुदायेऽवयवो भवतीति साच्कस्यैव द्विर्वचनं भवति। एवं च--पच् इत्यत्र येनैवाचा समुदाय एकाच्, तेनैव तदवयवोऽच्छब्दः पशब्दश्च। तत्र पृथगवयवैकाचो न द्विरुच्यन्ते, किं तर्हि ? समुदायैकाजेव।
तथा हि--सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते। पपाचेत्यत्र प्रथमत्वं व्यपदेशिवद्भावात्। इयाय, आर-इत्यत्रैकाच्त्वमपि व्यपदेशिवद्भावादेव।
द्विःप्रयोगश्च द्विर्वचनमिदम्। आवृत्तिसंख्या हि `द्वे इति विधीयते। तेन स एव शब्दो द्विरुच्यार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते ।।

</6-1-1>
अजादेर्द्वितीयस्य ।। <6-1-2> ।।
प्रथमद्विर्वचनापवादोऽयम्। अजादेर्द्वितीयस्यैकाचो द्विर्वचनमधिक्रियते। अच् आदिर्यस्य धातोस्तदवयवस्य द्वितीयस्यैकाचो द्वे भवतः। अटिटिषति। अशिशिषति। अरिरिषति। अर्त्तेः स्मिपूङ्रञ्ज्वशां सनि(7-2-74/2626) इति इट् क्रियते, तस्मिन् कृते गुणे च रपरत्वे च द्विर्वचनेऽचि(1-2-59/2243) इति स्थानिवद्भावः प्राप्नोति। तत्र प्रतिविधानम्--द्विर्वचननिमित्तेऽचीत्युच्यते। न चात्र द्विर्वचननिमित्तमिट्, किं तर्हि? कार्यी। न च कार्यी निमित्तत्वेनाश्रीयते। तथा हि--क्ङिन्निमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयितेत्यत्र न भवति, न हि कार्यिणः शीङो गुणं प्रति निमित्तभाव इति।
अत्र केचिदजादेरिति कर्मधारयात्पञ्चमीमिच्छन्ति---अच्चासावादिश्चेत्यजादिः, तस्मादजादेरुत्तरस्यैकाचो द्वे भवत इति। तेषाम् `द्वितीयस्य इति विस्पष्टार्थं द्रष्टव्यम् ।।

</6-1-2>
न न्द्राः संयोगादयः ।। <6-1-3> ।।
`द्वितीयस्य इत् वर्त्तते। द्वितीयस्यैकाचोऽवयवभूतानां न्द्राणां तदन्तर्भावात् प्राप्तं द्विर्वचनं प्रतिषिध्यते। नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते। उन्दिदिषति। अड्डिडिषति। अर्चिचिषति।
न्द्रा इति किम्? ईचिक्षिषते। संयोगादय इति किम्? प्राणिणिषति। अनितेः(8-4-19/2478) उभौ साभ्यासस्य(8-4-21/2606) इति णत्वम्। अजादेरित्येव--दिद्रासति।
केचिदजादेरित्यपि पञ्चम्यन्तं कर्मधारयमनुवर्तयन्ति। तस्य प्रयोजनम्--इन्दिद्रीयिषतीति। अजादेरनन्तरत्वाभावाद् दकारो द्विरुच्यत एव, नकारो न द्विरुच्यते। इन्द्रमिच्छति, क्यच्, तदन्तात् इन्द्रीयितुमिच्छतीति सन् ।।
* बकारस्याप्ययं प्रतिषेधो वक्तव्यः *। उब्जिजिषति। यदा बकारोपध उब्जिरुपदिश्यते तदायं प्रतिषेधः। दकारोपधोपदेशे तु न वक्तव्यः। बत्वं तु तदा दकारस्य विधातव्यम् ।
* यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम् *। अरार्यते। अर्तेः
`अट्यर्तिशूर्णोतीनामुपसंख्यानम्(7-4-82/2630. वा.) इति यङ्। तत्र यङि च(7-4-30/2633) इति गुणः, ततो द्विर्वचनम्।
* ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् *(म.भा.3-8)। कस्य तृतीयस्य ? केचिदाहुर्व्यञ्जनस्येति--ईर्ष्यियिषति। अपरे पुनः `तृतीयस्यैकाचः इति व्याचक्षते--ईर्ष्यिषिषति।
* कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम् *(म.भा.3-8)। कण्डूयियिषति। असूयियिषति ।।
* वा नामधातूनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम् *(म.भा.3-8)। अश्वीयियिषति। अशिश्वीयिषति।
अपर आह---
* यथेष्टं नामधातुष्विति वक्तव्यम् *(म.भा.3-8)। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुपुतित्रीयियिषति। पुत्रीयिषिषति ।।

</6-1-3>
पूर्वोऽभ्यासः ।। <6-1-4> ।।
`द्वे इति प्रथमान्तं यदनुवर्त्तते तदर्थादिह षष्ठ्यन्तं जायते। तत्र प्रत्यासत्तेरस्मिन्प्रकरणे ये द्वे विहिते तयोर्यः पूर्वोऽवयवः सोऽभ्याससंज्ञो भवति। पपाच। पिपक्षति। पापच्यते। जुहोति। अपीपचत्।
अभ्यासप्रदेशास्तु--अत्र लोपोऽभ्यासस्य(7-4-58/2620) इत्येवमादयः ।।

</6-1-4>
उभे अभ्यस्तम् ।। <6-1-5> ।।
`द्वे इति वर्त्तमाने `उभे ग्रहणं समुदायसंज्ञाप्रतिपत्त्यर्थम्। ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तसंज्ञे भवतः। ददति। ददत्। दधतु।
उभेग्रहणं किम् ? नेनिजतीत्यत्र अभ्यस्तानामादिः(6-1-189/3673) इति समुदाये उदात्तत्वं यथा स्यात्, प्रत्येकं पर्यायेण वा मा भूदिति।
अभ्यस्तप्रदेशाः--अभ्यस्तानामादिः(6-1-189/3673) इत्येवमादयः ।।

</6-1-5>
?Bजक्षित्यादयः षट् ।। <6-1-6> ।।
`अभ्यस्तम् इति वर्त्तते। `जक्ष इत्ययं धातुरित्यादयश्चान्ये षट् धातवोऽभ्यस्तसंज्ञा भवन्ति। सेयं सप्तानां धातूनामभ्यस्तसंज्ञा विधीयते। `जक्ष भक्षहसनयोः(धा.पा.1072) इत्यतः प्रभृति `वेवीङ् वेतिना तुल्ये(धा.पा.1078) इति यावत्। जक्षति। जाग्रति। दरिद्रति। चकासति। शासति। दीध्यते, वेव्यते---इत्यत्र अभ्यस्तानामादिः(6-1-189/3673) इत्येष स्वरः प्रयोजनम्। दीध्यदिति च शतरि व्यत्ययेन सम्पादिते नाभ्यस्ताच्छतुः(7-1-78/427) इति नुमः प्रतिषेधः ।।

</6-1-6>
तुजादीनां दीर्घोऽभ्यासस्य ।। <6-1-7> ।।
तुजादीनामिति प्रकारे आदिशब्दः। कश्च प्रकारः ? तुजेर्दीर्घोऽभ्यासस्य न विहितः, दृश्यते च, ये तथाभूतास्ते तुजादयः, तेषामभ्यासस्य दीर्घः साधुर्भवति। `तूतुजानः(ऋ.1-3-6)। `मामहानः(तै.सं.4-6-3-2)। `अनड्वान् दाधार(अ.वे.4-11-1)। `स्वधां मीमाय(अ.वे.5-11-3)। दाधार। `स तूताव(ऋ.1-94-2)।
दीर्घश्चैषां छन्दसि प्रत्ययविशेषे एव दृश्यते, ततोऽन्यत्र न भवति--तुतोज शबलान् ।।

</6-1-7>
लिटि धातोरनभ्यासस्य ।। <6-1-8> ।।
लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पपाच। पपाठ। प्रोर्णुनाव। `वाच्य ऊर्णोर्णुवद्भावः इति वचनाद् ऊर्णोतेः इजादेः(3-3-39/2337) इत्याम्न भवति।
लिटीति किम्? कर्त्ता। हर्त्ता। धातोरिति किम् ? `ससृवांसो विशृण्विरे(ऋ.4-8-6)। `सोममिन्द्राय सुन्विरे(ऋ.7-32-4)। अनभ्यासस्येति किम् ? `कृष्णो नोनाव वृषभो यदीदम्(ऋ.1-79-2)। नोनूयतेर्नोनाव। `सम्मान्या मरुतः सम्मिमिक्षुः(ऋ.1-165-1)। लिटि उसन्तः।

- द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् *। `यो जागार तमृचः कामयन्ते(ऋ.5-44-14)। `दाति प्रियाणीति(ऋ.4-8-3) ।।

</6-1-8>
सन्यङोः ।। <6-1-9> ।।
`धातोरनभ्यासस्य इति वर्त्तते। `सन्यङोः इति च षष्ठ्यन्तमेतत्। सनन्तस्य यङ्न्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पिपक्षति। पिपतिषति। अरिरिषति। उन्दिदिषति।
यङन्तस्य--पापच्यते। अटाट्यते। यायज्यते। अरार्यते। प्रोर्णोनूयते।
अनभ्यासस्येत्येव--जुगुप्सिषते। लोलूयिषते ।।

</6-1-9>
श्लौ ।। <6-1-10> ।।
श्लौ परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। जुहोति। बिभेति। जिह्रेति ।।

</6-1-10>
चङि ।। <6-1-11> ।।
चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्।

पचादीनां ण्यन्तानां चङि कृते णिलोपः, उपधाह्रस्वत्वं, द्विर्वचनम् इत्येषां कार्याणां प्रवृत्तिक्रमः। तथा च-सन्वल्लघुनि चङ्परे(7-4-93/2316) इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यते। यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवति। न चास्मिन् कार्याणां क्रमेणानादिष्टादचः पूर्वोऽभ्यासो भवतीति।
आटिटदिति द्विर्वचनेऽचि(1-1-59/2243) इति स्थानिवद्भावाद् द्वितीयस्यैकाचो द्विर्वचनं भवति ।।

</6-1-11>
दाश्वान् साह्वान् मीढ्वांश्च ।। <6-1-12> ।।
दाश्वान्, साह्वान्, मीढ्वान्--इत्येते शब्दाश्छन्दसि भाषायां चाविशेषेण निपात्यन्ते। दाश्वानिति `दाशृ दाने(धा.पा.883) इत्येतस्य धातोः क्वसावद्विर्वचनमनिट्त्वं च निपात्येते। `दाश्वांसो दाशुषः सुतम्(ऋ.1-3-5) इति।
साह्वानिति `षह मर्षणे(धा.पा.853)--इत्येतस्य परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनम्, अनिट्त्वं च निपातनात्। साह्वान्बलाहकः।
मीढवानिति `मिह सेचने(धा.पा.993) इत्येतस्याद्वित्वम्, अनिट्त्वम्, उपधादीर्घत्वं ढत्वं च निपातनात्। `मीढ्वस्तोकाय तनयाय मृडय(ऋ.2-33-14)। एकवचनमतन्त्रम्।

- कृञादीनां के द्वे भवत इति वक्तव्यम् *(म.भा.3-17)। क्रियतेऽनेनेति चक्रम्। चिक्लिदम्। कृञः क्लिदेश्च `घञर्थेकविदानम्(वा.306) इति कप्रत्ययः।
- चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य *(म.भा.3-17)। चरादीनां धातूनामपि प्रत्यये परतो द्वे भवतः। अभ्यासस्यागागमो भवति, आगागमविधानसामर्थ्याच्च हलादिशेषो न भवति। हलादिशेषे हि सत्यागमस्यादेशस्य च विशेषो नास्ति। चराचरः। चलाचलः। पतापतः। वदावदः।
- वेति वक्तव्यम् *। तेन चरः पुरुषः, चलो रथः, पतं यानम्, वदो मनुष्यः---इत्येवमाद्यपि सिद्धं भवति।
- हन्तेर्घत्वं च *(म.भा.3-17)। हन्तेरचि प्रत्यये परतो द्वे भवतोऽभ्यासस्य च हकारस्य च घत्वमाक् चागमो भवति। परस्य अभ्यासाच्च(7-3-55/2430) इति कुत्वम्। `घनाघनः क्षोभणश्चर्षणीनाम्(ऋ.10-103-1)।
- पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य *(म.भा.4-17)। पाटेरचि परतो द्वे भवतः, णिलुक्च भवति। अभ्यासस्य चोगागमो दीर्घश्च भवति। पाटूपटः ।।

</6-1-12>
<K.4.464>
ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ।। <6-1-13> ।।
पुत्र, पति - इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः सम्प्रसारणं भवति। यणः स्थाने इग्भवतीत्यर्थः। कारीषगन्धीपुत्रः, कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः, कौमुदगन्धीपतिः। करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्येति बहुव्रीहिः, तत्र उपमानाच्च इति गन्धस्येदन्तादेशः, करीषगन्धेरपत्यमित्यण्, तदन्तात्स्त्रियाम् अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे इति ष्यङ्, ततश्चापि विहिते षष्ठीसमासः, सम्प्रसारणस्य इति दीर्घत्वम्। ष्यङ इति किम्? इभ्यापुत्रः। क्षत्रियापुत्रः। पुत्रपत्योरिति किम् ? कारीषगन्ध्याकुलम्। कौमुदगन्ध्याकुलम्। तत्पुरुष इति किम् ? कारीषगन्ध्यापतिरस्य ग्रामस्य कारीषगन्ध्यापतिः अयं ग्रामः।
<K.4.465> ष्यङ इति स्त्रीप्रत्ययग्रहणम्, `न स्त्रीप्रत्यये चानुपसर्जने इति <K.4.466> प्रत्ययग्रहणपरिभाषया `यस्मात् स विहितस्तदादेः इत्येष नियमो नास्ति; तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, परमकारीषगन्धीपतिः इत्यपि भवति।
उपसर्जने तु ष्यङि न भवति - अतिक्रान्ता कारीषगन्ध्याम् अतिकारीषगन्ध्या, तस्य पुत्रः अतिकारीषगन्ध्यापुत्रः, अतिकारीषगन्ध्यापतिः।
पुत्रपत्योः केवलयोरुत्तरपदयोरिदं सम्प्रसारणम्, तदादौ तदन्ते च न भवति -- कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापरमपुत्रः इति।
<K.4.467> ष्यङन्ते च यद्यप्यन्ये यणः सन्ति; तथापि ष्यङ एव सम्प्रसारणम्, `निर्दिश्यमानस्यादेशा भवन्ति इति।
सम्प्रसारणमिति चाधिक्रियते विभाषा परेः इति यावत् ।।

</6-1-13>
<K.4.468>
बन्धुनि बहुव्रीहौ ।। <6-1-14> ।।
`ष्यङः सम्प्रसारणम् इत्यनुवर्तते। बन्धुशब्द उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणं भवति। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बहुव्रीहाविति किम् ? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। अत्रापि पूर्ववदेव। परमकारीषगन्धीबन्धुः इत्यत्र भवति। अतिकारीषगन्ध्याबन्धुः इति च न भवति, तथा कारीषगन्ध्याबन्धुधनः, कारीषगन्ध्यापरमबन्धुः इत्यादौ न।
बन्धुनीति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुंल्लिङ्गाभिधेयोऽयं बन्धुशब्दः।

- मातच्मातृकमातृषु *। ष्यङः सम्प्रसारणं भवति विभाषया बहुव्रीहावेव। कारीषगन्ध्या माताऽस्य - इत्येवं बहुव्रीहौ

कृते एतस्मादेवोपसंख्यानात्। पक्षे मातृशब्दस्य मातजादेशः, तत्र चित्करणसामर्थ्याद्बहुव्रीहिस्वरमन्तोदात्तत्वं बाधते। <K.4.469> मातृ मातृकशब्दयोश्च भेदेनोपादानाद् नद्यृतश्च इति कबपि विकल्प्यते -- कारीषगन्धीमातः, कारीषगन्ध्यामातः; कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः; कारीषगन्धीमाता, कारीषगन्ध्यामाता ।।

</6-1-14>

वचिस्वपियजादीनां किति ।। <6-1-15> ।।

`सम्प्रसारणम् इति वर्त्तते। `ष्यङः इति निवृत्तम्। वचि--`वच परिभाषणे(धा.पा.1064), ब्रुवो वचिः(2-4-53/2453) इति च। स्वपि-`ञिष्वप् शये(धा.पा.1069)। यजादयः--`यज देवपूजासङ्गतिकरणदानेषु(धा.पा.1003) इत्यतः प्रभृति आगणान्ताः(धा.पा.1011), तेषां वचिस्वपियजीदीनां किति प्रत्यये परतः सम्प्रसारणं भवति। वचि--उक्तः, उक्तवान्। स्वपि--सुप्तः, सुप्तवान्। यज-इष्टः, इष्टवान्। वप्-उप्तः, उप्तवान्। वह-ऊढः, ऊढवान्। वस-उषितः, उषितवान्। वेञ्-उतः, उतवान्। व्येञ्-संवीतः, संवीतवान्। ह्वेञ्--आहूतः, आहूतवान्। वद-उदितः, उदितवान्। टुओश्वि-शूनः, शूनवान्।

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते। तेनेह न भवति-वाच्यति, वाचिक इति।।

</6-1-15>

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।। <6-1-16> ।।

`ग्रह उपादाने(धा.पा.1534), `ज्या वयोहानौ(धा.पा.1500), `वेञो वयिः(2-4-41/2411), `व्यध ताडने(धा.पा.1182), `वश कान्तौ(धा.पा.1081), `व्यच व्याजीकरणे(धा.पा.1294), `ओव्रश्चू छेदने(धा.पा.1293), `प्रच्छ ज्ञीप्सायाम्(धा.पा.1414), `भ्रस्ज पाके(धा.पा.1285)--इत्येतेषां धातूनां ङिति प्रत्यये परतश्चकारात् किति च सम्प्रसारणं भवति। ग्रह-गृहीतः। गृहीतवान्। ङिति-गृह्णाति, जरीगृह्यते। ज्या-जीनः, जीनवान्। ल्वादिभ्यः(8-2-44/3018) इति निष्ठानत्वम्। ङिति-जिनाति, जेजीयते। हलः(6-4-2/2559) इति सम्प्रसारणदीर्घे कृते प्वादीनाम्(7-3-80/2558) इति ह्रस्वः क्रियते।

वयिः--लिटि परतो वेञो वयिरादेशः(2-4-41/2411), तस्य ङिदभावात् किदेवोदाह्रियते-ऊयतुः, ऊयुः। यद्येवम्, वयिग्रहणमनर्थकम्, यजादिषु वेञ् पठ्यते ? नैवं शक्यम्; लिटि तस्य वेञः(6-1-40/2415) इति प्रतिषेधो वक्ष्यते, तत्र यथैव स्थानिवद्भावाद्वयेर्विधिः, एवं प्रतिषेधोऽपि प्राप्नोति ? नैष दोषः; लिटि वयो यः(6-1-38/2413) इति यकारस्य सम्प्रसारणप्रतिषेधाद् वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहणमनुमास्यते ? सत्यमेतत्; एष एवार्थः साक्षान्निर्देशेन वयेः स्पष्टीक्रियते।

व्यध--विद्धः, विद्धवान्। ङिति-विध्यति, वेविध्यते। वश-उशितः, उशितवान्। ङिति-उष्टः, उशन्ति।

व्यच-विचितः। विचितवान्। ङिति-विचति, वेविच्यते। `व्यचेः कुटादित्वमनसि(वा.18) प्रतिपादितम्, तेन सर्वत्राञ्णिति प्रत्यये सम्प्रसारणं भवति--उद्विचिता, उद्विचितुम्, उद्विचितव्यमिति।

व्रश्चेः--वृक्णः, वृक्णवान्। अथ कथमत्र कुत्वम्, व्रश्चभ्रस्ज(8-2-36/294) इति हि षत्वेन भवितव्यम् ? * निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः *। तत्र षत्वं प्रति नत्वस्य सिद्धत्वाद् झलादिर्निष्ठा न भवति। कुत्वे तु कर्त्तव्ये तदसिद्धमेवेति प्रवर्तते कुत्वम्। ङिति--वृश्चति, वरीवृश्च्यते।

प्रच्छ--पृष्टः, पृष्टवान्। ङिति--पृच्छति, परीपृच्छ्यते, प्रश्नः। नङि तु प्रश्ने चासन्नकाले(3-2-117/2777) इति निपातनादसम्प्रसारणम्।

भ्रस्ज--भृष्टः, भृष्टवान्। ङिति--भृज्जति, बरीभृज्जयते। सकारस्य झलां जश् झशि(8-4-53/52) इति जश्त्वेन दकारः, स्तोः श्चुना श्चुः(8-4-40/121) इति श्चुत्वेन जकारः ।।

</6-1-16>

लिट्यभ्यासस्योभयेषाम् ।। <6-1-17> ।।

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति। वचि-उवाच, उवचिथ। स्वप्--सुष्वाप, सुष्वपिथ। यज-इयाज, इयजिथ। टुवप्-उवाप, उवपिथ।

ग्रह्यादीनाम्-तत्र ग्रहेरविशेषः। जग्राह, जग्रहिथ। ज्या-जिज्यौ, जिज्यिथ। वयि-उवाय, उवयिथ। व्यध-विव्याध, विव्यधिथ। वश-उवाश, उवशिथ। व्यच-विव्याच, विव्यचिथ।

वृश्चतेः सत्यसति वा योगे नास्ति विशेषः। योगारम्भे तु सति यदि सम्प्रसारणमकृत्वा हलादिःशेषेण(7-4-60/2179) रेफो निवर्त्यते, तदा वकारस्य सम्प्रसारणं प्राप्नोति। अथ रेफस्य सम्प्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानीमुरदत्वस्य स्थानिवद्भावात् न सम्प्रसारणे सम्प्रसारणम्(6-1-37/363) इति प्रतिपेधो भवतीत्यस्ति विशेषः। वव्रश्च, वव्रश्चिथ।

पृच्छतिभृज्जत्योरविशेषः। अकिदर्थं चेदमभ्यासस्य सम्प्रसारणं विधीयते। किति हि परत्वाद्धातोः सम्प्रसारणे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम्--ऊचतुः, ऊचुरिति।

अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति वचनम् हलादिःशेषम्(7-4-60/2179) अपि बाधित्वा सम्प्रसारणमेव यथा स्यादिति-विव्याध ।।

</6-1-17>
स्वापेश्चङि ।। <6-1-18> ।।
स्वापेरिति स्वपेर्ण्यन्तस्य ग्रहणम्, तस्य चङि परतः सम्प्रसारणं भवति। असूषुपत्, असूषूपताम्,असूषुपन्। द्विर्वचनात्पूर्वमत्र सम्प्रसारणम्, तत्र कृते लघूपधगुणः, तस्य णौ चङ्युपधायाः(7-4-1/2314) ह्रस्वत्वम्, ततो द्विर्वचनम्, दीर्घो लघोः(7-4-94/2318) इति दीर्घत्वम्।
चङीति किम्? स्वाप्यते। स्वापितः।
`कितीति निवृत्तम्, ङितीति केवलमिहानुवर्त्तते-- इत्येतद्दुर्विज्ञानम् ।।

</6-1-18>
स्वपिस्यमिव्येञां यङि ।। <6-1-19> ।।
`ञिष्वप् शये(धा.पा.1069), `स्यमु स्वन् ध्वन शब्दे(धा.पा.827/828/829), `व्येञ् संवरणे(धा.पा.1008)--इत्येतेषां धातूनां यङि परतः सम्प्रसारणं भवति। सोषुप्यते। सेसिम्यते। वेवीयते।
यङीति किम्? स्वप्नक् ।।

</6-1-19>
न वशः ।। <6-1-20> ।।
`यङि इति वर्त्तते। वशेर्द्धातोर्यङि परतः सम्प्रसारणं न भवति। वावश्यते, वावश्येते, वावश्यन्ते।
यङीति किम्? उष्टः। उशन्ति ।।

</6-1-20>
चायः की ।। <6-1-21> ।।
`यङि इति वर्त्तते। `चायृ पूजानिशामनयोः(धा.पा.881) इत्येतस्य धातोर्यङि परतः कीत्ययमादेशो भवति। चेकीयते, चेकीयेते, चेकीयन्ते।
दीर्घोच्चारणं यङ्लुगर्थम्। चेकीतः।।

</6-1-21>
स्फायः स्फी निष्ठायाम् ।। <6-1-22> ।।
`स्फायी ओप्यायी वृद्धौ(धा.पा.487/488)--इत्यस्य धातोर्निष्ठायां परतः `स्फी इत्ययमादेशो भवति। स्फीतः। स्फीतवान्।
निष्ठायामिति किम्? स्फातिः। स्फातीभवतीत्येतदपि क्तिन्नन्तस्यैव रूपम्, न निष्ठान्तस्य।
`निष्ठायाम् इत्येतदधिक्रियते लिड्यङोश्च(6-1-29/2327) इति प्रागेतस्मात् सूत्रात् ।।

</6-1-22>
स्त्यः प्रपूर्वस्य ।। <6-1-23> ।।
`निष्ठायाम् इति वर्त्तते, `सम्प्रसारणम् इति च। `स्फी इत्येतन्न स्वर्यते। `स्त्यै ष्ट्यै शब्दसङ्घातयोः(धा.पा.911/912)--द्वयोरप्येतयोर्द्धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणम्। `स्त्या इत्येतस्य प्रपूर्वस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति। प्रस्तीतः। प्रस्तीतवान्। सम्प्रसारणे कृते यण्वत्त्वं विहतमिति निष्ठानत्वं न भवति। प्रस्त्योऽन्यतरस्याम्(8-2-54/3034) इति तु पक्षे मकारः क्रियते--प्रस्तीमः, प्रस्तीमवान्।

प्रपूर्वस्येति किम्? संस्त्यानः, संस्त्यानवान्।
`प्रस्त्यः इत्येव सिद्धे पूर्वग्रहणमिहापि यथा स्यात्-प्रसंस्तीतः, प्रसंस्तीतवान्।
तत्कथं प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिः? प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वस्तदवयवस्य स्त्यः--इति व्यधिकरणे षष्ठ्यौ। तत्र प्रसंस्तीत इत्यत्रापि प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति ।।

</6-1-23>
द्रवमूर्त्तिस्पर्शयोः श्यः ।। <6-1-24> ।।
द्रवमूर्तौ=द्रवकाठिन्ये, स्पर्शे वर्त्तमानस्य `श्यैङ् गतौ(धा.पा.964) इत्यस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति। शीनं घृतम्। शीना वसा। शीनं मेदः। द्रवावस्थायाः काठिन्यं गतमित्यर्थः। श्योऽस्पर्शे(8-2-47/3021) इति निष्ठानत्वम्।
स्पर्शे च---शीतं वर्त्तते। शीतो वायुः। शीतमुदकम्। गुणमात्रे तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या।
द्रवमूर्त्तिस्पर्शयोरिति किम्? संश्यानो वृश्चिकः ।।

</6-1-24>
प्रतेश्च ।। <6-1-25> ।।

`श्यः इति वर्त्तते। प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसारणं भवति। प्रतिशीनः, प्रतिशीनवान्।
द्रवमूर्त्तिस्पर्शाभ्यामन्यत्रापि यथा स्यादिति सूत्रारम्भः ।।

</6-1-25>
विभाषाऽभ्यवपूर्वस्य ।। <6-1-26> ।।
`श्यः इति वर्त्तते। अभि, अव-इत्येवम्पूर्वस्य श्यायतेर्निष्ठायां विभाषा सम्प्रसारणं भवति। अभिशीनम्, अभिश्यानम्। अवशीनम्, अवश्यानम्। द्रवमूर्त्तिस्पर्शविवक्षायामपि विकल्पो भवति। अभिशीनं घृतम्, अभिश्यानं घृतम्। अवशीनं मेदः, अवश्यानं मेदः। अभिशीतो वायुः, अभिश्यानः। अवशीतमुदकम्, अवश्यानमुदकम्।
सेयमुभयत्रविभाषा द्रष्टव्या। पूर्वग्रहणस्य च प्रयोजनम्--समभिश्यानम्, समवश्यानमित्यत्र मा भूदिति केचिद् व्याचक्षते। न किलायमभ्यवपूर्वः समुदाय इति। योऽत्राभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्मान्न भवति! तस्मादत्र भवितव्यमेव। यदि तु नेष्यते, ततो यत्नान्तरमास्थेयमस्माद्विभाषाविज्ञानात्--व्यवस्थेयम्। पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यम्।

</6-1-26>
शृतं पाके ।। <6-1-27> ।।
`विभाषा इत्यनुवर्त्तते। `श्रा पाके(धा.पा.811)----इत्येतस्य धातोर्ण्यन्तस्याण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभषा। शृतं क्षीरम्। शृतं हविः।
व्यवस्थितविभाषा चेयम्, तेन क्षीरहविषोर्नित्यं शृभावो भवति। अन्यत्र न भवति--श्राणा यवागूः, श्रपिता यवागूरिति।
यदापि बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते, तदापि नेष्यते,श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति।
श्रातिरयमकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्त्तते, स ण्यन्तोऽपि प्राकृतं पच्यर्थमाह। तदत्र द्वयोरपि शृतमितीष्यते-शृतं क्षीरं स्वयमेव, शृतं क्षीरं देवदत्तेन।
पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव ।।

</6-1-27>
प्यायः पी ।। <6-1-28> ।।
`विभाषा इत्येव। `ओप्यायी वृद्धौ(धा.पा.488)--इत्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः।
इयमपि व्यवस्थितविभाषैव, तेनानुपसर्गस्य नित्यं भवति। सोपसर्गस्य तु नैव भवति। आप्यानश्चन्द्रमाः।
आङ्पूर्वस्यान्धूधसोर्भवत्येव--आपीनोऽन्धुः। आपीनमूध इति ।।

</6-1-28>
लिड्यङोश्च ।। <6-1-29> ।।
`विभाषा इति निवृत्तम्। `प्यायः पी इत्येतच्चशब्देनानुकृष्यते। लिटि यङि च परतः प्यायः `पी इत्ययमादेशो भवति। आपिप्ये। आपिप्यिरे। परत्वात् पीभावे कृते पुनःप्रसङ्गविज्ञानाद् द्विर्वचनम्, एरनेकाचः(6-4-82/272) इति यणादेशः।
यङि--आपेपीयते। आपेपीयेते। आपेपीयन्ते ।।

</6-1-29>
विभाषा श्वेः ।। <6-1-30> ।।
`लिड्यङोः इति वर्त्तते, `सम्प्रसारणम् इति च। लिटि यङि च श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति। शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। यङि--शोशूयते, शेश्वीयते। तदत्र यङि सम्प्रसारणमप्राप्तं विभाषा विधीयते। लिटि तु किति यजादित्वाद् नित्यं प्राप्तम्, तत्र सर्वत्र विकल्पो भवतीत्येषोभयत्र विभाषा।
यदा च धातोर्न भवति, तदा लिट्यभ्यासस्योभयेषाम्(6-1-17/2408) इत्यभ्यासस्यापि न भवति ।।

</6-1-30>
णौ च संश्चङोः ।। <6-1-31> ।।
विभाषा श्वेः (6-1-30/2420)इति वर्त्तते। सन्परे चङ्परे च णौ परतः श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति। सुशावयिषति। चङि-- अशूशवत्, अशिश्वयत्। `सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवति(सी.दे.प.59) इति वचनादन्तरङ्गमपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते। कृते तु सम्प्रसारणे वृद्धिः, आवादेशश्च। ततः ओः पुयण्ज्यपरे(7-4-80/2577) इत्येतद्वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्य, इति स्थानिवद्भावात् शुशब्दो द्विरुच्यते ।।

</6-1-31>

ह्वः सम्प्रसारणम् ।। <6-1-32> ।।
णौ च संश्चङोः(6-1-31/2579) इति वर्त्तते। सन्परे चङ्परे च णौ परतो ह्वः सम्प्रसारणं भवति। जुहावयिषति, जुहावयिषतः, जुहावयिषन्ति। अजूहवत्, अजूहवताम्, अजूहवन्। सम्प्रसारणस्य बलीयस्त्वात् शाच्छासाह्वाव्यावेपां युक्(7-3-37/2585) इति प्रागेव युग्न भवति।
`सम्प्रसारणम् इति वर्त्तमाने पुनः सम्प्रसारणमित्युक्तं विभाषेत्यस्य निवृत्त्यर्थम्।
`ह्वः सम्प्रसारणमभ्यस्तस्य इत्येकयोगेन सिद्धे पृथग्योगकरणमनभ्यस्तनिमित्तप्रत्ययेन व्यवधाने सम्प्रसारणाभावज्ञापनार्थम्। ह्वायकमिच्छति ह्वायकीयति। ह्वायकीयतेः सन्- जिह्वायकीयिषति ।।

</6-1-32>
अभ्यस्तस्य च ।। <6-1-33> ।।
`ह्वः इति वर्त्तते, तद् `अभ्यस्तस्य इत्यनेन व्यधिकरणम्--अभ्यस्तस्य यो ह्वयतिः। कश्चाभ्यस्तस्य ह्वयतिः ? कारणम्। तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात्सम्प्रसारणं भवति। जुहाव। जुहूयते। जुहूषति ।।

</6-1-33>
बहुलं छन्दसि ।। <6-1-34> ।।
`ह्वः इति वर्त्तते। छन्दसि विषये ह्वयतेर्धातोर्बहुलं सम्प्रसारणं भवति। `इन्द्राग्नी हुवे(ऋ.5-46-3)। देवीं सरस्वतीं हुवे। ह्वेञो लट्यात्मनेपदोत्तमैकवचने `बहुलं छन्दसि इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च।
न च भवति--ह्वयामि मरुतः शिवान्। `ह्वयामि विश्वान्देवान्(ऋ.7-34-8) ।।

</6-1-34>
चायः की ।। <6-1-35> ।।
`बहुलं छन्दसि इति वर्त्तते। चायतेर्धातोस्छन्दसि विषये बहुलं कीत्ययमादेशो भवति। `विधूना निचिक्युः। नान्यं चिक्युर्न निचिक्युरन्यम्(ऋ.1-164-38)। लिटि उसि रूपम्।
न भवति-`अग्निर्ज्योतिर्निचायः(वा.सं.11-1) ।।

</6-1-35>
आपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः ।। <6-1-36> ।।
`छन्दसि इति वर्त्तते। अपस्पृधेथामिति--`स्पर्ध सङ्घर्षे(धा.पा.3) इत्यस्य लङि आथामि द्विर्वचनं रेफस्य सम्प्रसारणमकारलोपश्च निपातनात्। `इन्द्रश्च विष्णो यदपस्पृधेथाम्(ऋ.6-69-8)। अस्पर्धेथामिति भाषायाम्। अपर आह--स्पर्धेरपपूर्वस्य लङ्याथामि सम्प्रसारणमकारलोपश्च निपातनात्। बहुलं छन्दस्यमाङ्योगेऽपि(6-4-75/3546) इत्यडागमाभावः। अत्र प्रत्युदाहरणमपास्पर्द्धेथामिति भाषायाम्।
आनृचुः, आनृहुरिति। `अर्च पूजायाम्(धा.पा.204), `अर्ह पूजायाम्(धा.पा.740) इत्यनयोर्धात्वोर्लिट्युसि सम्प्रसारणमकारलोपश्च निपातनात्। ततो द्विर्वचनम्, उरदत्वम्, `अत आदेः(7-4-70/2248) इति दीर्घत्वम्। तस्मान्नुड् द्विहलः(7-4-71/2288) इति नुडागमः। `य उग्रा अर्कमानृचुः(ऋ.1-19-4)। `न वसून्यानृहुः(अ.वे.2-35-1)। आनर्चुः, आनर्हुरिति भाषायाम्।
चिच्युषे। `च्युङ् गतौ(धा.पा.956) इत्यस्य धातोर्लिटि सेशब्देऽभ्यासस्य सम्प्रसारणमनिट् च निपातनात्। `चिच्युषे(ऋ.4-30-22)। चुच्युविषे इति भाषायाम् ।।
तित्याज। `त्यज हानौ(धा.पा.987)--इत्यस्य धातोर्लिट्यभ्यासस्य सम्प्रसारणं निपात्यते। `तित्याज(ऋ.10-71-6)। तत्याजेति भाषायाम्।
श्राता इति। `श्रीञ् पाके(धा.पा.1476) इत्येतस्य धातोर्निष्ठायां श्राभावः। `श्रातास्त इन्द्रसोमाः(मै.1-9-1)।
श्रितमिति। तस्यैव श्रीणातेर्ह्रस्वत्वम्। `सोमो गौरी अधिश्रितः(ऋ.9-12-3)। श्रिता नो गृहाः। अनयोः श्राभावश्रिभावयोर्विषयविभागमिच्छन्ति। सोमेषु बहुषु श्राभाव एव। अन्यत्र श्रिभाव इति। सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते। `यदि श्रातो जुहोतन(ऋ.10-179-1)। तस्य श्राता इति बहुवचनस्याविवक्षितत्वादुपसंग्रहो द्रष्टव्यः।
आशीः,आशीर्त इति। तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, निष्ठायाश्च नत्वाभावो निपातनात्। तामाशीरा दुहन्ति। आशीर्त ऊर्जम्। `क्षीरैर्मध्यत आशीर्तः(ऋ.8-2-9) ।।

</6-1-36>
न सम्प्रसारणे सम्प्रसारणम् ।। <6-1-37> ।।
सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न भवति। व्यधः। विद्धः। व्यच-विचितः। व्येञ्-संवीतः।
एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात्प्रथमं परस्य यणः क्रियते। पूर्वस्य च प्रसक्तं प्रतिषिध्यते।
सम्प्रसारणमिति वर्त्तमाने पुनः सम्प्रसारणग्रहणं विदेशस्थस्यापि सम्प्रसारणस्य प्रतिषेधो यथा स्यादिति, श्वयुवमघोनामतद्धिते(6-4-

133/362)---यूनः, यूना।
सम्प्रासारणग्रहणसामर्थ्यादेव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद्भवति। सति वा स्थानिवत्वे व्यवधानमेतावदाश्रयिष्यते ।।

- ऋचि त्रेरुत्तरपदादिलोपस्छन्दसि *(म.भा.3-33)। ऋचि परतस्त्रेः सम्प्रसारणं भवति, उत्तरपदादिलोपश्च छन्दसि विषये। तिस्र ऋचो यस्मिन् तत् तृचं सूक्तम्, तृचं साम। ऋक्पूरब्धूःपथामानक्षे(5-4-74/940) इति समासान्तः। छन्दसीति किम्? त्यृचं कर्म ।।
- रयेर्मतौ बहुलम् *(म.भा.3-33)। रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं सम्प्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति--`रयिमान्पुष्टिवर्धनः(वा.सं.3-40) ।।

</6-1-37>
लिटि वयो यः ।। <6-1-38> ।।
`न सम्प्रसारणम् इत्यनुवर्तते। लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति। उवाय। ऊयतुः। ऊयुः।
लिड्ग्रहणमुत्तरार्थम् ।।

</6-1-38>
वश्चास्यान्यतरस्यां किति ।। <6-1-39> ।।
अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवत्यन्यतरस्याम्। ऊवतुः। ऊवुः। ऊयतुः। ऊयुः।
कितीति किम् ? उवाय। उवयिथ ।।

</6-1-39>
वेञः ।। <6-1-40> ।।
`लिटि इत्यनुवर्तते। `वेञ् तन्तुसन्ताने(धा.पा.1007) इत्यस्य धातोर्लिटि परतः सम्प्रसारणं न भवति। ववौ। ववतुः। ववुः। किति यजादित्वाद् धातोः प्राप्तमकित्यपि लिट्यभ्यासस्योभयेषाम्(6-1-17/2408) इत्यभ्यासस्यात उभयं प्रतिषिध्यते ।।

</6-1-40>
ल्यपि च ।। <6-1-41> ।।
`वेञः इत्यनुवर्तते। ल्यपि च परतो व्येञः सम्प्रसारणं न भवति। प्रवाय। उपवाय।
पृथग्योगकरणमुत्तरार्थम् ।।

</6-1-41>
ज्यश्च ।। <6-1-42> ।।
`ल्यपि इत्येव। `ज्या वयोहानौ(धा.पा.1500) इत्यस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रज्याय। उपज्याय ।।

</6-1-42>
व्यश्च ।। <6-1-43> ।।
`ल्यपि इत्येव। `व्येञ् संवरणे(धा.पा.1008) इत्येतस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रव्याय। उपव्याय। योगविभाग उत्तरार्थः ।।

</6-1-43>
विभाषा परेः ।। <6-1-44> ।।
`ल्यपि च, `व्यश्च इत्यनुवर्तते। परेरुत्तरस्य व्येञित्येतस्य धातोर्ल्यपि परतो विभाषा सम्प्रसारणं न भवति। परिवीय यूपम्। परिव्याय। सम्प्रसारणे कृते परपूर्वत्वे च ह्रस्वस्य(6-1-71/2858) इति तुक् प्राप्नोति, स हलः(6-4-2/2569) इति दीर्घत्वेन परत्वाद्बाध्यते ।।

</6-1-44>
आदेच उपदेशेऽशिति ।। <6-1-45> ।।
`धातोः इति वर्तते। एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति। ग्लै-ग्लाता, ग्लातुम्, ग्लातव्यम्। शो-निशाता, निशातुम्, निशातव्यम्।
एच इति किम् ? कर्त्ता, हर्त्ता। उपदेश इति किम् ? चेता, स्तोता। अशितीति किम् ? ग्लायति, म्लायति।
कथं जग्ले, मम्ले ? नैव विज्ञायते-शकार इद्यस्य सोऽयं शिदिति, किं तर्हि ? श एव इत् शित्। तत्र `यस्मिन्विधिस्तदादावल्ग्रहणे(व्या.प.127) इति शिदादौ प्रत्यये प्रतिषेधः। एश् शकारान्तो भवति।

अशितीति प्रसज्यप्रतिषेधोऽयम्, तेनैतदात्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीति। सुग्लः, सुम्ल इति--आतश्चोपसर्गे(3-1-136/2898) इति कप्रत्ययः। सुग्लानः, सुम्लानः इति--आतो युच्(3-3-128/3309) इत्येवमादि सिद्धं भवतीति।
आकाराधिकारस्त्वयम् नित्यं स्मयतेः(6-1-57/2596) इति यावत् ।।

</6-1-45>
न व्यो लिटि ।। <6-1-46> ।।
`व्येञ् इत्येतस्य धातोर्लिटि परत आकारादेशो न भवति। संविव्याय। संविव्ययिथ। लिट्यभ्यासस्योभयेषाम्(6-1-17/2408) इत्यभ्यासस्य सम्प्रसारणम्। णलि अचो ञ्णिति(7-2-115/254) इति वृद्धिः ।।

</6-1-46>
स्फुरतिस्फुलत्योर्घञि ।। <6-1-47> ।।
`आदेचः इति वर्तते। `स्फुर स्फुल चलने(धा.पा.1390/1391)--इत्येतयोर्धात्वोरेचः स्थाने घञि परत
आकारादेशो भवति। विस्फारः। विस्फालः। विष्फारः। विष्फालः। स्फुरतिस्फुलत्योर्निर्निविभ्यः(7-3-76/2537) इति वा षत्वम् ।।

</6-1-47>
क्रीङ्जीनां णौ ।। <6-1-48> ।।
`डुक्रीञ् द्रव्यविनिमये(धा.पा.1474), `इङ् अध्ययने(धा.पा.1047), `जि जये(धा.पा.947)--इत्येतेषां धातूनामेचः स्थाने णौ परत आकारादेशो भवति। क्रापयति। अध्यापयति। जापयति ।।।

</6-1-48>
सिध्यतेरपारलौकिके ।। <6-1-49> ।।
`णौ इति वर्तते। `षिधु हिंसासंराद्ध्योः(धा.पा.1193) इत्यस्य धातोरपारलौकिकेऽर्थे वर्तमानस्यैचः स्थाने णौ परत आकारादेशो भवति। अन्नं साधयति। ग्रामं साधयति।
अपारलौकिक इति किम् ? तपस्तापसं सेधयति। स्वान्येवैनं कर्माणि सेधयन्ति। अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्तते। तापसः सिध्यति = ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते। स च ज्ञानविशेष उत्पन्नः परलोके = जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति।
इह कस्मान्न भवति ? अन्नं साधयति ब्राह्मणेभ्यो दास्यामीति। सिध्यतेरत्रार्थो निष्पत्तिः, तस्याः प्रयोजनमन्नम्, तस्य यद्दानं तत्पारलौकिकम्; न पुनः सिद्धिरेवेति न आत्वं पर्युदस्यते। साक्षात्परलोकप्रयोजने च सिध्यर्थे कृतावकाशं वचनमेवं विषयं नावगाहते।
सिध्यतेरिति श्यना निर्देशः `षिधु गत्याम् (धा.पा.47) इत्यस्य भौवादिकस्य निवृत्त्यर्थः ।।

</6-1-49>
मीनातिमिनोतिदीङां ल्यपि च ।। <6-1-50> ।।
`आदेच उपदेशे इति वर्तते। `मीञ् हिंसायाम्(धा.पा.1477), `डुमिञ्प्रक्षेपणे(धा.पा.1251), `दीङ् क्षये(धा.पा.1135)--इत्येतेषां धातूनां ल्यपि विषये चकारादेचश्च विषये उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोऽन्त्यस्य स्थाने आकारादेशो भवति। प्रमाता, प्रमातव्यम्, प्रमातुम्, प्रमाय। निमाता, निमातुम्, निमातव्यम्, निमाय। उपदाता, उपदातव्यम्, उपदातुम्, उपदाय।
उपदेश एवात्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति, आकारान्तलक्षणश्च भवति---उपदायो वर्तते। ईषदुपदानमिति घञ्युचौ भवतः ।।

</6-1-50>
विभाषा लीयतेः ।। <6-1-51> ।।
`ल्यपि इति वर्तते, `आदेच उपदेशे इति च। `लीङ् श्लेषणे(धा.पा.1140)--इति दिवादिः, `ली श्लेषणे(धा.पा.1502)--इति क्र्यादिः; तयोरुभयोरपि यका निर्देशः स्मर्यते। लीयतेर्धातोर्ल्यपि च एचश्च विषये उपदेश एवालोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति। विलाता, विलातुम्, विलाय, विलातव्यम्। विलेता, विलेतुम्, विलेतव्यम्, विलीय।

- निमीमिलियां खलचोः प्रतिषेधो वक्तव्य *(म.भा.3-38)। ईषत्प्रमयः। प्रमयो वर्तते। ईषन्निमयः निमयो वर्तते। ईषद्विलयः विलयो वर्तते। अत्र तु लियो व्यवस्थितविभाषाविज्ञानात्सिद्धम्।

एवं च प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्वं भवति-कस्त्वामुल्लापयते, श्येनो वर्तिकामुल्लापयते ।।

</6-1-51>
खिदेश्छन्दसि ।। <6-1-52> ।।

`विभाषा इति वर्तते। `खिद दैन्ये(धा.पा.1171) इत्यस्य धातोरेचः स्थाने छन्दसि विषये विभाषा आकार आदेशो भवति। चित्तं चिखाद। चित्तं चिखेद।
छन्दसीति किम्? चित्तं खेदयति ।।

</6-1-52>
अपगुरो णमुलि ।। <6-1-53> ।।
`गुरी उद्यमने(धा.पा.1397)--इत्यस्य धातोरपपूर्वस्य णमुलि परत एचः स्थाने विभाषा आकार आदेशो भवति। अपगारमपगारम्। अपगोरमपगोरम्। आभीक्ष्ण्ये णमुल्च(3-4-22/3343) इति णमुल्। अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्त इत्यत्र द्वितीयायां च(3-4-56/3374) इति णमुल् ।।

</6-1-53>
चिस्फुरोर्णौ ।। <6-1-54> ।।
`चिञ्(धा.पा.1252) `स्फुर(धा.पा.1390)--इत्येतयोर्द्धात्वोर्णौ परत एचः स्थाने विभाषा आकारादेशो भवति। चापयति, चाययति। स्फारयति, स्फोरयति ।।

</6-1-54>
प्रजने वीयतेः ।। <6-1-55> ।।
`णौ इति वर्तते। `वी गतिप्रजनकान्त्यसनखादनेषु(धा.पा.1049)-इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतो विभाषा आकारादेशो भवति। पुरोवातो गाः प्रवापयति। पुरोवातो गाः प्रवाययति। गर्भं ग्राहयतीत्यर्थः।
प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम् ।।

</6-1-55>
बिभेतेर्हेतुभये ।। <6-1-56> ।।
`णौ इति वर्तते, `विभाषा इति च। हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः, ततो यद्भयम्, स यस्य भयस्य साक्षाद्धेतुः, तद्भयं हेतुभयम्। तत्र वर्तमानस्य `ञिभी भये(धा.पा.1084) इत्यस्य धातोर्णौ परतो विभाषा आकारादेशो भवति। मुण्डो भापयते, मुण्डो भीषयते। जटिलो भापयते, जटिलो भीषयते। भीस्म्योर्हेतुभये(7-3-38/2594) इत्यात्मनेपदम्, भियो हेतुभये षुक्(7-3-40/2595)। स चात्वपक्षे न भवति। लिभियोरीकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुग्विधीयते।
हेतुभय इति किम्? कुञ्चिकयैनं भाययति (म.भा.3-39)। अत्र हि कुञ्चिकातो भयं करणात्, न हेतोर्देवदत्तात् ।।

</6-1-56>
नित्यं स्मयतेः ।। <6-1-57> ।।
`णौ इति वर्तते, `हेतुभये इति च। नित्यग्रहणात् `विभाषा इति निवृत्तम्। `स्मिङ् ईषद्धसने(धा.पा.949)--इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते।
भय इति किम्? कुञ्चिकयैनं विस्मापयति। भयशब्देन हेत्वर्थसामान्यादिह स्मयतेरर्थोऽभिधीयते। न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति ।।

</6-1-57>
सृजिदृशोर्झल्यमकिति ।। <6-1-58> ।।
`सृज विसर्गे(धा.पा.1415), `दृशिर् प्रेक्षणे(धा.पा.989)--इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परतोऽमागमो भवति। स्रष्टा, स्रष्टुम्, स्रष्टव्यम्। द्रष्टा, द्रष्टुम्, द्रष्टव्यम्। लघूपधगुणापवादोऽयममागमः। अस्राक्षीत्। अद्राक्षीत्। सिचि वृद्धिरमि कृते भवति, पूर्वं तु बाध्यते।
झलीति किम्? सर्जनम्। दर्शनम्। अकितीति किम्? सृष्टः। दृष्टः।
धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति--रज्जुसृड्भ्याम्, देवदृग्भ्यामिति ।।

</6-1-58>
अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।। <6-1-59> ।।
`उपदेशे इति वर्तते, `झल्यमकिति इति च। उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याममागमो भवति। त्रप्ता, तर्पिता, तर्प्ता। द्रप्ता, दर्पिता, दर्प्ता। `तृप प्रीणने(धा.पा.1196), `दृप हर्षणमोचनयोः(धा.पा.1197)--इत्येतौ रधादी धातू, तयोरिडागमः रधादीभ्यश्च(7-2-45/2515) इति विकल्प्यते। अनुदात्तोपदेशः पुनरमर्थ एव।
अनुदात्तस्येति किम्? वर्ढा, वर्ढुम्, वर्ढव्यम्। `वृहू उद्यमने(धा.पा.1348) इत्ययमुदात्तोपदेश ऊदित्वाच्चास्येड् विकल्प्यते। ऋदुपधस्येति किम्? भेत्ता। छेत्ता।

झलीत्येव--तर्पणम्। दर्पणम्।
अकितीत्येव--तृप्तः। दृप्तः ।।

</6-1-59>
शीर्षंश्छन्दसि ।। <6-1-60> ।।
`शीर्षन् इति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य। सोऽपि हि छन्दसि प्रयुज्यत एव। शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति। यत्ते शीर्ष्णो दौर्भाग्यम् ।
छन्दसीति किम् ? शिरः ।।

</6-1-60>
ये च तद्धिते ।। <6-1-61> ।।
`शीर्षन् इति वर्तते। आदेशोऽयमिष्यते, स कथम् ? `तद्धिते इति हि परं निमित्तमुपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति। यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति। शीर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। शिरसि भव इति शरीरावयवाच्च(4-3-55/1430) इति यत्, ये चाभावकर्मणोः(6-4-138/1154) इति प्रकृतिभावः।
तद्धित इति किम् ? शिर इच्छति शिरस्यति ।।

- वा केशेषु *(म.भा.3-41)। शिरसः शीर्षन्नादेशो वक्तव्यः। शीर्षण्याः केशाः। शिरस्याः केशाः ।।

</6-1-61>
अचि शीर्षः ।। <6-1-62> ।।
अजादौ तद्धिते शिरसः शीर्षशब्द आदेशो भवति। हस्तिशिरसोऽपत्यं हास्तिशीर्षिः। बाह्वादिभ्यश्च(4-1-96/1096) इति इञ्। स्थूलशिरस इदं स्थौलशीर्षम्। शीर्षन्भावे हि अन्(6-4-167/1155) इति प्रकृतिभावः स्यात्।
हास्तिशीर्षिशब्दात् स्त्रियामिञः अणिञोरनार्षयोः(4-1-78/1198) ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन
ग्रहणात् शीर्षन्नादेशैः प्राप्नोति, तत्र प्रकृतिभावे सति हास्तिशीर्षण्येत्यनिष्टं रूपं स्यात्, इष्यते तु हास्तिशीर्ष्येति, तत्कथम् ? कर्तव्योऽत्र यत्नः। अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र यस्येतिलोपस्य स्थानिवद्भावाद् व्यवधानम् ।।

</6-1-62>
पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।। <6-1-63> ।।
पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक, आसन--इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन्--इत्येते आदेशा यथासंख्यं भवन्ति। पद्--निपदश्चतुरो जहि। पदा वर्त्तय गोदुहम्। पादस्य पत्(6-4-130/414)। दत्--`या दतो धावति तस्यै श्यावदन्(तै.सं.2-5-1-7)। नस्--`सूकरस्त्वखनन्नसा(अ.वे.2-27-2)। मास्--`मासि(तै.सं.2-5-6-6) त्वा पश्यामि चक्षुषा। हृद्-`हृदा पूतेन मनसा जातवेदसम्(अ.वे.4-39)। निश्-`अमावास्यायां निशि यजेत(खि.2-1-8)। असन्-`आसिक्तोऽस्नावरोहति(मै.सं.3-15-8)। यूषन्-`या पात्राणि यूष्ण आसेचनानि(ऋ.1-162-13)। दोषन्-`यत्ते दोष्णो दौर्भाग्यम्(मै.सं.3-10-3)। यकन्-`यक्नोऽवद्यति। शकन्-`शक्नोऽवद्यति(अ.वे.12-4-4)। उदन्-`उद्नो दिव्यस्य नावाते(तै.सं.2-4-8-2)। आसन्-`आसनि(ऋ.1-75-1) किं लभे मधूनि।
शस्प्रभृतिष्विति किम् ? पादौ ते प्रतिपीड्यौ, नासिके ते कृशे।
केचिदत्र छन्दसीत्यनुवर्त्तयन्ति। अपरे पुनरविशेषेणेच्छन्ति। तथा हि-भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते।
`व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ।। इत्येवमादयः।
अन्यतरस्यामित्येतदनुवर्तयन्ति, तेन पादादयोऽपि प्रयुज्यन्ते।
शस्प्रभृतिष्विति प्रकारार्थे प्रभृतिशब्द इति `शला दोषणी(काठ.सं.16-21) इत्यत्रापि दोषन्नादेशो भवति।

- पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् *(म.भा.3-41)। मांस, पृतना-सानु-इत्येतेषां स्थाने यथासंख्यं मांस्, पृत्। स्नु-इत्येते आदेशा भवति। `मांस्पचन्या उखायाः(ऋ.1-162-13)। मांसपचन्या इति प्राप्ते। `पृत्सु मर्त्यम्(ऋ.1-27-7)। पृतनासु मर्त्यमिति प्राप्ते। `न ते दिवो न पृथिव्या अधिस्नुषु(वा.सं.17-14)। अधिसानुष्विति प्राप्ते।
- नस् नासिकाया यत्तस्क्षुद्रेषु *(म.भा.3-42)। नासिकाया नस्भावो वक्तव्यो यत्, तस्, क्षुद्र-इत्येतेषु परतः। नस्यम्। नस्तः। नःक्षुद्रः।
- यति वर्णनगरयोर्नेति वक्तव्यम् *(म.भा.3-42)। नासिक्यो वर्णः। नासिक्यं नगरम् ।।

</6-1-63>
धात्वादेः षः सः ।। <6-1-64> ।।
धातोरादेः षकारस्य स्थाने सकारादेशो भवति। षह-सहते। षिच-सिञ्चति।
धातुग्रहणं किम् ? षोडश। षडिकः। षण्डः। आदिरिति किम् ? कषति। लषति। कृषति।
आदेशप्रत्यययोः(8-3-59/212) इत्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः। के पुनस्ते ? ये तथा पठ्यन्ते। अथ वा, लक्षणं क्रियते--`अज्दन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च, सृपिसृजिस्तृस्त्यासेक्सृवर्जम् ।।

- सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः *(म.भा.3-42)। षोडीयति। षण्डीयति। ष्ठीवति। ष्वष्कते। `ष्ठिवु--इत्येतस्य द्वितीयस्थकारष्ठकारश्चेष्यते। तेन तेष्ठीव्यते, टेष्ठीव्यते इति चाभ्यासरूपं द्विधा भवति ।।

</6-1-64>
णो नः ।। <6-1-65> ।।
`धातोरादेः इत्यनुवर्तते। धातोरादेर्णकारस्य नकार आदेशो भवति। णीञ्--नयति। णम्--नमति। णह--नह्यति।
धात्वादेरित्येव--अणति।
सुब्धातोरयमपि नेष्यते--णकारमिच्छति णकारीयति।
उपसर्गादसमासेऽपि णोपदेशस्य(8-4-14/2287) इत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो धातवः केचिदुपदिश्यन्ते। के पुनस्ते ? ये तथा पठ्यन्ते। अथ वा, लक्षणं क्रियते--`सर्वे णादयो णोपदेशाः, नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृवर्जम् ।।

</6-1-65>
<K.4.520>
लोपो व्योर्वलि ।। <6-1-66> ।।
धातोरिति प्रकृतं यत् तद् धात्वादेरिति पुनर्धातुग्रहणान्निवृत्तम्। तेन धातोरधातोश्च वकारयकारयोर्वलि परतो लोपो भवति। दिव्-दिदिवान्, दिदिवांसौ, दिदिवांसः। ऊयी-ऊतम्। क्नूयी- क्नूतम्। गोधाया ढ्रक्(4-1-129/1135)-गौधेरः। पचेरन्। यजेरन्। वकारस्य--`जीवेरदानुक्(द.उ.1-163) जीरदानुः। स्रिवेः--- आस्रेमाणम्। उणादयो बहुलम्(3-3-1/3169) इति बहुलवचनात् च्छ्वोः शूडनुनासिके च(6-4-19/2561) इति ऊठ् न भवति।
वलीति किम् ? ऊय्यते। क्नूय्यते। पूर्वं लोपग्रहणं किम् ?
वेरपृक्तलोपात्पूर्वं वलि लोपो यथा स्यात्।
कण्डूयतेः क्विप्-कण्डूः। लोलूयतेः--लोलूः।
व्रश्चादीनामुपदेशसामर्थ्याद् वलि लोपो न भवति। वृश्चति, वव्रश्चेत्यत्रापि हि सम्प्रसारणहलादिःशेषयोर्बहिरङ्गत्वात्प्राप्नोति ।।

</6-1-66>
वेरपृक्तस्य ।। <6-1-67> ।।
`लोपः इति वर्तते। `वेः इति क्विबादयो विशेषाननुबन्दानुत्सृज्य सामान्येन गृह्यन्ते। वेरपृक्तस्य लोपो भवति। ब्रह्मभ्रूणवृत्रेषु क्विप्(3-2-87/2998)--ब्रह्महा, भ्रूणहा। स्पृशोऽनुदके क्विन्(3-2-58/432)--घृतस्पृक्, तैलस्पृक्। भजो ण्विः(3-2-62/2976)--अर्धभाक्, पादभाक्, तुरीयभाक् ।
अपृक्तस्येति किम् ? `वृदृभ्यां विन्(उ.502)-दर्विः। `कॄगॄशॄसॄजागृभ्यः क्विः--जागृविः।

</6-1-67>
इल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।। <6-1-68> ।।
`लोपः इति वर्तते। तदिह लौकिकेनार्थेनार्थवत् कर्मसाधनं द्रष्टव्यम्--लुप्यते इति लोपः। हलन्ताद्, ङ्यन्तादाबन्ताच्च दीर्घात् परं सु, ति, सि-इत्येतदपृक्तं हल् लुप्यते। हलन्तात् सुलोपः-राजा, तक्षा, उखास्रत्, पर्णध्वत्। ङ्यन्तात्-कुमारी, गौरी, शार्ङ्गरवी। आबन्तात्-खट्वा, बहुराजा, कारीषगन्ध्या।
हलन्तादेव तिलोपः, सिलोपश्च। तत्र तिलोपस्तावत्-अबिभर्भवान्। भृञो लङि तिपि श्लौ, भृञामित्(7-4-76/2496) इत्यभ्यासस्येत्त्वम्। अजागर्भवान्। सिलोपः-अभिनोऽत्र। अच्छिनोऽत्र(म.भा.3-43)। दस्य रेफः।
हल्ङ्याब्भ्य इति किम् ? ग्रामणीः। सेनानीः। दीर्घादिति किम् ? निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम् ? अभैत्सीत्। तिपा सहचरितस्य सिशब्दस्य ग्रहणात्सिचो ग्रहणं नास्ति। अपृक्तमिति किम् ? भिनत्ति, छिनत्ति।
हलीति किम् ? बिभेद। चिच्छेद।
अथ किमर्थं हलन्तात्सुतिसीनां लोपो विधीयते, संयोगान्तलोपेनैव सिद्धम् ? न सिद्ध्यति; राजा, तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न

स्यात्। उखास्रत्, पर्णध्वदित्यत्रापदान्तत्वाद्दत्वं च न स्यात्। अभिनोऽत्रेत्यत्र अतो रोरप्लुतादप्लुते(6-1-113/163) इत्युत्वं न स्यात्। अबिभर्भवानित्यत्र तु रात्सस्य(8-3-24/280) इति नियमाल्लोप एव न स्यात्।

संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति।
रात्तु ते नैव लोपः स्याद्, हलस्तस्माद्विधीयते ।।

</6-1-68>
एङ्ह्रस्वात्सम्बुद्धेः ।। <6-1-69> ।।
`लोप इति वर्त्तते, `हल् इति च। `अपृक्तम् इति नाधिक्रियते, तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतम्। एङन्तात्प्रातिपदिकाद् ह्रस्वान्ताच्च परो हल्लुप्यते स चेत्सम्बुद्धेर्भवति। एङन्तात्--हे अग्ने, हे वायो। ह्रस्वान्तात्--हे देवदत्त, हे नदि, हे वधु, हे कुण्ड। कुण्डशब्दाद् अतोऽम्(7-1-24/309) इत्यम्, अमि पूर्वः(6-1-107/194) इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः।
हे कतरदित्यत्र डिदयमद्डादेशः(7-1-25/315), तत्र टिलोपे सति ह्रस्वाभावान्नास्ति सम्बुद्धिलोपः। एङ्ग्रहणं क्रियते सम्बुद्धिगुणबलीयस्त्वात् ।।

</6-1-69>
शेश्छन्दसि बहुलम् ।। <6-1-70> ।।
`शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति। या क्षेत्रा। `या वना(अ.वे.14-2-7)। `यानि क्षेत्राणि(अ.वे.14-2-7)। यानि वनानि ।।

</6-1-70>
ह्रस्वस्य पिति कृति तुक् ।। <6-1-71> ।।
पिति कृति परतो ह्रस्वान्तस्य धातोः तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य।
ह्रस्वस्येति किम् ? आलूय। ग्रमणीः। पितीति किम् ? कृतम्। हृतम्। कृतीति किम् ? पटुतरः। पटुतमः।
ग्रामणि ब्राह्मणकुलमित्यत्र ह्रस्वस्य बहिरङ्गस्यासिद्धत्वात् तुग्न भवति ।।

</6-1-71>
संहितायाम् ।। <6-1-72> ।।
अधिकारोऽयम् अनुदात्तं पदमेकवर्जम्(6-1-158/3650) इति यावत्। प्रागेतस्मात्सूत्रादित उत्तरं यद्वक्ष्यामः संहितायामित्येवं तद्वेदितव्यम्। वक्ष्यति--इको यणचि(6-1-77/47), दध्यत्र।
संहितायामिति किम् ? दधि अत्र। मधु अत्र ।।

</6-1-72>
छे च ।। <6-1-73> ।।
`ह्रस्वस्य तुक् इति वर्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति। इच्छति। गच्छति।
ह्रस्व एवात्रागमी, न त्वदन्तः। तेन चिच्छिदतुः, चिच्छिदुरित्यत्र तुगभ्यासस्य ग्रहणेन न गृह्यत इति हलादिःशेषेण न निवर्त्त्यते। नावयवावयवः समुदायावयवो भवतीति ।।

</6-1-73>
आङ्माङोश्च ।। <6-1-74> ।।
`तुक् इत्यनुवर्तते, `छे इति च। आङो ङित ईषदादिषु चतुर्ष्वर्थेषु वर्तमानस्य माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। पदान्ताद्वा(6-1-76/149) इति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे--ईषच्छाया। आच्छाया। क्रियायोगे--आच्छादयति।
मर्यादाभिविध्योः---आच्छायायाः। आच्छायम्। माङः खल्वपि- माच्छैत्सीत्। माच्छिदत्।
ङिद्विशिष्टग्रहणं किम् ? आछाया, आच्छाया। प्रमाछन्दः, प्रमाच्छन्दः ।।

</6-1-74>
दीर्घात् ।। <6-1-75> ।।
`छे तुक् इति वर्त्तते। दीर्घात्परो यश्छकारस्तस्मिन्पूर्वस्य तस्यैव दीर्घस्य तुगागमो भवति। ह्रीच्छति। म्लेच्छति। अपचाच्छायते। विचाच्छायते ।।

</6-1-75>

पदान्ताद्वा ।। <6-1-76> ।।
`दीर्घाच्छे तुक् इति वर्त्तते। पदान्ताद्दीर्घात्परो यश्छकारस्तस्मिन्पूर्वस्य तस्यैव दीर्घस्य पूर्वण नित्यं प्राप्तो वा तुगागमो भवति। कुटीच्छाया। कुटीछाया। कुवलीच्छाया। कुवलीछाया।

- विश्वजनादीनां छन्दसि वा तुगागमो भवतीति वक्तव्यम् *(म.भा.3-51)। विश्वजनच्छत्रम्। विश्वजनछत्रम्। `नच्छायां कुरवोपरम्(अ.वे.13-3-56)। नछायां कुरवोपरम् ।।

</6-1-76>
इको यणचि ।। <6-1-77> ।।
अचि परत इको यणादेशो भवति। दध्यत्र। मध्वत्र। कर्त्रर्थम्। हर्त्रर्थम्। लाकृतिः।

- इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्यः *(म.भा.3-51)। भो3 इ इन्द्रम् । भो3 यिन्द्रम्।

अचीति चायमधिकारः सम्प्रसारणाच्च(6-1-108/330) इति यावत् ।।

</6-1-77>
एचोऽयवायावः ।। <6-1-78> ।।
एचः स्थानेऽचि परतोऽय्, अव्, आय्, आव्-इत्येते आदेशा यथासंख्यं भवन्ति। चयनम्। लवनम्। चायकः। लावकः। कयेते। ययेते। वायाववरुणद्धि ।।

</6-1-78>
वान्तो यि प्रत्यये ।। <6-1-79> ।।
योऽयमेचः स्थाने वान्तादेशः--ओकारस्य अव्, औकारस्याव्, स यकारादौ प्रत्यये परतो भवति। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। नाव्यो ह्रदः।
वान्त इति किम् ? रायमिच्छति रैयति। यीति किम् ? गोभ्याम्, नौभ्याम्। प्रत्यय इति किम् ? गोयानम्, नौयानम्।

- गोर्यूतौ छन्दसि *(म.भा.3-54)। गोशब्दस्य यूतौ परतश्छन्दसि विषये वान्तादेशो वक्तव्यः। `आनो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्(ऋ.3-62-16)।

छन्दसीति किम् ? गोयूतिः।

- अध्वपरिमाणे च *(म.भा.3-54)। गोर्यूतौ परतो वान्तादेशो वक्तव्यः। गव्यूतिमात्रमध्वानं गतः ।।

</6-1-79>
धातोस्तन्निमित्तस्यैव ।। <6-1-80> ।।
`एचः इति वर्त्तते। `वान्तो यि प्रत्यये इति च। धातोर्य एच् तन्निमित्तो यकारादिप्रत्ययनिमित्तस्तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति। लव्यम्। पव्यम्। अवश्यलाव्यम्। अवश्यपाव्यम्।
धातोरिति किम् ? प्रातिपदिकस्य नियमो मा भूत्। तत्र को दोषः ? ब्राभ्रव्य इत्यत्रैव स्यात्, इह न स्याद्-गव्यम्, नाव्यमिति।
तन्निमित्तस्येति किम् ? अतन्निमित्तस्य मा भूत्-उपोयते। औयत। लौयमानिः। पौयमानिः। अत इञ्(4-1-95/1095)।
एवकारकरणं किम् ? धात्ववधारणं यथा स्यात्, तन्निमित्तावधारणं मा भूदिति तन्निमित्तस्य हि धातोश्चाधातोश्च भवति-बाभ्रव्यः, अवश्यलाव्यम्, लव्यम् ।।

</6-1-80>
क्षय्यजय्यौ शक्यार्थे ।। <6-1-81> ।।
`क्षि `जि--इत्येतयोर्धात्वोर्यति प्रत्यये परतः शक्यार्थे गम्यमाने एकारस्यायादेशो निपात्यते। शक्यः क्षेतुं क्षय्यः। शक्यो जेतुं जय्यः।
शक्यार्थ इति किम् ? क्षेयं पापम्। जेयो वृषलः ।।

</6-1-81>
क्रय्यस्तदर्थे ।। <6-1-82> ।।
क्रीणातेर्धातोस्तदर्थे क्रयार्थं यत्तस्मिन्नभिधेये यति प्रत्यये परतोऽयादेशो निपात्यते। क्रय्यो गौः। क्रय्यः कम्बलः। क्रयार्थं यः प्रसारितः स उच्यते।
तदर्थ इति किम् ? क्रेयं नो धान्यम्,न चास्ति क्रय्यम् ।।

</6-1-82>
भय्यप्रवय्ये चच्छन्दसि ।। <6-1-83> ।।
बिभेतेर्धातोः प्रपूर्वस्य च `वी इत्येतस्य यति प्रत्यये परतश्छन्दसि विषयेऽयादेशो निपात्यते। भय्यं किलासीत्। वत्सतरी प्रवय्या। भय्येति कृत्यल्युटो बहुलम्(3-3-113/2841) इत्यपादाने यत्प्रत्ययः। बिभेत्यस्मादिति भय्यम्। `प्रवय्या इति स्त्रियामेव निपातनम्। अन्यत्र प्रवेयमित्येव भवति।
छन्दसीति किम्? भेयम्। प्रवेयम्।

- ह्रदय्या आप उपसंख्यानम् *(म.भा.3-55)। ह्रदय्या आपः। ह्रदे भवा--भवे छन्दसि(4-4-110/3456) इति यत्प्रत्ययः ।।

</6-1-83>
एकः पूर्वपरयोः ।। <6-1-84> ।।
अधिकारोऽयम्। ख्यत्यात्परस्य(6-1-112/255) इति प्रागेतस्मात्सूत्रादित उत्तरं यद्वक्ष्यामस्तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवतीत्येतद् वेदितव्यम्। वक्ष्यति--आद्गुणः(6-1-87/69) इति। तत्राचि पूर्वस्यावर्णाच्च परस्य स्थाने एको गुणो भवति-खट्वेन्द्रः, मालेन्द्रः।
पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्। एकस्यैव हि स्यात्, नोभे सप्तमीपञ्चम्यौ युगपत्प्रकल्पिके भवत इति।
एकग्रहणं पृथगादेशनिवृत्त्यर्थम्, स्थानिभेदाद्धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम् ।।

</6-1-84>
अन्तादिवच्च ।। <6-1-85> ।।
`एकः इति वर्त्तते, `पूर्वपरयोः इति च। एकः पूर्वपरयोः(6-1-84/68) इति योऽयमेकादेशो विधीयते स पूर्वस्यान्तवद्भवति, परस्यादिवद्भवति। यथा तस्यान्त आदिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते, तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यते-इत्येषोऽतिदेशस्यार्थः।
ब्रह्मबन्धूरित्यत्र ब्रह्मबन्ध्विति प्रातिपदिकम्, ऊङित्यप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर्य एकादेशः स प्रातिपदिकस्यान्तवद् भवति। यथा शक्यते कर्तुम्--ङ्याप्प्रातिपदिकात्(4-1-1/182) इति स्वादिविधिः।
वृक्षावित्यत्र सुबौकारः असुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद्भवति। यथा शक्यते वक्तुम्-सुबन्तं पदम्(1-4-14/29) इति।
वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथा हि---खट्वाभिरित्यत्रान्तवद्भावाभावाद् अतो भिस ऐस्(7-1-9/206) इति न भवति। ह्वयतेः-जुहावेति सम्प्रसारणपूर्वत्वस्यादिवद्भावाद् आत औ णलः(7-1-34/2371) इति न भवति। अस्यै अश्वः, अस्या अश्व इति वृद्धिरेचि(6-1-88/72) इति वृद्धिः, एङः पदान्तादति(6-1-109/86) इत्यत्र विधावादिवन्न भवति।
पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते। तत्रावयवयोरानुमानिकं स्थानित्वमिति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते ।।

</6-1-85>
षत्वतुकोरसिद्धः ।। <6-1-86> ।।
षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धो भवति। सिद्धकार्यं न करोतीत्यर्थः। असिद्धवचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। कोऽसिचद् इत्यत्र एङः पदान्तादति(6-1-109/86) इत्येकादेशस्य परं प्रत्यादिवद्भावादपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति। कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै--इत्येकादेशस्यासिद्ध्त्वाद् `इणः(8-3-39/153) इति षत्वं न भवति।
तुग्विधौ---अधीत्य, प्रेत्येति। अत्रैकादेशस्यासिद्धत्वात् ह्रस्वस्य पिति कृति तुक्(6-1-71/2858) इति तुग्भवति।

- सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः *(म.भा.3-66)। सम्प्रसारणे--ब्रह्महूषु। परिवीषु। सम्प्रसारणपूर्वत्वस्यासिद्धत्वात्षत्वं न प्राप्नोति। ङौ-वृक्षेच्छत्रम्, वृक्षे छत्रम्। इटि-अपचेच्छत्रम्, अपचे छत्रम्(म.भा.3-66); आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणो नित्योऽत्र तुक् प्राप्नोति, दीर्घात्(6-1-75/148), पदान्ताद्वा(6-1-76/149) इति तुग्विकल्प इष्यते ।।

</6-1-86>
आद् गुणः ।। <6-1-87> ।।
`अचि इत्यनुवर्तते। अवर्णात्परो योऽच्, अचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णाचोः स्थाने एको गुण आदेशो भवति। तवेदम्। खट्वेन्द्रः, मालेन्द्रः। तवेहते, खट्वेहते। तवोदकम्, खट्वोदकम्। तवर्श्यः, खट्वर्श्यः। तवल्कारः, खट्वल्कारः। लृकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते ।।

</6-1-87>
वृद्धिरेचि ।। <6-1-88> ।।

`आत् इति वर्तते। अवर्णात्परो य एच्, एचि च पूर्वो योऽवर्णः, तयोः पूर्वपरयोरवर्णैचोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणस्यापवादः। ब्रह्मैडका, खट्वैडका। ब्रहमैतिकायनः, खट्वैतिकायनः। ब्रह्मौदनः, खट्वौदनः। ब्रह्मौपगवः, खट्वौपगवः ।।

</6-1-88>
एत्येधत्यूठ्सु ।। <6-1-89> ।।
`वृद्धिरेचि इति वर्तते, `आत् इति च। तदेतदेज्ग्रहणमेतेरेव विशेषणम्, न पुनरेधतेः; अव्यभिचाराद, ऊठश्चासम्भवात्। `इण् गतौ(धा.पा.1046) इत्येतस्मिन् धातावेचि, `एध वृद्धौ(धा.पा.2) इत्येतस्मिन् ऊठि च पूर्वं यदवर्णं ततश्च परो योऽच्, तयोः पूर्वपरयोरवर्णाचोः स्थाने वृद्धिरेकादेशो भवति। उपैति, उपैषि, उपैमि। उपैधते, प्रैधते। प्रष्ठौहः, प्रष्ठौहा, प्रष्ठौहे। ऊठ्याद्गुणापवादो वृद्धिर्विधीयते। एत्येधत्योः--एङिपर रूपापवादः। ओमाङोश्च(6-1-95/80) इत्येतत्तु पररूपं न बाध्यते; `येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति(व्या.प.49) इति, `पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते(व्या.प.9) इति वा। तेनेह न भवति--उप आ इतः = उपेत इति।
एचीत्येव-उप आ इतः = उपेत इति।

- अक्षादूहिन्यां वृद्धिर्वक्तव्या *(म.भा.3-69)। अक्षौहिणी।
- स्वादीरेरिण्योर्वृद्धिर्वक्तव्या *(म.भा.3-69)। स्वैरम्। स्वैरिणी।
- प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या *(म.भा.3-69)। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः।
- ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या *(म.भा.3-69)। सुखेन ऋतः सुखार्तः। दुःखेन ऋतो दुःखार्तः। ऋत इति किम् ? सुखेन इतः सुखेतः। तृतीयेति किम्? परमर्तः। समास इति किम् ? सुखेनर्तः।
- प्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या *(म.भा.3-69)। प्र-प्रार्णम्। वत्सतर-वत्सतरार्णम्। कम्बल-कम्बलार्णम्। वसन-वसनार्णम्।
- ऋणदशाभ्यां वृद्धिर्वक्तव्या *(म.भा.3-69)। ऋणार्णम्। दशार्णम् ।।

</6-1-89>
आटश्च ।। <6-1-90> ।।
`एचि इति निवृत्तम्। `अचि इत्यनुवर्त्तते। आटः परो योऽच्, अचि च पूर्वो य आट्-तयोः पूर्वपरयोराडचोः स्थाने वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औब्जीत्।
चकारोऽधिकविधानार्थः----उसि(6-1-96/2214) ओमाङोश्च(6-1-95/80) इति पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ ऊढा ओढा, तामैच्छत् औढीयत् ।।

</6-1-90>
उपसर्गादृति धातौ ।। <6-1-91> ।।
`आत् इत्येव। अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति। उपसर्गादिति किम् ? खट्वर्च्छति। मालर्च्छति। प्रगता ऋच्छका अस्माद्देशात् प्रर्च्छको देशः। `यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञकाः(जै.प.99) इति।
ऋतीति किम् ? उप इत उपेतः। तपरकरणं किम् ? उप ऋकारीयति उपर्कारीयति। वा सुप्यापिशलेः(6-1-92/77) इति विकल्पः स्यात्।
उपसर्गग्रहणादेव धातुग्रहणे सिद्धे दातुग्रहणं शाकल्यनिवृत्त्यर्थम्। ऋत्यकः(6-1-128/92) इति हि शाकल्यस्य
प्रकृतिभावः प्राप्नोति ।।

</6-1-91>
वा सुप्यापिशलेः ।। <6-1-92> ।।
`आत् इत्येव, `उपसर्गादृति धातौ इति च। सुबन्तावयवे धातावृकारादौ परतोऽवर्णान्तादुपसर्गात् पूर्वपरयोरापिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति, उपार्षभीयति। उपल्कारीयति, उपाल्कारीयति। `ऋकारलृकारयोः सावर्ण्यविधिः इति ऋतीति लृकारोऽपि गृह्यते।
आपिशलिग्रहणं पूजार्थम्, वेति ह्युच्यत एव ।।

</6-1-92>
औतोऽम्शसोः ।। <6-1-93> ।।
ओतोऽमि शसि च परतः पूर्वपरयोराकार आदेशो भवति। गां पश्य, गाः पश्य। द्यां पश्य, द्याः पश्य।
द्योशब्दोऽप्योकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णिदिष्यते, तेन नाप्राप्तायां वृद्धावयमाकारो विधीयमानस्तां बाधते।

अमिति द्वितीयैकवचनं गृह्यते; शसा साहचर्यात्, `सुपि इति चाधिकारात्। तेनाचिनवम्, असुनवमित्यत्र न भवति ।।

</6-1-93>
एङि पररूपम् ।। <6-1-94> ।।
`आत् इत्येव, `उपसर्गाद्धातौ इति च। अवर्णान्तादुपसर्गादेङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति। वृद्धिरेचि(6-1-88/72) इत्यस्यापवादः। उपेलयति। प्रेलयति। उपोषति। प्रोषति।
केचिद् वा सुप्यापिशलेः(6-1-92/77) इत्यनुवर्त्तयन्ति, तच्च वाक्यभेदेन सुब्धातौ विक्ल्पं करोति-उपेडकीयति, उपैडकीयति। उपोदनीयति, उपौदनीयति।

- शकन्ध्वादिषु पररूपं वक्तव्यम् *(म.भा.3-75)। शक अन्धुः शकन्धुः। कुल अटा कुलटा।
- सीमन्तः केशेषु *(म.भा.3-75)। सीम्नोऽन्तः सीमन्तः। अन्यत्र सीमान्तः।
- एवे चानियोगे पररूपं वक्तव्यम् *(म.भा.3-75)। इह एव इहेव। अद्य एव अद्येव। अनियोगे इति किम् ? इहैव भव माऽन्यत्र गाः ।।
- ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् *(म.भा.3-76)। स्थूल ओतुः स्थूलौतुः, स्थूलोतुः। बिम्बौष्ठी, बिम्बोष्ठी। समास इति किम् ? तिष्ठ देवदत्तौष्ठं पश्य।
- एमन्नादिषु छन्दसि पररूपं वक्तव्यम् *(म.भा.3-76)। अपां त्वा एमन्, `अपां त्वेमन्(मै.सं.2-7-18-1)। अपां त्वा ओद्मन्, `अपां त्वोद्मन्(मै.सं.2-7-18-1) ।।

</6-1-94>
ओमाङोश्च ।। <6-1-95> ।।
`आत् इत्येव। अवर्णान्तादोमि आङि च परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। का ओमित्यवोचत्, कोमित्यवोचत्। योमित्यवोचत्। आङि खल्वपि--आ ऊढा ओढा। अद्य ओढा अद्योढा। कदा ओढा कदोढा। तदा ओढा, तदोढा। वृद्धिरेचि(6-1-88/72) इत्यस्यापवादः।
इह तु-आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादिति अकः सवर्णे दीर्घत्वं(6-1-101/85) बाधते ।।

</6-1-95>
उस्यपदान्तात् ।। <6-1-96> ।।
`आत् इत्येव। अवर्णादपदान्तादुसि पूर्वपरयोराद्गुणापवादः पररूपमेकादेशो भवति। भिन्द्या उस् भिन्द्युः। छिन्द्या उस् छिन्द्युः। अदा उस् अदुः। अया उस् अयुः।
अपदान्तादिति किम् ? का उस्रा कोस्रा। का उषिता कोषिता।
आदित्येव--चक्रुः। अबिभयुः ।।

</6-1-96>
अतो गुणे ।। <6-1-97> ।।
`अपदान्तात् इति वर्त्तते। अकारादपदान्ताद् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पचन्ति। यजन्ति। अकः सवर्णे दीर्घस्य(6-1-101-85) अपवादः।
पचे, यजे--इत्यत्र वृद्धिरेचि(6-1-88/72) इति वृद्धिः प्राप्नोति।
अत इति किम्? यान्ति। वान्ति।
गुण इति किम् ? अपचे। अयजे।
अपदान्तादित्येव--दण्डाग्रम्। यूपाग्रम् ।।

</6-1-97>
अव्यक्तानुकरणस्यात इतौ ।। <6-1-98> ।।
अव्यक्तम्=अपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णमेव केनचित्सादृश्येन तदव्यक्तमनुकरोति तस्य योऽच्छब्दस्तस्मादितौ पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पटत् इति पटिति। घटत् इति घटिति। झटत् इति झटिति। छमित् इति छमिति। अव्यक्तानुकरणस्येति किम् ? जगत् इति जगदिति। अत इति किम् ? मरट् इति मरडिति। इताविति किम्? पटत् अत्र पटदत्र ।।

- अनेकाच इति वक्तव्यम् *(म.भा.3-77)। इह मा भूत्--श्रत् इति श्रदिति।

कथं घटदिति गम्भीरमम्बुदैर्नदितमिति ? दकारान्तमेतदनुकरणं द्रष्टव्यम् ।।

</6-1-98>
नाम्रेडितस्यान्त्यस्य तु वा ।। <6-1-99> ।।
अव्यक्तानुकरणस्याम्रेडितस्य योऽच्छब्द इतौ तस्य पररूपं न भवति, तस्य योऽन्त्यस्तकारस्तस्य वा भवति। पटत्पटदिति, पटत्पटेति करोति। नित्यवीप्सयोः(8-1-4/2140) इति द्विर्वचनम्।
यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्--पटत्पटेति करोति ।।

</6-1-99>
नित्यमाम्रेडिते डाचि ।। <6-1-100> ।।
`अव्यक्तानुकरणस्य, `अतः `अन्त्यस्य इति चानुवर्तते। डाच्परं यदाम्रेडितं तस्मिन्पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्यस्तकारस्तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति। पटपटाकरोति। दमदमाकरोति ।
पटदित्यस्माद् `अव्यक्तानुकरणाद् इति डाचि विहिते `डाचि बहुलम्(वा.691) इति द्विर्वचनम्, तच्च टिलोपात् पूर्वमेवेष्यते ।।

</6-1-100>
अकः सवर्णे दीर्घः ।। <6-1-101> ।।
अकः सवर्णेऽचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्। दधीन्द्रः। मधूदके। होतॄश्यः।
अक इति किम् ? अग्नये। सवर्ण इति किम् ? दध्यत्र।
अचीत्येव---कुमारी शेते। नाज्झलौ(1-1-10/13) इत्यत्र यदजिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात्सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोरप्रतिषिद्धम् ।।

- सवर्णदीर्घत्वे ऋति ॠ वा वचनम् *(म.भा.3-77)। ऋति सवर्णे परभूते तत्र ॠ वा भवतीति वक्तव्यम्। होतृ ॠकारः होतृकारः। यदा न ॠ, तदा दीर्घ एव होतॄकारः।
- लृति ॡ वा वचनम् *(म.भा.3-77)। लृति सवर्णे परतो ॡ वा भवतीति वक्तव्यम्। होतृ लृकारः। होतॢकारः। होतॄकारः। ॠकारलृकारयोः सवर्णसंज्ञाविधिरुक्तः। दीर्घपक्षे तु समुदायान्तरतमस्य लृवर्णस्य दीर्घस्याभावत् ॠकारः क्रियते ।।

</6-1-101>
प्रथमयोः पूर्वसवर्णः ।। <6-1-102> ।।
`अकः इति `दीर्घः इति वर्तते। प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्यात् द्वितीयापि प्रथमेत्युक्ता। तस्यां प्रथमायां द्वितीयायां च विभक्तावचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशो भवति। अग्नी। वायू। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्।
अतो गुणे(6-1-97/191) इति यदकारे पररूपं तदकः सवर्णे दीर्घत्वमेव बाधते, न तु पूर्वसवर्णदीर्घत्वम्, `पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्(व्या.प.9) इति।
अचीत्येव वृक्षः। प्लक्षः।
अक इत्येव---नावौ।
पूर्वसवर्णग्रगहणं किम् ? अग्नी इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम् ? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थम् ।।

</6-1-102>
तस्माच्छसो नः पुंसि ।। <6-1-103> ।।
तस्मात्पूर्वसवर्णदीर्घादुत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति। वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। हर्तॄन्। षण्डकान्। षण्ढकान्। स्थूरान्। अररकान्पश्य। सर्व एते पुंल्लिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति।
इह तु चञ्चेव चञ्चा, लुम्मनुष्ये(5-3-58/2753) इति कनो लुपि कृते लुपि युक्तवद् व्यक्तिवचने(1-2-5/1294) इति पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति,चञ्चाः पश्य, वध्रिकाः पश्येति। तस्मादिति किम् ? एतांश्चरतो गाः पश्य। शस इति किम् ? वृक्षाः। प्लक्षाः। पुंसीति किम् ? धेनूः। बह्वीः। कुमारीः ।।

</6-1-103>
नादिचि ।। <6-1-104> ।।
अवर्णादिचि पूर्वसवर्णदीर्घो न भवति। वृक्षौ। प्लक्षौ। खट्वे। कुण्डे।
आदिति किम् ? अग्नी। इचीति किम् ? वृक्षाः ।।

</6-1-104>
दीर्घाज्जसि च ।। <6-1-105> ।।
दीर्घाज्जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति। कुमार्यौ। कुमार्यः। ब्रह्मबन्ध्वौ। ब्रह्मबन्ध्वः ।।

</6-1-105>
वा छन्दसि ।। <6-1-106> ।।
दीर्घाच्छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्णदीर्घो न भवति। `मारुतीश्चतस्रः(काठ.सं.11-10)। पिण्डीः। मारुत्यश्चतस्रः पिण्ड्यः। `वाराही(मै.सं.4-4-5)। उपानही। वाराह्यौ। उपानह्यौ ।।

</6-1-106>
अमि पूर्वः ।। <6-1-107> ।।
`अकः इत्येव। अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्।
पूर्वग्रहणं किम् ? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूदिति, कुमारीमित्यत्र हि त्रिमात्रः स्यात् ।
वा छन्दसीत्येव---`शमीं च(काठ.सं.26-6), शम्यं च। `गौरीं च, गौर्यं च(ऋ.10-126-8) ।।

</6-1-107>
सम्प्रसारणाच्च ।। <6-1-108> ।।
`पूर्वः इत्येव। सम्प्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। यजि--इष्टम्। वपि--उप्तम्। ग्रहि--गृहीतम्। सम्प्रसारणविधानसामर्थ्याद्विगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते।
वा छन्दसीत्येव(6-1-106/3515)--`मित्रावरुणौ यज्यमानौ(अ.वे.18-1-39)।
परपूर्वत्वविधाने सत्यर्थवत्सम्प्रसारणविधानमिति इष्ट इत्येवमादिषु पूर्वत्वाभावे यणादेशो भवत्येव।
अन्तरङ्गे चाचि कृतार्थं वचनमिति बाह्यो पश्चात्सन्निपतिते पूर्वत्वं न भवति-शकह्वौ, शकह्वर्थम् ।।

</6-1-108>
एङः पदान्तादति ।। <6-1-109> ।।
एङ् यः पदान्तस्तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेऽत्र। वायोऽत्र। अयवादेशयोरयमपवादः।
एङ इति किम्? दध्यत्र। मध्वत्र। पदान्तादिति किम्? चयनम्। लवनम्। अतीति किम्? वायो इति। भानो इति। वायविति। भानविति। तपरकरणं किम् ? वायवायाहि ।।

</6-1-109>
ङसिङसोश्च ।। <6-1-110> ।।
`एङः इति वर्तते, `अति इति च। एङ उत्तरयोर्ङसिङसोरति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेरागच्छति। अग्नेः स्वम्। वायोरागच्छति। वायोः स्वम्।
अपदान्तार्थ आरम्भः ।।

</6-1-110>
ऋत उत् ।। <6-1-111> ।।
`ङसिङसोः इत्येव। ऋकारान्तादुत्तरयोर्ङसिङसोरति परतः पूर्वपरयोरुकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्यतरव्यपदेशमिति उरण् रपरः(1-1-51/70) इति रपरत्वमत्र कृत्वा रात्सस्य(8-2-24/280) इति सलोपः कर्तव्यः ।।

</6-1-111>
ख्यत्यात्परस्य ।। <6-1-112> ।।
`ङसिङ्सोः इति वर्तते, `उत् इति च। ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणम्, ताभ्यां परस्य ङसिङसोरत उकारादेशो भवति। सख्युरागच्छति। सख्युः स्वम्। पत्युरागच्छति। पत्युः स्वम्।
खीशब्दस्योदाहरणम्--सह खेन वर्तत इति सखस्तमिच्छतीति क्यच्-सखीयत्, सखीयतेः सखीः, तस्य ङसिङसोः--सख्युरिति। तीशब्दस्यापि-लूनामिच्छति लूनीति, लूनीयतेः क्विपि लुप्ते लून्युरागच्छति। लून्युः स्वम्। निष्ठानत्वम्(8-2-44/3018) पूर्वत्रासिद्धम्(8-2-1/12) इत्यसिद्धम्। विकृतनिर्देशादेवेह न भवति--अतिसखेरागच्छति, सेनापतेरागच्छतीति। सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते, न तदन्तस्य ।।

</6-1-112>

अतो रोरप्लुतादप्लुते ।। <6-1-113> ।।
`अति इति, `उत् इति वर्त्तते। अकारादप्लुतादुत्तरस्य रो रेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति। वृक्षोऽत्र। प्लक्षोऽत्र। भोभगोअघोऽपूर्वस्य योऽशि(8-3-17/167) इत्यस्मिन्प्राप्ते उत्वं विधीयते। रुत्वस्याश्रयत्वात् पूर्वत्रासिद्धम्(8-2-1/12) इत्यसिद्धं न भवति।
अत इति किम्? अग्निरत्र। तपरकरणं किम् ? वृक्षा अत्र। सानुबन्धग्रहणं किम् ? स्वरत्र। प्रातरत्र।
अतीत्येव--वृक्ष इह। तस्यापि तपरत्वादत्र न भवति। वृक्ष आश्रितः। अप्लुतादिति किम्? सुस्रोता3 अत्र न्वसि। अप्लुत इति किम्? तिष्ठतु पय अ3श्विन्। अत्र प्लुतस्यासिद्धत्वादुत्वं प्राप्नोतीति `अप्लुतादप्लुते इत्युच्यते ।।

</6-1-113>
हशि च ।। <6-1-114> ।।
हशि च परतोऽत उत्तरस्य रोरुकारादेशो भवति। पुरुषो याति। पुरुषो हसति। पुरुषो ददाति ।।

</6-1-114>
प्रकृत्याऽन्तःपादमव्यपरे ।। <6-1-115> ।।
एङोऽतीत्येव। `एङः इति यत्पञ्चम्यन्तमनुवर्त्तते तदर्थादिह प्रथमान्तं भवति। प्रकृतिरिति स्वभावः। कारणं वाऽभिधीयते। अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे। पादशब्देन च ऋक्पादस्यैव ग्रहणमिष्यते, न तु श्लोकपादस्य। अवकारयकारपरेऽति परत एङ् प्रकृत्या भवति। स्वभावेनावतिष्ठते कारणात्मना वा भवति न विकारमापद्यते। तौ चेन्निमित्तकार्यिणावन्तः पादमृक्पादमध्ये भवतः। `ते अग्रे अश्वमायुञ्जन्(वा.सं.9-7)। `ते अस्मिन् जवमादधुः(वा.सं.9-7)। `उपप्रयन्तो अध्वरम्(ऋ.1-74-1)। `शिरो अपश्यम्(ऋ.1-163-6)। `सुजाते अश्वसूनृते(ऋ.5-79-1)। `अध्वर्यो अद्रिभिः सुतम्(ऋ.9-51-1)।
अन्तः पादमिति किम् ? `कया मती कृत एतास एतेऽर्चयन्ति(ऋ.1-165-1)। अव्यपर इति किम्? `तेऽवदन्(ऋ.10-109-1)। `तेऽयस्मयम्(वा.सं.12-63)। एङिति किम् ? `अन्वग्निरुषसामग्रमख्यत्(अ.वे.7-82-4)।
केचिदिदं सूत्रम् नान्तःपादमव्यपरे इति पठन्ति, ते संहितायामिह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ।।

</6-1-115>
अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।। <6-1-116> ।।
अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्यु इत्येतेषु यकारवकारपरेऽप्यति परतोऽन्तः पादमेङ् प्रकृत्या भवति। `अग्निः प्रथमो वसुभिर्नो अव्यात्(तै.सं.2-1-12-1)। `मित्रमहो अवद्यात्(ऋ.4-4-15)। `मा शिवासो अवक्रमुः(ऋ.7-32-27)। ते नो अव्रताः। शतधारो अयं मणिः। `ते नो अवन्तु पितरः(ऋ.10-15-1)।
`कुशिकासो अवस्यवः(ऋ.3-42-9) ।।

</6-1-116>
यजुष्युरः ।। <6-1-117> ।।
उरःशब्द एदन्तो यजुषि विषयेऽति प्रकृत्या भवति। `उरो अन्तरिक्षम्(वा.सं.4-7)।
अपरे `यजुष्युरो इति सूत्रं पठन्ति, उकारान्तमुरुशब्दं सम्बुध्यन्तमधीयते। त इदमुदाहरन्ति--उरो अन्तरिक्षं सजूरिति।
यजुषि पादानामभावादनन्तः पादार्थं वचनम्।।

</6-1-117>
आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बालेऽम्बिकेपूर्वे ।। <6-1-118> ।।
`यजुषि इत्येव। आपो, जुषाणो, वृष्णो, वर्षिष्ठे-इत्येते शब्दा अम्बे, अम्बाले, इत्येतौ च यावम्बिकेशब्दात्पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति। `आपो अस्मान्मातरः शुन्धयन्तु(वा.सं.4-2)। `जुषाणो असुराज्यस्य(वा.सं.5-35)। `वृष्णो अंशुभ्यां गभस्तिभिः(वा.सं.7-1)। `वर्षिष्ठे अधिनाके(तै.सं.1-1-8-1)। `अम्बे अम्बाले अम्बिके(तै.सं.7-4-19-1)--यजुषीदमीदृशमेव पठ्यते। अस्मादेव निपातनाद् अम्बार्थनद्योर्ह्रस्वः(7-6-107/267) इति ह्रस्वत्वं न भवति ।।

</6-1-118>
अङ्ग इत्यादौ च ।। <6-1-119> ।।
अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुषि विषयेऽति प्रकृत्या भवति। ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। `ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्(वा.सं.6-20)। ऐन्द्रः प्राणो अङ्गे अङ्गे अरोचिषम् ।।

</6-1-119>

अनुदात्ते च कुधपरे ।। <6-1-120> ।।
`यजुषि इत्येव। अनुदात्ते चाति कवर्गधकारपरे परतो यजुषि विषये एङ् प्रकृत्या भवति। `अयं सो अग्निः(वा.सं.5-37)। अयं सो अध्वरः। अनुदात्ते इति किम् ? अधोऽग्रे। अग्रशब्द आद्युदात्तो निपात्यते। कुधपरे इति किम् ? `सोऽयमग्निः सहस्रियः(वा.सं.15-52) ।।

</6-1-120>
अवपथासि च ।। <6-1-121> ।।
`यजुषि इत्येव। `अनुदात्ते इति चशब्देनानुकृष्यते। अवपथाः-शब्देऽनुदात्तेऽकारादौ परतो यजुषि विषय एङ् प्रकृत्या भवति। `त्री रुद्रेभ्यो अवपथाः(काठ.सं.30-6-32)। वपेर्लङि थासि तिङ्ङतिङः(8-1-28/3935) इति निघातेनानुदात्तत्वम्।
अनुदात्त इत्येव--यद्रुद्रेभ्योऽवपथाः। निपातैर्यद्यदिहन्त(8-1-30/3937) इति निघातः प्रतिषिध्यते ।।

</6-1-121>
सर्वत्र विभाषा गोः ।। <6-1-122> ।।
सर्वत्र---छन्दसि भाषायां च, अति परतो गोरेङ् प्रकृत्या भवति विभाषा। गोऽग्रम्, गो अग्रम्। छन्दसि--`अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोश्वाः(तै.सं.5-2-9-4) ।।

</6-1-122>
अवङ् स्फोटायनस्य ।। <6-1-123> ।।
`अति इति निवृत्तम् ।। `अचि इत्येतत्पुनरनुवर्तत एव। अचि परतो गोः स्फोटायनस्याचार्यस्य मतेनावङादेशो भवति। गवाग्रम्, गोऽग्रम्। गवाजिनम्, गोऽजिनम्। गवौदनम्, गवोदनम्। गवोष्ट्रम्, गवुष्ट्रम्।
आद्युदात्तश्चायमादेशो निपात्यते। स निपातनस्वरो वहुव्रीहौ प्रकृतिस्वरविधाने भवति--गावो अग्रमस्य गवाग्र इति। अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते।
स्फोटायनग्रहणं पूजार्थम्, `विभाषा इत्येव हि वर्त्तते।
व्यवस्थितविभाषेयम्। तेन गवाक्ष इत्यत्र नित्यमवङ् भवति ।।

</6-1-123>
इन्द्रे च नित्यम् ।। <6-1-124> ।।
इन्द्रशब्दस्थेऽचि परतो गोर्नित्यमवङादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञस्वरः ।।

</6-1-124>
प्लुतप्रगृह्या अचि ।। <6-1-125> ।।
प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या भवन्ति। देवदत्ता3 अत्र न्वसि। यज्ञदत्ता3 इदमानय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः- अग्नी इति। वायू इति। खट्वे इति। माले इति।
अचीत्यनुवर्त्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम्। तेनेह न भवति-जानु उ अस्य रुजति जान्वस्य रुजति। प्रगृह्यादुकारात्परस्याकारस्य सवर्णदीर्घत्वं प्रत्ययनिमित्तत्वादत्र प्रकृतिभावो न भवति।
नित्यग्रहणमिहानुवर्त्तते। प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्याद्, इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च(6-1-127/91) इत्येतन्मा भूदिति ।।

</6-1-125>
आङोऽनुनासिकस्छन्दसि ।। <6-1-126> ।।
आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति। `अभ्रआँ अपः(ऋ.5-48-1)। `गभीरआँ उग्रपुत्रे जिघांसत(ऋ.8-67-11)।
केचिद् आङोऽनुनासिकश्छन्दसि बहुलम् इत्यधीयते। तेनेह न भवति--इन्द्रो बाहुभ्यामातरत्। आ अतरत्।

</6-1-126>
इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।। <6-1-127> ।।
इकोऽसवर्णेऽचि परतः शाकल्यस्याचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्येकः स्थाने भवति। दधि अत्र, दध्यत्र। मधु अत्र, मध्वत्र। कुमारी अत्र, कुमार्यत्र। किशोरि अत्र, किशोर्यत्र।
इक इति किम्? खट्वेन्द्रः। असवर्ण इति किम् ? कुमारीन्द्रः।
शाकल्यग्रहणं पूजार्थम्, आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः।

- सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः *(म.भा.3-89)। सिति-`अयं ते योनिर्ऋत्वियः(ऋ.3-29-10)। नित्यसमासे--व्याकरणम्। कुमार्यर्थम्।
- ईषा अक्षादिषु च्छन्दसि प्रकृतिभावमात्रं वक्तव्यम् *(म.भा.3-90)। ईषा अक्षः। `का ईमरे पिशङ्गिला(वा.सं.23-55)। पथा अगमन् ।।

</6-1-127>
ऋत्यकः ।। <6-1-128> ।।
`साकल्यस्य ह्रस्वश्च इत्येतदनुवर्त्तते। ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृत्या भवन्ति, ह्रस्वश्च तस्याकः स्थाने भवति। खट्व ऋश्यः। कुमारि ऋश्यः। होतृ ऋश्यः।
ऋतीति किम्? खट्वेन्द्रः। अक इति किम्? वृक्षावृश्यः।
सवर्णार्थमनिगर्थं च वचनम् ।।

</6-1-128>
अप्लुतवदुपस्थिते ।। <6-1-129> ।।
उपस्थितं नामानार्ष इतिकरणः, समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते तस्मिन्परतः प्लुतोऽप्लुतवद्भवति। प्लुतकार्यं प्रकृतिभावं न करोति। सुश्लोका3 इति, सुश्लोकेति। सुमङ्गला3 इति, सुमङ्गलेति ।
वत्करणं किम्? अप्लुत इत्युच्यमाने प्लुत एव प्रतिषिध्येत।
तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्--अग्नी3 इति। वायू3 इति ।।

</6-1-129>
ई3 चाक्रवर्मणस्य ।। <6-1-130> ।।
ई3कारः प्लुतोऽचि परतश्चाक्रवर्मणस्याचार्यस्य मतेनाप्लुतवद्भवति। अस्तु हीत्यब्रूताम्, अस्तु ही3 इत्यब्रूताम्। चिनु हीदम्, चिनुही3 इदम्।
चाक्रवर्मणग्रहणं विकल्पार्थम्-तदुपस्थिते निवृत्त्यर्थम्, अनुपस्थिते प्राप्त्यर्थमित्युभयत्रविभाषेयम्।
ईकारादन्यत्राप्ययमप्लुतवद्भाव इष्यते। वशा3 इयम्, वशेयम् ।।

</6-1-130>
दिव उत् ।। <6-1-131> ।।
एङः पदान्तादति(6-1-109/86) इत्यतः पदग्रहणमनुवर्तते। `दिवः इति प्रातिपदिकं गृह्यते, न धातुः; सानुबन्धकत्वात्। दिवः पदस्य उकारादेशो भवति। दिवि कामो यस्य द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्। द्युभिः।
निरनुबन्धकग्रहणादिह न भवति-अक्षद्यूभ्याम्, अक्षद्यूभिरिति।
तपरकरणमूठो निवृत्त्यर्थम्-द्युभ्याम्, द्युभिरिति। अत्र हि परत्वादूठ् प्राप्नोति।

पदस्येति किम्? दिवौ। दिवः ।।

</6-1-131>
एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।। <6-1-132> ।।
एतत्तदौ यावककारौ नञ्समासे न वर्त्तेते तयोर्यः सुशब्दः, कश्च तयोः सुशब्दः? यस्तदर्थेन सम्बद्धः, तस्य संहितायां विषये हलि परतो लोपो भवति। एष ददाति। स ददाति। एष भुङ्क्ते। स भुङ्क्ते।
एतत्तदोरिति किम्? यो ददाति। यो भुङ्क्ते। सुग्रहणं किम्? एतौ गावौ चरतः। अकोरिति किम्? एषको ददाति। सको ददाति। `तन्मध्यपतितस्तद्ग्रहणेन गृह्यते(व्या.प.21) इति रूपभेदेऽपि साकच्कावेतत्तदावेव भवतः।
अनञ्समास इति किम्? एनेषो ददाति। असो ददाति। उत्तरपदार्थप्रधानत्वात् नञ्समासस्यैतत्तदोरेवात्र सम्बद्धः सुशब्दः।
हलीति किम्? एषोऽत्र। सोऽत्र ।।

</6-1-132>
स्यश्छन्दसि बहुलम् ।। <6-1-133> ।।
`स्य इत्येतस्य च्छन्दसि हलि परतो बहुलं सोर्लोपो भवति। `उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि(ऋ.4-40-4)। `एष स्य ते मधुमाँ इन्द्र सोमः(ऋ.9-97-46)।
न च भवति--यत्र स्यो निपतेत् ।।

</6-1-133>
सोऽचि लोपे चेत्पादपूरणम् ।। <6-1-134> ।।
`सः इत्येतस्याचि परतः सुलोपो भवति, लोपे सति चेत्पादः पूर्यते। `सेन्द्र राजा क्षयति चर्षणीनाम्(ऋ.1-32-15)। `सौषधीरनुरुध्यसे(ऋ.8-43-9)।
लोपे चेत्पादपूरणमिति किम् ? स इव व्याघ्रो भवेत्।
अचीति विस्पष्टार्थम् ।
पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति, तेनेदमपि सिद्धं भवति--
सैष दाशरथी रामः, सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी, सैष भीमो महाबलः ।।

</6-1-134>
सुट् कात्पूर्वः ।। <6-1-135> ।।
अधिकारोऽयम् पारस्करप्रभृतीनि च संज्ञायाम्(6-1-175/1071) इति यावत्। इत उत्तरं यद्वक्ष्यामस्तत्र `सुट् इति, `कात्पूर्वः इति चैतदधिकृतं वेदितव्यम्। वक्ष्यति--सम्पर्युपेभ्यः करोतौ भूषणे(6-1-137/2550)। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम् ।
कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्। तथा हि-संस्कृषीष्ट, संस्क्रियते इति संयोगादिलक्षणाविड्गुणौ न भवतः। तिङ्ङतिङः(8-1-18/3935) इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात् ? `स्वरविधौ व्यञ्जनमविद्यमानवत्(व्या.प.37) इति वचनान्नास्ति व्यवधानम्।
सञ्चस्करतुः, सञ्चस्करुः--इति गुणः कथम् ? `तन्मध्यपतितस्तद्ग्रहणेन गृह्यते(व्या.प.21) इति।
संयोगोपधग्रहणं च ऋतश्च संयोगादेर्गुणः(7-4-10/2379) इत्यत्र कर्तव्यम्। टित्करणम्--सुट्स्तुस्वञ्जाम्(8-3-65/2270) इत्यत्र विशेषणार्थम् ।।

</6-1-135>
अडभ्यासव्यवायेऽपि ।। <6-1-136> ।।
अड्व्यवाये, अभ्यासव्यवायेऽपि सुट् कात्पूर्वो भवति। समस्करोत्। समस्कार्षीत्। सञ्चस्कार। परिचस्कार।
किमर्थं पुनरिदमुच्यते, `पूर्वं धातुरुपसर्गेण युज्यते इति तत्र `धातूपसर्गयोः कार्यमन्तरङ्गम् इति पूर्वं सुट् क्रियते, पश्चादडभ्यासौ ? `अभक्तश्च सुट् इत्युक्तम्, ततः सकारादुत्तरावडभ्यासावनिष्टे देशे स्याताम्। एतस्मिंस्तु सत्यत एव वचनात् कृतयोरडभ्यासयोस्तद्व्यवायेऽपि सुट् कात्पूर्वः क्रियत इति सिद्धमिष्टं भवति ।।

</6-1-136>
सम्पर्युपेभ्यः करोतौ भूषणे ।। <6-1-137> ।।
सम्, परि, उप--इत्येतेभ्यो भूषणार्थे करोतौ परतः सुट् कात्पूर्वो भवति। संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम्--अत्र `सम्पुंकानां सत्वम्(8-3-34/138.वा.) इति समो मकारस्य सकारः, पूर्वस्य चाकारस्यानुनासिकः। परिष्कर्ता, परिष्कर्तुम्, परिष्कर्तव्यम्--सुट्स्तुस्वञ्जाम् इति षत्वम्। उपस्कर्ता, उपस्कर्तुम्, उपस्कर्तव्यम्।
भूषण इति किम् ? उपकरोति।
सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते--संस्कृतमन्नमिति ।।

</6-1-137>
समवाये च ।। <6-1-138> ।।
समवायः=समुदायः, तस्मिश्चार्थे करोतौ सम्पर्युपेभ्यः कात्पूर्वः सुडागमो भवति। तत्र नः संस्कृतम्। तत्र नः परिष्कृतम्। तत्र नः उपस्कृतम्। समुदितमित्यर्थः ।।

</6-1-138>
उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ।। <6-1-139> ।।
सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा=प्रतियत्नः। विकृतमेव वैकृतम्, प्रज्ञादित्वादण्(5-4-38/2106)। गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः। एतेष्वर्थेषु गम्यामानेषु करोतौ धातौ परत उपात् सुट् कात्पूर्वो भवति। प्रतियत्ने तावत्-एधो दकस्योपस्कुरुते। काण्डगुणस्योपस्कुरुते।
वैकृते--उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति।
वाक्याध्याहारे--उपस्कृतं जल्पति। उपस्कृतमधीते।
एतेष्विति किम् ? उपकरोति ।।

</6-1-139>
किरतौ लवने ।। <6-1-140> ।।
`उपात् इत्येव। उपादुत्तरस्मिन्किरतौ धातौ लवनविषये सुट् कात्पूर्वो भवति। उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीरा लुनन्ति। विक्षिप्य लुनन्तीत्यर्थः।

- णमुलत्र वक्तव्यः * लवन इति किम् ? उपकिरति देवदत्तः ।।

</6-1-140>
हिंसायां प्रतेश्च ।। <6-1-141> ।।
`किरतौ इत्येव। उपात्प्रतेश्चोत्तरस्मिन्किरतौ विषये सुट् कात्पूर्वो भवति हिंसायां विषये। उपस्कीर्णं हं ते वृषल भूयात्। प्रतिस्कीर्णं हं ते वृषल भूयात्। तथा ते वृषल विक्षेपो भूयाद् यथा हिंसामनुबध्नातीत्यर्थः।
हिंसायामिति किम् ? प्रतिकीर्णम् ।।

</6-1-141>
अपाच्चतुष्पाच्छकुनिष्वालेखने ।। <6-1-142> ।।
`किरतौ इत्येव। अपादुत्तरस्मिन्किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात्पूर्वो भवति। अपस्किरते वृषभो हृष्टः। अपस्किरते कुक्कुटो भक्ष्यार्थी। अपस्किरते श्वा आश्रयार्थी। आलिख्य विक्षिपतीत्यर्थः।
चतुष्पाच्छकुनिष्विति किम् ? अपकिरति देवदत्तः।

- हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् *(म.भा.3-94)। इह मा भूत्--- अपकिरति श्वा ओदनपिण्डमाशितः।
- हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसंख्यानम् * (म.भा.3-94)।।

</6-1-142>
कुस्तुम्बुरूणि जातिः ।। <6-1-143> ।।
`कुस्तुम्बुरूणि इति सुट् निपात्यते जातिश्चेद्भवति। कुस्तुम्बुरुर्नामौषधिजातिः = धान्यकम्। तत्फलान्यपि कुस्तुम्बुरूणि। सूत्रनिर्द्देशे नपुंसकलिङ्गमविवक्षितम्। <K.4.619> जातिरिति किम् ? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि। तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा ।।

</6-1-143>
अपरस्पराः क्रियासातत्ये ।। <6-1-144> ।।
`अपरस्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने। अपरस्पराः सार्था गच्छन्ति। सन्ततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियासातत्य इति किम् ? अपरपराः सार्थाः गच्छन्ति। अपरे परे च सकृदेव गच्छन्तीत्यर्थः। नात्र गमनस्य सातत्य-प्रबन्धो विवक्षितः। किमिदं सातत्यमिति ? सततस्य भावः सातत्यम्। कथं सततम् ? समस्तते विकल्पेन मकारलोपो विधीयते।
<K.4.620> लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि।
समो वा हिततयोर्मांसस्य पचि युड्घञोः ।।

</6-1-144>
गोष्पदं सेवितासेवितप्रमाणेषु ।। <6-1-145> ।।
गोष्पदमिति सुट् निपात्यते, तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये। गोष्पदः देशः। गावः पद्यन्ते यस्मिन् देशे स गोभिः <K.4.621> सेवितो देशो गोष्पद इत्युच्ते। असेविते - अगोष्पदानि अरण्यानि। असेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थं निपातनम्। यद्येवम्, नार्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति ? सत्यमेतत्; यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्याद् - गोष्पदमिति। यत्र त्वत्यन्तासम्भव एव, <K.4.622> तत्र न स्याद् - अगोष्पदानि अरण्यानि इति; असेवितग्रहणात्तत्रापि भवति। यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवः, तान्येवमुच्यन्ते। प्रमाणे - गोष्पदमात्रं क्षेत्रम्, गोष्पदपूरं वृष्टो देवः। नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किं तर्हि ? क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम् ।
सेवितासेवितप्रमाणेष्विति किम् ? गोः पदं गोपदम् ।।

</6-1-145>
आस्पदं प्रतिष्ठायाम् ।। <6-1-146> ।।
आत्मयापनाय स्थानम् = प्रतिष्ठा, तस्यामास्पदमिति सुट् <K.4.623> निपात्यते। आस्पदम् अनेन लब्धम्।

प्रतिष्ठायामिति किम् ? आ पदात् - आपदम् ।।

</6-1-146>
आश्चर्यमनित्ये ।। <6-1-147> ।।
अनित्यतया विषयभूतयाऽद्भुतत्वमिह लक्ष्यते, तस्मिन्नाश्चर्यं निपात्यते। `चरेराङि चागुरौ इति यत्प्रत्यये कृते निपातनात्सुट्। आश्चर्यं यदि स भुञ्जीत। आश्चर्यं यदि सोऽधीयीत। चित्रमद्भुतमित्यर्थः।
अनित्य इति किम् ? आचर्यं कर्म शोभनम् ।।

</6-1-147>
वर्चस्केऽवस्करः ।। <6-1-148> ।।
कुत्सितं वर्चो वर्चस्कम् = अन्नमलम्, तस्मिन्नभिधेयेऽवस्कर इति <K.4.624> निपात्यते। अवपूर्वस्य किरतेः कर्मणि ॠदोरप् इत्यप्, निपातनात्सुट्। अवकीर्यत इति अवस्करः = अन्नमलम्। तत्सम्बन्धाद्देशोऽपि तथोच्यते।
वर्चस्क इति किम् ? अवकरः ।।

</6-1-148>
अपस्करो रथाङ्गम् ।। <6-1-149> ।।
`अपस्कर इति निपात्यते रथाङ्गं चेद्भवति। अपपूर्वात्किरतेः ॠदोरप् इत्यप्, निपातनात् सुट्। अपस्करः रथावयवः ।
रथाङ्गमिति किम् ? अपकरः ।।

</6-1-149>
विष्किरः शकुनिर्विकिरो वा ।। <6-1-150> ।।
`विकिर इति किरतेर्विपूर्वस्य इगुपधज्ञाप्रीकिरः कः इति कप्रत्यये विहिते सुट् निपात्यते, शकुनिश्चेद्भवति, विकिरशब्दाभिधेयो वा शकुनिर्भवति। सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते। <K.4.625> `विष्किरो वा शकुनौ इति वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह -- तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् ।।

</6-1-150>
ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।। <6-1-151> ।।
चन्द्रशब्द उत्तरपदे ह्रस्वात्परः सुडागमो भवति मन्त्रविषये। `सुश्चन्द्रो(तै.सं.4-4-4-6) युष्मान्।
ह्रस्वादिति किम् ? `सूर्याचन्द्रमसाविव(ऋ.5-51-15)। मन्त्र इति किम् ? सुचन्द्रा पौर्णमासी।
उत्तरपदं समास एव भवतीति प्रसिद्धम्, तत इह न भवति शुक्रमसि, चन्द्रमसि ।।

</6-1-151>
<K.4.626>
प्रतिष्कशश्च कशेः ।। <6-1-152> ।।
`कश गतिशासनयोः इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्यैव षत्वम्।
ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः। वार्त्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कश इत्यभिधीयते।
कशेरिति किम् ? प्रतिगतः कशां प्रतिकशः अश्वः। अत्र यद्यपि कशेरेव कशाशब्दः, तथापि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम्। तेन धात्वन्तरोपसर्गान्न भवति ।।

</6-1-152>
प्रस्कण्वहरिश्चन्द्रावृषी ।। <6-1-153> ।।
प्रस्कण्व, हरिश्चन्द्र - इति सुट् निपात्यते, ऋषी चेदभिधेयौ भवतः। प्रस्कण्वः ऋषिः। हरिश्चन्द्रः ऋषिः।
हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषी इति किम् ? प्रकण्वः देशः। हरिचन्द्रः माणवकः ।।

</6-1-153>
<K.4.627>
मस्करमस्करिणौ वेणुपरिव्राजकयोः ।। <6-1-154> ।।
मस्कर, मस्करिन् - इत्येतौ यथासंख्यं वेणौ परिव्राजके च निपात्येते। मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणावभिधेये सुट् निपात्यते, परिव्राजके त्विनिरपि। मस्करः वेणुः। मस्करी परिव्राजकः।

वेणुपरिव्राजकयोरिति किम् ? मकरः ग्राहः, मकरी समुद्रः।
केचित्पुनरत्र माङ्युपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति, माङश्च ह्रस्वत्वम्, सुट् च। मा क्रियते येन प्रतिषिध्यते, स मस्करः वेणुः। वेणुग्रहणं च प्रदर्शनार्थम्। अन्यत्रापि भवति - मस्करः दण्ड इति। परिव्राजकेऽपि माङ्युपपदे करोतेस्ताच्छील्य इनिर्निपात्यते, माङो ह्रस्वत्वं सुट् च तथैव। माकरणशीलो मस्करी कर्मापवादित्वात्परिव्राजक उच्यते। स ह्येवमाह -- मा कुरुत कर्माणि, शान्तिर्वः श्रेयसीति ।।

</6-1-154>
<K.4.628>
कास्तीराजस्तुन्दे नगरे ।। <6-1-155> ।।
कास्तीर, अजस्तुन्द -- इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये। ईषत्तीरमस्य, अजस्येव तुन्दमस्येति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यमेतयोः। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्।
नगर इति किम् ? कातीरम्। अजतुन्दम् ।।

</6-1-155>
कारस्करो वृक्षः ।। <6-1-156> ।।
`कारस्कर इति सुट् निपात्यते, वृक्षश्चेद्भवति। कारं करोतीति दिवाविभानिशाप्रभाभास्कारान्त इति टप्रत्ययः। कास्करः वृक्षः। वृक्ष इति किम् ? कारकरः। केचित्, पारस्करप्रभृतिष्वेव कारस्करः वृक्ष इति पठन्ति ।।

</6-1-156>
पारस्करप्रभृतीनि च संज्ञायाम् ।। <6-1-157> ।।।
<K.4.629>
पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये। पारस्करः देशः। कारस्करः वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा।

- तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च *। तस्करः चोरः। बृहस्पतिः देवता।

चोरदेवतयोरिति किम् ? तत्करः। बृहत्पतिः। संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्।

- प्रात्तुम्पतौ गवि कर्तरि *। तुम्पतौ धातौ प्रशब्दात्परस्सुट् भवति गवि कर्तरि। प्रस्तुम्पति गौः।

गवीति किम् ? प्रतुम्पति वनस्पतिः। पारस्करप्रभृतिराकृतिगणः।
<K.4.630> अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः। प्रायश्चित्तम्। प्रायश्चित्तिः। यदुक्तम् -- `प्रायस्य चित्तिचित्तयोः सुडस्कारो वा इति, तत्संगृहीतं भवति ।।

</6-1-157>
अनुदात्तं पदमेकवर्जम् ।। <6-1-158> ।।
परिभाषेयं स्वरविधिविषया। यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते, तत्रानुदात्तं पदमेकं वर्जयित्वा भवतीत्येतदुपस्थितं द्रष्टव्यम्। अनुदात्ताच्कमनुदात्तम्। कः पुनरेको वर्ज्यते ? यस्यासौ स्वरो विधीयते। वक्ष्यति--धातोः(6-1-162/3671) अन्त उदात्तो भवतीति; गोपायति, धूपायति। धातोरन्त्यमचं वर्जयित्वा परिशिष्टमनुदात्तं भवति। धातुस्वरं श्नास्वरो बाधते-लुनाति, पुनाति। श्नास्वरं तस्स्वरः-- लुनीतः, पुनीतः. तस्स्वरमाम्स्वरः--लुनीतस्तराम्, पुनीतस्तराम् ।।

`आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ।।(म.भा.3-97)
आगमस्य--चतुरनडुहोरामुदात्तः(7-1-18/331) चत्वारः, अनड्वाहः। आगमस्वरः प्रकृतिस्वरं बाधते।
विकारस्य-अस्थनि, दधनीत्यनङ्स्वरः प्रकृतिस्वरं बाधते। प्रकृतेः--गोपायति, धूपायति। प्रकृतिस्वरः प्रत्ययस्वरं बाधते। प्रत्ययस्य-कर्त्तव्यम्, हर्त्तव्यम्। प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः।
परनित्यान्तरङ्गापवादैः स्वरैर्व्यवस्था, सति शिष्टेन च। यो हि यस्मिन् सति शिष्यते, स तस्य बाधको भवति। तथा हि-गोपायतीत्यत्र धातुस्वरापवादः प्रत्ययस्वरः, तेनैव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते।
* विभक्तिस्वरान्नञ्स्वरो बलीयान् इति वक्तव्यम् * (म.भा.3-100)
अतिस्त्रिः इत्यत्र तिसृभ्यो जसः(6-1-166/3713) इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते।

- विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयान् इति वक्तव्यम् *(3-100) अचत्वारः, अनडुवाहः इति। यस्य विभक्तिर्निमित्तमामः, तस्य यदुदात्तत्वं तन्नञ्स्वरेण बाध्यते।

पदग्रहणं किम् ? देवदत्त गामभ्याज शुक्लां दण्डेनेति वाक्ये हि प्रतिपदं स्वरः पृथग् भवति। परिमाणार्थं चेदं पदग्रहणं पदाधिकारस्य निवृत्तिं करोति। तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवति। तथा च-कुवल्या विकारः कौवलमित्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति। तथा गर्भिणीशब्दश्चानुदात्तादिलक्षणस्याञो बाधनार्थं भिक्षादिषु पठ्यते।
कुवलगर्भशब्दावाद्युदात्तौ ।।

</6-1-158>
कर्षात्वतो घञोऽन्त उदात्तः ।। <6-1-159> ।।
कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति। कर्षः। पाकः। त्यागः। रागः। दायः। धायः। ञ्नित्यादिर्नित्यम्(6-1-197/3686) इत्यस्यापवादः।
कर्ष इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः। तौदादिकस्य घञन्तस्य कर्ष इत्याद्युदात्त एव भवति ।।

</6-1-159>
उञ्छादीनां च ।। <6-1-160> ।।
`उच्छ इत्येवमादीनामन्त उदात्तो भवति।
उच्छः, म्लेच्छः, जञ्जः, जल्पः--एते घञन्ता इति, ञित्स्वरः प्राप्तः। जपः, व्यधः--इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः। केचित्तु वध इति पठन्ति। युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनमिदमिष्यते। कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगः, अन्यत्र हि योग एव भवति।

- गरो दूष्येऽबन्तः *(ग.सू.162)। गरशब्दोऽबन्तः, स दूष्य एवान्तोदात्तः। गरः=विषम्। अन्यत्राद्युदात्त एव ।।
- वेदवेगवेष्टबन्धाः करणे *(ग.सू.163)। हलश्च(3-3-121/3100) इति धञन्ताः, एते करणेऽन्तोदात्ता भवन्ति। भावे आद्युदात्ता एव।
- स्तुयुद्रुवश्छन्दसि *(ग.सू.164)। उपसमस्तार्थमेतत्। परिष्टुत्। संयुत्। परिद्रुत्।
- वर्तनिः स्तोत्रे *(ग.सू.165)। स्तोत्रम्=साम, तत्स्थो वर्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः।
- श्वभ्रे दरः *(ग.सू.166)। श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तः। अन्यत्राबन्तत्वादाद्युदात्तः।
- साम्बतापौ भावगर्हायाम् *(ग.सू.167)। अन्तोदात्तौ, अन्यत्राद्युदात्तौ।
- उत्तमशश्वत्तमशब्दौ सर्वत्र *(ग.सू.168)। केचित्तु `भावगर्हायाम् इति अत्राप्यनुवर्तयन्ति।
- भक्षमन्थभोगदेहाः *(ग.सू.169)। एते घञन्ताः। भक्षिर्ण्यन्तोऽपि घञन्त एव; एरच्(3-3-56/3231)अण्यन्तानाम् इति वचनात् ।।

</6-1-160>
अनुदात्तस्य च यत्रोदात्तलोपः ।। <6-1-161> ।।
`उदात्त इति वर्तते। यस्मिन्ननुदात्ते परत उदात्तो लुप्यते, तस्यानुदात्तस्यादिरुदात्तो भवति। कुमार ई कुमारी।
कुमारशब्दोऽन्तोदात्तः, तस्य ङीप्यनुदात्ते उदात्तो लुप्यते। अनुदात्तो ङीब् उदात्तः, भस्य टेर्लोपः(7-1-88/368)। पथः। पथा। पथे। पथिन्-शब्दोऽन्तोदात्तः। कुमुदनडवेतसेभ्यो ड्मतुप्(4-2-87/1306)। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदादयोऽन्तोदात्ताः। ड्मतुबनुदात्तः।
अनुदात्तस्येति किम् ? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दः थाथादिस्वरेण(6-2-144/3878) अन्तोदात्तः। तस्य यति तित्स्वरितम्(6-1-185/3799) इति स्वरिते उदात्तो लुप्यते ? नैतदस्ति; स्वरिते हि विधीयमाने परिशिष्टमनुदात्तम्, तत् कुत उदात्तलोपः! तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम्।
`अन्तः इति हि प्रकृतत्वादन्तस्य स्यात्-मा हि धुक्षाताम्, मा हि धुक्षाथाम् ।
यत्रेति किम् ? भार्गवः, भार्गवौ, भृगवः। प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक्।
उदात्तग्रहणं किम् ? बैदी। और्वी ।।

</6-1-161>
धातोः ।। <6-1-162> ।।
`अन्तः इत्येव। धातोरन्त उदात्तो भवति। पचति। पठति। ऊर्णोति। गोपायति। याति ।।

</6-1-162>
चितः ।। <6-1-163> ।।
चितोऽन्त उदात्तो भवति। भञ्जभासमिदो घुरच्(3-2-161/3141) भङ्गुरम्। भासुरम्। मेदुरम्। आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्(2-4-70/1152), कुण्डिनाः।

चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते। बहुपटवः। उच्चकैः ।।

</6-1-163>
तद्धितस्य ।। <6-1-164> ।।
`चितः इत्येव। चितस्तद्धितस्यान्त उदात्तो भवति। गोत्रेकुञ्जादिभ्यश्च्फञ्(4-1-18/1099), कौञ्जायनाः।
किमर्थमिदम् ? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति ।।

</6-1-164>
कितः ।। <6-1-165> ।।
`तद्धितस्य इत्येव। तद्धितस्य कितोऽन्त उदात्तो भवति। नडादिभ्यः फक्(4-1-99/1101) नाडायनः। चारायणः। प्राग्वहतेष्ठक्(4-4-1/1548), आक्षिकः। शालाकिकः ।।

</6-1-165>
तिसृभ्यो जसः ।। <6-1-166> ।।
तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति। तिस्रस्तिष्ठन्ति।
उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य(8-2-4/3657) इत्यस्यापवादः।
शशि उदात्तयणो हल्पूर्वात्(6-1-174/3720) इति सिद्धे, अन्यत्र बहुवचने षट्त्रिचतुर्भ्यो हलादिः(6-1-179/3725) इति विधानाज्जसेव लभ्यत इति जस्ग्रहणमुपसमस्तार्थमेक इच्छन्ति, अतितिस्रावित्यत्र स्वरो मा भूदिति ।।

</6-1-166>
चतुरः शसि ।। <6-1-167> ।।
चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य।
चतस्रादेशे आद्युदात्तनिपातनाद्यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति-चतस्रः पश्येति ।।

</6-1-167>
सावेकाचस्तृतीयादिर्विभक्तिः ।। <6-1-168> ।।
`सौ इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा, वाग्भ्याम्, वाग्भिः। वाग्भ्यः। याता, याद्भ्याम्, याद्भिः।
साविति किम् ? राज्ञा। राज्ञे। एकाच इति किम् ? हरिणा। गिरिणा। राजसु। तृतीयादिरिति किम् ? वाचौ। वाचः। विभक्तिरिति किम् ? वाक्तरा। वाक्तमा।
सप्तमीबहुवचनस्य ग्रहणादिह न भवति--त्वया, त्वयीति ।।

</6-1-168>
अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।। <6-1-169> ।।
`एकाचः इति वर्तते, `तृतीयादिर्विभक्तिः इति च। नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात्परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवति। परमवाचा, परमवाचे। परमवाचे। परमत्वचा, परमत्वचे। यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव।
अन्तोदात्तादिति किम् ? अवाचा। सुवाचा। तत्पुरुषोऽयम्। तत्र तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय(6-2-2/3736) इति पूर्वपदप्रकृतिस्वरः।
उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणमेतत्स्यात्। तत्र शुनः ऊर्क्, श्वोर्ज्जा-इत्यत्रैवायं विधिः स्यात्।
अनित्यसमास इति किम् ? अग्निचिता। सोमसुता। उपपदमतिङ्(2-2-19/782) इत्ययं नित्याधिकारे समासो विधीयते, तत्र गतिकारकोपपदात् कृत्(6-2-139/3873) इत्युत्तरपदप्रकृतिस्वरेण चित्-शब्द उदात्तः।
यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः--अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेनेति। बहुव्रीहौ नञ्सुभ्याम्(6-2-172/3906) इत्युत्तरपदान्तोदात्तत्वं भवति ।।

</6-1-169>
आञ्चेश्छन्दस्यसर्वनामस्थानम् ।। <6-1-170> ।।
अञ्चेः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। `इन्द्रो दधीचो अस्थभिः(ऋ.1-84-13)। चौ(6-1-222/3652) इति पूर्वपदान्तोदात्तत्वं प्राप्तम्।

`तृतीयादिः इति वर्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्-प्रतीचो बाहून्प्रतिभङ्ग्ध्येषामिति ।।

</6-1-170>
ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ।। <6-1-171> ।।
ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव्--इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊठ्-प्रष्ठौहः, प्रष्ठौहा।

- ऊठ्युपधाग्रहणं कर्तव्यम् *। इह मा भूत्-अक्षद्युवा। अक्षद्युवे ।

इदम्-आभ्याम्, एभिः। `अन्तोदात्तात् इत्यधिकारादन्वादेशे न भवति-अथो आभ्यां निपुणमधीतमिति।
पदादयः--पद्दन्नोमास्(6-1-63/228) इत्येवमादयो निश्पर्यन्ता इह गृह्यन्ते। `निपदश्चतुरो जहि(खि.2-16-1)। `या दतो धावति(तै.सं.2-5-1-7)। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। `ग्रीवायां बद्धो अपि कक्ष
आसनि(ऋ.4-40-4)। `मत्स्यं न दीन उदनि क्षियन्तम्(ऋ.10-68-8) ।
अप्-अपः पश्य। अद्भिः। अद्भ्यः।
पुम्--पुंसः, पुम्भ्याम्, पुम्भ्यः। पुंसा, पुंसे।
रै--रायः पश्य। राभ्याम्। राभिः।
दिव्--दिवः पश्य। दिवा। दिवे ।।

</6-1-171>
अष्टनो दीर्घात् ।। <6-1-172> ।।
अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। घृतादिपाठादष्टन्-शब्दोऽन्तोदात्तः, तत्र झल्युपोत्तमम्(6-1-180/3683) इत्येतस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते।
दीर्घादिति किम् ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत(म.भा.3-107)।
इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति; अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन! ।।

</6-1-172>
शतुरनुमो नद्यजादी ।। <6-1-173> ।।
`अन्तोदात्तात् इति वर्तते। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति। तुदती, नुदती। लुनती, पुनती। तुदता, नुदता। लुनता, पुनता।
अनुम इति किम् ? तुदन्ती, नुदन्ती। अत्राप्यदुपदेशादिति लसार्वधातुकानुदात्तत्वे एकादेशः, तस्य एकादेश उदात्तेनोदात्तः(8-2-5/3658) इत्युदात्तत्वम्, तस्य पूर्वत्रासिद्धत्वं(8-2-1/12) नेष्यत इति शत्रन्तमन्तोदात्तं भवति।
नद्यजादी इति किम् ? तुदद्भ्याम्, नुदद्भ्याम्। तुदद्भिः, नुदद्भिः।
अन्तोदात्तादित्येव--ददती। दधतः। अभ्यस्तानामादिः(6-1-189/3673) इत्याद्युदात्तावेतौ।

- बृहन्महतोरुपसंख्यानम् *(म.भा.3-108)। बृहती, महती। बृहता, महता ।।

</6-1-173>
उदात्तयणो हल्पूर्वात् ।। <6-1-174> ।।
उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी अजादिर्याऽसर्वनामस्थानविभक्तिरुदात्ता भवति। कर्त्री, हर्त्री, प्रलवित्री, प्रसवित्री। कर्त्रा, हर्त्रा, प्रलवित्रा, प्रसवित्रा। तृजन्ता एतेऽन्तोदात्ताः।
उदात्तग्रहणं किम् ? कर्त्री, हर्त्री। कर्त्रा, हर्त्रा, तृन्नन्तोऽयमाद्युदात्तः। हल्पूर्वादिति किम् ? बहुतितवा ब्राह्मण्या।

- नकारग्रहणं कर्तव्यम् *(म.भा.3-108)। वाक्पत्नीयं कन्या ।।

</6-1-174>
नोङ्धात्वोः ।। <6-1-175> ।।
ऊङो धातोश्च य उदात्तयण् हल्पूर्वः, तस्मात्परा तृतीयादिविभक्तिर्नोदात्ता भवति। ब्रह्मबन्ध्वा, ब्रह्मबन्ध्वे। वीरबन्ध्वा, वीरबन्ध्वे। ऊङ् प्रत्ययस्वरेणोदात्तः। तेन सह य एकादेशः सोऽप्युदात्त इति उदात्तयण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य(8-2-4/3657) इति विभक्तिः स्वर्यते।
धातुयणः खल्वपि---सकृल्ल्वा। सकृल्ल्वे। खलप्वे। क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य ओः सुपि(6-4-83/281) इति यणादेशः ।।

</6-1-175>
ह्रस्वनुड्भ्यां मतुप् ।। <6-1-176> ।।
`अन्तोदात्ता इत्येव। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति। अग्निमान्। वायुमान्। कर्तृमान्। हर्तृमान्। नुटः खल्वपि--अक्षण्वता। शीर्शण्वता।
`अन्तोदात्तात् इदित्येव--वसुमान्(तै.सं.1-6-6-2)। वसुशब्द आद्युदात्तः, तस्मान्मतुब् अनुदात्त एव भवति।
अत्र च `स्वरविधौ व्यञ्जनमविद्यमानवत्(व्या.प.37) इत्येषा परिभाषा नाश्रीयते; नुड्ग्रहणात्। तेन मरुत्वानित्यत्र न भवति।

- रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् *(म.भा.3-108)। आरेवान्।
- त्रेश्च प्रतिषेधो वक्तव्यः *(म.भा.3-108)। `त्रिवतीर्याज्यानुवाक्या भवति(काठ.सं.11-1) इति ।।

</6-1-176>
नामन्यतरस्याम् ।। <6-1-177> ।।
ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च, तेन मतुपा ह्रस्वो विशेष्यते। मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम्। वायूनाम्। कर्तॄणाम्।
मतुपा ह्रस्वविशेषणं किम् ? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्, अन्यथा हि साम्प्रतिक एव स्यात्-तिसृणाम्, चतसृणामिति। सनुट्कस्य ग्रहणं किम् ? धेन्वाम्। शकट्याम्। उदात्तयणो हल्पूर्वत्(6-1-174/3720) इत्ययमन्तोदात्तः।
ह्रस्वादित्येव--कुमारीणाम्। अन्तोदात्तादित्येव--त्रपूणाम्। वसूनाम् ।।

</6-1-177>
ङ्याश्छन्दसि बहुलम् ।। <6-1-178> ।।
ङ्यन्ताच्छन्दसि विषये नामुदात्तो भवति बहुलम्। `देवसेनानामभिभञ्जतीनाम्(ऋ.10-103-8)। `बह्वीनां पिता(ऋ.6-75-5)। न च भवति-नदीनां पारे। `जयन्तीनां मरुतः(ऋ.10-103-8) ।।

</6-1-178>
षट्त्रिचतुर्भ्यो हलादिः ।। <6-1-179> ।।
`अन्तोदात्तात् इत्येतन्निवृत्तम्। षट्संज्ञकेभ्यः, त्रि, चतुर् इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति। षड्भिः, षड्भ्यः, षण्णाम्। `पञ्चानाम्(तै.सं.1-6-1-2)। `सप्तानाम्(ऋ.8-28-5)। त्रि-`त्रिभिः(ऋ.1-34-21), त्रिभ्यः, `त्रयाणाम्(तै.सं.3-4-3-8)। चतुर्-`चतुर्भ्यः(तै.सं.7-2-11-1), `चतुर्णाम्(ऋ.8-74-13)।
हलादिरिति किम् ? `चतस्रः(ऋ.1-62-6) पश्य ।।

</6-1-179>
झल्युपोत्तमम् ।। <6-1-180> ।।
षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमम्, तत्समीपे च यत्तदुपोत्तमम्। `पञ्चभिः(तै.सं.5-2-7-5)तपस्तपति। सप्तभिः परान् जयति। `तिसृभिश्च वहसे त्रिंशता(अ.वे.7-4-1)। `चतुर्भिः(वा.सं.23-13)।
झलीति किम् ? पञ्चानाम्। सप्तानाम्: अपोत्तममिति किम् ? षड्भिः। षड्भ्यः ।।

</6-1-180>
विभाषा भाषायाम् ।। <6-1-181> ।।
षट्त्रिचतुर्भ्यो वा झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति विभाषा भाषायं विषये। पञ्चभिः। सप्तभिः। तिसृभिः। चतसृभिः ।।

</6-1-181>
न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ।। <6-1-182> ।।
गो, श्वन्, साववर्णम्=सौ प्रथमैकवचने यदवर्णान्तम्, राड्, अङ्, क्रुङ्, कृद्--इत्येतेभ्यो यदुक्तं तन्न भवति। गवा। गवे। गोभ्यामिति। सावेकाचस्तृतीयादिर्विभक्तिः(6-1-168/3714) इति प्राप्तिः प्रतिषिध्यते। सुगुना। सुगवे। सुगुभ्याम्। अन्तोदात्तादुत्तरपदात्(6-1-169/3715) इति प्राप्तिः।
श्वन्-शुना। शुने। श्वभ्याम्। परमशुना। परमशुने। परमश्वभ्याम्। पूर्ववत्प्राप्तिः।
साववर्णः=सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम्--येभ्यः। तेभ्यः। केभ्यः।
राट्--राजतिः क्विबन्तः। राजा। परमराजः।
अङ्-अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात्। नाञ्चेः पूजायाम्(6-4-

60/424) इति प्रतिषिध्यते नलोपः। प्राञ्चा। प्राङ्भ्याम्। नलोपविषये तु भवत्येव विभक्तेरुदातत्वम्। प्राचा। प्राचे। प्राग्भ्याम्।
क्रुङ् क्विन्नन्त एव--क्रुञ्चा। परमक्रुञ्चा।
कृत्--करोतिः कृतिर्वा क्विबन्तः। कृता। परमकृता ।।

</6-1-182>
दिवो झल् ।। <6-1-183> ।।
दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति। द्युभ्याम्। द्युभिः। सावेकाचः(6-1-168/3714) इति ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः(6-1-171/3717) इति वा प्राप्तिः प्रतिषिध्यते।
झलीति किम् ? दिवा ।।

</6-1-183>
नृ चान्यतरस्याम् ।। <6-1-184> ।।
`नृ इत्येतस्मात्परा झलादिर्विभक्तिरन्यतरस्यां नोदात्ता भवति। नृभ्याम्। नृभिः। नृभ्यः। `नृषु(ऋ.1-180-8)।
झलित्येव--न्रा। न्रे ।।

</6-1-184>
तित्स्वरितम् ।। <6-1-185> ।।
तित्स्वरितं भवति। सन्नन्ताद्यत्--चिकीर्ष्यम्, जिहीर्ष्यम्। ऋहलोर्ण्यत्(3-1-124/2872)--कार्यम्, हार्यम्, प्रत्ययाद्युदात्तस्यापवादः ।।

</6-1-185>
तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ।। <6-1-186> ।।
तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात्परं लसार्वधातुकमनुदात्तं च भवति ह्नुङ्, इङ्-इत्येताभ्यां परं वर्जयित्वा। तासेस्तावत्--कर्ता, कर्तारौ, कर्तारः। प्रत्ययस्वरापवादोऽयम्।
अनुदात्तेतः--आस--आस्ते। वस-वस्ते।
ङित्--षूङ्-सूते। शीङ्-शेते।
अदुपदेशात्--तुदतः। नुदतः। पचतः। पठतः। अनुबन्धस्यानैकान्तिकत्वादकारान्तोपदेश एव शप्। पचमानः। यजमानः। यद्यत्र मुक् अकारमात्रस्य स्यात्, तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः। अथाकारान्तस्याङ्गस्य ? तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम्। चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद्बाध्यते।
तास्यादिभ्य इति किम् ? चिनुतः। चिन्वन्ति। ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य। उपदेशग्रहणं किम् ? इह च यथा स्यात्-पचाव, पचाम इति। इह च मा भूत्-हतः, हथ इति। लग्रहमं किम् ? कतीह पचमानाः। सार्वधातुकमिति किम् ? शिश्ये। शिश्याते। शिश्यिरे। अह्न्विङोरिति किम् ? ह्नुते। यदधीते ।।

</6-1-186>
आदिः सिचोऽन्यतरस्याम् ।। <6-1-187> ।।
`उदात्तः इति वर्तते। सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति। मा हि कार्ष्टाम्। मा हि कार्ष्टाम्। एकोऽत्राद्युदात्तः, अपरोऽन्तोदात्तः। मा हि लाविष्टाम्, मा हि लाविष्टाम्। एकोऽत्राद्युदात्तः, अपरो मध्योदात्तः। सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते।

- सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम् *(म.भा.3-113)। मा हि कार्षम्। अनिट इति किम् ? मा हि लाविषम्। मध्योदात्त एवाद्युदात्ताभावपक्षे भवति ।।

</6-1-187>
स्वपादिहिंसामच्यनिटि ।। <6-1-188> ।।
लसार्वधातुकग्रहणं यदनुवर्तते, तद् `अच्यनिटि इति सम्बन्धादिह सप्तम्यन्तमुपजायते। स्वपादिरावृत्करणात्। स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति। स्वपन्ति। श्वसन्ति। हिंसेः खल्वपि--हिंसन्ति। प्रत्ययस्वरेण पक्षे मध्योदात्तः।
अचीति किम् ? स्वप्यात्। हिंस्यात्। अनिटीति किम् ? स्वपितः। श्वसितः ।।
ङित्यजादावयं विधिरिष्यते। इह न भवति--स्वपानि। हिनसानि ।।

</6-1-188>
अभ्यस्तानामादिः ।। <6-1-189> ।।

अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति। ददति, ददतु। दधति, दधतु। जक्षति, जक्षतु,। जाग्रति, जाग्रतु।
अचीत्येव--दद्यात्। अनिटीत्येव--जक्षितः। `आदिः इति वर्तमाने पुनरादिग्रहणं नित्यार्थम् ।।

</6-1-189>
अनुदात्ते च ।। <6-1-190> ।।
अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति। अनजाद्यर्थ आरम्भः। ददाति। जहाति। दधाति। जिहीते। `मिमीते(तै.सं.6-1-9-6)।
अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः(म.भा.3-113)। मा हि स्म दधात्। ददात्यत्र ।।

</6-1-190>
सर्वस्य सुपि ।। <6-1-191> ।।
सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति। सर्वः, सर्वौ, सर्वे। सुपीति किम् ? सर्वतरः। सर्वतमः।
`प्रत्ययलक्षणेनाप्ययं स्वर इष्यते सर्वस्तोमः (तै.सं.5-4-12-3)इति।
* सर्वस्वरोऽनच्कस्येति वक्तव्यम् *(म.भा.3-114)। सर्वकः। चित्स्वरेणान्तोदात्तो भवति ।।

</6-1-191>
भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ।। <6-1-192> ।।
भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, जागृ-इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वमुदात्तं भवति। बिभेति। जिह्रेति। `बिभर्ति(तै.आ.3-11-4)। `जुहोति(तै.ब्रा.2-1-8-3)। `ममत्तु नः परिज्मा(तै.सं.2-1-11-1)। मदेः `बहुलं छन्दसि इति विकरणस्य श्लुः। `जजनमिन्द्रम्(तै.आ.3-2-1)। `जन जनने(धा.पा.1106) इत्यस्य पञ्चमे लकारे रूपम्। `धन धान्ये(धा.पा.1105) इत्यस्य पञ्चमे लकारे-`दधनत्(तै.ब्रा.2-8-3-5)। दरिद्राति। जागर्ति।
भ्यादीनामिति किम् ? ददाति। पितीति किम् ? दरिद्रति ।।

</6-1-192>
लिति ।। <6-1-193> ।।
लिति=लकारेत्संज्ञके प्रत्ययात्पूर्वमुदात्तं भवति। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम् ।।

</6-1-193>
आदिर्णमुल्यन्यतरस्याम् ।। <6-1-194> ।।
णमुलि परतोऽन्यतरस्यामादिरुदातो भवति। लोलूयं लोलूयम्,लोलूयं लोलूयम्। पोपूयं पोपूयम्,पोपूयं पोपूयम्। आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः ।।

</6-1-194>
अचः कर्तृयकि ।। <6-1-195> ।।
`उपदेशे इति वर्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव। स्तीर्यते केदारः स्वयमेव। यदाऽऽद्युदात्तत्वं न भवति, तदा लसार्वधातुकनिघाते कृते यक एव स्वरो भवति।
जनादीनामुपदेश एवात्वं द्रष्टव्यम्, तत्राप्ययं स्वर इष्यते। जायते स्वयमेव। सायते स्वयमेव। खायते स्वयमेव।
अच इति किम् ? भिद्यते स्वयमेव। कर्तृग्रहणं किम् ? लूयते केदारो देवदत्तेन ।।

</6-1-195>
थलि च सेटीडन्तो वा ।। <6-1-196> ।।
सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्याम्। लुलविथ। यदा नैते त्रयः स्वराः, तदा लिति(6-1-193/3676) प्रत्ययात्पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति।
सेटीति किम् ? ययाथ। `लिति प्रत्ययात्पूर्वमुदात्तम्-इत्ययमेवात्र स्वरो भवति।।

</6-1-196>
ञ्नित्यादिर्नित्यम् ।। <6-1-197> ।।
ञिति निति च नित्यमादिरुदात्तो भवति। गर्गादिभ्यो यञ्(4-1-105/1107) गार्ग्यः। वात्स्यः। वासुदेवार्जुनाभ्यां वुन्(4-3-98/1478)--वासुदेवकः, अर्जुनकः। प्रत्ययस्वरापवादोऽयं योगः।

प्रत्ययलक्षणमत्र नेष्यते, तेन गर्गाः, बिदाः, चञ्चाः-इत्यत्र यञि कनि च लुप्ते भवति ।।

</6-1-197>
आमन्त्रितस्य च ।। <6-1-198> ।।
आमन्त्रितस्यादिरुदात्तो भवति। देवदत्त ! देवदत्तौ, देवदत्ताः। अत्र कारकाद्दत्तश्रुतयोरेवाशिषि(6-2-148/3882) इति प्राप्तिर्बाध्यते।
लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते। सर्पिरागच्छ, सप्तागच्छेति ।।

</6-1-198>
पथिमथोः सर्वनामस्थाने ।। <6-1-199> ।।
पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः।
सर्वनामस्थान इति किम् ? पथः पश्य। मथः पश्य। उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति। प्रत्ययलक्षणमत्रापि नेष्यते।
पथिप्रियः--इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः ।।

</6-1-199>
अन्तश्च तवै युगवत् ।। <6-1-200> ।।
तवैप्रत्ययान्तस्यान्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः। कर्तवै। हर्तवै। प्रत्ययाद्युदात्तत्वापवादः।
युगपद्ग्रहणं पर्यायनिवृत्यर्थम् । `एकवर्जम् इति वचनाद्यौगपद्यं न स्यात् ।।

</6-1-200>
क्षयो निवासे ।। <6-1-201> ।।
क्षयशब्दो निवासेऽभिधेये आद्युदात्तो भवति। क्षियन्ति निवसन्त्यस्मिन्निति क्षयः, पुंसि संज्ञायां घः प्रायेण(3-3-118/3296) इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः। `क्षये(ऋ.10-118-1) जागृहि प्रपश्यन्।
निवास इति किम् ? क्षयो वर्तते दस्यूनाम्। एरच्(3-3-56/3231) इत्ययमजन्तः ।।

</6-1-201>
जयः करणम् ।। <6-1-202> ।।।
जयशब्दः करणवाची आद्युदात्तो भवति। जयन्ति तेनेति जयः। पुंसि संज्ञायां घः प्रायेण(3-3-118/3296) इति घः, तस्य प्रत्ययस्वरः प्राप्तः। जयोऽश्वः।
करणमिति किम् ? जयो वर्तते ब्राह्मणानाम्। अत्रापि एरच्(3-3-56/3231) इत्ययमजन्तः ।।

</6-1-202>
वृषादीनां च ।। <6-1-203> ।।
`वृष इत्येवमादीनामादिरुदात्तो भवति। वृषः। जनः। ज्वरः। ग्रहः। हयः। गयः। सर्वे एते पचाद्यच्प्रत्ययान्ताः। गय इत्यत्र गायतेर्निपातनादेत्वम्। नयः। तयः। अयः। अंशः। वेदः। अशः। दवः। एतेऽपि तथैवाच्प्रत्ययान्ताः। सूदः-इगुपधात्(3-1-135/2897) इति कप्रत्ययान्तः। गुहा। भिदादिः अङ्प्रत्ययान्तः ।।

- शमरणौ संज्ञायां सम्मतौ भावकर्मणोः *(ग.सू.170)। शमो भावे रणः कर्मणि अजन्तावेतौ निपातनाद् भावकर्मणोर्भवतः---मन्त्रः पचाद्यजन्तः। शान्तिः--इति क्तिजन्तः। कामः, यामः---घञन्तावेतौ।

आरा,धारा, कारा-भिदादयः। वहः--गोचरादिषु घप्रत्ययान्तः। कल्पः--अजन्तः। पादः--घञन्तः। तत्र क्वचित्प्रत्ययस्वरः प्राप्तः, क्वचित् कर्षात्वतो घञोऽन्त उदात्तः(6-1-159/3680) इति। वृषादिराकृतिगणः। अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम् ।।

</6-1-203>
संज्ञायामुपमानम् ।। <6-1-204> ।।
उपमानशब्दः संज्ञायामाद्यदात्तो भवति। चञ्चा। वर्ध्रिका। खरकुटी। दासी। उपमानशब्दा एते उपमेयस्य संज्ञाः। तत्र इवे प्रतिकृतौ(5-3-96/2051) इति यः कन् तस्य लुम्मनुष्ये(5-3-98/2053) इति लुप्।
यद्येवम्, किमर्थमिदमुच्यते, प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम् ? एतदेव ज्ञापयति--क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवतीति। तथा च पूर्वत्रोदाहृतम्।
संज्ञायामिति किम् ? अग्निर्माणवकः। उपमानमिति किम् ? देवदत्तः ।।

</6-1-204>
निष्ठा च द्व्यजनात् ।। <6-1-205> ।।
निष्ठान्तं च द्वयच् संज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति। दत्तः। गुप्तः। बुद्धः। प्रत्ययस्वरापवादः।
निष्ठेति किम् ? देवः। भीमः। द्व्यजिति किम् ? चिन्तितः। रक्षितः। अनादिति किम् ? त्रातः। आप्तः। संज्ञायामिति किम् ? कृतम्। हृतम् ।।

</6-1-205>
शुष्कधृष्टौ ।। <6-1-206> ।।
`आदिरुदात्तः इति वर्तते। शुष्क, धृष्ट-इत्येतावाद्युदात्तौ भवतः। शुष्कः। धृष्टः।
असंज्ञार्थ आरम्भः ।।

</6-1-206>
आशितः कर्ता ।। <6-1-207> ।।
आशितशब्दः कर्तृवाची आद्युदात्तो भवति। आशितो देवदत्तः। अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः। तत्र थाथघञ्(6-2-144/3878) इति प्राप्तः स्वरो बाध्यते।
कर्तरीति किम् ? आशितमन्नम्। आशितं देवदत्तेन। पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे।।

</6-1-207>
रिक्ते विभाषा ।। <6-1-208> ।।
रिक्तशब्दे विभाषा आदिरुदात्तो भवति। रिक्तः। रिक्तः। संज्ञायाम्(6-1-204/3692) निष्ठा च द्व्यजनात्(6-1-205/3693) इत्यनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः ।।

</6-1-208>
जुष्टार्पिते चच्छन्दसि ।। <6-1-209> ।।
जुष्ट, अर्पित--इत्येते शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः। जुष्टः। अर्पितः।
छन्दसीति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावोतौ ।।

</6-1-209>
नित्यं मन्त्रे ।। <6-1-210> ।।
जुष्ट, अर्पित--इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः। जुष्टं देवानाम्। अर्पितं पितृणाम्। पूर्वेणात्र विकल्पः प्राप्तः।
केचिदत्र `जुष्ट-इत्येतदेवानुवर्तयन्ति। अर्पितशब्दस्य विभाषा मन्त्रेऽपीच्छन्ति। अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते--`तस्मिन्साकं त्रिशता न शङ्कवोऽर्पिता(ऋ.1-164-48) इति ।।

</6-1-210>
युष्मदस्मदोर्ङसि ।। <6-1-211> ।।
युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते, तयोर्ङसि परत आदिरुदात्तो भवति। तव स्वम्। मम स्वम् ।।

</6-1-211>
ङयि च ।। <6-1-212> ।।
`युष्मदस्मदोः इति वर्तते, `आदिरुदत्तः इति च। `ङे इत्येतस्मिंश्च परतो युष्मदस्मदोरादिरुदात्तो भवति। तुभ्यम्। मह्यम्।
पृथग्योगकरणं यथासंख्यशङ्कानिवृत्त्यर्थम् ।।

</6-1-212>
यतोऽनावः ।। <6-1-213> ।।
निष्ठा च द्व्यजनात्(6-1-205/3693) इत्यतो द्व्यज्ग्रहणमनुवर्त्तते। यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेन्नौशब्दात्परो भवति। अचो यत्(3-1-97/2842)--चेयम्, जेयम्। शरीरावयवाद्यत्(5-1-6/666)--कण्ठ्यम्, ओष्ठ्यम्। तित्स्वरितम्(6-1-185/3729) इत्यस्यापवादः।
अनाव इति किम् ? नाव्यम्।
द्व्यच इत्येव--चिकीर्ष्यम्। ललाट्यम् ।।

</6-1-213>
ईडवन्दवृशंसदुहां ण्यतः ।। <6-1-214> ।।
ईड, वन्द, वृ, शंस, दुह्--इत्येतेषां यो ण्यत् तदन्तस्यादिरुदात्तो भवति। ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। द्व्यनुबन्धकत्वाद् ण्यतो यद्ग्रहणेन ग्रहणं नास्तीति तित्स्वरितम्(6-1-185/3729) इत्येतत् प्राप्तम्। वार्यमिति--`वृङ् सम्भक्तौ(धा.पा.1510) इत्यस्यायं ण्यत्। क्यब्विधौ हि वृञ एव ग्रहणमिष्यते ।।

</6-1-214>
विभाषा वेण्विन्धानयोः ।। <6-1-215> ।।
वेणु, इन्धान--इत्येतयोर्विभाषा आदिरुदात्तो भवति। वेणुः, वेणुः। इन्धानः, इन्धानः।

वेणुशब्दोऽयम् `आजिवृरीभ्यो नित्(उ.325) इति णुप्रत्ययान्तो नित्त्वान्नित्यमाद्युदात्तः प्राप्तः।
इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वादन्तोदात्तः। अथ शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः। तदेवमिन्धाने सर्वथाऽप्राप्तमाद्युदात्तत्वं पक्षे विधीयते।
वेणुरिव वेणुरित्युपमानं यदा संज्ञा भवति, तदा संज्ञायामुपमानम्(6-1-204/3692) इति नित्यमाद्युदात्तत्वमिष्यते ।।

</6-1-215>
त्यागरागहासकुहश्वठक्रथानाम् ।। <6-1-216> ।।
त्याग, राग, हास, कुह, श्वठ, क्रथ--इत्येतेषां विभाषा आदिरुदात्तो भवति। त्यागः, रागः, हासः--एते घञन्ताः, तेषां पक्षे कर्षात्वतो घञोऽन्त उदात्तः(6-1-159/3680) इत्युदात्तत्वमेव भवति। कुहः, श्वठः, क्रथः--एते पचाद्यजन्ताः ।।

</6-1-216>
उपोत्तमं रिति ।। <6-1-217> ।।
रिदन्तस्योपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपे यत्तदुपोत्तमम्। करणीयम्। हरणीयम्। पटुजातीयः। मृदुजातीयः। प्रत्ययस्वरापवादोऽयम् ।।

</6-1-217>
चङ्यन्यतरस्याम् ।। <6-1-218> ।।
चङन्तेऽन्यतरस्यामुपोत्तममुदात्तं भवति। मा हि चीकरताम्। मा हि चीकरताम्। न माङ्योगे(6-4-74/2228) इत्यटि प्रतिषिद्धे हि च(8-1-34/3941) इति निघातेऽदुपदेशादिति लसार्वधातुकानुदात्तत्वे(6-1-186/3730) कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति।
उपोत्तमग्रहणाद् द्वयोर्न भवति--मा हि दधत् ।।

</6-1-218>
मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।। <6-1-219> ।।
मतोः पूर्वः अकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। शरादीनां च(6-3-120/1042) इति दीर्घः।
आदिति किम् ? इक्षुमती। द्रुमवती। संज्ञायामिति किम् ? खट्वावती। स्त्रियामिति किम् ? शरावान्। मतोरिति किम् ? गवादिनी ।।

</6-1-219>
अन्तोऽवत्याः ।। <6-1-220> ।।
`संज्ञायाम् इत्येव। अवतीशब्दान्तस्य संज्ञायामन्त उदात्तो भवति। अजिरवती। खदिरवती। हंसवती। कारण्डवती। ङीपः पित्तवादनुदात्तत्वं प्राप्तम्।
`अवत्याः इति किमुच्यते, न वत्या इत्येवमुच्येत ? नैवं शक्यम्; इहापि स्यात्--राजवती। स्वरविधौ नलोपस्यासिद्धत्वान्नायमवतीशब्दः। वत्वं पुनराश्रयात्सिद्धम् ।।

</6-1-220>
ईवत्याः ।। <6-1-221> ।।
ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां संज्ञायां विषये। अहीवती। कृषीवती। मुनीवती।

</6-1-221>
चौ ।। <6-1-222> ।।
`चौ इत्यञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन्परतः पूर्वस्यान्त उदातो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादोऽयम् ।

- चावतद्धित इति वक्तव्यम् *(म.भा.3-118)। दाधीचः। माधूचः। प्रत्ययस्वर एवात्र भवति।

</6-1-222>
समासस्य ।। <6-1-223> ।।
समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्।
`स्वरविधौ व्यञ्जनमविद्यमानत्(व्या.प.37) इति हलन्तेऽप्यन्तोदात्तत्वं भवति। नानापदस्वरस्यापवादः ।।

इति श्रीवामनविरचितायां काशिकावृत्तौ
षष्ठस्याध्यायस्य प्रथमः पादः
</6-1-223>

# काशिका/षष्ठोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pbu
< काशिका | षष्ठोऽध्यायः
अथ षष्ठाध्याये द्वितीयः पादः
बहुव्रीहौ प्रकृत्या पूर्वपदम्।। <6-2-1>।।
पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्त्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति अनुदात्तं पदमेकवर्जम्(6-1-158/3650) इति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते । कार्ष्णोत्तरासङ्गाः । कृष्णो मृगः तस्य विकारः कार्ष्णः प्राणिरजतादिभ्योऽञ् इत्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः। यूपवलजः । यूपशब्द उणादिषु `कुसुयुभ्यश्च(उ.313-314) इति पप्रत्ययान्तः तत्र च दीर्घः इति, नित् इति च वर्त्तते,तेनाद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। स्नातकपुत्रः । स्नातशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः । श्रोत्रियशब्दो नित्त्वादाद्युदात्तः। मनुष्यनाथः। मनुष्यशब्दः तित्स्वरितम्(6-1-185/3799) इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तेदात्तत्वं भवति। समभाग इति समशब्दो हि सर्वानुदात्तः।।
</6-2-1>
तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः।।<6-2-2>।।
तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति। तुल्यार्थ-तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्। सदृक्श्वेतः । सदृग्लोहितः । सदृग्महान् । सदृशश्वेतः । सदृशलोहितः सदृशमहान्। एते कृत्यतुल्याख्या अजात्या इति कर्मधारयाः। तत्र तुल्यशब्दः यतोऽनावः(6-1-213/3701) इत्याद्युदात्तः । सदृक्शब्दः `समानान्ययोश्च(वा.261) इति क्विन्प्रत्ययान्तः , कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः सदृशशब्दोऽपि कञन्तो मध्योदात्तः । तुल्यार्थ ।
तृतीया-शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। शङ्कुपूर्वाल्लातेः घञर्थे कविधानम् इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः। किरिशब्दोऽपि किरतेः कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च इतीकारप्रत्ययः, किदौणादिकः तेनासावन्तोदात्तः। तृतीया।
सप्तमी-अक्षेषु शौण्डोऽक्षशौण्डः। पानशौण्डः। `अशेर्देवने(उ.640) इति सप्रत्ययान्तोन्तोऽक्षशब्दोऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः। सप्तमी ।
उपमान-शास्त्रीश्यामा। कुमुदश्येनी। हंसगद्गदा । न्यग्रोधपरिमण्डला। दूर्वाकाण्डश्यामा। शारकाण्डगौरी। उपमानानि सामान्यवचनैः इति समासः। शास्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः। कुमुदशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात्कप्रत्ययान्तः,`नब्विषयस्यानिसन्तस्य(फि.सू.26) इति वाऽऽद्युदात्तः। हंसशब्दः `वृतॄवदिहनिकमिकषिभ्यः सः(उ.349) इति सप्रत्ययान्तः। न्यग्रोहतोति न्यग्रोधः पचादित्वाद् अच्प्रत्ययान्तः, तस्य न्यग्रोधस्य च केवलस्य(7-3-5/1543) इति निपातनाद् हकारस्य धकारः मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ। उपमान। अव्यय-अब्राह्मणः। अवृषलः। कुब्राह्मणः। कुवृषलः। निष्कौशम्बिः। निर्वाराणसिः। अतिमालः। एतान्यवयवान्याद्युदात्तानि। * अव्यये नञ्कुनिपातानामिति वक्तव्यम् *(म.भा.3-123) इह मा भूत् स्नात्वाकालक इति।
द्वितीया-मुहूर्तसुखम्। मुहूर्तरमणीयम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना। अत्यन्तसंयोगे च(2-2-29/691) इति द्वितीयासमासः । मुहूर्त्तशब्दः पृषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः । द्वितीया ।
कृत्य - भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दौ ण्यदन्तोऽन्तस्वरितः। पानीयहरणीयशब्दयोः उपोत्तमं रिति(6-1-217/3733) इति ईकार उदात्तः।।
</6-2-2>
वर्णो वर्णेष्वनेते ।। <6-2-3>।।
प्रकृत्या पूर्वपदम्, तत्पुरुषे इति च वर्त्तते। वर्णं वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु
परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति। कृष्णसारङ्गः, लोहितसारङ्गः। कृष्णकल्माषः, लोहितकल्माषः । `कृषेर्वर्णे(उ.291) इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः। लोहितशब्दोऽपि `रुहे रश्च लो वा(उ.381) इतीतन्प्रत्ययान्त आद्युदात्तः। वर्ण इति किम् परमकृष्णः । वर्णेष्वति किम् कृष्णतिलाः अनेत इति किम् कृष्णैतः। लोहितैतः।।
</6-2-3>
गाधलवणयोः प्रमाणे।। <6-2-4>।।
प्रमाणवाचिनि तत्पुरुषे समासे गाध, लवण- इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति। शम्बगाधमुदकम्।
अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः। गोलवणम् । अश्वलवणम्। यावद् गवे दीयते तावदित्यर्थः। षष्ठीसमासा एते। तत्र `शमेर्बन्(उ.543) इति बन्प्रत्ययान्तत्वाच्छम्बशब्द आयुदात्तः अरित्रशब्दः अर्त्तिलूधूसू(3-2-184/3165) इतीत्रप्रत्ययान्तो मध्योदात्तः। गोशब्दो डोप्रत्ययान्तोऽन्तोदात्तः। अश्वशब्दः `अशूप्रुषि(उ.157) इति क्वन्प्रत्ययान्त आद्युदात्तः। प्रमाणम् - इयत्तापरिच्छेदमात्रमिह द्रष्टव्यम्, न पुनरायाम एव । स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमेतेषाम्। प्रमाण इति किम् परमगधम् परमलवणम्।।

आद्युदात्तं द्व्यच्छन्दसि ।। <6-2-119> ।।
यदाद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये । `स्वश्वास्त्वा सुरथामर्जयेम(तै.सं.1-2-14-4) । नित्स्वरेणाश्वरथशब्दावाद्युदात्तौ । आद्युदात्तमिति किम्? `या सुबाहुः स्वङ्गुरिः(ऋ.2-32-7) । बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः । द्व्यजिति किम्? सुगुरसत् । सुहिरण्यः । स्वश्वः । नञ्सुभ्याम्(6-2-172/3906) इत्यस्यायमपवादः ।।
</6-2-119>
वीरवीर्यौ च ।। <6-2-120> ।।
वीर, वीर्य - इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः । `सुवीरेण ते(ऋ.4-17-4) । `सुवीर्यस्य पतयः स्याम(तै.सं.1-7-13-4) । वीर्यमिति यत्प्रत्ययान्तम् , तत्र यतोऽनावः(6-1-123/3701) इति आद्युदात्तत्वं न भवतीत्येतदेव वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ।।
</6-2-120>
कूलतीरतूलमूलशालाक्षसममव्ययीभावे ।। <6-2-121> ।।
कूल, तीर, तूल, मूल, शाला, अक्ष, सम - इत्येतानि उत्तरपदानि अव्ययीभावसमास आद्युदात्तानि भवन्ति । परिकूलम् । उपकूलम् । परितीरम् । उपतीरम् । परितूलम् । उपतूलम् । परिमूलम् । उपमूलम् । परिशालम् । उपशालम् । उपाक्षम् । पर्यक्षम् । सुषमम् । विषमम् । निषमम् । दुःषमम् । तिष्ठद्गुप्रभृतिषु(2-1-17/671) एते पठ्यन्ते । कूलादिग्रहणं किम्? उपकुम्भम् । अव्ययीभाव इति किम्? परमकूलम् । उत्तमकूलम् । पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति । परिकूलम् । उपकूलम् ।।
</6-2-121>
कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।। <6-2-122> ।।
कंस , मन्थ , शूर्प, पाय्य, काण्ड - इत्येतान्युत्तरपदानि द्विगौ समास आद्युदात्तानि भवन्ति । द्विकंसः । त्रिकंसः। द्विमन्थः । त्रिमन्थः । द्विशूर्पः । त्रिशूर्पः । द्विपाय्यः । त्रिपाय्यः । द्विकाण्ड । त्रिकाण्डः । द्विगाविति किम्? परमकंसः । उत्तमकंसः ।।
</6-2-122>
तत्पुरुषे शालायां नपुंसके ।। <6-2-123> ।।
शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति । ब्राह्मणशालम् । क्षत्त्रियशालम् । विभाषा सेनासुराच्छायाशालानिशानाम्(2-4-25/828) इति नपुंसकलिङ्गता । तत्पुरुष इति किम्? दृढशालं ब्राह्मणकुलम् । शालायामिति किम्? ब्राह्मणसेनम् । नपुंसक इति किम्? ब्राह्मणशाला ।।
</6-2-123>
कन्था च ।। <6-2-124> ।।
तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तं भवति । सौशमिकन्थम् । आह्वकन्थम् । चप्पकन्थम् । संज्ञायां कन्थोशीनरेषु(2-4-20/823) इति नपुंसकलिङ्गता । षष्ठीसमासा एते । नपुंसक इत्येव - दाक्षिकन्था ।।
</6-2-124>
आदिश्चिहणादीनाम् ।। <6-2-125> ।।
कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति । चिहणकन्थम् । मडरकन्थम् । मड्डर इति केचित् पठन्ति । मड्डरकन्थम् । चिहण । मडर । मड्डर । वैतुल। पटत्क । तैत्तालिकर्णः । वैतालिकर्णिरित्यन्ये पठन्ति । कुक्कुट । चिक्कण । चित्कण इत्यपरे पठन्ति । चिहणादिः । आदिः इति वर्तमाने पुरादिग्रहणं पूर्वपदाद्युदात्तार्थम् ।।
</6-2-125>
चेलखेटकटुककाण्डं गर्हायाम् ।। <6-2-126> ।।
चेल, खेट, कटुक , काण्ड - इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति । पुत्रचेलम् । भार्याचेलम् । उपानत्खेटम् । नगरखेटम् । दधिकटुकम् । उदश्वित्कटुकम् । भूतकाण्डम् । प्रजाकाण्डम् । चेलादीनां सादृश्येन पुत्रादीनां गर्हा, तत्र पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः(2-1-56/735) इति समासः । गर्हायामिति किम्? परमचेलम् ।।
</6-2-126>
चीरमुपमानम् ।। <6-2-127> ।।
चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति । वस्त्रं चीरमिव वस्त्रचीरम् । पटचीरम् । कम्बलचीरम् । उपमानमिति किम्? परमचीरम् ।।
</6-2-127>
पललसूपशाकं मिश्रे ।। <6-2-128> ।।
पलल, सूप , शाक - इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । गुडपललम् । घृतपललम् । घृतसूपः । मूलकसूपः । घृतशाकम् । मुद्गशाकम् । गुडेन मिश्रं पललं गुडपललम् । भक्ष्येण मिश्रीकरणम्(2-1-35/697) इति समासः । मिश्र इति किम्? परमपललम् ।।
</6-2-128>
कूलसूदस्थलकर्षाः संज्ञायाम् ।। <6-2-129> ।।

कूल, सूद, स्थल, कर्ष - इत्येतान्युत्तरपदानि तत्पुरुषे समासे, संज्ञायां विषये आद्युदात्तानि भवन्ति । दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । भाचोसूदम् । दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ग्रामनामधेयान्येतानि । स्थलग्रहणम् - लिङ्गविशिष्टत्वात्स्थलीशब्दोऽपि गृह्यते । जानपदकुण्ड(4-1-42/500) इत्यनेन ङीष्

। संज्ञायामिति किम्? परमकूलम् ।।

</6-2-129>

अकर्मधारये राज्यम् ।। <6-2-130> ।।

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यम् इत्येतदुत्तरपदमाद्युदात्तं भवति । ब्राह्मणराज्यम् । क्षत्त्रियराज्यम् । अकर्मधारय इति किम्? परमराज्यम् । चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन (म.भा.3-134)- कुचेलम् , कुराज्यम् ।।

</6-2-130>

वर्ग्यादयश्च ।। <6-2-131> ।।

वर्ग्य - इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः । अकर्मधारय इत्येव - परमवर्ग्यः । वर्ग्यादयः प्रातिपदिकेषु न पठ्यन्ते । दिगादिषु(4-3-54/1429) तु - वर्ग, पूग, गण, पक्ष - इत्येवमादयो ये पठिताः , त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः ।।

</6-2-131>

पुत्रः पुम्भ्यः ।। <6-2-132> ।।

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । माहिषकपुत्रः । पुत्र इति किम्? कौनटिमातुलः । पुम्भ्य इति किम्? गार्गीपुत्रः। वात्सीपुत्रः ।।

</6-2-132>

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।। <6-2-133> ।।

आचार्यः - उपाध्यायः । राजा - ईश्वरः । ऋत्विजः - याजकाः । संयुक्ता - स्त्रीसम्बन्धिनः श्यालादयः । ज्ञातयः -मातृपितृसम्बन्धिनो बान्धवाः । आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात्स्वरुपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतुः पुत्रः। भ्रातुष्पुत्रः। ऋतो विद्यायोनिसम्बन्धेभ्यः(6-3-23/981) इति षष्ठ्या अलुक् । संयुक्तपुत्रः। सम्बन्धिपुत्रः। श्यालपुत्रः। त्रातिपुत्रः। पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्त्वमेव भवति ।।

</6-2-133>

चूर्णादीन्यप्राणिषष्ठ्याः ।। <6-2-134> ।।

उत्तरपदादिः इति वर्त्तते , तत्पुरुष इति च । चूर्णादीन्युत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात्पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गचूर्णम् । मसूरचूर्णम् । अप्राणिषष्ठ्या इति किम्? मत्स्यचूर्णम् । षष्ठ्या इति किम्? परमचूर्णम् । चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन । चौल । चूर्णादीन्यप्राण्युपग्रहात् इति सूत्रस्य पाठान्तरम् । तत्र उपग्रह इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते ।।

</6-2-134>

षट् च काण्डादीनि ।। <6-2-135> ।।

षट् पूर्वोक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि भवन्ति । काण्डं गर्हायाम्(6-2-126/3860) इत्युक्तम् , अगर्हायामपि भवति - दर्भकाण्डम् , शरकाण्डम् । चीरमुपमानम्(6-2-127/3861) इत्युक्तम् , अनुपमानमपि भवति - दर्भचीरम्, कुशचीरम् । पललसूपशाकं मिश्रे(6-2-128/3862) इत्युक्तम् , अमिश्रेऽपि भवति - तिलपललम् , मुद्गसूपः, मूलकशाकम् । कूलं संज्ञायाम्(6-2-129/3863) इत्युक्तम् , असंज्ञायामपि भवति - नदीकूलम् , समुद्रकूलम् । षडिति किम्? राजसूदः ।।

</6-2-135>

कुण्डं वनम् ।। <6-2-136> ।।

कुण्डं - शब्दोऽत्र कुण्डसादृश्येन वने वर्त्तते । कुण्डम् इत्येतदुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति । दर्भकुण्डम् । शरकुण्डम् । वनमिति किम्? मृत्कुण्डम् ।।

</6-2-136>

प्रकृत्या भगालम् ।। <6-2-137> ।।

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ताः । प्रकृत्या इत्येतदधिकृतम् अन्तः(6-2-143/3877) इति यावद्वेदितव्यम् ।।

</6-2-137>

शितेर्नित्याबह्वज् बहुव्रीहावभसत् ।। <6-2-138> ।।

शितेरुत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत्प्रकृतिस्वरं भवति । शितिपादः। शित्यंसः । `शित्योष्ठः(तै.सं.5-6-14-1) । पादशब्दो वृषादित्वादाद्युदात्तः । अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वादाद्युदात्तौ । शितेरिति किम्? दर्शनीयपादः । नित्यग्रहणं किम्? `शितिककुत्(तै.सं.5-6-14-1) । ककुदस्यावस्थायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवतीति तेन न नित्याबह्वच् । अबह्वजिति किम्? शितिललाटः। बहुव्रीहाविति किम्? शितेः पादः शितिपादः । आभसदिति किम्? `शितिभसद(तै.सं.5-6-14-1) ।

शितिशब्द आद्युदात्तः। पूर्वपदप्रकृतिकस्वरापवादो योगः ।।
</6-2-138>
गतिकारकोपपदात्कृत् ।। <6-2-139> ।।
तत्पुरुषे इति वर्त्तते , न बहुव्रीहौ इति । गतेः कारकादुपपदाच्च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । प्रकारकः । प्रकरणम् । प्रहारकः । प्रहरणम् । कारकात् - इध्मप्रव्रश्चनः । पलाशशातनः । श्मश्रुकल्पनः । उपपदात् - ईषत्करः । दुष्करः । सुकरः । सर्वत्रैवात्र लित्स्वरः । गतिकारकोपपदादिति किम्? देवदत्तस्य कारको देवदत्तकारकः । देवदत्तस्येति शेषलक्षणा षष्ठी । कृद्ग्रहणं विस्पष्टार्थम् । प्रपचतितराम्, प्रपचतितमाम् । इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम् , तत्र सतिशिष्टत्वादाम एव स्वरो भवतीत्येके । प्रपचतिदेशीयाद्यर्थे तु कृद्ग्रहणं दृश्यत एव ।।
</6-2-139>
उभे वनस्पत्यादिषु युगपत् ।। <6-2-140> ।।
प्रकृत्या इति वर्त्तते । वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः । `वनस्पतिः(तै.सं.2-6-20-5)। वन - पतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट् ।
`बृहस्पतिः(तै.सं.6-4-10-1) । बृहतां पतिः , `तद्बृहतोः कारपत्योश्चोरदेवतयोः सुट् तलोपश्चः(ग.सू.160) इति सुट्, तकारलोपश्च । बृहदित्येतदन्तोदात्तं निपातयन्ति । तस्य केचिदाद्युदात्तत्वं वर्णयन्ति ।
`शचीपतिः । शचीशब्दः `कृदिकारादक्तिनः(ग.सू.50) इति ङीषन्तत्वादन्तोदात्तः। केचित्तु शार्ङ्गरवादिषु पठन्ति , तेषामाद्युदात्तः ।
`तनूनपात्(तै.सं.4-1-8-1) । तनोतेरौणादिक ऊप्रत्ययः , तेन तनूशब्दोऽन्तोदात्तः । न पाति न पालयति वा नपात्, क्विबन्तः नभ्राण्नपात्(6-3-75/759) इत्यादिनाऽऽद्युदात्तो निपातितः । तन्वा नपात्, तनूनपात् ।
`नराशंसः(तै.सं.4-1-8-1) । नरा अस्मिन्नासीनाः शासन्ति नरा एवं शंसन्तीति वा नराशंसः । `नृ नये(धा.पा.810) , अबन्तो नरशब्द आद्युदात्तः । शंसशब्दोऽपि धञन्तः , अन्येषामपि दृश्यते(6-3-167/3539) इति दीर्घत्वम् ।
`शुनःशेपः(तै.सं.5-2-1-3) । शुन इव शेपोऽस्येति बहुव्रीहिः । तत्र `शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्(6-3-21/979.वा) इति षष्ठ्या अलुक् । उभावाद्युदात्तौ ।
`शण्डामर्कौ(तै.सं.6-4-10-1) । शण्ड-पर्कशब्दौ धञन्तत्वादाद्युदात्तौ । तयोर्द्वन्द्वे अन्येषामपि दृश्यते(6-3-167/3539) इति दीर्घत्वम् ।
तृष्णावरूत्री । तृष्णाशब्द आद्युदात्तः, वरुत्रीशब्दो ग्रसितादिसूत्रे निपातितोऽन्तोदात्तः । तत्र द्वन्द्वे दीर्घत्वं पूर्ववत् ।
`बम्बाविश्ववयसौ(तै.सं.6-6-8-4) । बम्बशब्दोऽन्तोदात्तः । विश्ववयः शब्दोऽपि बहुव्रीहौ विश्वं संज्ञायाम्(6-2-106/3840)तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत् ।
मर्मृत्युः । मरिति मृञो विच्प्रत्ययः । मृत्युशब्दोऽन्तोदात्तः । द्वन्द्वानामदेवताद्वन्द्वार्थः , अनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः ।।
</6-2-140>
देवताद्वन्द्वे च ।। <6-2-141> ।।
देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः इन्द्रासोमौ । इन्द्रावरुणौ । इन्द्राबृहस्पती । ऋज्रेन्द्राग्र इति इन्द्रशब्द आद्युदात्तो निपातितः । सोम इति मन्प्रत्ययान्तः । वरुण उनन्प्रत्ययान्तः , तेनाद्युदात्तः । बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्वावुदात्तौ, तेन इन्द्राबृहस्पती - इत्यत्र त्रय उदात्ता भवन्ति । देवताग्रहणं किम्? प्लक्षन्यग्रोधौ । द्वन्द्वग्रहणं किम्? अग्निष्टोमः ।।
</6-2-141>
नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।। <6-2-142> ।।
उत्तरपदेऽनुदात्तादौ पृथिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत्प्रकृतिस्वरे भवतः । `इन्द्राग्नी(तै.सं.2-2-2-1) । `इन्द्रवायू(तै.सं.6-6-8-3) । अग्नि - वायुशब्दावन्तोदात्तौ । उत्तरपदग्रहणम् अनुदात्तादौ इत्युत्तरपदविशेषणं यथा स्याद्, द्वन्द्वविशेषणं माभूदिति । अनुदात्तादौ इति विधिप्रतिषेधयोर्विषयविभागार्थम् । अप?ृथिव्यादिष्विति किम्? द्यावावृथिव्यौ । द्यावाशब्द आद्युदात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः । रुद्र - `सोमारुद्रौ(तै.सं.1-8-22-5) । `रोदेर्णिलुक्च(उ.189) इति रुद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः । पूषन् - इन्द्रापूषणौ । `स्वन्नुक्षन्पूषन्(उ.165) इति पूषान्तोदात्तो निपात्येत । मन्थिन् - `शुक्रामन्थिनौ(तै.सं.6-4-10-21) । मन्थोऽस्यास्तीति मन्थी , इन्नन्तत्वादन्तोदात्तः । पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव ।।
</6-2-142>
अन्तः ।। <6-2-143> ।।
अन्तः इत्यधिकारः । यदित ऊर्ध्वमनुकमिष्यामस्तत्र समासस्योतरपदस्यान्त उदात्तो भवतीत्येवं तद्वेदितव्यम् ।
वक्ष्यति - थाथघञ्क्ताजबित्रकाणाम्(6-2-144/3878) इति । सुनीथः । अवभृथः ।।
</6-2-143>
थाथघञ्क्ताजबित्रकाणाम् ।। <6-2-144> ।।
थ , अथ, धञ् , क्त, अप् , इत्र , क - इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तो भवति । सुनीथः । `अवभृथः(तै.सं.1-7-5-3) । `हनिकुषिनीरमिकाशिभ्यः क्थन्(उ.167) इति `अवे भृञः(उ.168) इति च क्थान्प्रत्ययान्तावेतौ । तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तरपदं स्यात् । अथ - आवसथः । उपवसथः । उपसर्गे वसेः इत्यथन्प्रत्ययः । घञ् - प्रभेदः । काष्ठभेदः । रज्जुभेदः । क्त - दूरादागतः । विशुष्कः । आतपशुष्कः । अच् -प्रक्षयः । प्रजयः । क्षयो निनासे जयः करणम् तइथति आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः । अप् - प्रलवः । प्रसवः । इत्र -

प्रलवित्रम् । प्रसवित्रम् । क - गोवृषः खरीवृषः । गां वर्षति , खरीं वर्षतीति मूलविभुजा दित्वात्कप्रत्ययः । प्रवृषः । प्रहृषः । इगुपध इति कप्रत्ययः । वृषादीनां च इति वृषशब्द आद्युदात्तः । गतिकारकोपपदादित्येव - सुस्तुतं भवता । कर्मप्रवचनीयेऽव्ययस्वर एव भवति ।।
</6-2-144>
सूपमानात् क्तः ।। <6-2-145> ।।
सु इत्येतस्मादुपमानाञ्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । `सुकृतम्(तै.सं.4-7-2-2) । सुभुक्तम् । उपमानात् - वृकावलुप्तम् । शशप्लुतम् । सिंहविनर्द्दितम् । सुशब्दाद् गतिरनन्तरः(6-2-49/3783) इति प्राप्ते
उपमानादपि तृतीया कर्मणि(6-2-48/3782) इति अयमपवादः । गतिकारकोपपदादित्येव - सुस्तुतं भवता ।।
</6-2-145>
संज्ञायामनाचितादीनाम् ।। <6-2-146> ।।
संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन्वर्जयित्वा । सम्भूतो रामायणः । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । सम्भूत इति प्राप्त्यर्थाद् भवतेः कर्मणि क्तः । गतिरनन्तरः(6-2-49/3783) इत्यत्र हि कर्मणि इत्यनुवर्त्तते , तद्बाधनार्थं चेदम् । धनुष्खाता नदी । कुद्दालखाता नगरी । हस्तिमृदिता भूमिः । तृतीया कर्मणि(6-2-48/3782) इति प्राप्तिरिह बाध्यते । अनाचितादीनामिति किम्? आचितम् । पर्याचितम् । पर्याचितम् । आस्थापितम् । परगृहीतम् । निरुक्तम् । प्रतिपन्नम् । प्राश्लिष्टम् । उपहतम् । उपस्थितम् ।। संहिताऽगवि । संहिताशब्दो यदा गोरन्यस्य संज्ञा, तदाऽन्तोदात्त एव ।।
</6-2-146>
प्रवृद्धादीनां च ।। <6-2-147> ।।
प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः । यानादीनामत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः , न विषयनियमार्थः । यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव । विषयनियमार्थ एवेत्येके । असंज्ञार्थोऽयमारम्भः । आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः । तेन `पुनरुस्यूतं वासो देयम्(मै.सं.1-2-7) , `पुनर्निष्कृतो रथः(तै.सं.1-5-2-4) - इत्येवमादि सिद्धं भवति ।।
</6-2-147>
कारकाद्दत्तश्रुतयोरेवाशिषि ।। <6-2-148> ।।
संज्ञायाम् इति वर्त्तते क्तः इति च । संज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति । देवा एनं देयासुर्देवदत्तः । विष्णुरेनं श्रूयाद् विष्णुश्रुतः । कारकादिति किम्? कारकान्नियमे मा भूत् - सम्भूतो रामायणः । दत्तश्रुतयोरिति किम्? देवपालितः । एतस्मान्नियमादत्र संज्ञायामनाचितादीनाम्(6-2-146/3880) इत्यन्तोदात्तत्वं न भवति , तृतीया कर्मणि इत्येवात्र भवति । एवकारकरणं किम्? कारकावधारणं यथा स्याद्, दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति - संश्रुतः, विश्रुतः । आशिषीति किम् ? अनाशिषि नियमो मा भूत् । देवैः खाता देवखाता । कारकाद्दत्तश्रुतयोराशिष्येव - इत्येवमप्यत्र नियम इष्यते , तेनाहतो नदति देवदत्त इत्यत्र न भवति । देवदत्त इति कस्यचित् शङ्खस्य नाम । तत्र तृतीया कर्मणि(6-2-48/3782) इति पूर्वपदप्रकृतिस्वरत्वमेव भवति ।।
</6-2-148>
इत्थम्भूतेन कृतमिति च ।। <6-2-149> ।।
इमं प्रकारमापन्नः - इत्थम्भूतः । इत्थम्भूतेन कृतम् इत्येतस्मिन्नर्थे यः समासो वर्त्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्तप्रलपितम् । उन्मत्तप्रलपितम् । प्रमत्तगीतम् । विपन्नश्रुतम् । कृतम् इति क्रियासामान्ये करोतिर्वर्त्तते, नाभूतप्रादुर्भाव एव। तेन प्रलपिताद्यपि कृतं भवति । तृतीया कर्मणि(6-2-48/3782) इत्यस्यायमपवादः । भावे तु यदि प्रलपितादयः , तदा थाथादिस्वरेणैव सिद्धमन्तोदात्तं भवति ।
</6-2-149>
अनो भावकर्मवचनः ।। <6-2-150> ।।
अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति । ओदनभोजनं सुखम् । पयः पानं सुखम् । चन्दनप्रियङ्गुकालेपनं सुखम् । कर्मवचन - राजभोजनाः शालयः। राजाच्छादनानि वासांसि । कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्(3-3-116/3291) इत्ययं योग उभयथा वर्ण्यते - कर्मण्युपपदे भावे ल्युङ् भवति, कर्मण्यभिधेये ल्युड् भवतीति । तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि । अन इति किम् ? हस्तहार्यमुदश्वित् । भावकर्मवचन इति किम् ? दन्तधावनम् । करणे ल्युट् । कारकादित्येव
- निदर्शनम् । अवलेखनम् । सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति ।।
</6-2-150>
मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।। <6-2-151> ।।
मन्नन्तम् , क्तिन्नन्तम् , व्याख्यान, शयन, आसन, स्थान - इत्येतानि, याजकादयः , क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति । मन् - रथवर्त्म , शकटवर्त्म । क्तिन् - पाणिनिकृतिः आपिशलिकृतिः । व्याख्यान - ऋगयनव्याख्यानम् , छन्दोव्याख्यानम् । शयन - राजशयनम्, ब्राह्मणशयनम्, आसन - राजासनम्, ब्राह्मणासनम्, स्थान - गोस्थानम् , अश्वस्थानम् । याजकादिः - ब्राह्मणयाजकः । क्षत्त्रिययाजकः । ब्राह्मणपूजकः । क्षत्त्रियपूजकः । याजकादयो ये याजकादिभिश्च(2-2-9/703) इति षष्ठीसमासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत - गोक्रीतः । अश्वक्रीतः। कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु तृतीया कर्मणि(6-2-48/3782) इत्यस्यापवादः। व्याख्यानशयनासनस्थानानामभावकर्मार्थं ग्रहणम् । कारकादित्येव - प्रकृतिः । प्रहृतिः ।।
</6-2-151>

सप्तम्याः पुण्यम् ।। <6-2-152> ।।
सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम् अध्ययनपुण्यम् । वेदे पुण्यं वेदपुण्यम् । सप्तमी इति योगविभागात्समासः । तत्पुरुषे तुल्यार्थ(6-2-2/3736) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे - कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति ।सप्तम्या इति किम्? वेदेन पुण्यं वेदपुण्यम् ।।
</6-2-152>
ऊनार्थकलहं तृतीयायाः ।। <6-2-153> ।।
ऊनार्थान्युत्तरपदानि, कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति । माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह - असिकलहः । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः । अत्र केचिदर्थ इति स्वरूपग्रहणमिच्छिन्ति । धान्येनार्थो धान्यार्थः। ऊनशब्देनैव त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ।।
</6-2-153>
मिश्रं चानुपसर्गमसन्धौ ।। <6-2-154> ।।
तृतीया इति वर्तते । मिश्र - इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं भवत्यसन्धौ गम्यमाने । गुडमिश्राः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रमिति किम् ? गुडधानाः । अनुपसर्गमिति किम्? गुडसम्मिश्राः । इहानुपसर्गग्रहणं ज्ञापकम् - अन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य । तेन मिश्रश्लक्ष्णैः(2-1-31/693)इति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति । असन्धाविति किम्? ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहितः - ऐकार्थ्यमापन्नः । सन्धिरिति हि पणबन्धेनैकार्थ्यमुच्यते । केचित्पुनराहुः - गृह्यमाणविशेषा प्रत्यासत्तिः - सन्धिरिति, अत्र राज्ञो बाह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्त्तिविभागस्वरूपभेदो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्रियते । उदाहरणेष्वविभागापत्तिरेव - गुडमिश्रा इति ।।
</6-2-154>
नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ।। <6-2-155> ।।
सम्पादि, अर्ह, हित, अलम् - इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानात् पराण्यन्तोदात्तानि भवन्ति । सम्पादिः- कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम् । अर्ह - छेदमर्हति छैदिकः , न छैदिकोऽच्छैदिकः । हित - वत्सेभ्यो हितो वत्सीयः , न वत्सीयोऽवत्सीयः । अलमर्थ - सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकोऽसान्तापिकः । नञ इति किम्? गर्दभरथमर्हति गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेध इति किम्? गार्दभरथिकादन्योऽगार्दभरथिकः । गुण इति तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते समासे तत्रायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति। सम्पाद्यर्हहितालमर्था इति किम्? पाणिनीयमधीते पाणिनीयः , नपाणिनीयोऽपाणिनीयः ।
तद्धिता इति किम्? कन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा - अर्हे कृत्यतृचश्च(3-3-169/2822) इति तृच् ।।
</6-2-155>
ययतोश्चातदर्थे ।। <6-2-156> ।।
य , यत् - इत्येतौ यौ तद्धितावतदर्थे वर्त्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति । पाशानां समूहः पाश्या , न पाश्या अपाश्या । अतृण्या । यत् - दन्तेषु भवं दन्त्यम् , न दन्त्यम् अदन्त्यम् । अकर्ण्यम् । अतदर्थ इति किम्? पादार्थमुदकं पाद्यम्, न पाद्यमपाद्यम् । तद्धिता इत्येव - अदेयम् । गुणप्रतिषेध इत्येव - दन्त्यादन्यत् अदन्त्यम् । निरनुबन्धकैकानुबन्धकयोर्ययतोर्ग्रहणादिह न भवति - वामदेवाड् ड्यड्ड्यौ(4-2-5/1210) - वामदेव्यम् , न वामदेव्यमवामदेव्यमिति ।।
</6-2-156>
अच्कावशक्तौ ।। <6-2-157> ।।
अच् , क - इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति । अपचो यः पक्तुं न शक्नोति । अजयः । कः खल्वपि - अविक्षिपः । अविलिखः । अशक्ताविति किम्? अपचः , दीक्षितः । अपचः परिव्राजकः ।।

</6-2-157>
आक्रोशेच ।। <6-2-158> ।।
आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति । अपचोऽयं जाल्मः । अपठोऽयं जाल्मः । पक्तुं पठितुं शक्तोऽप्येवमाक्रुश्यते । अविक्षिपः । अविलिखः ।।
</6-2-158>
संज्ञायाम् ।। <6-2-159> ।।
आक्रोशे गम्यमाने नञः परमुत्तरपदं संज्ञायां वर्त्तमानमन्तोदात्तं भवति । अदेवदत्तः । अयज्ञदत्तः । अविष्णुमित्रः।।
</6-2-159>
कृत्योकेष्णुच्चार्वादयश्च ।। <6-2-160> ।।
कृत्य, उक , इष्णुच् - इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति । कृत्य - अकर्त्तव्यम् । अकारणीयम् । उक्- अनागामुकम् । अनपलाषुकम् । इष्णुच् - अनलङ्करिष्णुः । अनिराकरिष्णुः । इष्णुज्ग्रहणे कर्तरि भुवः खिष्णुच्(3-2-57/3974) इत्स्य द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्याद् भवति । अनाढ्यम्भविष्णुः । असुभगम्भविष्णुः । चार्वादयः - अचारुः । असाधुः । अयौधिकः । अवदान्यः । चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम् । अनङ्गमेजयः । वदान्य । अकस्मात् । अत्रापि द्वितीये

नञ्समासेऽन्तोदात्तत्वम् - `अनकस्मात् वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम्(ग.सू.172) । एते वर्त्तमानादयः संज्ञायां द्रष्टव्याः । विकारसदृशे व्यस्तसमस्ते । अविकारः । असदृशः । अविकारसदृशः । गृहपति । गृहपतिकः । `राजाह्नोश्छन्दसि(ग.सू.174) । अराजा । अनहः । भाषायां नञ्स्वर एव भवति । चार्वादिः ।।

</6-2-160>

विभाषा तृन्नन्नतीक्ष्णशुचिषु ।। <6-2-161> ।।

तृन्नन्त , अन्न, तीक्ष्ण, शुचि - इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उदात्तो भवति । अकर्त्ता । अन्न - अनन्नम् । तीक्ष्ण - अतीक्ष्णम् । शुचि - अशुचिः । पक्षे - अव्ययस्वर एव भवति ।।

</6-2-161>

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।। <6-2-162> ।।

बहुव्रीहौ समासे इदम् , एतद् , तत् - इत्येतेभ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्त्तमानस्यान्त उदात्तो भवति । इदं प्रथमं गमनं भोजनं वा स इदम्प्रथमः, इदन्द्वितीयः , इदन्तृतीयः ।

एतत्प्रथमः, एतद्द्वितीयः, एतत्तृतीयः । तत्प्रथमः, तद्द्वितीयः, तत्तृतीयः । बहुव्रीहाविति किम्? अनेन प्रथम इदम्प्रथमः । तृतीया इति योगविभागात्समासः । इदमेतत्तद्भ्य इति किम्? यत्प्रथमः । प्रथमपूरणयोरिति किम्? तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम्? अयं प्रथम एषां त इदम्प्रथमाः । द्रव्यगणनमेतत् । गणन इति किम्? अयं प्रथम एषामिदम्प्रथमाः । इदम्प्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् कपि पूर्वम्(6-2-173/3907)अन्तोदात्तं भवति । इदम्प्रथमकाः । बहुव्रीहौ इत्येतद् वनं समासे(6-2-128/3912) इति प्रागेतस्मादधिकृतं वेदितव्यम् ।।

</6-2-162>

संख्यायाः स्तनः ।। <6-2-163> ।।

संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुःस्तना। संख्याया इति किम्? दर्शनीयस्तना । स्तन इति किम्? द्विशिराः ।।

</6-2-163>

विभाषा छन्दसि ।। <6-2-164> ।।

छन्दसि विषये बहुव्रीहौ समासे संख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । `द्विस्तनां कुर्याद्वामदेवः द्विस्तनां करोति द्यावापृथिव्योर्दोहाय । चतुः स्तनां करोति पशूनां दोहायाष्टास्तनां करोति छन्दसां दोहाय(तै.सं.5-1-6-4)।।

</6-2-164>

संज्ञायां मित्राजिनयोः ।। <6-2-165> ।।

संज्ञायां विषये बहुव्रीहौ समासे मित्र, अजिन - इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति । देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः । संज्ञायामिति किम्? प्रियमित्रः । महाजिनः । * ऋषिप्रतिषेधो मित्रे * (म.भा.3-137)। `विश्वामित्र ऋषिः(तै.सं.4-3-2-2) ।।

</6-2-165>

व्यवायिनोऽन्तरम् ।। <6-2-166> ।।

व्यवायी - व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । वस्त्रान्तरः । वटान्तरः । कम्बलान्तरः । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । वस्त्रव्यवधायक इत्यर्थः । व्यवायिन इति किम्? आत्मान्तरः । आत्मा - स्वभावोऽन्तरः - अन्यो यस्यासावात्मान्तरः ।।

</6-2-166>

मुखं स्वाङ्गम् ।। <6-2-167> ।।

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः । स्वाङ्गमिति किम्? दीर्घमुखा शाला । स्वाङ्गमद्रवादिलक्षणमिह गृह्यते ।।

</6-2-167>

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।। <6-2-168> ।।

अव्यय, दिक्शब्द, गो , महत् , स्थूल, मुष्टि, पृथु, वत्स - इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति । अव्यय - उच्चैर्मुखः । नीचैर्मुखः । दिक्शब्द - प्राङ्मुखः । प्रत्यङ्मुखः । गो - गोमुखः । महत् - महामुखः । स्थूल - स्थूलमुखः । मुष्टि -मुष्टिमुखः । पृथु - पृथुमुखः । वत्स - वत्समुखः । पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति । गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते ।।

</6-2-168>

निष्ठोपमानादन्यतरस्याम् ।। <6-2-169> ।।

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति । प्रक्षालितमुखः । यदैतदुत्तरपदान्तोदात्तत्वं न भवति, तदा निष्ठोपसर्गपूर्वमन्यतरस्याम्(6-2-110/3844) इति पक्षे पूर्वपदान्तोदात्तत्वम् , तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति । उपमानात् -

सिंहमुखः । व्याघ्रमुखः ।।

</6-2-169>

जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ।। <6-2-170> ।।

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति । सारङ्गजग्धः । पलाण्डुभक्षितः । सुरापीतः । काल - मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः - सुखजातः । दुःखजातः । तृप्रजातः । जात्यादिभ्य इति किम्? पुत्रजातः। आहिताग्न्यादित्वात्परनिपातः । अनाच्छादनादिति किम्? वस्त्रच्छन्नः । वसनच्छन्नः । अकृतमितप्रतिपन्न इति किम्? कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवति अस्मादेव ज्ञापकात् । प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः । सुखादयस्तृतीयेऽध्याये(3-1-18/2674) पठ्यन्ते ।।
</6-2-170>
वा जाते ।। <6-2-171> ।।
जातशब्द उत्तरपदे वाऽन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः । दन्तजातः । स्तनजातः । कालात् - मासजातः । संवत्सरजातः । सुखादिभ्यः - सुखजातः । दुःखजातः ।।
</6-2-171>
नञ्सुभ्याम् ।। <6-2-172> ।।
नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति । अयवोदेशः। अव्रीहिः । अमाषः । सुयवः । सुव्रीहिः । सुमाषः । समासस्यैतदन्तोदात्तत्वमिष्यते । समासान्ताश्चावयवा भवन्तीति अनृचः बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति ।।
</6-2-172>
कपि पूर्वम् ।। <6-2-173> ।।
नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति । अकुमारीको देशः । अवृषलीकः । अब्रह्मबन्धूकः । सुकुमारीकः । सुवृषलीकः । सुब्रह्मबन्धूकः।।
</6-2-173>
ह्रस्वान्तेऽन्त्यात्पूर्वम् ।। <6-2-174> ।।
ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे । अयवको देशः । अव्रीहिकः । अमाषकः । सुयवकः । सुव्रीहिकः । सुमाषकः । पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्, ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति । तेनाज्ञकः , सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति ।।
</6-2-174>
बहोर्नञ्वदुत्तरपदभूम्नि ।। <6-2-175> ।।
उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति । नञ्सुभ्याम्(6-2-172/3906) इत्युक्तम्, बहोरपि तथा भवति - बहुयवो देशः, बहुव्रीहिः , बहुतिलः। कपि पूर्वम्(6-2-173/3907) इत्युक्तम्, बहोरपि तथा भवति - बहुकुमारीको देशः, बहुवृषलीकः , बहुब्रह्मबन्धूकः । ह्रस्वान्तेन्त्यात्पूर्वम्(6-2-174/3908)इत्युक्तम्। बहोरपि तथा भवति। बहुयवको देशः। बहुव्रीहिकः, बहुमाषकः । नञो जरमरमित्त्रमृताः96-2-116/3850) इत्युक्तम् , बहोरपि तथा भवति - बहुजरः । बहुमरः । पहुमित्त्रः । बहुमृतः । उत्तरपदभूम्नीति किम्? बहुषु मनोऽस्य बहुमना अयम् ।।
</6-2-175>
न गुणादयोऽवयवाः ।। <6-2-176> ।।
गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् ।
बहुच्छन्दोमानम् । बहुसूक्तः । बह्वध्यायः । गुणादिराकृतिगणो द्रष्टव्यः । अवयवा इति किम्? बहुगुणो ब्राह्मणः। अध्ययनश्रुतसदाचारादयोऽत्र गुणाः ।।
</6-2-176>
उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ।। <6-2-177> ।।
उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः । प्रोदरः । प्रललाटः । ध्रुवम् इत्येकरूपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः । उपसर्गादिति किम् ? दर्शनीयललाटः । स्वाङ्गमिति किम्? प्रशाखो वृक्षः । ध्रुवमिति किम्? उद्बाहुः क्रोशति। अपर्श्विति किम्? उत्पर्शु । विपर्शु ।।
</6-2-177>
वनं समासे ।। <6-2-178> ।।
समासमात्रे वनम् इत्येतदुत्तरपदमुपसर्गात्परमन्तोदात्तं भवति । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । प्रनिरन्तरः(8-4-5/1050)इति णत्वम्। समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात् ।।
</6-2-178>
अन्तः ।। <6-2-179>।।
अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः । अनुपसर्गार्थ आरम्भः ।।
</6-2-179>
अन्तश्च ।। <6-2-180> ।।
अन्तश्शब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः । बहुव्रीहिरयम् , प्रादिसमासो वा ।।
</6-2-180>

न निविभ्याम् ।। <6-2-181> ।।
नि, वि - इत्येताभ्यामुत्तरोऽन्तःशब्दो नान्तोदात्तो भवति । न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः तत्र उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (8-2-4/3757)इति स्वरितो भवति ।।
</6-2-181>
परेरभितोभावि मण्डलम् ।। <6-2-182> ।।
परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितीरम् । परिमण्डलम् । बहुव्रीहिरयम् , प्रादिसमासः , अव्ययीभावो वा । अव्ययीभावपक्षेऽपि परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु(6-2-33/3767) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते । अभित इत्युभयतः। अभितो भावोऽस्यास्तीति तदभितोभावि ।
यच्चैवंस्वभावं कूलादि, तदभितोभाविग्रहणेन गृह्यते ।।
</6-2-182>
प्रादस्वाङ्गं संज्ञायाम् ।। <6-2-183> ।।
प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् । अस्वाङ्गमिति किम्? प्रहस्तम् । प्रपदम् । संज्ञायामिति किम् ? प्रपीठम् ।।
</6-2-183>
निरुदकादीनि च ।। <6-2-184> ।।
निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मक्षिकम् । निर्मशकम् । एषां प्रादिसमासः बहुव्रीहिर्वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । निष्कालकः । निष्क्रान्तः कालकादिति कन्प्रत्ययान्तेन कालब्देन प्रादिसमासः । निष्कालिकः - इत्यन्ये पठन्ति । निष्पेषः । दुस्तरीपः । `अवितृस्तृतन्त्रिभ्य ईः(उ.446) - तरीः तां पातीति तरीपः , कुत्सितस्तरीपो दुस्तरीपः । निस्तरीप इति केचित् पठन्ति । अपरे - निस्तरीक इति । ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति । निरजिनम् । उदजिनम् । उपाजिनम् । `परेर्हस्तपादकेशकर्षाः(ग.सू.175) । परिहस्तः । परिपादः । पिरकेशः । परिकर्षः ।
निरुदकादिराकृतिगणः ।।
</6-2-184>
अभेर्मुखम् ।। <6-2-185> ।।
अभेरुत्तरं मुखमन्तोदात्तं भवति । अभिमुखः । बहुव्रीहिरयम् , प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । उपसर्गात्स्वाङ्गम्(6-2-177/3911) इति सिद्धे वचनमबहुव्रीह्यर्थम् , अध्रुवार्थम् स्वाङ्गार्थं च । अभिमुखा शाला ।।
</6-2-185>
अपाच्च ।। <6-2-186> ।।
अपाच्चोत्तरं मुखमन्तोदात्तं भवति । अपमुखः । अपमुखम् । अव्ययीभावोऽप्यत्र प्रयोजयति । तत्रापि हि परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु(6-2-33/3767) इत्युक्तम् । योगविभाग उत्तरार्थः ।।

</6-2-186>
स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ।। <6-2-187> ।।
स्फिग, पूत, वीणा, अञ्जस् , अध्वन् , कुक्षि - इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तानि भवन्ति । अपस्फिगम् । अपपूतम् । अपवीणम् । अपाञ्जः । अपाध्वा । उपसर्गादध्वनः(5-4-85/943) इति यदा समासान्तो नास्ति , तदाऽनेनान्तोदात्तत्वं भवति । तस्मिन् हि सत्यच्प्रत्ययस्य चित्वादेव सिद्धम् । अनित्यश्च समासान्तः इत्येतदेव ज्ञापकम् । अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । सर्वत्र प्रादिसमासः , बहुव्रीहिः , अव्ययीभावो वा । स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थम् , अर्ध्रुवार्थम् , अस्वाङ्गार्थं च ।।
</6-2-187>
अधेरुपरिस्थम् ।। <6-2-188> ।।
अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति । अधिदन्तः । अधिकर्णः । अधिकेशः । अध्यारूढो दन्त इति प्रादिसमासः । अध्यारूढो वा दन्त इति समासनाधिकरण उत्तरपदलोपी समासः । दन्तस्योपरि योऽन्यो दान्तो जायते स उच्यते - अधिदन्त इति । उपरिस्थमिति किम्? अधिकरणम् ।।
</6-2-188>
अनोरप्रधानकनीयसी ।। <6-2-189> ।।
अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति । अनुगतो ज्येष्ठमुज्येष्ठः । अनुमध्यमः । पूर्वपदार्थप्रधानः प्रादिसमासोऽयम् । अनुगतः कनीयान् अनुकनीयान् । उत्तरपदार्थप्रधानोऽयम् । प्रधानार्थं च कनीयोग्रहणम् । अप्रधानकनीयसी इति किम्? अनुगतो ज्येष्ठोऽनुज्येष्ठः ।।
</6-2-189>
पूरुषश्चान्वादिष्टः ।। <6-2-190> ।।
पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः - अन्वचितः , कथितानुकथितो वा । अन्वादिष्ट इति किम्? अनुगतः पुरुषो। अनुपुरुषः ।।

</6-2-190>
अतेरकृत्पदे ।। <6-2-191> ।।
अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति । अत्यङ्कुशो नागः । अतिकशोऽश्वः । पदशब्दः खल्वपि - अतिपदा शक्वरी । अकृत्पदे इति किम्? अतिकारकः । * अतेर्धातुलोप इति वक्तव्यम् * (म.भा.3-139)। इह मा बूत् - शोभनो गार्ग्यः । अतिगार्ग्यः । इह च यथा स्यात् - अतिक्रान्तः कारकादतिकारक इति।।
</6-2-191>
नेरनिधाने ।। <6-2-192> ।।
नेः परमुत्तरपदमन्तोदात्तं भवत्यनिधाने । निधानम् - अप्रकाशता , तद्भिन्नमनिधानम् - प्रकाशनम् । निमूलम् । न्यक्षम् । नितृणम् । बहुव्रीहिरयम् , प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । अनिधान इति किम्? निवाग्वृषलः । निदण्डः । निहितवाक् , निहितदण्ड इत्यर्थः । निशब्दोऽनिधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः ।।
</6-2-192>
प्रतेरंश्वादयस्तत्पुरुषे ।।<6-2- 193>।।
प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति । प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः । प्रतिराजा । राजशब्दः समासान्तस्यानित्यत्वाद्यदा टज् नास्ति तदा प्रयोजयति । तस्मिन्हि सति चित्त्वादेवान्तोदात्तत्वं सिद्धम् । अंशु । जन । राजन् । उष्ट्र। खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्द्ध । पुर । अंश्वादिः । तत्पुरुष इति किम्? प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः ।।
</6-2- 193>

उपाद् द्व्यजजिनमगौरादयः ।। <6-2-194> ।।
उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा । उपगतो देवमुपदेवः । उपसोमः । उपेन्द्रः उपहोडः । अजिन - उपाजिनम् । अगौरादय इति किम् ?उपगौरः । उपतैषः । गैर । तैष। तैट। लट । लोट। जिह्वा । कृष्णा । कन्या । गुड । कल्य। पाद। गौरादिः । तत्पुरुष इत्येव - उपगतः सोमोऽस्य उपसोमः ।।
</6-2-194>
सोरवक्षेपणे ।। <6-2-195> ।।
सुशब्दात्परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने । अवक्षेपणम् - निन्दा । इह खल्विदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः। सुशब्दोऽत्र पूजायामेव । वाक्यार्थस्तु अवक्षेपणमसूयया, तथाभिधानात् । सोरिति किम्? कुब्राह्मणः । अपक्षेपण इति किम्? शोभनेषु तृणेषु सुतृणेषु ।।
</6-2-195>
विभाषोत्पुच्छे ।। <6-2-196> ।।
उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति । उत्क्रान्तः पुच्छाद् उत्पुच्छः । यदा तु पुच्छमुदस्यति उत्पुच्छयति , उत्पुच्छयतेरच् उत्पुच्छः , तदा थाथादिसूत्रेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति । तत्पुरुष इत्येव - उदस्तं पुच्छमस्य उत्पुच्छः ।।
</6-2-196>
द्वित्रिभ्यां पाद्दन्मूर्धसु वहुव्रीहौ ।। <6-2-197> ।।
द्वि, त्रि - इत्येताभ्यामुत्तरेषु पाद् , दत् , मूर्धन् - इत्येषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषाऽन्त उदात्तो भवति । द्वौ पादावस्य `द्विपात्(तै.सं.2-6-8-3) । त्रिपात् । द्विदन् । त्रिदन् । द्विमूर्धा । त्रिमूर्धा । पादिति कृताकारलोपः पादशब्दो गृह्यते । ददिति कृतददादेशो दन्तशब्दः । मूर्धन्निति त्वकृतसमासान्तो नान्त एव मूर्धन्शब्दः । तस्यैतत्प्रयोजनम् - असत्यपि समासान्तोऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम् - अनित्यः समासान्तो भवतीति । यदाऽपि समासान्तः क्रियते, तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव - द्विमूर्धः , त्रिमूर्धः । द्वित्रिभ्यामिति किम्? कल्याणमूर्धा । पादादिष्विति किम्? द्विहस्तम् । बहुव्रीहाविति किम्? द्वयोर्मूर्धा द्विमूर्धा ।।
</6-2-197>
सक्थं चाक्रान्तात् ।। <6-2-198> ।।
सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात्परो विभाषान्तोदात्तो भवति । गौरसक्थः । श्लक्ष्णसक्थः । अक्रान्तादिति किम्? चक्रसक्थः । षचश्चित्वान्नित्यमन्तोदात्तत्वं भवति ।।
</6-2-198>
परादिश्छन्दसि बहुलम् ।। <6-2-199> ।।
छन्दसि विषये परादिरुदात्तो भवति बहुलम् । परशब्देनात्र सक्थशब्द एव गृह्यते । अञ्जिसक्थमालभेत । `त्वाष्ट्रौ लौमशसक्थौ(तै.सं.5-5-23-1) । ऋजुबाहुः । वाक्पतिः । चित्पतिः ।
`परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ।।(म.भा.3-141)

परादिरुदाहृतः। परान्तः--
* अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् *(म.भा.3-140)। `त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण(ऋ.1-118-2)।
पूर्वान्तः -

- पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम् *(म.भा.3-140)। मरुद्वृद्धः ।

पूर्वादिः -

- पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् *। दिवोदासाय सामागाय ते इत्येवमादि सर्वं संगृहीतं भवति ।।

इति श्रीवामनविरचितायां काशिकावृत्तौ
षष्ठाध्यायस्य द्वितीयः पादः
</6-2-199>

# काशिका/षष्ठोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pbv
< काशिका | षष्ठोऽध्यायः
<K.5.190>
अथ षष्ठाध्याये तृतीयः पादः
अलुगुत्तरपदे ।। <6-3-1> ।।
अलुक् इति च उत्तरपदे इति च एतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येव तद्वेतितव्यम् । वक्ष्यति - पञ्चम्याः स्तोकादिभ्यः। स्तोकान्मुक्तः । अल्पान्मुक्तः । उत्तरपद इति किम् ? निष्क्रान्तः स्तोकाद् निःस्तोकः । <K.5.191> अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं लक्षणप्रतिपदोक्त - परिभाषा नाश्रयितव्या। अलुगधिकारः प्रागानङः। उत्तरपदाधिकारः प्रागङ्गाधिकारात् ।।
</6-3-1>
<K.5.192>
पञ्चम्याः स्तोकादिभ्यः ।। <6-3-2> ।।
स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग्भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । समासे कृते प्रातिपदिकत्वात्सुपो लुकि प्राप्ते प्रतिषेधः क्रियते । <K.5.194> द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात्समास एव न <K.5.195> भवति - स्तोकाभ्यां मुक्तः, स्तोकेभ्यः मुक्तः इति । तेनात्र न कदाचिदप्यैकपद्यम् , ऐकस्वर्यं च भवति । * ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् *। ब्राह्मणादादाय शंसतीति <K.5.196> ब्राह्मणाच्छंसी इति । ऋत्विग्विशेषस्य रुढिरियम् । तस्य व्युत्पत्तिरसता सता वाऽवयवार्थेन क्रियते ।।
</6-3-2>
ओजः सहोम्भस्तमसस्तृतीयायाः ।। <6-3-3> ।।
<K.5.197>
ओजस्, सहस् , अम्भस् , तमस् - इत्यतेभ्य उत्तरस्यास्तृतीयाया अलुग्भवति उत्तरपदे । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् ।

- अञ्जस उपसंख्यानं कर्तव्यम् *। अञ्जसाकृतम् ।
- पुंसानुजो जनुषान्ध इति वक्तव्यम् *। पुंसानुजः ।।

</6-3-3>
मनसः संज्ञायाम् ।। <6-3-4> ।।
मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग्भवति । मनसादत्ता । मनसागुप्ता। मनसासङ्गता । संज्ञायामिति किम्? मनोदात्ता । मनोगुप्ता ।।
</6-3-4>
आज्ञायिनि च ।। <6-3-5> ।।
आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग्भवति । मनसाऽऽज्ञातुं शीलमस्य मनसाज्ञायी ।।
</6-3-5>
<K.5.198>
आत्मनश्च पूरणे ।। <6-3-6> ।।
आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग्भवति । आत्मनापञ्चमः । आत्मनाषष्ठः । `तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् इति तृतीया । तृतीया इति योगविभागात्समासः । आत्मना वा कृतः पञ्चम आत्मनापञ्चमः । <K.5.199> कथं जनार्दनस्तु आत्मचतुर्थः एव इति? बहुव्रीहिरयम् - आत्मा चतुर्थोऽस्यासौ आत्मचतुर्थः ।।
</6-3-6>
वैयाकरणाख्यायां चतुर्थ्याः ।। <6-3-7> ।।
वैयाकरणानामाख्या वैयाकरणाख्या । आख्या - संज्ञा । यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग्भवति । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । चतुर्थी इति योगविभागात्समासः ।।
</6-3-7>
<K.5.200>
परस्य च ।। <6-3-8> ।।
परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग्भवति । परस्मैपदम् । परस्मैभाषा ।।
</6-3-8>

हलदन्तात्सप्तम्याः संज्ञायाम् ।। <6-3-9> ।।
हलन्ताददन्ताच्चोत्तरस्याः सम्तम्याः संज्ञायामलुग्भवति । युधिष्ठिरः । त्वचिसारः । गविष्ठिरः इत्यत्र तु गवियुधिभ्यां स्थिरः इत्यत एव वचनादलुक् । अदन्तात् - अरण्येतिलकाः । अरण्येमाषकाः । वनेकिंशुकाः । वनेहरिद्रकाः । वनेबल्बजकाः । पूर्वाह्णेस्फोटकाः । कूपेपिशाचकाः । हलदन्तादिति किम्? नद्यां कुक्कुटिका नदीकुक्कुटिका । भूम्यां पाशाः भूमिपाशाः। संज्ञायामिति किम्? अक्षशौण्डः ।
<K.5.201> * हृद्युभ्यां ङेः * हृद्, दिव् - इत्येताभ्यामुत्तरस्य ङेरलुक् भवति । हृदिस्पृक् । दिविस्पृक् ।।
</6-3-9>
कारनाम्नि च प्राचां हलादौ ।। <6-3-10> ।।
प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हदन्तादुत्तरस्याः सप्तम्या अलुग्भवति । कूपेशाणन् । दृषदिमाषकः । हलेद्विपदिका । हलेत्रिपदिका । <K.5.202> कारविशेषस्य संज्ञा एताः , तत्र पूर्वेणैव सिद्धे नियमार्थमिदम् । एते च त्रयो नियमविकल्पा अत्रेष्यन्ते - कारनाम्न्येव, प्रचामेव, हलादावेवेति । कारनाम्नीति किम्? अभ्यर्हिते पशुः अभ्यर्हितपशुः । कारादन्यस्यैतद्देयस्य नाम । प्राचामिति किम्? यूथे पशुः यूथपशुः । हलादाविति किम्? अविकटे उरणः अविकटोरणः । हलदन्तादित्येव - नद्यां दोहनी नदीदोहनी ।।
</6-3-10>
<K.5.203>
मध्याद् गुरौ ।। <6-3-11> ।।
मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग्भवति । मध्येगुरुः ।

- अन्ताच्चेति वक्तव्यम् *। अन्तेगुरुः । सप्तमी इति योगविभागात् समासः ।।

</6-3-11>
अमूर्द्धमस्तकात् स्वाङ्गादकामे ।। <6-3-12> ।।
मूर्द्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग्भवति । कण्ठे कालोऽस्य कण्ठेकालः । उरसिलोमा । उदरेमणिः । अमूर्द्धमस्तकादिति किम्? मूर्धशिखः । मस्तकशिखः । अकाम इति किम्? मुखे कामोऽस्य मुखकामः । स्वाङ्गादिति किम्? अक्षशौण्डः । हलदन्तादित्येव - अङ्गुलित्राणः । जङ्घावलिः ।।
</6-3-12>
बन्धे च विभाषा ।। <6-3-13> ।।
बन्धे इति घञन्तो गृह्यते, तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः <K.5.204> सप्तम्या विभाषाऽलुग्भवति । हस्तेबन्धः, हस्तबन्धः । चक्रेबन्धः , चक्रबन्धः । उभयत्रविभाषेयम् । स्वाङ्गाद्धि बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति। तत्पुरुषे तु स्वाङ्गादस्वाङ्गाच्च नेन्त्सिद्धबध्नातिषु च इति प्रतिषेधः प्राप्नोति । हलदन्तादित्येव - गुप्तिबन्धः ।।
</6-3-13>
तत्पुरुषे कृति बहुलम् ।। <6-3-14> ।।
तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुग्भवति । स्तम्बेरमः । कर्णेजपः । <K.5.205> न च भवति
- कुरुचरः, मद्रचरः ।।
</6-3-14>
प्रावृट्शरत्कालदिवां जे ।। <6-3-15> ।।
प्रावृट्, शरत् , काल, दिव् - इत्येतेषां जे उत्तरपदे सप्तम्या बहुलमलुग्भवति । प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यैवायं प्रवञ्चः ।।
</6-3-15>
विभाषा वर्षक्षरशरवरात् ।। <6-3-16> ।।
वर्ष, क्षर, शर, वर - इत्येतेभ्यः उत्तरस्याः सप्तम्या ज उत्तरपदे विभाषाऽलुग्भवति । वर्षेजः , वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः ।।
</6-3-16>
घकालतनेषु कालनाम्नः ।। <6-3-17> ।।
<K.5.206>
घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति । घ - पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे । काल - पूर्वाह्णेकाले, पूर्वाह्णकाले । तन- पूर्वाह्णेतने , पूर्वाह्णतने । कालनाम्न इति किम्? शुक्लतरे, शुक्लतमे । हलदन्तादित्येव - रात्रितरायाम् । उत्तरपदाधिकारे प्रत्ययग्रहणे <K.5.207> तदान्तविधिर्नेष्यते, हृदयस्य हृल्लेख इति लेखग्रहणाल्लिङ्गात् । तेन घतनग्रहणे तदन्तग्रहणं न भवति। काल इति न स्वरूपग्रहणम् ।।
</6-3-17>
शयवासवासिष्वकालात् ।। <6-3-18> ।।
शय, वास, वासिन् - इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्या सप्तम्या विभाषाऽलुगभवति । खेशयः ,खशयः । ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी । अकालादिति किम्? पूर्वाह्णशयः । हलन्तादित्येव - भूमिशयः ।

- अपो योनियन्मतुषु सप्तम्या अलुग्वक्तव्यः *। अप्सुयोनिः । <K.5.208> अप्सव्यः । अप्सुमन्तौ । अप्सु भव इति दिगादित्वाद्यत्प्रत्ययः । सर्वत्र सप्तमी इति योगविभागात्समासः ।।

</6-3-18>
नेन्तिसिद्धबध्नातिषु च ।। <6-3-19> ।।
इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्या अलुग्न भवति । स्थण्डिलवर्ती । सिद्ध - साङ्काश्यसिद्धः । काम्पिल्यसिद्धः । <K.5.209> बध्नाति - चक्रबद्धः । चारबद्धः । सप्तमी इति योगविभागात् समासः । चक्रबन्धः इति केचिदुदाहरन्ति, तत्पचाद्यजन्तं द्रष्टव्यम् । घञन्ते हि बन्धे च विभाषा इत्युक्तम् ।।
</6-3-19>
स्थे च भाषायाम् ।। <6-3-20> ।।
स्थे चोत्तरपदे भाषायां सप्तम्या अलुग्न भवति । समस्थः । विषमस्थः । कूटस्थः । पर्वतस्थः । भाषायामिति किम्? कृष्णः अस्य आखरेष्ठः। `पूर्वपदात् इति षत्वम् ।।
</6-3-20>
षष्ठ्या आक्रोशे ।। <6-3-21> ।।
आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति । चौरस्यकुलम् । वृषलस्यकुलम् । <K.5.210> आक्रोशे इति किम्? ब्राह्मणकुलम् ।

- षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग् वक्तव्यः *। वाचोयुक्तिः । दिशोदण्डः। । पश्यतोहरः ।
- आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः *। अमुष्यापत्यम् आमुष्यायणः । नडादित्वात् फक् । अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् । तथा - आमुष्यकुलिका इति ।
- देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग्वक्तव्यः * देवानांप्रियः।
- शेपपुच्छलाङ्गूलेषु शुनः संज्ञायां षष्ठ्या अलुग्वक्तव्यः *। शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ।
- दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः *। दिवोदासाय गायति ।

</6-3-21>
पुत्रेऽन्यतरस्याम् ।। <6-3-22> ।।
पुत्रशब्द उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग् <K.5.211> भवति । दास्याःपुत्रः, दासीपुत्रः । वृषल्याःपुत्रः, वृषलीपुत्रः, आक्रोश इत्येव - ब्राह्मणीपुत्रः ।।
</6-3-22>
ऋतो विद्यायोनिसम्बन्धेभ्यः ।। <6-3-23> ।।
ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग्भवति । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । ऋत इति किम्? आचार्यपुत्रः । मातुलपुत्रः । विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्। विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे यथा स्याद्, अन्यत्र मा भूत् - होतृधनम् । पितृधनम् । होतृगृहम् । पितृगृहम् ।।
</6-3-23>
<K.5.212>
विभाषा स्वसृपत्योः ।। <6-3-24> ।
स्वसृ, पति - इत्येतयोरुत्तरपदयोः ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो विभाषाऽलुग्भवति । मातुःष्वसा। मातृस्वसा। मातृष्वसा । पितुःष्वसा । पितुःस्वसा । पितृष्वसा । यदा लुक् तदा मातुपितृभ्यां स्वसा इति नित्यं षत्वम् । यदा त्वलुक् तदा मातृपितृभ्यामन्यतरस्याम् इति विकल्पेन षत्वम् । दुहितुःपतिः । दुहितृपतिः । ननान्दुःपतिः । ननान्दृपतिः ।।
</6-3-24>
आनङ् ऋतो द्वन्द्वे ।। <6-3-25> ।।
ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति । हेतापोतारौ । नेष्टोद्गातारौ । प्रशास्ताप्रतिहर्तारौ । योनिसम्बन्धेभ्यः - मतापितरौ । यातानन्दरौ । <K.5.213> नकारोच्चारणं परत्वनिवृत्यर्थम् । ऋत इति किम्? पितृपितामहौ । पुत्रे इत्यत्रानुवर्त्तते ऋतः इति च । तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यानङादेशो भवति । पितापुत्रौ । मातापुत्रौ ।।
</6-3-25>
<K.5.214>
देवताद्वन्द्वे च ।। <6-3-26> ।।
देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशे भवति । इन्द्रावरुणौ। इन्द्रासोमौ । इन्द्राबृहस्पती।
द्वन्द्वे इति वर्त्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यार्थम् । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यते । तत्र ये लोके प्रसिद्धसाहचर्याः, वेदे च ये सहवापनिर्दिष्टास्तेषामिह ग्रहणं भवति । तेन ब्रह्मप्रजापती, शिववैश्रवणौ इत्येवमादौ न भवति ।

<K.5.215> * उभयत्र वायोः प्रतिषेधो वक्तव्यः *। अग्निवायू। वाय्वग्नी ।।
</6-3-26>
ईदग्नेः सोमवरुणयोः ।। <6-3-27> ।।
सोम, वरुण - इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति । अग्नीषोमौ। अग्नीवरुणौ । अग्नेः स्तुत्स्तोमसोमाः इति षत्वम् ।।
</6-3-27>
इद् वृद्धौ ।। <6-3-28> ।।
कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो भवति । आग्निवारुणीम् अनड्वाहीमालभेत। आग्निमारुत्तं कर्म क्रियते । अग्नीवरुणौ देवते अस्य, अग्नीमरुतौ देवते अस्येति तद्धितः । तत्र देवताद्वन्द्वे च इत्युभयपदवृद्धौ कृतायामानङ् ईत्वं च बाधितुमिकारः क्रियते । वृद्धाविति किम् ? आग्नेन्द्रः । नेन्द्रस्य परस्य इत्युत्तरपदवृद्धिः प्रतिषिध्यते ।
<K.5.216> * इद् वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः *। आग्नावैष्णवं चरुं निर्वपेत्।।
</6-3-28>
दिवो द्यावा ।। <6-3-29> ।।
दिवित्येतस्य द्यावा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । द्यावाक्षामा। द्यावाभूमी।।
</6-3-29>
दिवसश्च पृथिव्याम् ।। <6-3-30> ।।
पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवः दिवस् - इत्ययमादेशो भवति, चकाराद् द्यावा च । दिवस्पृथिव्यौ। द्यावावृथिवयौ । अकोरोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति । <K.5.217> कथम् द्यावा चिदस्मै पृथिवी नमेते इति? कर्तव्योऽत्र यत्नः ।।
</6-3-30>
उषासोषसः ।। <6-3-31> ।।
उषसः उषासा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । उषसासूर्यम् । उषासानक्ता।।
</6-3-31>
मातरपितरावुदीचाम् ।। <6-3-32> ।।
मातरपितरौ इत्युदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते । मातरपितरौ । उदीचामिति किम्? मातापितरौ ।।
</6-3-32>
पितरामातरा च च्छन्दसि ।। <6-3-33>।।
पितरामातरा इति छन्दसि निपात्यते । `आ मा गन्तां पितरामातरा च(वा.सं.9-19) । पूर्वपदस्य अराङादेशो निपात्यते । उत्तरपदे तु सुपां <K.5.218> सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः(7-1-39/3561) इति आकारादेशः , तत्र ऋतो ङिसर्वनामस्थानयोः(7-3-110/275) गुणः । छन्दसीति किम्? मातापितरौ ।।
</6-3-33>
स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।। <6-3-34> ।।
<K.5.221> भाषितः पुमान्येन समानायामाकृतावेकस्मिन्प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः । तदेतदेवं कथं भवति भाषितः पुमान् <K.5.223> यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः । ऊङोऽभावः अनूङ्, भाषितपुंस्कादनूङ् <K.5.224>यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनुङ् स्त्रीशब्दः । बहुव्रीहिरयम् , अलुग् निपातनात् पञ्चम्याः । तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते। दर्शनीयभार्यः । श्लक्ष्णचूडः । दीर्घजङ्घः ।
<K.5.225> स्त्रिया इति किम्? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कादिति किम्? खट्वाभार्यः । समानायामाकृताविति किम्? द्रोणीभार्यः । कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्यः इति? कर्तव्योऽत्र यत्नः । <K.5.226> अनूङ् इति किम्? ब्रह्मबन्धूभार्यः । समानाधिकरण इति किम्? कल्याण्या माता कल्याणीमाता । स्त्रियामिति किम्? कल्याणी प्रधानमेषां कल्याणीप्रधानाः इमे । अपूरणीति किम्? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमाः रात्रयः । कल्याणीदशमाः। प्रधानपूरणीग्रहणं कर्तव्यम् , इह मा भूत् - कल्याणपञ्चमीकः पक्ष <K.5.227> इति । अप्पूरणीप्रमाण्योः इत्यत्रापि प्रधानपूरणीग्रहणमेवेत्यप्प्रत्ययो न भवति । अप्रियादिष्विति किम्? कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा ।
अम्बा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । प्रियादिः । दृढभक्तिः इत्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम् ।।
</6-3-34>
<K.5.228>
तसिलादिष्वाकृत्वसुचः ।। <6-3-35> ।।
पञ्चम्यास्तसिल् इत्यतः प्रभृति सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति प्रागेतस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति ।

वुग् उवङादेशे - बभूव, बभूवतुः, बभूवुः । युट् यणादेशे - उपदिदीये , उपदिदीयाते, उपदिदीयिरे । आ भादित्ययमभिविधावाङ् । तेन भाधिकारेऽप्यसिद्धवद्भवति ।।
</6-4-22>
श्नान्नलोपः ।। <6-4-23> ।।
श्नादिति - श्नमयमुत्सृष्टमकारो गृह्यते , तत उत्तरस्य नकारस्य लोपो भवति । अनक्ति । भनक्ति । हिनस्ति । शकारवतो ग्रहणं किम्? यज्ञानाम् , यत्नानाम् - सुपि च(7-3-102/202) इति परत्वात् कृतेऽपि दीर्घत्वे स्थानिवद्भावान्नलोपः स्यादेव । विश्नानाम्, प्रश्नानामित्यत्र लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव(व्या.प.3) इत्येवं न भवति ।।
</6-4-23>
अनिदितां हल उपधायाः क्ङिति ।। <6-4-24> ।।
अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः । स्रस्तः , ध्वस्तः । स्रस्यते, ध्वस्यते । सनीस्रस्यते, दनीध्वस्यते । अनिदितामिति किम्? नन्द्यते, नानन्द्यते । हल इति किम्? नीयते, नेनीयते । उपधाया इति किम्? नह्यते, नानह्यते । क्ङितीति किम्? स्रंसिता , ध्वंसिता ।

- अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम् *(म.भा.3-194)। विलगितः । विकपितः । उपतापशरीरविकारयोरिति किम्? विलङ्गितः । विकम्पितः ।
- रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम् *(म.भा.3-194)। रजयति मृगान्। जनीजॄष्क्नसुरञ्चोऽमन्ताश्च(ग.सू.सि.कौ.पृ.732) इति मित्वादुपधाह्रस्वत्वम् । मृगरमण इति किम्? रञ्जयति वस्त्राणि ।
- घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम् *(म.भा.3-194)। रागी । त्यजरजभज(3-2-142/3122) इति निपातनाद्वा सिद्धम् ।
- रजक-रजन-रजःसूपसंख्यानं कर्त्तव्यम् *(म.भा.3-195)। रजकः । रजनम् । रजः ।।

</6-4-24>
दंशसञ्जस्वञ्जां शपि ।। <6-4-25> ।।
दंश, सञ्ज, ष्वञ्ज - इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति । दशति । सजति । परिष्वजते ।।
</6-4-25>
रञ्जेश्च ।। <6-4-26> ।।
रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति । रजति, रजतः, रजन्ति । पृथग्योगकरणमुत्तरार्थम् ।।
</6-4-26>
घञि च भावकरणयोः ।। <6-4-27> ।।
भावकरणवाचिनि घञि परतो रञ्जेरुपधाया नकारस्य लोपो भवति । भावे - आश्चर्यो रागः । विचित्रो रागः । करणे-रज्यतेऽनेनेति रागः । भावकारणयोरिति किम्? रजन्ति तस्मिन्निति रङ्गः ।।
</6-4-27>
स्यदो जवे ।। <6-4-28> ।।
जवेऽभिधेये स्यदः इति घञि निपात्यते । स्यन्देर्नलोपो वृद्ध्यभावश्च । इक्प्रकरणात् न धातुलोपः(1-1-4/2656) इति प्रतिषधो नास्ति - गोस्यदः , अश्वस्यदः । जव इति किम्? तैलस्यन्दः । घृतस्यन्दः ।।
</6-4-28>
अवोदैधोद्मप्रश्रथहिमश्रथाः ।। <6-4-29> ।।
अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ - इत्येते निपात्यन्ते । अवोद इति , उन्देरवपूर्वस्य घञि नलोपो निपात्यते । एध इति, इन्धेर्घञि नलोपो गुणश्च निपात्यते न धातुलोप आर्धधातुके(1-1-4/2656) इति हि प्रतिषेधः स्यात् ।
ओद्म इति, उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते । प्रश्रथ इति, प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । हिमश्रथ इति , हिमपूर्वस्य श्रन्थेर्घञ्येव निपातनम् ।
</6-4-29>
नाञ्चेः पूजायाम् ।। <6-4-30> ।।
अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति । अञ्चिता अस्य गुरवः । अञ्चितमेव शिरो वहति । अञ्चेः पूजायाम्(7-2-53/3047) इति इडागमः । पूजायामिति किम्? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः । यस्य विभाषा(7-2-15/3025) इतीट्प्रतिषेधः ।।
</6-4-30>
क्त्वि स्कन्दिस्यन्दोः ।। <6-4-31> ।।
क्त्वाप्रत्यये परतः स्कन्द, स्यन्द - इत्येतयोर्नकारलोपो न भवति । स्कन्त्वा । स्यन्त्वा । स्यन्देरुदित्वात्(धा.पा.761) पक्षे इडागमः (7-2-44/2279)- स्यन्दित्वा । तत्र यदा इडागमस्तदा न क्त्वा सेट्(1-2-18/3322) इति कित्वप्रतिषेधादेव नलोपाभावः ।।

</6-4-31>
जान्तनशां विभाषा ।। <6-4-32> ।।
जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति । रङ्क्त्वा , रक्त्वा । भङ्क्त्वा , भक्त्वा । नशः नष्ट्वा, नंष्ट्वा । इट्पक्षे - नशित्वा ।।
</6-4-32>
भञ्जेश्च चिणि ।। <6-4-33> ।।
भञ्चेश्च चिणि परतो विभाषा नकारलोपो भवति । अभाजि, अभञ्जि । अप्राप्तोऽयं नलोपः पक्षे विधीयते , ततो नेति नानुवर्त्तते ।।
</6-4-33>
शास इदङ्हलोः ।। <6-4-34> ।।
शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति । अन्वशिषत् , अन्वशिषताम् , अन्वशिषन् । हलादौ किति- शिष्टः । शिष्टवान् । ङिति - आवां शिष्वः । वयं शिष्मः । इत्त्वे कृते शासिवसिघसीनां च(8-3-60/2410) इति षत्वम् ।
अङ्हलोरिति किम्? शासति । शशासतुः , शशासुः ।

- क्वौ च शास इत्वं भवतीति वक्तव्यम् *(म.भा.3-195)। आर्यान् शास्तीति आर्यशीः । मित्रशीः । यस्मात् शासेरङ् विहितः `शासु अनुशिष्टौ(धा.पा.1076) इति, तस्यैवेदं ग्रहणमिष्ये । `आङः शासु इच्छायाम्(धा.पा.1023) इत्यस्य न भवति - आशास्ते, आशास्यमानः ।

- क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम् *(म.भा.3-195)। आशीः, आशिषौ , आशिषः । क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्(8-2-104/3623) इति निपातनाद्वा सिद्धम् ।।

</6-4-34>
शा हौ ।। <6-4-35> ।।
शासो हौ परतः शा इत्ययमादेशो भवति । अनुशाधि । प्रशाधि । उपधायाः इति निवृत्तम्, ततः शासः इति स्थानेयोगा षष्ठी(1-1-49/38) भवति । क्ङिति इत्येतदपि निवृत्तम् । तेन यदा वा छन्दसि(3-4-88/3552) इति पित्त्वं हिशब्दस्य, तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ।।
</6-4-35>
हन्तेर्जः ।। <6-4-36> ।।
हन्तेर्धातोर्ज तइत्ययमादेशो भवति हौ परतः । जहि शत्रून् ।।
</6-4-36>
अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।। <6-4-37> ।।
अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः । यमु-यत्वा । यतः । यतनान् । यतिः । रमु - रत्वा । रतः । रतनान् । रतिः । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः । वनति - वतिः । क्तिनो रूपमेतत् । क्तिचि तु न क्तिचि दीर्घश्च(6-4-39/3314) इति भवति । अन्यत्र झलादाविटा भवितव्यम् । तनोत्यादयः - ततः । ततवान् । सनोतेरात्वं वक्ष्यति । क्षणु- क्षतः । क्षतवान् । ऋणु - ऋतः । ऋतवान् । तृणु - तृतः । तृतवान् । घृणु - घृतः । घृतवान् । वनु-वतः । वतवान् । मनु-मतः । मतवान् । ङिति- अतत । अतथाः । अनुदात्तोपदेशवनतितनोत्यादीनामिति किम्? शान्तः । शान्तवान् । तान्तः । तान्तवान् । दान्तः । दान्तवान्। अनुनासिकस्येति किम्? पक्वः । पक्ववान् । झलीति किम्? गम्यते । रम्यते । क्ङितीति किम्? यन्ता । यन्तव्यम् । उपदेशग्रहणं किम्? इह च यथा स्यात् - गतिः । इह च मा भूत् - शान्तः , शान्तवानिति ।।
</6-4-37>
वा ल्यपि ।। <6-4-38> ।।
ल्यपि परतोऽनुदात्तोपदेशावनतितनोत्यादीनामनुनासिकलोपो वा भवति । व्यवस्थितविभाषा चेयम् , तेन मकारन्तानां विकल्पो भवति । अन्यत्र नित्यमेव लोपः । प्रयत्य, प्रयम्य । प्ररत्य, प्ररम्य। प्रणत्य, प्रणम्य। आगत्य, आगम्य। आहत्य। प्रमत्य । प्रवत्य। प्रक्षत्य ।।
</6-4-38>
न क्तिचि दीर्घश्च ।। <6-4-39> ।।
क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति । यन्तिः । वन्तिः । तन्तिः । अनुनासिकलोपे प्रतिषिद्धे अनुनासिकस्य क्विझलोः क्ङिति(6-4-15/2666) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिद्ध्यते ।।
</6-4-39>
गमः क्वौ ।। <6-4-40> ।।
गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् । अध्वगतो हरयः ।

- गमादीनामिति वक्तव्यम् *(म.भा.3-196)। इहापि यथा स्यात् - संयत् । परीतत् ।

- ऊ च गमादीनामिति वक्तवयम् *(म.भा.3-196)। अग्रेगूः । अग्रेभूः ।।

</6-4-40>
विड्वनोरनुनासिकस्यात् ।। <6-4-41> ।।
विटि वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति । `अब्जा गौजा ऋतजा अद्रिजाः (ऋ.4-40-5)। `गौषा इन्द्रो नृषा असि(ऋ.9-2-10) । कूपखाः । शतखाः । सहस्रखाः । दधिक्राः । अग्रेगा उन्नेतृणाम् । जनसनखनक्रमगमो विट्(3-2-67/3413) इति विट् प्रत्ययः । सनोतेरनः(8-3-108/3645) इति षत्वम् - `गोषा इन्दो नृषा असि(ऋ.9-2-10)इत्यत्र । वन्- विजावा । अग्रेजावा । अन्यभ्योऽपि दृश्यन्ते(3-2-75/2980) इति वनिप्प्रत्ययः । अनुनासिकस्य इति वर्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम् , अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात् ।।
</6-4-41>
जनसनखनां सञ्झलोः ।। <6-4-42> ।।
झलि, क्ङिति इति चानुवर्तते । जन, सन, खन - इत्येतेषामङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परत आकार आदेशो भवति । जन् - जातः । जातनान् । जातिः । सन्-सनि, सिषासति । सातः । सातनान् । सातिः । खन् - खातः । खातवान् । खातिः । झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते इह मा भूत् - जिजनिषति ।
सिसनिषति । चिखनिषति । सनोतेः सनीवन्तर्ध(7-2-49/2618) इति पक्ष इडागमः । तदिह सनोत्यर्थमेव सन्ग्रहणम् । अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधाद् आत्वमनुनासिकलोपं बाधते । घुमास्थागापाजहातिसां हलि(6-4-66/2462) इति हल्ग्रहणं ज्ञापकम् - अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ।।
</6-4-42>
ये विभाषा ।। <6-4-43> ।।
यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा । जायते, जन्यते । जाजायते, जञ्जन्यते । सायते, सन्यते । सासायते, संसन्यते । खायते, खन्यते। चाखायते, चङ्खन्यते । जनः श्यनि ज्ञाजनोर्जा(7-3-79/2511) इति नित्यं जादेशो भवति ।।
</6-4-43>
तनोतेर्यकि ।। <6-4-44> ।।
तनोतेर्यकि परतो विभाषा आकार आदेशो भवति । तायते, तन्यते । यकीति किम्? तन्तन्यते ।।
</6-4-44>
सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।। <6-4-45> ।।
सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति लोपश्चास्यान्यतरस्याम् । सातिः, सन्ति। सतिः । अन्यतरस्यांग्रहणं विस्पष्टार्थम् । ये सम्बद्धं हि विभाषाग्रहणमिह निवृत्तमित्याशाङ्क्येत ।।
</6-4-45>
आर्धधातुके ।। <6-4-46> ।।
आर्धधातुके इत्यधिकारः । न ल्यपि(6-4-69/3335) इति प्रागेतस्यमाद्यदित ऊर्ध्वमनुक्रमिष्यामः आर्धधातुके इत्यवं तद्वेदितव्यम् । वक्ष्यति - अतो लोपः(6-4-48/2308) । चिकीर्षिता । जिहीर्षिता । आर्धधातुक इति किम्? भवति । भवतः । अदीप्रभृतिभ्यः शपः(2-4-72/2423) लुग्वचनं प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतन्न ज्ञापकं शपो लोपाभावस्य । यस्य हलः(6-4-49/2631) । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । आर्धधातुक इति किम्? बेभिद्यते । णेरनिटि(6-4-51/2313) । कारणा । हारणा । आर्धधातुक इति किम्? कारयति । हारयति । आतो लोप इटि च(6-4-64/2372) । ययतुः । ययुः । ववतुः । ववुः । आर्धधातुक इति किम्? यान्ति वान्ति । घुमास्थागापाजहातिसां हलि(6-4-66/2452) । दीयते । धीयते । आर्धदातुक इति किम् ? अदाताम् । अधाताम् । वाऽन्यस्य संयोगादेः(6-4-68/2378) । स्नेयात्, स्नायात् । आर्धधातुक इति किम्? स्नायात् । आशीर्लिङोऽन्यत्र न भवति । स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च(6-4-62/2757) । कारिषीष्ट । हारिषीष्ट ।
आर्धधातुक इति किम्? क्रियेत । ह्रियेत । यगन्तस्याजन्तत्वाच्चिण्वद्भावे सति वृद्धिः स्यात् , ततश्च युक् प्रसज्येत ।।
`अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि।।(म.भा.3-198)
</6-4-46>
भ्रस्जो रोपधयो रमन्यतरस्याम् ।। <6-4-47> ।।
भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति । रोपधतोः इति स्थानषष्ठीनिर्देशादुपधा, रेफश्च निवर्तते । मित्वाच्चायमचोऽन्त्यात्परो भवति । भ्रष्टा, भर्ष्टा । भ्रष्टुम् , भर्ष्टुम् । भ्रष्टव्यम् , भर्ष्टव्यम् । भ्रज्जनम् , भर्ज्जनम् । भृष्टः भृष्टवान् इत्यत्र पूर्वविप्रतिषेधेन(म.भा.3-200) सम्प्रसारणं भवति । उपदेश इत्येव - बरीभृज्यते ।।
</6-4-47>
अतो लोपः । <6-4-48> ।।
अकारान्तस्यार्धधातुके लोपो भवति । चिकीर्षिता । चिकीर्षितुम् । चिकीर्षितव्यम् । धिनुतः । कृणुतः । अत इति
किम्? चेता । स्तोता । तपरकरणं किम्? याता । वाता । आर्धधातुक इति किम्? वृक्षत्वम् । वृक्षता । वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन।

(म.भा.3-200) चिकीर्षकः । जिहीर्षकः । चिकीर्ष्यते । जिहीर्ष्यते ।।
</6-4-48>
यस्य हलः ।। <6-4-49> ।।
हल उत्तरस्य यशब्दस्यार्धधातुके लोपो भवति । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । यस्य इति सङ्घातग्रहणमेतत् । तत्र अलोऽन्त्यस्य(1-1-52/42) इत्येतन्न भवति अतो लोपः(6-4-48/2308) इत्यनेनैव तस्य सिद्धत्वात् । हलः इति वा
पञ्चमीनिर्द्देशः , तत्र आदेः परस्य(1-1-54/44) इति यकारोऽनेन लुप्यते । सङ्घातग्रहणं किम्? इर्ष्यिता । मव्यिता । हल इति किम्? लोलूयिता । पोपूयिता ।।
</6-4-49>
क्यस्य विभाषा ।। <6-4-50> ।।
क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके । समिधिता, समिध्यिता । दृषदिता, दृषयिता । समिधमात्मन इच्छति, समिधमिवात्मानमाचरति - इति वा क्यच्क्यङौ यथायोगं कर्त्तव्यौ ।।
</6-4-50>
णेरनिटि ।। <6-4-51> ।।
अनिडादावार्धधातुके णेर्लोपो भवति । इयङ्यण्गुणवृद्धिदीर्घाणामपवादः । अततक्षत् । अररक्षत् । आटिटत् । आशिशत् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते । ज्ञीप्सति । अनिटीति किम्? कारयिता । हारयिता ।
</6-4-51>
निष्ठायां सेटि ।। <6-4-52> ।।
निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् । सेटीति किम्? संज्ञपितः पशुः । इड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति । सनीवन्तर्ध(7-2-49/2628) इति ज्ञपेरिटि विकल्पिते यस्य विभाषा(7-2-15/3025) इति निष्ठायां प्रतिषेधः । अथ पुनः एकाचः इति तत्रानुवर्त्तते , तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम्? तत् क्रियते कालावधारणार्थम् - इडागमे कृते णिलोपो यथा स्यात् । अकृते हि तत्र णिलोपे सति कारितमित्यत्र एकाच उपदेशेऽनुदात्तात्(7-2-10/2246) इतीटः प्रतिषेधः प्रसज्येत ।।
</6-4-52>
जनिता मन्त्रे ।। <6-4-53> ।।
जनितेति मन्त्रविषये इडादौ णिलोपो निपात्यते । `यो नः पिता जनिता(ऋ.10-82-3) । मन्त्र इति किम् ? जनयिता ।
</6-4-53>
शमिता यज्ञे ।। <6-4-54> ।।
यज्ञकर्मणि शमितेति इडादौ तृचि णिलोपो निपात्यते । शृतं हविः शमितः । तृचि सम्बुद्ध्यन्तमेतत् । यज्ञे इति किम्? शृतं हविः शमयितः ।।
</6-4-54>
अयामन्ताल्वाय्येत्न्विष्णुषु ।। <6-4-55> ।।
आम् , अन्त, आलु, आय्य, इत्नु , इष्णु - इत्येतेषु परतो णेरयादेशो भवति । कारयाञ्चकार । हारयाञ्चकार । अन्त - गाण्डयन्तः । मण्डयन्तः । आलु - स्पृहयालुः । गृहयालुः । आय्य - `स्पृहयाय्यः(ऋ.6-15-12) । गृहयाय्यः । इत्नु - स्तनयित्नुः । इष्णु - `पोषयिष्णवः(मै.4-2-14) । पारयिष्णवः । न इति वक्तव्ये अयादेशवचनमुत्तरार्थम् ।।
</6-4-55>
ल्यपि लघुपूर्वात् ।। <<6-4-56>> ।।
ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेरयादेशो भवति । प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः । ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवति, असमानाश्रयत्वात् - ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति । लघुपूर्वादिति किम्? प्रपात्य गतः ।।
</6-4-56>
विभाषाऽऽपः ।। <6-4-57> ।।
आप उत्तरस्य णेर्ल्यपि परतो विभाषाऽयादेशो भवति । प्रापय्य गतः । प्राप्य गतः । इडादेशस्य लाक्षणिकत्वान्न भवति - अध्याप्य गतः ।।
</6-4-57>
युप्लुवोर्दीर्घश्छन्दसि ।। <6-4-58> ।।
यु, प्लु - इत्येतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति । `दान्त्यनुपूर्वं वियूय(ऋ.10-131-2) । `यत्रा यो दक्षिणा परिप्लूय(काठ.सं.25-3) । छन्दसीति किम्? संयुत्य । आप्लुत्य।।
</6-4-58>
क्षियः ।। <6-4-59> ।।
क्षियश्च दीर्घो भवति ल्यपि परतः । प्रक्षीय ।।
</6-4-59>
निष्ठायामण्यदर्थे ।। <6-4-60> ।।

ण्यतः कृत्यस्यार्थो भावकर्मणी, ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति । आक्षीणः । प्रक्षीणः। परिक्षीणः । अकर्मकत्वात् क्षियः कर्त्तरि क्तः । प्रक्षीणमिदं देवदत्तस्येति क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः(3-4-76/3087) इत्यधिकरणे क्तः । अण्यदर्थ इति किम्? `अक्षितमसि मामेक्षेष्ठाः(तै.सं.1-6-5-1) । क्षितमिति भावे दीर्घाभावात् क्षियो दीर्घात्(8-2-46/3015) इति निष्ठानत्वमपि न भवति ।।
</6-4-60>
वाऽऽक्रोशदैन्ययोः ।। <6-4-61> ।।
आक्रोशे गम्यमाने, दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति । क्षितायुरेधि । क्षीणायुरेधि । दैन्ये - क्षितकः । क्षीणकः । क्षितोऽयं तपस्वी । क्षीणोऽयं तपस्वी ।।
</6-4-61>
स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।। <6-4-62> ।।

स्य, सिच्, सीयुट्, तासि - इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानाम्, हन्, ग्रह, दृश् - इत्येतेषां च चिण्वत्कार्यं भवति वा। यदा चिण्वत् तदा इडागमो भवति । कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्। ते हि प्रकृताः । अङ्गस्य तु लक्ष्यविरोधान्न क्रियते । कानि पुनरस्य योगस्य प्रयोजनानि?

चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ।।

अजन्तानां तावत् - चायिष्यते, चेष्यते, अचायिष्यत, अचेष्यत । दायिष्यते, दास्यते, अदायिष्यत, अदास्यत । शामिष्यते, शमिष्यते, शमयिष्यते, अशामिष्यत, अशमिष्यत, अशमयिष्यत । हन् - घानिष्यते, हनिष्यते , अघानिष्यत, अहनिष्यत । ग्रह - ग्राहिष्यते, ग्रहीष्यते अग्राहिष्यत, अग्रहीष्यत । ग्रहोऽलिटि दीर्घः(7-2-37/2562) इति प्रकृतस्येटो दीर्घत्वम् । दृश् - दर्शिष्यते , द्रक्ष्यते, अदर्शिष्यत, अद्रक्ष्यत ।
सिच्यजन्तानाम् - अचायिषाताम्, अचेषाताम् । अदायिषाताम्, अदिषाताम्। अशामिषाताम्, अशमिषाताम्, अशमयिषाताम् । हन् - अघानिषाताम् , अवधिषाताम्, अहसाताम्। ग्रह् - अग्राहिषाताम्, अग्रहीषाताम् । दृश् - अदर्शिषाताम् , अदृक्षाताम् ।
सीयुटि अजन्तानाम् - चायिषीष्ट, चेषीष्ट । दायिषीष्ट , दासीष्ट । शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट । हन् - घानिषीष्ट, वधिषीष्ट । ग्रह - ग्राहिषीष्ट, ग्रहीषीष्ट । दृश् - दर्शिषीष्ट, दृक्षीष्ट ।
तासावजन्तानाम् - चायिता, चेता । दायिता , दाता । शामिता, शमिता, शमयिता । हन् - घानिता, हन्ता । ग्रह - ग्राहिता, ग्रहीता । दृश् - दर्शिता, दर्ष्टा, द्रष्टा । स्यसिच्सीयुट्तासिष्विति किम्? चेतव्यम्, दातव्यम् । भावकर्मणोरिति किम्? चेष्यति । दास्यति । उपदेशा इति किम्? कारिष्यते - इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति । अज्झनग्रहदृशामिति किम्? पठिष्यते । अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङामादेशा न भवन्ति । हनिष्यते , घानिष्यते । एष्यते, आयिष्यते । अग्येष्यते, अध्यायिष्यते । हनो वध लिङि(2-4-42/2433), लुङि च(2-4-43/2434) इणो गा लुङि(2-4-45/2458), विभाषा लुङ्लृङोः(2-4-50/2460) इत्येते विधयो न भवन्ति ।।
</6-4-62>
दीङो युडचि क्ङिति ।। <6-4-63> ।।
दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः । उपदिदीये, उपदिदीयाते, उपदिदीयिरे । दीङः इति पञ्चमीनिर्देशादजादेर्युडागमो भवति । विधानसामर्थ्याच्च एरनेकाचः(6-4-82/272) इति यणादेशे कर्त्तव्ये तस्यासिद्धत्वं न भवति । अचीति किम्? उपदेदीयते । क्ङितीति किम् ? उपदानम् ।।
</6-4-63>
आतो लोप इटि च ।। <6-4-64> ।।
इट्यजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति । इटि - पपिथ । तस्थिथ। किति - पपतुः, पपुः । तस्थतुः, तस्थुः । गोदः । कम्बलदः । ङिति - प्रदा । प्रधा । आर्धधातुके इत्येव - यान्ति । वान्ति । व्यत्यरे । व्यत्यले । रातेर्लातेश्च लङि इटि च रूपम् । अचीत्येव - ग्लायते । दासीय ।।
</6-4-64>
ईद्यति ।। <6-4-65> ।।
ईकार आदेशो भवति आकारान्तस्याङ्गस्य यति परतः । देयम् । धेयम् । हेयम् । स्तेयम् ।।
</6-4-65>
घुमास्थागापाजहातिसां हलि ।। <6-4-66> ।।
घुसंज्ञकानामङ्गानां मा, स्था, गा , पा, जहाति, सा - इत्येतेषां हलादौ क्ङिति प्रत्ये परत ईकारादेशो भवति । दीयते, देदीयते । धीयते, देधीयते। मीयते, मेमीयते। स्थीयते, तेष्ठीयते । गीयते, जेगीयते । अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । पीयते, पेपीयते । पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात् । पायते - इत्येव तस्य भवति । हीयते । जेहीयते । जहातेरिह निर्द्देशाद् जिहातेर्ग्रहणं न भवति । हायते । `षोऽन्तकर्मणि(धा.पा.1148) - अवसीयते , अवसेसीयते । हलीति किम्? ददतुः ददुः । आतो लोपाद्धि परत्वादीत्वं स्यात् । एतदेव हल्ग्रहणं ज्ञापकम् - अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति । क्ङिति इत्येव - दाता । धाता ।।
</6-4-66>
एर्लिङि ।। <6-4-67> ।।

घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति । देयात् । मेयात् । धेयात् । स्थेयात् । गेयात् । पेयात् । अवसेयात् । क्ङिति इत्येव - दासीष्ट । धासीष्ट ।।
</6-4-67>
वाऽन्यस्य संयोगादेः ।। <6-4-68> ।।
घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः । ग्लेयात् , ग्लायात् । म्लेयात्,
म्लायात् । अन्यस्येति किम्? स्थेयात् । संयोगादेरिति किम्? यायात् । क्ङिति इत्येव- ग्लासीष्ट । अङ्गस्य इत्येव - निर्वायात् ।।
</6-4-68>
न ल्यपि ।। <6-4-69> ।।
ल्यपि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं तन्न । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । प्रहाय । अवसाय ।।
</6-4-69>
मयतेरिदन्यतरस्याम् ।। <6-4-70> ।।
मयतेरिकारादेशो वा भवति ल्यपि परतः । अपमित्य, अपमाय ।।
</6-4-70>
लुङ्लङ्लृङ्क्ष्वडुदात्तः ।। <6-4-71> ।।
लुङ्, लङ् , लृङ् - इत्येतेषु परतोऽङ्गस्याडामो भवति , उदात्तश्च स भवति । लुङ् - अकार्षीत् , अहार्षीत् । लङ् - अकरोत् , अहरत् । लृङ्- अकरिष्यत्, अहरिष्यत् ।।
</6-4-71>
आडजादीनाम् ।। <6-4-72> ।।
आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परतः , उदात्तश्च स भवति । ऐक्षिष्ट । ऐहिष्ट । औब्जीत् । औम्भीत् । लङ् - ऐक्षत । ऐहत । औब्जत् । औम्भत् । लृङ् - ऐक्षिष्यत । ऐहिष्यत । औब्जिष्यत् । औम्भिष्यत् । इह ऐज्यत, औप्यत, औह्यतेति लङि कृते लावस्थायामडागमादन्तरङ्गत्वाल्लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते । शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्, कृते हि विकारणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति । ननु
शब्दान्तरादिति विकरणोऽनित्यः? विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातमिति आडजादीनाम् इत्याडागमः ।।
</6-4-72>
छन्दस्यपि दृश्यते ।। <6-4-73> ।।
छन्दसि विषये आडागमो दृश्यते । यतो हि विहितस्ततोऽन्यत्रापि दृश्यते । आडजादीनाम्(6-4-72/2254) इत्युक्तम् , अनजादीनामपि दृश्यते - `सुरुचो वेन आवः(वा.सं.13-3) । आनक् । आयुनक् । आवः इति वृञो लुङि मन्त्रे घसह्वर(2-4-80/3402) इति लेर्लुकि कृते च भवति, तथा आनक् इति नशेः । आयुनक् इति युजेर्लङि ।।
</6-4-73>
न माङ्योगे ।। <6-4-74> ।।
माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति । मा भवान् कार्षीत् । मा भवान् हार्षीत् । मा स्म करोत् । मा स्म हरत् । मा भवानीहिष्ट , मा स्म भवानीहत । मा भवानीक्षिष्ट । मा स्म भवानीक्षत ।।
</6-4-74>
बहुलं छन्दस्यमाङ्योगेऽपि ।। <6-4-75> ।।
छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः । अमाङ्योगे तावत् - `चनिष्ठा उग्र(ऋ.10-73-1) । `काममूनयीत्(ऋ.1-53-3) । काममर्दयीत् । माङ्योगेऽपि भवतः - `मा वः क्षेत्रे परबीजान्यवाप्सुः(आ.ध.2-13-6) । मा अभित्थाः । मा आवः ।।
</6-4-75>
इरयो रे ।। <6-4-76> ।।
इरे - इत्येतस्य छन्दसि विषये बहुलं रे इत्ययमादेशो भवति । `गर्भं प्रथमं दध्र आपः(ऋ.10-82-5) । याऽस्य
परिदध्रे । धाञो रेभावस्यासिद्धत्वादातो लोपो भवति । न च भवति - परमाया धियोऽग्निकर्माणि चक्रिरे । अत्र रेशब्दस सेटां धातूनामिटि कृते पुना रेभावः क्रियते , तदर्थम् इरयोः इत्ययं द्विवचननिर्देशः ।।
</6-4-76>
अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।। <6-4-77> ।।
श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य भ्रू इत्येतस्य च इयङ् , उवङ् - इत्येतावादेशौ भवतोऽजादौ प्रत्यये, परतः । आप्नुवन्ति । राध्नुवन्ति । शक्नुवन्ति । धातोः - चिक्षियतुः, चिक्षियुः । लुलुवतुः, लुलुवुः । नियौ, नियः । लुवौ, लुवः । भ्रुवौ , भ्रुवझ । अचीति किम्? आप्नुयात् । शक्नुयात् । राध्नुयात् । श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै । वध्वै । य्वोरिति किम्? चक्रतुः । चक्रुः । इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । चयनम्, चायकः । लवनम्, लावकः ।

- इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्तव्यम् *(म.भा.3-209)। `तन्वं(अ.वे.5-3-1) पुषेम, `तनुवं(तै.सं.1-5-5-4) पुषेम। विष्वं पुषेम, विषुवं पुषेम `स्वर्गो(तै.1-5-7-1) लोकः , सुवर्गो लोकः । `त्र्यम्बकं यजामहे(तै.1-8-6), त्रियम्बकं यजामहे ।।

</6-4-77>
अभ्यासस्यासवर्णे ।। <6-4-78> ।।
अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ्, उवङ् - इत्येतावादेशौ भवतः । इयेष । उवोष । इयर्त्ति । असवर्ण इति किम्? ईयतुः ईयुः । ऊवतुः , ऊवुः । अचि इत्येव - इयाज । उवाप ।।
</6-4-78>
स्त्रियाः ।। <6-4-79> ।।
स्त्री - इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति । स्त्री स्त्रियौ, स्त्रियः । स्त्रीणाम् - इत्यत्र परत्वान्नुडागमः । पृथग्योगकरणमुत्तरार्थम् ।।
</6-4-79>
वाऽम्शसोः ।। <6-4-80> ।।
अमि शसि परतः स्त्रियां वा इयङादेशो भवति । स्त्रीं पश्य, स्त्रियं पश्य । स्त्रीः पश्य, स्त्रियः पश्य ।।
</6-4-80>
इणो यण् ।। <6-4-81> ।।
इणोऽङ्गस्य यणादेशो भवति अचि परतः । यन्ति । यन्तु । आयन् । इयङादेशापवादोऽयम् । `मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते(व्या.प.10) इति गुणवृद्धिभ्यां परत्वादयं बाध्यते । अयनम् । आयकः ।।
</6-4-81>
एरनेकाचोऽसंयोगपूर्वस्य ।। <6-4-82> ।।
धातोरिति वर्तते , तेन संयोगो विशेष्यते । धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न भवति असावसंयोगपूर्वः, तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति । निन्यतुः, निन्युः । उन्न्यौ, उन्न्यः । ग्रामण्यौ । ग्रामण्यः । एरिति किम्? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति । लुलुवतुः , लुलुवुः - इत्येतत्तु ओः सुपि(6-4-83/281) इति नियमादपि सिध्यति । अनेकाच इति किम्? नियौ, नियः । असंयोगपूर्वस्येति किम्? यवक्रियौ । यवक्रियः । धातुना संयोगविशेषणं किम्? इहापि न स्याद् - उन्न्यौ, उन्न्य इति । गतिकारकाभ्यामन्यपूर्वस्य नेष्यते । परमनियौ । परमनिय इति ।।
</6-4-82>
ओः सुपि ।। <6-4-83> ।।
धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान्न भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति । खलप्वौ, खलप्वः । शतस्वौ, शतस्वः । सकृल्ल्वौ, सकृल्ल्वः । सुपीति किम्? लुलुवतुः , लुलुवुः । अनेकाचः इत्येव - लुवौ, लुवः । असंयोगपूर्वस्य इत्येव - कटप्रुवौ, कटप्रुवः । गतिकारकाभ्यामन्यपूर्वस्यनेष्यते इत्येव -
परमलुवौ, परमलुवः ।।
</6-4-83>
वर्षाभ्वश्च ।। <6-4-84> ।।
वर्षाभू - इत्येतस्याजादौ सुपि परतो यणादेशो भवति । वर्षाभ्वौ, वर्षाभ्वः ।

- पुनर्भ्वश्चेति वक्तव्यम् *(म.भा.3-210)। पुनर्भ्वौ, पुनर्भ्वः ।। कारापूर्वस्यापीष्यते - काराभ्वौ, काराभ्वः ।।

</6-4-84>
न भूसुधियोः ।। <6-4-85> ।।
भू, सुधी - इत्येतयोर्यणादेशो न भवति । प्रतिभुवौ, प्रतिभुवः । सुधियौ, सुधियः ।।
</6-4-85>
छन्दस्युभयथा ।। <6-4-86> ।।
छन्दसि विषये भू, सुधी - इत्येतयोरुभयथा दृश्यते । `वनेषु चित्रं विभ्वं विशे(ऋ.4-7-1), `विशे विभुवम्(तै.सं.1-5-5) । सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने ।।
</6-4-86>
हुश्नुवोः सार्वधातुके ।। <6-4-87> ।।
हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति, जुह्वतु । जुह्वत्। सुन्वन्ति , सुन्वन्तु , असुन्वन् । हुश्नुवोरिति किम्? योयुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकम् - भाषायामपि यङ्लुगस्तीति । छन्दसि छन्दस्युभयथा(6-4-86/3548) इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्लुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते । सार्वधातुक इति किम्? जुहुवतुः जुहुवुः । असंयोगपूर्वस्य इत्येव - आप्नुवन्ति । राध्नुवन्ति ।।
</6-4-87>
भुवो वुग्लुङ्लिटोः ।। <6-4-88> ।।

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः । अभूवन् । अभूवम् । लिट् - बभूव, बभूवतुः , बभूवुः ।।
</6-4-88>
ऊदुपधाया गोहः ।। <6-4-89> ।।
गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः । निगूहति । निगूहकः । साधु निगूही । निगूहंनिगूहम् । निगूहन्ति । निगूहो वर्त्तते । उपधाया इति किम्? अलोऽन्त्यस्य मा भूत् । गोहः इति विकृतग्रहणं विषयार्थम्(म.भा.3-211) । यत्रास्यैतद्रूपं तत्रैव यथा स्यात्, इह मा भूत् - निजुगुहतुः , निजुगुहुः । अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति । निगूह्य गत इत्यूत्वस्यासिद्धत्वाद् , ल्यपि लघुपूर्वात् इत्ययादेशः स्यात् । व्याश्रयत्वादेवासिद्धत्वमत्र नास्ति- णावूत्वम्, ण्यन्तस्य च ल्यप्ययादेश इति । अचीत्येव निगोढा । निगोढुम् ।।
</6-4-89>
दोषो णौ ।। <6-4-90> ।।
दोष उपधाया ऊकार आदेशो भवति णौ परतः । दूषयति । दूषयतः । दूषयन्ति । विकृतग्रहणं प्रक्रमाभेदार्थम् । पूर्वत्र हि गोहः इत्युक्तम् । णाविति किम्? दोषो वर्तते ।।
</6-4-90>
वा चित्तविरागे ।। <6-4-91> ।।
चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः । चित्तं दूषयति, चित्तं दोषयति । प्रज्ञां दूषयति, प्रज्ञां दोषयति ।
</6-4-91>
मितां ह्रस्वः ।। <6-4-92> ।।
मितो धातवः घटादयो मितः इत्येवमादयो ये प्रतिपादिताः, तेषामुपधाया ह्रस्वो भवति णौ परतः । घटयति ।
व्यथयति । जनयति । रजयति । शमयति । ज्ञपयति । केचिदत्र वा इत्यनुवर्त्तयन्ति, सा च व्यवस्थितविभाषा, तेन उत्क्रामयति, संक्रामयतीत्येवमादि सिद्धं भवति ।।
</6-4-92>
चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।। <6-4-93> ।।
चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवति अन्यतरस्याम् । अशमि, अशामि । अतमि, अतामि । शमंशमम्, शामंशामम् । तमन्तमम्, तामन्तामम् । दीर्घग्रहणं किम्?, न ह्रस्वविकल्प एव विधीयते? नैवं शक्यम्, शमयन्तं प्रयुंक्ते - इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात् । णिलोपस्य स्थानिवद्भावाद् दीर्घविधौ त्वजादेशो न स्थानिवत् । शमयन्तं प्रयुक्तवान् । अशमि, अशामि । शमंशमम्, शामंशामम्। शंशमयतेः - अशंशमि, अशंशामि । शंशमंशमम् । शंशामंशंशामम् (म.भा.3-212)। योऽसौ णौ णिर्लुप्यते, यश्च यङकारः, तयोर्द्दीर्घविधौ आदेशो न स्थानिवद्भवतीति अस्थानिवद्भावाद्दीर्घः सिद्धो भवति । ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात् । णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव । व्याश्रयत्वादसिद्धत्वमपि नास्ति । णौ हि णियङोर्लोपः , चिण्णमुल्परे णावङ्गस्य दीर्घत्वम् ।।
</6-4-93>
खचि ह्रस्वः ।। <6-4-94> ।।
खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः । द्विषन्तपः । परन्तपः । पुरन्दरः ।।
</6-4-94>
ह्लादो निष्ठायाम् ।। <6-4-95> ।।
ह्लादोऽङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः । प्रह्लन्नः । प्रह्लन्नवान् । निष्ठायामिति किम्? प्रह्लादयति । ह्लाद इति योगाविभागः क्रियते, क्तिन्यपि यथा स्यात् - प्रह्लत्तिरिति ।।
</6-4-95>
छादेर्घेऽद्व्युपसर्गस्य ।। <6-4-96> ।।
छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो भवति । उरश्छदः । प्रच्छदः । दन्तच्छदः । णिलोपस्य चासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति । अद्व्युपसर्गस्येति किम्? समुपच्छादः ।

- अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् *(म.भा.3-213)। समुपातिच्छादः । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्त्तयति, न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते ।।

</6-4-96>
इस्मन्त्रन्क्विषु च ।। <6-4-97> ।।
इस्, मन्, त्रन्, क्वि - इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति । छदि - छद्म। छत्रम् । धामच्छत् । उपच्छत् ।।
</6-4-97>
गमहनजनखनघसां लोपः क्ङित्यनङि ।। <6-4-98> ।।
गम, हन, जन, खन, घस - इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः । जग्मतुः, जग्मुः । जघ्नतुः , जघ्नुः । जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः, चख्नुः । जक्षतुः जक्षुः । `अक्षन्नमीमदन्त पितरः(वा.सं.19-36) । क्ङितीति किम्? गमनम् । हननम् । अनङीति किम्? अगमत् । अघसत् । अचीत्येव - गम्यते, हन्यते ।।

</6-4-98>
तनिपत्योश्छन्दसि ।। <6-4-99> ।।
तनि, पति - इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः । `वितत्निरे कवयः(ऋ.1-164-5) । `शकुना इव पप्तिम(ऋ.1-107-20) । छन्दसीति किम्? वितेनिरे । पेतिम ।।
</6-4-99>
घसिभसोर्हलि च ।। <6-4-100> ।।
घसि, भस - इत्येतयोश्छन्दसि उपघाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः । `सग्धिश्च मे सपीतिश्च मे(वा.सं.18-9) । `बब्धां ते हरी धानाः(नि.5-12) । सग्धिरिति - अदेः क्तिनि बहुलं छन्दसि(2-4-39/3398) इति घस्लादेशे उपधाया लोपे च कृते झलो झलि(8-2-26/2281) इति सकारलोपः । धत्वं तकारस्य, जश्त्वं घकारस्य । ततः समाना ग्धिः सग्धिरिति समासे कृते समानस्य सभावः । बब्धामिति - भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्त्तव्यानि । द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति, छान्दसत्वात् स तथा न क्रियते । अजादौ - बप्सति । क्ङितीत्येव - `अंशून् बभस्ति(काठ.सं.35-14) ।।
</6-4-100>
हुझल्भ्यो हेर्धिः ।। <6-4-101> ।।
हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः - भिन्धि । छिन्धि । हुझल्भ्य इति किम्? क्रीणीहि । प्रीणीहि । हेरिति किम्? जुहुताम् । हलीत्येव - रुदिहि । स्वपिहि । इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते `सकृद् गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव इति पुनर्धिभावो न भवति । भिन्धकि, छिन्धकीत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते ।।
</6-4-101>
श्रुशृणुपृकृवृभ्यश्छन्दसि ।। <6-4-102> ।।
श्रु, शृणु, पृ, कृ, वृ - इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये । `श्रुधी हवमिन्द्र(ऋ.2-11-3) । `शृणुधी गिरः(ऋ.8-13-7) । `पूर्द्धि(ऋ.8-78-10) । `उरुणस्कृधि(ऋ.8-57-11) । `अपावृधि(ऋ.1-7-6) । श्रृणुधीत्यत्र धिभावविधानसामर्थ्याद् उतश्च प्रत्ययात्(6-4-106/2334) इति हेर्लुग्न भवति । अन्येषामपि दृश्यते(6-3-137/3539) इति दीर्घत्वम् । अतोऽन्यत्र व्यत्ययो बहुलम्(3-1-85/3433) इति शप् , तस्य बहुलं छन्दसि(2-4-73/3400) इति लुक् ।।
</6-4-102>
अङितश्च ।। <6-4-103> ।।
अङितश्च हेर्धिरादेशो भवति । वा छन्दसि(3-4-88/3552) इति पित्वेनास्याङित्त्वम् । `सोमं रारन्धि(ऋ.1-91-13) । `अस्मभ्यं तद्धर्यश्व प्रयन्धि(ऋ.3-36-9) । `युयोध्यस्मज्जुहुराणमेनः(ऋ.1-189-20) । अङित इति किम्? `हव्यं प्रीणीहि(काठ.सं.40-94) । रारन्धीति - रेमर्व्यत्ययेन परस्मैपदम् , शपः श्लुः , अभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावस्तु अङित्वादेव । प्रयन्धीति - यमेः शपो लुक् । युयोधीति - यौतेः शपः श्लुः ।।

</6-4-103>
चिणो लुक् ।। <6-4-104> ।।
चिण उत्तरस्य प्रत्ययस्य लुग्भवति । अकारि । अहारि । अलावि । अपाचि । अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति। चिणो लुक् इत्येतद्विषयभेदाद्भिद्यते ।।
</6-4-104>
अतो हेः ।। <6-4-105> ।।
अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ। धाव । अत इति किम्? युहि । रुहि । तपरकरणं किम्? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ।।
</6-4-105>
उतश्च प्रत्ययादसंयोगपूर्वात् ।। <6-4-106> ।।
उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु । उत इति किम्? लुनीहि । पुनीहि । प्रत्ययादिति किम्? रुहि । युहि । असंयोगपूर्वादिति किम्? प्राप्नुहि । राध्नुहि । तक्ष्णुहि ।।

- उतश्च प्रत्ययाच्छन्दोवावचनम् *(म.भा.3-215)। उतश्च प्रत्ययात् इत्यत्र छन्दसि वा इति वक्तव्यम् । आतनुहि यातुधानान् । `धिनुहि यज्ञपतिम्(काठ.सं.1-6) । `तेन मा भागिनं कृणुहि(अ.वे.6-129-1) ।।

</6-4-106>
लोपश्चास्यान्यतरस्यां म्वोः ।। <6-4-107> ।।
योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः । सुन्वः , सुनुवः । सुन्मः , सुनुमः । तन्वः , तनुवः । तन्मः, तनुमः । प्रत्ययस्येत्येव - युवः, युमः । असंयोगपूर्वस्येत्येव - शक्नुवः, शक्नुमः । लुगिति वर्त्तमाने, लोपग्रहणमन्त्यलोपार्थम् ।।
</6-4-107>

नित्यं करोतेः ।। <6-4-108> ।।
करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति । कुर्वः, कुर्मः । उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् हलि च(8-2-77/354) इति दीर्घत्वं प्राप्तम्, न भकुर्छुराम्(8-2-79/1629) इति प्रतिषिध्यते ।।
</6-4-108>
ये च ।। <6-4-109> ।।
यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात्, कुर्याताम्, कुर्युः ।।
</6-4-109>
अत उत्सार्वधातुके ।। <6-4-110> ।।
उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः । कुरुतः । कुर्वन्ति । सार्वधातुकग्रहणं किम्? भूतपूर्वेऽपि सार्वधातुके यथा स्यात् - कुरु। तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम् । क्ङितीत्येव - करोति । करोषि । करोमि ।।
</6-4-110>
श्नसोरल्लोपः ।। <6-4-111> ।।
श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । रुन्धः, रुन्धन्ति । भिन्तः , भिन्दन्ति । अस्तेः - स्तः , सन्ति । क्ङितीत्येव - भिनत्ति । अस्ति । श्नसोः इत्याकारस्य पररुपत्वं शकान्ध्वादिषु द्रष्टव्यम् ।।
</6-4-111>
श्नाभ्यस्तयोरातः ।। <6-4-112> ।।
श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्हिति परतः । लुनते । लुनताम् । अलुनत । अभ्यस्तानाम् - मिमते । मिमताम् । अमिमत । सञ्जिहते । सञ्जिहताम । समजिहत । श्नाभ्यस्तयोरिति किम्? यान्ति। वान्ति । आत इति किम्? बिभ्रति । क्ङितीत्येव - अलुनात् । अजहात् । आद्ग्रहणं स्पष्टार्थम् ।।
</6-4-112>
ई हल्यघोः ।। <6-4-113> ।।
श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । लुनीतः , पुनीतः । लुनीथः, पुनीथः। लुनीते, पुनीते । अभ्यस्तानाम् - मिमीते । मिमीषे । मिमीध्वे। सञ्जिहीते । सञ्जिहीषे । सञ्जिहीध्वे । हलीति किम्? लुनन्ति । मिमते । अघोरिति किम्? दत्तः । धत्तः । क्ङितीत्येव - लुनाति । जहाति ।।
</6-4-113>
इद्दरिद्रस्य ।। <6-4-114> ।।
दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः । हलीत्येव - दरिद्रति । क्ङितीत्येव - दरिद्राति ।

- दरिद्रातेरार्धधातुके लोपो वक्तव्यः *(म.भा.3-217)।
- सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् *(म.भा.3-217)। दरिद्रातीति दरिद्रः । आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति ।

`न दरिद्रायके लोप दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ।।(म.भा.3-217)

- अद्यतन्यां वेति वक्तव्यम् *। अदरिद्रीत्, अदरिद्रासीत्। दरिद्रस्य इति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ।।

</6-4-114>
भियोऽन्यतरस्याम् ।। <6-4-115> ।।
भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः, बिभीतः । बिभिथः, भिभीथः। बिभिवः , बिभीवः । बिभिमः, बिभीमः । हलादावित्येव - बिभ्यति । क्ङितीत्येव - बिभेति । सार्वधातुक इत्येव - भीयते ।।
</6-4-115>
जहातेश्च ।। <6-4-116> ।।
जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः । जहितः, जहीतः। जहिथः, जहीथः। हलादावित्येव - जहति । क्ङितीत्येव - जहाति । सार्वधातुक इत्येव - हीयते । जेहीयते । पृथग्योगकरणमुत्तरार्थम् ।।
</6-4-116>
आ च हौ ।। <6-4-117> ।।
जहातेराकारश्चान्तादेशो भवति ङकारश्चान्यतरसायां हौ परतः । जहाहि, जहिहि, जहीहि ।।
</6-4-117>
लोपो यि ।। <6-4-118> ।।

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात् , जह्याताम्। जह्युः ।।
</6-4-118>
घ्वसोरेद्धावभ्यासलोपश्च ।। <<6-4-119>> ।।
घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यासलोपश्च । देहि । धेहि । अस्तेः - श्नसोरल्लोपः(6-4-111/2469) इत्येकारलोपः, एधि । शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति ।।
</6-4-119>
अत एकहल्मध्येऽनादेशादेर्लिटि ।। <6-4-120> ।।
लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः। रेणतुः, रेणुः । येमतुः, येमुः । पेचतुः, पेचुः। देमतुः, देमुः। अत इति किम्? दिदिवतुः। दिदिवुः । तपरकरणं किम्? ररासे, ररासाते, ररासिरे। एकहल्मध्य इति किम्? ररक्षतुः, ररक्षुः। तत्सरतुः, तत्सरुः। अनादेशादेरिति किम्? चकणतुः, चकणुः। जगणतुः, जगणुः। बभणतुः , बभणुः । लिट आदेशविशेषणं किम्? इहापि यथा स्यात् - नेमतुः, नेमुः । सेहे, सेहाते, सेहिरे । अनैमित्तिके नत्वसत्वे, तदादिर्लिट्यादेशादिर्न भवति । इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर्भवति । तथा च फलिभजोरेत्वं विधीयते । रूपाभेदे चादेशादिर्नाश्रीयत इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्, अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात् । क्ङितीत्येव - अहं पपच । अहं पपठ ।

- दम्भेरेत्वं वक्तव्यम् *(म.भा.3-218)। देभतुः । देभुः । नलोपस्यासिद्धत्वान्न प्राप्नोति ।
- नशिमन्योरलिट्येत्वं वक्तव्यम् *(म.भा.3-218)। अनेशम् । मेनका । अनेशामिति नशेर्लुङि पुषादित्वादङ् । मेनकेति मनेः आशिषि च(3-1-150य2912)इति वुन् । क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ।
- छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् *(म.भा.3-219)। व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते । लिङि - पेचिरन् । पचेरन्नित्येतस्य छान्दसं ह्रस्वत्वम् ।* यजिवप्योश्च *(म.भा.3-219)। आयेजे । आवेपे । येर्वपेश्च लङि इटि छन्दस्यपि दृश्यते(6-4-73/3545) इत्यनजादेरप्याडागमः ।।

</6-4-120>
थलि च सेटि ।। <6-4-121> ।।
थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति अभ्यासलोपश्च । पेचिथ । शेकिथ । सेटीति किम्? पपक्थ। थल्ग्रहणं विस्पष्टार्थम् । अक्ङिदर्थमेतद्वचनमित्यन्यस्येटोऽसम्भवात् । अत इत्येव - दिदेविथ। एकहल्मध्यगतस्य इत्येव - ततक्षिथ । ररक्षिथ । अनादेशादेरित्येव - चकणिथ । बभणिथ ।।
</6-4-121>
तॄफलभजत्रपश्च ।। <6-4-122> ।।
तॄ , फल, भज, त्रप - इत्येतेषामङ्गानामत एकारादेशो भवति , अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । तेरतुः, तेरुः, तेरिथ । फेलतुः, फेलिथ। भेजतुः , भेजुः, भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे । तरतेर्गुणार्थं वचनम् । फलिभजोरादेशाद्यर्थम् । त्रपेरनेकहल्मध्यार्थम् ।

- श्रन्थेश्चेति वक्तव्यम् *। श्रेथतुः , श्रेथुः ।।

</6-4-122>
राधो हिंसायाम् ।। <6-4-123>।।
राधो हिंसायामर्थेऽवर्णस्य एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । अपरेधतुः, अपरेधुः, अपरेधिथ। हिंसायामिति किम्? रराधतुः, रराधुः, रराधिथ। अत इत्येततदिहोपस्थितं तपरत्वकृतमपास्य कालविशेषमसम्भवादवर्णमात्रं प्रतिपादयति । अथ वा - श्नाभ्यस्तयोरातः(6-4-112/2483) - इत्यनुवर्तते इति व्याख्येयम् । एकहलमध्ये वा यः स स्थानी भवतिष्यति ।।
</6-4-123>
वा जॄभ्रमुत्रसाम् ।। <6-4-124> ।।
जॄ, भ्रमु, त्रस - इत्येतेषामङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । जेरतुः,जेरुः, जेरिथ। जजरतुः, जजरुः, जजरिथ। भ्रेमतुः, भ्रेमुः, भ्रेमिथ। बभ्रमतुः, बभ्रमुः, बभ्रमिथ । त्रेसतुः, त्रेसुः, त्रेसिथः तत्रसतुः, तत्रसुः, तत्रसिथ ।।
</6-4-124>
फणां च सप्तानाम् ।। <6-4-125> ।।
फणादिनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः, थलि च सेटि । फेणतुः, फेणुः, । फेणिथ। पफणतुः, पफणुः, पफणिथ। रेजतुः, रेजुः, रेजिथ, रराजतुः, रराजुः, रराजिथ। भ्रेजे, भ्रेजाते, भ्रेजिरेः। बभ्राजे, बभ्राजाते, बभ्राजिरे । भ्रेशे, भ्रेशाते ,भ्रेशिरे, बभ्राशे, बभ्राशाते, बभ्राशिरे। भ्लेशे, भ्लेशाते, भ्लेशिरे। बभ्लाशे, बभ्लाशाते , बभ्लाशिरे । स्येमतुः, स्येमुः, स्येमिथः, सस्यमतुः, सस्यमुः, सस्यमिथ। स्वेनतुः, स्वेनुः, स्वेनिथ,सस्वनतुः, सस्वनुः, सस्वनिथ। सप्तानामिति किम्? दध्वनतुः, दध्वनुः, दध्वनिथः ।।
</6-4-125>

नशसददवादिगुणानाम् ।। <6-4-126> ।।
शस, दद - इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च । विशशासतुः, विशशसुः, विशशसिथ। दददे, दददाते, ददादिरे । वादीनाम् - ववमतुः, ववमुः, ववमिथ। गुणस्य - विशशरतुः, विशशरुः, विशशरिथ । लुलविथ, पुपविथ।
गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्यौकारस्य चायमकार इति एत्वं प्रतिषिध्यते ।।
</6-4-126>
अर्वणस्त्रसावनञः ।। <6-4-127> ।।
अर्वन्नित्येतस्याङ्गस्य तृ इत्ययमादेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति । अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वती। आर्वतम् । असाविति किम्? अर्वा । अनञ इति किम्? अनर्वाणौ, अनर्वाणः । `अनर्वाणं वृषभं मन्द्रजिह्वम्(ऋ.1-190-1) ।।
</6-4-127>
मघवा बहुलम् ।। <6-4-128> ।।
मधवन् इत्येतस्याङ्गस्य बहुलम् तृ इत्ययमादेशो भवति । मघवान्, मघवन्तौ, मघवन्तः। मघवन्तम्, मघवन्तौ, मघवतः। मघवता । मघवती। माघवतम् । न च भवति - मघवा, मघवानौ, मघवानः। मघवानम्, मघवानौ, मघोनः । मघोना, मघवभ्याम्, मघवभिः। मघोनी। माघवनम् ।।
</6-4-128>
भस्य ।। <6-4-129> ।।
भस्य इत्ययमधिकार आ अध्यायपिरसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद्वेदितव्यम् । वक्ष्यति - पादः पत्(6-4-130/414) । द्विपदः पश्य। द्विपदा कृतम् । भस्येति किम्? द्विपादौ । द्विपादः ।।
</6-4-129>
पादः पत् ।। <6-4-130> ।।
पादः इति पादशब्दो लुप्ताकारो गृह्यते, तदन्तस्याङ्गस्य भस्य पत् इत्ययमादेशो भवति । स च `निर्दिश्यमानस्यादेशा भवन्ति(व्या.प.106) इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य । द्विपदः पश्य । द्विपदा । द्विपदे । द्विपदिकां ददाति । त्रिपदिकां ददाति । वैयाघ्रपद्यः।।
</6-4-130>
वसोः सम्प्रसारणाम् ।। <6-4-131> ।।
वस्वन्तस्य भस्य सम्परसारणं भवति । विदुषः पश्य । विदुषा । विदुषे । पेचुषः पश्य । पेचुषा । पेचुषे । पपुषः पश्य । आकारलोपे कर्त्तव्ये वसुसम्प्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति। वसुग्रहणे क्वसोरपि ग्रहणमिष्यते ।
</6-4-131>
वाह ऊठ् ।। <6-4-132> ।।
वाहः इत्येवमन्तस्य भस्य ऊठ् इत्येतत्सम्प्रसारणं भवति । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । एत्येधत्यूठ्सु(6-1-89/73) इति वृद्धिः । अथ किमर्थमूठ् क्रियते , सम्प्रसारण एव कृते गुणे च वुद्धिरेचि(6-1-88/72) इति वृद्धौ सत्यां सिद्धं रूपं भवति - प्रष्ठौह इति , अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते ? ज्ञापनार्थम् । एतज्ज्ञापयति - भवत्येषा परिभाष `असिद्धं बहिरङ्गमन्तरङे(व्या.प.42) इति । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ।।
</6-4-132>
श्वयुवमघोनामतद्धिते ।। <6-4-133> ।।
श्वन्, युवन्, मघवन् - इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति । शुनः, शुना, शुने । यूनः, यूना, यूने । मघोनः, मघोना, मघोने । अतद्धित इति किम्? शौवं मांसम् । यौवनं वर्त्तते । माघवनः स्थालीपाकः । शुनो विकारे प्राणिरजतादिभ्योऽञ्(4-3-154/1532) द्वारादित्वादैजागमः । श्वादीनामेतत्सम्प्रसारणं नकारान्तानामिष्यते । इह न भवति युवतीः पश्य। मघवता, मघवते। तदर्थमुत्तरत्र योगविभागं कुर्वन्ति - अल्लोपः ,अनः, अन इत्युभयोः शेष इति ।।
</6-4-133>
अल्लोपोऽनः ।। <6-4-134> ।।
अन् इत्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञः पश्य। राज्ञा । राज्ञे । तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे ।
अनो नकारान्तस्यायं लोप इष्यते । इह न भवति - राजकीयमिति ।।
</6-4-134>
षपूर्वहन्धृतराज्ञामणि ।। <6-4-135> ।।
षकारपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवति अणि परतः । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धार्त्तराज्ञः । षपूर्वहन्धृतराज्ञामिति किम्? सामनः । वैमनः । अन् इति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः । अणीति किम्? ताक्षण्यः ।।
</6-4-135>
विभाषा ङिश्योः ।। <6-4-136> ।।
ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति । राज्ञि, राजनि । साम्नि , सामनि। साम्नी, सामनी।।

</6-4-136>
न संयोगाद्वमन्तात् ।। <6-4-137> ।।
वकारमकारान्तात्संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति । पर्वणा, पर्वणे । अथर्वणा, अथर्वणे । संयोगादिति किम्? प्रतिदीव्ना । प्रतिदीव्ने । साम्ना, साम्ने । वमन्तादिति किम्? तक्ष्णा । तक्ष्णे ।।
</6-4-137>
अचः ।। <<6-4-138>> ।।
अचः इत्ययमञ्चतिर्लुप्तनकारो गृह्यते, तदन्तस्य भस्य अकारस्य लोपो भवति । दधीचः पश्य । दधीचा , दधीचे । मधुचः पश्य । मधूचा , मधूचे ।।
</6-4-138>
उद ईत् ।। <6-4-139> ।।
उद उत्तरस्याच ईकारादेशो भवति । उदीचः । उदीचा । उदीचे ।।
</6-4-139>
आतो घातोः ।। <6-4-140> ।।
आकारान्तस्य धातोर्भस्य लोपो भवति । कीलालपः पश्य । कीलालपा, कीलालपे । शुभंयः पश्य । शुभंया, शुभंये । आत इति किम्? निया, निये । धातोरिति किम्? खट्वाः पश्य । मालाः पश्य । आतः इति योगविभागः, तेन क्त्वो ल्यप्(7-1-37/3332) हलः श्नः शानच्(3-1-83/2557) इत्येवमादि सिद्धं भवति ।।
</6-4-140>
मन्त्रेष्वाङ्यादेरात्मनः ।। <6-4-141> ।।
<K.5.489>
मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः । त्मना सोमेषु । मन्त्रेष्विति किम्? आत्मना कृतम् । आङीति किम्? यदा त्मनस्तन्नो वरिष्ठा ।

- आङोऽन्यत्रापि दृश्यते *। `त्मन्यासञ्जन्(ऋ.10-110-10) ।।

</6-4-141>
ति विंशतेर्डिति ।। <6-4-142> ।।
भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति । विंशात्या क्रीतः विंशकः । विंशं शतम् । विंशतेः पूरणो विंशः । एकविंशः । <K.5.490> डितीति किम्? विंशत्या ।।
</6-4-142>
टेः ।। <6-4-143> ।।
टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति । कुमुद्वान् । नड्वान् । वेतस्वान् । उपसरजः । मन्दुरजः । त्रिंशता क्रीतः त्रिंशकः । डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति ।।
</6-4-143>
नस्तद्धिते ।। <6-4-144> ।।
<K.5.491>
नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः । आग्निशर्मिः । औडुलोमिः । बाह्वादित्वाद् इञ्प्रत्ययः । न इति किम्? सात्वतः । तद्धित इति किम्? शर्मणा । शर्मणे ।

- नान्तस्य टिलोपे सब्रह्मचारिपीठसर्प्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणा- मुपसंख्यानं कर्तव्यम् *। अत्र ये इन्नन्तास्तेषाम् इनण्यनपत्ये इति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषाम् अन् इति। सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिणः - पैठसर्पाः । कलापिना प्रोक्तमधीयते कालापाः । कुथुमिनः - कौथुमाः । तैतिलिजाजलिनावाचार्यौ, तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते, तं ग्रन्थमधीयते तैतिलाः, जाजलाः । शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति । एवं लाङ्गलाः । शैलालाः । शिखण्डिनः - शैखण्डाः । सूकरसद्मनः - सौकरसद्माः । सुपर्वणः सौपर्वाः ।

<K.5.492>

- अश्मनो विकार उपसंख्यानमम् *। अश्मनो विकार आश्मः । आश्मनः अन्यः ।
- चर्मणः कोश उपसंख्यानम् *। चार्मः कोशः । चार्मणः अन्यः ।
- शुनः सङ्कोच उपसंख्यानम् *। शौवः सङ्कोचः । शौवनः अन्यः ।
- अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानम् *।

के पुनः सायम्प्रातिकादयः? येषामव्ययानामविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायम्प्रातिकप्रकारा ग्रहीतव्याः । सायम्प्रातर्भवः सायम्प्रातिकः । पौनःपुनिकः । बाह्यः । कौतस्कुतः । कालाट्ठञ् इति ठञ्प्रत्ययः । <K.5.493> ट्युट्युलौ तु नेष्येते । आरातीयः, शाश्वतिकः, शाश्वतः - इत्येवमादिषु न दृश्यते टिलोपः ।।
</6-4-144>
अह्नष्टखोरेव ।। <6-4-145> ।।
अहन् इत्येतस्य टखोरेव परतष्टिलोपो भवति । द्वे अहनी समाहृते द्व्यहः । त्र्यहः । द्वे अहनी अधीष्टो भूतो भूतो भावी वा द्व्यहीनः । त्र्यहीनः । अह्नां समूहः क्रतुः अहीनः । * अह्नः समूहे खो वक्तव्यः *।
सिद्धे सत्यारम्भो नियमार्थः । <K.5.494> इह मा भूत् - अह्ना निर्वृत्तमाह्निकम् । एवकारकरणं विस्पष्टार्थम् । अह्न एव टखोः - इत्येवं नियमो न भविष्यति, आत्माध्वानौ खे इति प्रकृतिभावविधानात् ।।
</6-4-145>
ओर्गुणः ।। <6-4-146> ।।
उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कार्पासः । कमण्डलव्या मृत्तिका । परशव्यम् अयः । औपगवः । कापटवः । ओरोत् इति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा <K.5.495> स्यात्, तेन स्वायम्भुव इति सिद्धं भवति ।।
</6-4-146>
ढे लोपोऽकद्रवाः ।। <6-4-147> ।।
ढे परत उवर्णान्तस्य भस्याकद्र्वा लोपो भवति । कामण्डलेयः । शैतवाहेयः । जाम्बेयः । माद्रबाहेयः । अकद्र्वा इति किम्? काद्रवेयो मन्त्रमपश्यत् ।।
</6-4-147>
यस्येति च ।। <6-4-148> ।।
इवर्णान्तस्यावर्णान्तस्य च भस्य इकारे परे तद्धिते च लोपो भवति । इवर्णान्तस्य ईकारे - दाक्षी । प्लाक्षी । सखी । सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्तवत्वादसखीति घिसंज्ञायाः प्रतिषेधः स्यात् ।
इवर्णान्तस्य तद्धिते - दुलि, दौलेयः। वलि, वालोयः । अत्रि, आत्रेयः । अवर्णान्तस्य ईकारे - कुमारी । गौरी । शार्ङ्गरवी । अवर्णान्तस्य तद्धिते - दाक्षिः । प्लाक्षिः । चौडिः । बालाकिः । सौमित्रिः ।

- यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः *(म.बा.3-227)। काण्डे । कुड्ये । सौर्ये हिमवतः शृङ्गे । औङः शीभावे कृते `यस्येति च इति, सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः(6-4-149/499) इति च लोपः प्राप्नोति ।
- इयङ्वङ्भ्यां लोपो भवति विप्रतिषेधेन *(म.भा.3-227)। वत्सान्प्रीणाति वत्सप्रीः , तस्यापत्यं वात्सप्रेयः । चतुष्पाद्भ्यो ढञ्(4-1-135/1141) इति ढञ् प्रत्ययः । लेखाभ्रूः शुभ्रादिः, तस्या अपत्यं लैखाभ्रेयः ।।

</6-4-148>
सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।। <6-4-149> ।।
सूर्य, तिष्य, अगस्त्य, मत्स्य - इत्येतेषां यकारस्य उपधाया भस्य लोपो भवति ईति परतस्तद्धिते च । सूर्येणैकदिक् सौरी बलाका । अणि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति, व्याश्रयत्वात् । ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्याणन्तस्य सूर्यसेय सम्बन्धीति लुप्यते । तिष्य - तैषमहः । तैषी रात्रीः । अघस्त्यस्यापत्यं स्त्री, ऋषित्वादणि कृते - आगस्ती । आगस्तीयः । मत्स्य - गौरादित्वान् ङीष् , मत्सी । उपधाया इति किम्? मत्स्यचरी । यग्रहणमुत्तरार्थम् । विषयपरिगणनमत्र वर्त्तव्यम् -

- मत्स्यस्य ङ्यामिति वक्तव्यम् *(म.भा.3-228)। इह मा भूत् - मत्स्यस्येदं मांसं मात्स्यम् ।
- सूर्यागस्त्ययोश्छे च ङ्यां च *(म.बा.3-228)। सौरीयः । सौरी । आगस्तीयः । आगस्ती । इह मा भूत् - सौर्यं चरुं निर्वपेत् । आगस्त्यः ।
- तिष्यपुष्ययोर्नक्षत्राणि *(म.भा.3-228)। तिष्येण नक्षत्रेण युक्तः कालः तैषः । पौषः ।
- अन्तिकस्य तसि कादिलोप आद्युदात्तं च *(म.भा.3-228)। अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपो वक्तव्यः, आद्युदात्तं च । अन्तितो न दूराद् ।
- तमे तादेश्च *(म.भा.3-228)। तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः । तत्र तादिलोपे - अन्तमः । कादिलोपे - अन्तितमः ।
- कादिलोपे बहुलमिति वक्तव्यम् *(म.भा.3-229)। अन्यत्रापि हि दृश्यते - अन्तिके सीदतीति अन्तिषत् । पूर्वपदात्(8-3-106/3643) इति षत्वम् ।
- ये च *(म.भा.3-229)। अन्तियः ।।

</6-4-149>
हलस्तद्धितस्य ।। <6-4-150> ।।
तद्धिते इति निवृत्तम् । हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति । गार्गी । वात्सी । हल इति किम्? कारिकेयी । तद्धितस्येति किम्? वैद्यस्य भार्या वैद्यी ।।
</6-4-150>
आपत्यस्य च तद्धितेऽनाति ।। <6-4-151> ।।
अपत्ययकारस्य हल उत्तरस्य तद्धिते अनाकारादौ यलोपो भवति । गार्ग्याणां समूहो गार्गकम् । वात्सकम् । आपत्यस्येति किम्? साङ्काश्यकः । काम्पिल्यकः । तद्धितग्रहणमीत्यनापत्यस्यापि लोपार्थम् - सौमी इष्टिः । अनातीति किम्? गार्ग्यायणः । वात्स्यायनः । हल इत्येव - कारिकेयस्यापत्यं कारिकेयिः ।।
</6-4-151>
क्यच्व्योश्च ।। <6-4-152> ।।
क्य, च्वि - इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति । वात्सीयति । गार्गीयति । वात्सीयते । गार्गीयते । च्वौ - गार्गीभूतः । वात्सीभूतः । आपत्यस्येत्येव - साङ्काश्यायते । साङ्काश्यभूतः । हल इत्येव - कारिकेयीयति । कारिकेयीभूतः ।।
</6-4-152>
बिल्वकादिभ्यश्छस्य लुक् ।। <6-4-153> ।।
नडादिषु बिल्वादयः पठ्यन्ते । नडादीनां कुक्च(4-2-91/1310) इति कृतकुगागमा बिल्वकादयो भवन्ति, तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः।
वेणुकीयाः , वैणुकाः । वेत्रकीयाः, वैत्रकाः । वेतसकीयाः, वैतसकाः । तृणकीयाः, तार्णकाः । इक्षुकीयाः , ऐक्षुकाः । काष्ठकीयाः, काष्ठकाः । कपोतकीयाः , कापोतकाः । `क्रुञ्चायां ह्रस्वत्वं च(ग.सू.92) । क्रुञ्चकीयाः, क्रौञ्चकाः । छग्रहणं किम्? छमात्रस्य लुग्यथा स्याद्, कुको निवृत्तिर्मा भूदिति, अन्यथा हि `सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभावः(व्या.प.48) इति कुगपि निवर्त्तेत । लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् ।।
</6-4-153>
तुरिष्ठेमेयस्सु ।। <6-4-154> ।।
इष्ठन्, इमनिच् , ईयसुन् - इत्येतेषु परतः तृशब्दस्य लोपो भवति । आसुतिं करिष्ठः । विजयिष्ठः । वहिष्ठः । दोहीयसी धेनुः । सर्वस्य तृशब्दस्य लोपार्थं वचनम् । अन्त्यस्य हि टेः(6-4-155/1786)इत्येव सिद्धः । लुगित्येतदत्र नानुवर्त्तते, तथा हि सति न लुमताङ्गस्य(1-1-63/263) इति प्रतिषेधाद् गुणो न स्यात् । इमनिज्ग्रहणमुत्तरार्थम् । इत्रौ तु तुश्छन्दसि(5-3-59/2007) इति भवतः ।।
</6-4-154>
टेः ।। <6-4-155> ।।
भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः । पटु - पटिष्ठः, पटिमा, पटीयान् । लघु - लघिष्ठः, लघिमा, लघीयान्।

- णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् *(म.भा.3-230)। किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम् । पुंवद्भावः - एनीमाचष्टे एतयति । श्येतयति । तसिलादिष्वाकृत्वसुचः(6-3-35/836) इति इष्ठे पुंवद्भाव उक्तः । रभावः - पृथुमाचष्टे प्रथयति । म्रदयति । टिलोपः - पटुमाचष्टे पटयति । लघयति । यणादिपरम् - स्थूलमाचष्टे स्थवयति ।

भारद्वाजीयास्तु पठन्ति - `णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थम् इति । स्रग्विणमाचष्टे स्रजयति । वसुमन्तमाचष्टे वसयति । युवानमाचष्टे यवयति । कनयति । एतदुभयमप्युदाहरणमात्रम् , न परिगणनम् । प्रादयोऽपि हीष्यन्ते - प्रियमाचष्टे प्रापयति ।।
</6-4-155>
स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।। <6-4-156> ।।
स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्र - इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति । स्थूल - स्थविष्ठः, स्थवीयान् । दूर- दविष्ठः, दवीयान् । युवन् - यविष्ठः , यवीयान् । ह्रस्व - ह्रसिष्ठः, ह्रसीयान् , ह्रसिमा । क्षिप्र - क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा । क्षुद्र - क्षोदिष्ठः, क्षोदीयान्, क्षोदिमा । ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते । परग्रहणं किम्? यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयान् इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत् । पूर्वग्रहणं विस्पष्टार्थम् ।।
</6-4-156>
प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।। <6-4-157> ।।
प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक - इत्येतेषां प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द - इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः । प्रिय - प्रेष्ठः । प्रेमा । प्रेयान् । स्थिर - स्थेष्ठः । स्थेयान् । स्फिर - स्फेष्ठः । स्फेयान् । उरु - वरिष्ठः । वरिमा । वरीयान् । बहुल - बंहिष्ठः । बंहिमा । बंहीयान् । गुरु - गरिष्ठः । गरिमा । गरीयान् । वृद्ध - वर्षिष्ठः । वर्षीयान् । तृप्र - त्रपिष्ठः । त्रपीयान् । दीर्घ - द्राघिष्ठः । द्राघीयान् । द्राघिमा । वृन्दारक - वृन्दिष्ठः । वृन्दीयान् । प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषामिमनिज् न भवतीति नोदाह्रियते ।।

</6-4-157>
बहोर्लोपो भू च बहोः ।। <6-4-158> ।।
बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने भू इत्ययमादेशो भवति । भूयान् । भूमा । बहुशब्दः पृथ्वादिषु पठ्यते । बहोः इति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम् , अन्यथा हि प्रत्ययानामेव भूभावः स्यात् ।।
</6-4-158>
इष्ठस्य यिट् च ।। <6-4-159> ।।
बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति । भूयिष्ठः । लोपापवादो यिडागमः, तस्मिन्निकार उच्चारणार्थः ।।
</6-4-159>
ज्यादादीयसः ।। <6-4-160> ।।
ज्यादुत्तरस्य ईयस आकार आदेशो भवति । ज्यायान् । लोपस्य यिदा व्यवहितत्वादादित्युच्यते । लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति ।।
</6-4-160>
र ऋतो हलादेर्लघोः ।। <6-4-161> ।।
रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः । प्रथिष्ठः, प्रथिमा, प्रथीयान्। म्रदिष्ठः , म्रदिमा, म्रदीयान् । ऋत इति किम्? पटिष्ठः, पटिमा, पटीयान् । हलादेरिति किम्? ऋजिष्ठः, ऋजिमा, ऋजीयान् । लघोरिति किम्? कृष्णिष्ठः , कृष्णीयान्, कृष्णिमा । परिगणनं कर्त्तव्यम्-
पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ।।
तत इह न भवति - कृतमाचष्टे कृतयति, मातरमाचष्टे मातयति, भ्रातयति ।।
</6-4-161>
विभाषर्जोश्छन्दसि ।। <6-4-162> ।।
ऋजु इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये । `रजिष्ठमेति पन्थानम्(ऋ.1-91-1) । त्वमृजिष्ठः ।।
</6-4-162>
प्रकृत्यैकाच् ।। <6-4-163> ।।
एकाज् यद्भसंज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति । स्रग्विन्नित्येतस्य विन्नन्तस्य - स्रजिष्ठः, स्रजीयान्, स्रजयति । स्रुग्वदित्येतस्य मत्वन्तस्य - स्रुचिष्ठः , स्रुचीयान्, स्रुचयति । एकाजिति किम्? वसुमदित्येतस्य वसिष्ठः । वसीयान् ।

- प्रकृत्याऽके राजन्यमनुष्ययुवानः *(म.भा.3-233)। अके प्रत्यये परतो राजन्य, मनुष्य, युवन् - इत्येते प्रकृत्या भवन्ति । राजन्यानां समूहो राजन्यकम् । मनुष्याणां समूहो मानुष्यकम् । आपत्यस्य च तद्धितेऽनाति(6-4-151/1082) इति यलोपः प्रकृतिभावेन न भवति । यूनो भावः यौवनिका । मनोज्ञादित्वाद् वुञ्, तस्य नस्तद्धिते(6-4-144/679) इति टिलोपो न भवति ।।

</6-4-163>
इनण्यनपत्ये ।। <6-4-164> ।।
इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति । सांकूटिनम् । सांराविणम् । सांमार्जिनम् । अभिविधौ भाव इनुण्(3-3-44/3218) , अणिनुणः(5-4-15/3229), इत्यण् । स्रग्विण इदं स्राग्विणम् । अणीति किम्? दण्डिनां समूहो दाण्डम् । अनुदात्तादेरञ् इत्यञ्प्रत्ययः । अनपत्य इति किम् ? मेधाविनोऽपत्यं मैधावः ।।
</6-4-164>
गाथिविदिथिकेशिगणिपणिनश्च ।। <6-4-165> ।।
गाथिन् , विदथिन्, केशिन्, गणिन्, पणिन् - इत्येते चाणि प्रकृत्या भवन्ति । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः । अपत्यार्थोऽयमारम्भः ।।
</6-4-165>
संयोगादिश्च ।। <6-4-166> ।।
संयोगादिश्च इनणि प्रकृत्या भवति । शङ्खिनोऽपत्यं शाङ्खिनः । माद्रिणः । वाज्रिणः ।।
</6-4-166>
अन् ।। <6-4-167> ।।
अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च । सामनः । वैमनः । सैत्वनः । जैत्वनः ।।
</6-4-167>
ये चाभावकर्मणोः ।। <6-4-168> ।।
यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति । सामसु साधुः सामन्यः । वेमन्यः । अभावकर्मणोरिति किम्? राज्ञो भावः कर्म वा राज्यम् । राजन् इति पुरोहितादिषु पठ्यते, ततोऽयं यक् प्रत्ययः ।।
</6-4-168>

आत्माध्वानौ खे ।। <6-4-169> ।।
आत्मन् अध्वन् - इत्येतौ खे परतः प्रकृत्या भवतः । आत्मने हित आत्मनीनः । अध्वानमलङ्गामी अध्वनीनः । ख इति किम्? प्रत्यात्मम् । प्राध्वम् । प्रत्यात्मम् - इत्यव्ययीभावे अनश्च(5-4-108/678) इति समासान्तष्टच्प्रत्ययः । प्राध्वम् - इति उपसर्गादध्वनः(5-4-85/953) इति अच्प्रत्ययः ।।
</6-4-169>
न मपूर्वोऽपत्येऽवर्मणः ।। <6-4-170> ।।
मपूर्वोऽन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति । सुषाम्णोऽपत्यं सौषामः । चान्द्रसामः । मपूर्व इति किम्? सौत्वनः । अपत्य इति किम्? चर्मणा परिवृतो रथः चार्मणः । अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

- मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् *(म.भा.3-233)। हितनाम्नोऽपत्यं हैतनामः, हैतनामनः ।।

</6-4-170>
ब्राह्मोऽजातौ ।। <6-4-171> ।।
योगविभागोऽत्र क्रियते । ब्राह्मः इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्राणि टेर्लोपार्थं निपात्यते । ब्राह्मो गर्भः । ब्राह्ममस्त्रम् । ब्राह्मं हविः । ततः अजातौ। अपत्य इत्येव - अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्य इत्येव - ब्राह्मी ओषधिः ।।
</6-4-171>
कार्मस्ताच्छील्ये ।। <6-4-172> ।।
कार्मः इति ताच्छील्ये टिलोपो निपात्यते । कर्मशीलः कार्मः । शीलम्(4-4-61/1611) छत्त्रादिभ्यो णः(4-4-62/1612) इति णप्रत्ययः । यद्येवम् , किमर्थमिदम्, नस्तद्धिते(6-4-144/679) इत्येव टिलोपः सिद्धः सत्यमेतत्, ज्ञापकार्थं तु। एतज्ज्ञापयति - `ताच्छीलिके णेऽण्कृतानि भवन्तीति । तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवति । ताच्छील्य इति किम्? कर्मण इदं कार्मणम् ।।
</6-4-172>
औक्षमनपत्ये ।। <6-4-173> ।।
औक्षमित्यनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्य इति किम्? उक्ष्णोऽपत्यमौक्ष्णः, षपूर्वहन्धृतराज्ञामणि(6-4-135/1160) इत्यलोपः ।।
</6-4-173>
दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ।। <6-4-174> ।।
दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय, हिरण्मय - इत्येतानि निपात्यन्ते । दण्डिन्, हस्तिन् - इत्येतौ नडादिषु पठ्येते , तयोरायने परतः प्रकृतिभावो निपात्यते । केषाञ्चित्तु - हस्तिन्निति नडादिषु न पठ्यते, तेषामत एव निपातनात् फगपि भवति । दण्डिनोऽपत्यं
दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः ।
अथर्वन् - इति वसन्तादिषु(4-2-63/1273) पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते, तमधीते यः स आथर्वणिकः । इके प्रकृतिभावो निपात्यते । जिह्माशिन् - इति शुभ्रादिषु(4-1-123/1126) पठ्यते, तस्य ण्ये परत- प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं जैह्माशिनेयः ।
वासिनोऽपत्यम्, उदीचां वृद्धादगोत्रात्(4-1-157/1181) इति फिञ्, तत्र प्रकृतिभावो निपात्यते - वासिनायनिः ।
भ्रूणहन्, धीवन् - इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः भ्रौणहत्यम् । धीव्नो भावो धैवत्यम् । हनस्तोऽचिण्णलोः(7-3-32/2574) इति यत्तत्वं तद्धातुप्रत्यय एवेति - भ्रौणघ्नः, वार्त्रघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते ।
सारव - इति सरयू इत्येतस्य अणि परतोऽयूशब्दस्य व इत्यादेशो निपात्यते । सरय्वां भवं सारवमुदकम् ।
ऐक्ष्वाक - इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्ये । इक्ष्वाकोरपत्यम् , जनपदशब्दात्क्षत्त्रियादञ्(4-1-166/1182) इत्यञ्, तत्र उकारलोपो निपात्यते । ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः कोपधादण्(4-2-132/1356) इत्यण् । ऐक्ष्वाकः ।
मैत्रेय - इति, मित्त्रयुशब्दो गृष्ट्यादिषु(4-1-136/1143) पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते । मित्त्रयोरपत्यं मैत्रेयः । अथ किमर्थं मित्त्रयुशब्दो बिदादिष्वेव(4-1-104/1106) न पठ्यते, तत्राञि कृते यादेरिति इयादेशेनैव सिद्धम्, एवं च युलोपार्थं निपातनं कर्त्तव्यं न भवति यस्कादिषु(2-4-63/1146) च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्त्रयव इत्यत्र यञञोश्च(2-4-64/118)इत्येव हि लुकः सिद्धत्वात्? नैतदस्ति, मित्त्रयूणां सङ्घ इत्यत्र गोत्रचरणाद्(4-3-126/1506) वुञं बाधित्वा मैत्रेयकः सङ्घ इत्यत्र सङ्घाङ्कलक्षणेष्वञ्यञिञामण्(4-3-127/1507) इत्यण् प्राप्नोति ।
हिरण्मयम् - इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः ।।
</6-4-174>
ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ।। <6-4-175> ।।
ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय - इत्येतानि निपात्यन्ते छन्दसि विषये । ऋतु, वास्तु - इत्येतयोर्यति यणादेशो निपात्यते । ऋतौ भवम् ऋत्व्यम् । वास्तौ भवं वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते । वस्तुनि भवो वास्त्वः । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते - `माध्वीर्नः सन्त्वोषधीः(ऋ.1-90-6) । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते । `हिरण्ययम्(ऋ.1-25-13) ।।

# काशिका/सप्तमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pbz
< काशिका | सप्तमोऽध्यायः

अथ सप्तमाध्याये प्रथम पादः

युवोरनाकौ ।। <7-1-1> ।।
यु, वु - इत्येतयोरुत्सृष्टविशेषणयोरनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासङ्ख्यमन, अक - इत्येतावादेशौ भवतः । योरनः, वोरकः । नन्यादिभ्यो ल्युः(3-1-134/2896) - नन्दनः । रमणः । सायमादिभ्यष्ट्युट्युलौ तुट्(4-3-23/1391) - सायन्तनः । चिरन्तनः । ण्वुल्तृचौ - कारकः । हारकः । वासुदेवार्जुनाभ्यां वुन्(4-3-98/1478) - वासुदेवकः । अर्जुनकः । अनुनासिकयणोरिति किम्? ऊर्णाया युस्(5-2-123/1929) ऊर्णायुः । `भुजिमृङ्भ्यां युक्त्युकौ(उ.308) - भुज्युः, मृत्युरिति । एवमादीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, `प्रतिज्ञानुनासिक्याः पाणिनीयाः(व्या.प.99) । इह युवोः इति निर्देशाद् द्वन्द्वैकवद्भावपक्षे अनित्यमागमशासनम् इति नुम् न क्रियते । नपुंसकलिङ्गता वा `लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य(चा.प.73) इति न भवति । इतरेतरपक्षे तु छान्दसत्वाद् वर्णलोपो द्रष्टव्यः ।।
युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यण्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद्भवेदयम् ।।
द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम् ।।
</7-1-1>
आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।। <7-1-2> ।।
आयन्, एय्, ईन्, ईय्, इय् - इत्येते आदेशा भवन्ति यथासंख्यं फ, ढ, ख, छ, घ - इत्येतेषां प्रत्यादीनाम् । फ इत्येतस्यायनादेशो भवति - नडादिभ्यः फक्(4-1-99/1101) नाडायनः , चारायणः । ढस्य एयादेशो भवति - स्त्रीभ्यो ढक्(4-1-130/1130), सौपर्णेयः, वैनतेयः । खस्य ईनादेशो भवति - कुलात्खः(4-1-139/1162), आढ्यकुलीनः, श्रोत्रियकुलीनः । छस्य ईयादेशो भवति - वृद्धाच्छः(4-2-114/1337), गार्गीयः, वात्सीयः । घ इत्येतस्येयादेशो भवति - क्षत्त्राद्घः(4-1-138/1161) क्षत्त्रियः । प्रत्ययग्रहणं किम्? फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते । आदिग्रहणं किम्? ऊरुदघ्नम् । जानुदघ्नम् । एते आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति । कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति । तथा च घच्छौ च(4-4-117/3463) इति घचश्चित्करणमर्थवद्भवति । शङ्खः, षण्ढः - इत्येवमादीनां हि उणादयो बहुलम्(3-3-1/3139) इति बहुलवचनादादेशा न भवन्ति । ऋतेरीयङ्(3-1-29/2422) इति वा वचनं ज्ञापकम् - धातुप्रत्ययानामादेशाभावस्य । एजेः खश्(3-2-28/2941), पदरुजविशस्पृशो घञ्(3-3-16/3182) - इत्येवमादिषु तु इत्संज्ञया भवितव्यम् । तद्धितेषु हि खकारघकारयोरादेशवचनमवकाशवदितीत्संज्ञां बाधितुं नोत्सहते । आयन्नीनोर्नकारस्येत्संज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं हि सम्भवति ।।
</7-1-2>
झोऽन्तः ।। <7-1-3> ।।
प्रत्ययग्रहणमनुवर्त्तते, आदिग्रहणं निवृत्तम् । प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति । कुर्वन्ति । सुन्वन्ति । चिन्वन्ति । `अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै(वासि.गृ.13-24) । `जॄविशिभ्यां झच्(उ.413) - जरन्तः, वेशन्तः ।
प्रत्ययस्य इत्येव - उज्झिता । उज्झितुम् । उज्झितव्यम् । अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्तत्वं भवति । तथा च - झचश्चित्करणमर्थवद्भवति ।।
</7-1-3>
अदभ्यस्तात् ।। <7-1-4> ।।
अभ्यस्तादङ्गादुत्तरस्य झकारस्य अत् इत्ययमादेशो भवति । ददति, ददतु । दधति, दधतु। जक्षति, जक्षतु । जाग्रति, जाग्रतु । अन्तादेशापवादोऽयम् , जुसादेशेन तु बाध्यते - अदधुः, अजागरुः । अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवति ।।
</7-1-4>
आत्मनेपदेष्वनतः ।। <7-1-5> ।।
आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्य अत् इत्ययमादेशो भवति । चिन्वते । चिन्वताम् । अचिन्वत । पुनते । लुनते । लुनताम् । अलुनत । आत्मनेपदेष्विति किम् ? चिन्वन्ति, लुनन्ति । अनत इति किम्? च्यवन्ते । प्लवन्ते । नित्यत्वादत्र विकरणे कृते झोऽन्तादेशेन भवितव्यमित्यदादेशो न भवति । अनकारान्तेनाङ्गेन झकारविशेषणं किम्? इह मा भूत् - `अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै(वासि.गृ.13-24) ।।
</7-1-5>
शीङो रुट् ।। <7-1-6> ।।
शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति । शेरते । शेरताम् । अशेरत । रुडयं परादिः क्रियते, स यदि झकारस्यैव स्यात्, अदादेशेन

स्यादिति , अत एवायमादेशस्यागमो विधीयते ।
सानुबन्धग्रहणमयङ्लुगर्थम् । तेनेह न भवति - व्यतिशेश्यते ।।
</7-1-6>
वेत्तेर्विभाषा।। <7-1-7> ।।
वेत्तेरङ्गादुत्तरस्य झादेशस्यातो विभाषा रुडागमो भवति । संविद्रते, संविदते । संविद्रताम्, संविदताम् । समविद्रत, समविदत । वेत्तिरिति लुग्विकरणस्य ग्रहणं किम्? इह मा भूत् - विन्ते, विन्दाते, विन्दते इति ।।
</7-1-7>
बहुलं छन्दसि ।। <7-1-8> ।।
छन्दसि विषये बहुलं रुडागमो भवति । `देवा अदुह्र(मै.सं.4-2-13) । गन्धर्वा अप्सरसो अदुह्र । दुहेर्लङि झकारस्यादादेशे कृते रुट् । लोपस्त आत्मनेपदेषु इति तकारलोपः । न च भवति - अदुहत । बहुलवचनादन्यत्रापि भवति - `अदृश्रमस्य केतवः(ऋ.1-50-3) । ऋदृशोऽङि गुणः(7-4-16/2406) इत्येतदपि बहुलवचनादेवात्र न भवति ।।
</7-1-8>
अतो भिस ऐस् ।। <7-1-9> ।।
अकारान्तादङ्गादुत्तरस्य भिस ऐसित्ययमादेशो भवति । वृक्षैः । प्लक्षैः । अतिजरसैः । जरामतिक्रान्तैरिति विगृह्य समाते कृते ह्रस्वत्वे च भिस ऐसादेशो भवति । एकदेशविकृतमनन्यवद्भवति इति जरशब्दस्य जरसादेशः । `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति परिभाषेयमनित्या, कष्टाय क्रमणे(3-1-14/2670) इति निर्देशात् । अत इति किम्? अग्निभिः । वायुभिः । तपरकरणं किम्? खट्वाभिः । मालाभिः ।।
`एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ।।(म.भा.3-244) अतः इत्यधिकारः - जसः शी(7-1-17/214) इति यावत् ।।
</7-1-9>
बहुलं छन्दसि ।। <7-1-10> ।।
छन्दसि विषये बहुलमैसादेशो भवति । अत इत्युक्तम्, अनतोऽपि भवति - नद्यैरिति । अतो न भवति - देवेभिः सर्वेभिः प्रोक्तमिति ।।
</7-1-10>
नेदमदसोरकोः ।। <7-1-11> ।।
इदम् , अदस् - इत्येतयोरककारयोर्भिस ऐस्न भवति । एभिः । अमीभिः । अकोरिति किम्? इमकैः । अमुकैः । अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकम् - `तन्मध्यपतितस्तद्ग्रहणेन गृह्यते(व्या.प.21) इति । इदमदसोः कात् इति नोक्तम्, विपरीतोऽपि नियमः सम्भाव्येत - इदमदसोरेव कादिति । ततश्चेह न स्यात् - सर्वकैः , विश्वकैः । इह च स्यादेव - एभिः, अमीभिः । प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम् ।।
</7-1-11>
टाङसिङसामिनात्स्याः ।। <7-1-12> ।।
अकारान्तादङ्गादुत्तरेषां टाङसिङसाम् इन, आत्, स्य - इत्येते आदेशा भवन्ति यथासंख्यम् । टा इत्येतस्येनादेशो भवति - वृक्षेण, प्लक्षेण। ङसि इत्येतस्य आत् - वृक्षात्, प्लक्षात् । ङस् इत्येतस्य स्यादेशो भवति - वृक्षस्य, प्लक्षस्य । अत इति किम्? सख्या । पत्या । अतिजरसिनः ,अतिजरसादिति केचिदिच्छन्ति । यथा तु भाष्ये तथा नैतदिष्यत इति लक्ष्यते ।।
</7-1-12>
ङेर्यः ।। <7-1-13> ।।
ङेः इति चतुर्थ्येकवचनस्य ग्रहणम् । अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य य इत्ययमादेशो भवति । वृक्षाय । प्लक्षाय । अत इति किम्? सख्ये, पत्ये । `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति परिभाषेयमनित्या, तेन दीर्घो भवति ।।
</7-1-13>
सर्वनाम्नः स्मै ।। <7-1-14> ।।
अकारान्तात्सर्वनाम्न उत्तरस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । यस्मै । कस्मै । तस्मै । अतः इत्येव - भवते । अथो अत्रास्मै - इत्यन्वादेशोऽशादेशे एकादेशः प्राप्नोति तत्रान्तरङ्गत्वादेकादेशात्पूर्वं स्मैभावः क्रियते, पश्चादेकादेश इति ।।
</7-1-14>
ङसिङ्योः स्मात्स्मिनौ ।। <7-1-15> ।।
ङसि, ङि इत्येतयोरकारान्तात् सर्वनाम्न उत्तरयोः स्मात्, स्मिन् - इत्येतावादेशौ भवतः । ङसीत्येतस्य स्मात् - सर्वस्मात्, विश्वस्मात्, यस्मात्, तस्मात्, कस्मात् । ङीत्येतस्य स्मिन् - सर्वस्मिन् , विश्वस्मिन्, यस्मिन्, तस्मिन् , अन्यस्मिन् । अत इत्येव - भवतः । भवति । सर्वनाम्न इत्येव - वृक्षात् । वृक्षे ।।
</7-1-15>
पूर्वादिभ्यो नवभ्यो वा ।। <7-1-16> ।।
पूर्वादिभ्यो नवभ्यः सर्वनाम्न उत्तरयोर्ङसिङ्योः स्मात्, स्मिन् - इत्येतावादेशौ वा भवतः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन् , पूर्वे । परस्मात्, परात् । परस्मिन् , परे । अवरस्मात्, अवरात् । अवरस्मिन्, अवरे । दक्षिणस्मात्, दक्षिणात् । दक्षिणस्मिन्, दक्षिणे । उत्तरस्मात्, उत्तरात् । उत्तरस्मिन् ,

उत्तरे । अपरस्मात् , अपरात् । अपरस्मिन्, अपरे । अधरस्मात्, अधरात्। अधरस्मिन् , अधरे । स्वस्मात्, स्वात्। स्वस्मिन्, स्वे । अन्तरस्मात्, अन्तरात् । अन्तरस्मिन , अन्तरे । नवभ्य इति किम्? त्यस्मात् । त्यस्मिन् ।।
</7-1-16>
जसः शी ।। <7-1-17> ।।
अकारान्तात्सर्वनाम्न उत्तरस्य जसः शी इत्ययमादेशो भवति । सर्वे। विश्वे । ये । के । ते । दीर्घोच्चारणमुत्तरार्थम् - त्रपुणी । जतुनी ।।
</7-1-17>
औङ आपः ।। <7-1-18> ।।
आबन्तादङ्गादुत्तरस्यौङः शी इत्ययमादेशो भवति । खट्वे तिष्ठतः । खट्वे पश्य । बहुराजे । कारीषगन्ध्ये । ङकारः सामान्यग्रहणार्थः - औटोऽपि ग्रहणं यथा स्यात् ।
`औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थः, तस्य चासञ्जनेऽस्मिन्ङित्कार्थं ते श्यां प्रसक्तं स दोषः । ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ।।(म.भा.3-247)
</7-1-18>
नपुंसकाच्च ।। <7-1-19> ।।
नपुंसकादङ्गादुत्तरस्य औङः शी इत्यमादेशो भवति । कुण्डे तिष्ठति । कुण्डे पश्य । यस्येति(6-4-148/311)लोपः प्राप्तः ।

- श्यां प्रतिषेधो वक्तव्यः *।

इति न भवति - दधिनी, मधुनी, त्रपुणी, जतुनी ।।
</7-1-19>
जश्शसोः शिः ।। <7-1-20> ।।
नपुंसकादङ्गादुत्तरयोर्जश्शसोः शि इत्यादेशो भवति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । दधीनि । मधूनि । त्रपूणि । जतूनि । जसा सहचरितस्य शसो ग्रहणादिह न भवति-कुण्डशो ददाति । वनशः प्रविशन्तीति ।।
</7-1-20>
अष्टाभ्य औश् ।। <7-1-21> ।।
अष्टाभ्यः इति कृताकारोऽष्टन् - शब्दो गृह्यते । तस्मादुत्तरयोर्जश्शसोः औश् इत्ययमादेशो भवति । अष्टौ तिष्ठन्ति । अष्टौ पश्य । कृताकारस्य ग्रहणं किम्? अष्ट तिष्ठन्ति । अष्ट पश्य । एतदेव कृतात्वस्य ग्रहणं ज्ञापकम् - अष्टन आ विभक्तौ(7-2-84/371) इति आत्वविकल्पस्य । षड्भ्यो लुक्(7-1-22/261) इत्यस्यायमपवादः, नाप्राप्ते तस्मिन्निदमारभ्यते । यस्तु सुपो धातुप्रातिपदिकयोः(2-4-71/650) इति , तस्मिन्प्राप्ते चाप्राप्ते चेति स न बाध्यते - अष्टपुत्रः, अष्टभार्य इति । तदन्तग्रहणमत्रेष्यते-परमाष्टौ, उत्तमाष्टौ । प्रियाष्टानः इत्यत्रात्वस्याभावादौश्त्वं न भवति ।।
</7-1-21>
षड्भ्यो लुक् ।। <7-1-22> ।।
षट्संज्ञकेभ्य उत्तरयोर्जश्शसोर्लुग्भवति । षट् तिष्ठन्ति । षट् पश्य । पञ्च । सप्त । नव । दश । षट्प्रधानात्तदन्तादपि भवति - परमषट् । उत्तमषट् । यत्र तूपसर्जनं षट्, ततो न भवति - प्रियषषः, प्रियपञ्चान इति ।।
</7-1-22>
स्वमोर्नपुंसकात् ।। <7-1-23> ।।
सु, अम् - इत्येतयोर्नपुंसकादुत्तरयोर्लुग्भवति । दधि तिष्ठति । दधि पश्य । मधु तिष्ठति । मधु पश्य । त्रपु । जतु । तद्ब्राह्मणकुलमित्यत्र लुका त्यदाद्यत्वं बाध्यते पूर्वविप्रतिषेधेन, नित्यत्वाद्वा । लुको हि निमित्तम् अतोऽम्(7-1-24/309) इति लक्षणान्तरेण विहन्यते , न पुनस्त्यदाद्यत्वेनैव । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति।।
</7-1-23>
अतोऽम् ।। <7-1-24> ।।
अकारान्तान्नपुंसकाद् उत्तरयोः स्वमोः अम् इत्ययमादेशो भवति । कुण्डं तिष्ठति । कुण्डं पश्य । वनम् । पीठम् । मकारः कस्मान्न क्रियते दीर्घत्वं प्राप्नोति(7-3-102/202) ।।
</7-1-24>
अद्ड् डतरादिभ्यः पञ्चभ्यः ।। <7-1-25> ।।
डतरादिभ्यः परयोः स्वमोरद्ड् इत्ययमादेशो भवति । कतरत्तिष्ठति । कतरत्पश्य । कतमत्तिष्ठति । कतमत्पश्य
। इतरत् । अन्यतरत् । अन्यत् । पञ्चभ्य इति किम्? नेमं पश्य । डित्करणं किम् कतरत् तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो मा भूत् । इह तु कतरत्पश्येति स्थानिवद्भावादमि पूर्वत्वेनापि सिद्ध्यति । एवं तर्हि तकारादेश एव कस्मान्न विधीयते हे कतरदिति सम्बुद्धेर्लोपो मा भूत् ।
अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अद्डित्त्वाड्डतरादीनां न लोपो नापि दीर्घता ।।
</7-1-25>

नेतराच्छन्दसि ।। <7-1-26> ।।

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषये अद्डादेशो न भवति । `इतरमितरमण्डमजायत(मै.1-6-12) । वार्त्रघ्नमितरम् । छन्दसीति किम्? इतरत्काष्ठम् । इतरत्कुड्यम् । अतोऽम्(7-1-24/309) - इत्यस्मादनन्तरमितराच्छन्दसीति वक्तव्यम् । नेतराच्छन्दसि इति वचनं योगविभागार्थम् ।

- एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते *(म.भा.3-250)। एक तरं तिष्ठति । एकतरं पश्येति ।।

</7-1-26>

युष्मदस्मद्भ्यां ङसोऽश् ।। <7-1-27> ।।

युष्मदस्मद् - इत्येताभ्यामुत्तरस्य ङसः अश् -- इत्ययमादेशो भवति । तव स्वम् । मम स्वम् । शित्करणं सर्वादेशार्थम् अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च योऽचि(7-2-89/392) इत्येतन्न स्यात् ।।

</7-1-27>

ङे प्रथमयोरम् ।। <7-1-28> ।।

ङे इत्यविभक्तिको निर्देशः । ङे इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथमाद्वितीययोर्युष्मदस्मद्भ्यामुत्तरयोः अम् इत्ययमादेशो भवति । तुभ्यं दीयते । मह्यं दीयते । प्रथमयोः - त्वम् , अहम् । युवाम्, आवाम् । यूयम् , वयम् । त्वाम्, माम् । युवाम् , आवाम् ।।

</7-1-28>

शसो न ।। <7-1-29> ।।

युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान्कुलानि । तस्माच्छसो नः पुंसि(6-1-103/196) इति सिद्धे स्त्रीनपुंसकार्थं वचनम् । अलिङ्गे वा युष्मदस्मदी ।।

</7-1-29>

भ्यसो भ्यम् ।। <7-1-30> ।।

युष्मदस्मद्भ्यामुत्तरस्य भ्यसः भ्यम् इत्ययमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते । भ्यमादेशे कृते शेषेलोपे च बहुवचने झल्येत्(7-3-103/205) इत्येत्वं प्राप्नोति, तद् `अङ्गवृत्ते पुनर्वृतावविधिर्निष्ठितस्य(व्या.प.38) इति न भवति । केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति । येषां तु शेषेलोपष्टिलोपः , तेषामभ्यमादेश एव । उदात्तनिवृत्तस्वरश्चादेरेव भवति ।।

</7-1-30>

पञ्चम्या अत् ।। <7-1-31> ।।

पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य अत् इत्ययमादेशो भवति । युष्मद् गच्छन्ति । अस्मद् गच्छन्ति ।।

</7-1-31>

एकवचनस्य च ।। <7-1-32> ।।

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुतरस्य अत् इत्ययमादेशो भवति । त्वद् गच्छन्ति । मद् गच्छन्ति ।।

</7-1-32>

साम आकम् ।। <7-1-33> ।।

साम इति षष्ठीबहुवचनमागतसुट्कं गृह्यते । तस्य युष्मदस्मद्भ्यामुत्तरस्य आकम् इत्ययमादेशो भवति । युष्माकम् । अस्माकम् । अथ किमर्थमागतसुट्को गृह्यते, न ह्यादेशविधानकाले सुड् विद्यते तस्यैव तु भाविनः सुटो निवृत्त्यर्थम् । आदेशे कृते हि शेषेलोपे युष्मदस्मदोरकारान्तत्वात्सुट् प्राप्नोति, स स्थान्यन्तर्भूतत्वान्निवर्तते । दीर्घोच्चारणं सवर्णदीर्घार्थम् । अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति । तत्सामर्थ्यमेत्वं प्रति भविष्यतीति अकारकरणमेत्वनिवृत्त्यर्थमिति अतो गुणे(6-1-97/191) पररूपत्वं स्यात् ।।

</7-1-33>

आत औ णलः ।। <7-1-34> ।।

आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति । पपौ । तस्थौ । जग्लौ । मम्लौ । अत्रौत्वमेकादेशः, स्थानिवद्भावः, द्विर्वचनम् - इत्यनेन क्रमेण कार्याणि क्रियन्ते । एकादेशादनवकाशत्वादौत्वं द्विर्वचनादपि परत्वादेकादेश इति ।

</7-1-34>

तुह्योस्तातङाशिष्यन्यतरस्याम् ।। <7-1-35> ।।

तु, हि - इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम् । जीवताद्भवान् । जीवतात्त्वम् । जीवतु भवान् । जीव त्वम् । ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति । ङित्वाच्चास्य स्थानिवद्भावाद्यत्पित्त्वं प्राप्नोति , तन्निवर्तते, ङिच्च पिन्न भवति । तेन ब्रुव ईट्(7-3-93/2452) इति ब्रूताद्भवान् - इतीण्न भवति । आशिषीति किम्? ग्रामं गच्छतु भवान् । गच्छ त्वम् ।

तातङि ङित्वं संक्रमकृत्स्यादन्त्यविधिश्चेतच्च तथा न ।

हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह।।

तातङो ङित्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः ।

न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः ।।

</7-1-35>
विदेः शतुर्वसुः ।। <7-1-36> ।।
`विद ज्ञाने(धा.पा.1065) - इत्येतस्माद्धातोरुत्तरस्य शतुर्वसुरादेशो भवति । विद्वान्, विद्वांसौ, विद्वांसः । स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणम् वसोः सम्प्रसारणम्(6-4-131/435) इत्यत्र क्वसोरपि सामान्यग्रहणार्थम् । `एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य(व्या.प.52) इत्येतदपि न भवति तथा सत्युकारकरणमनर्थकं स्यात् । अन्यतरस्यांग्रहणं केचिदनुवर्त्तयन्ति । विदन्, विदन्तौ , विदन्तः ।।
</7-1-36>
समासेऽनञ्पूर्वे क्त्वो ल्यप् ।। <7-1-37> ।।
समासेऽनञ्पूर्वे क्त्वा इत्येतस्य ल्यप् इत्ययमादेशो भवति । प्रकृत्य । प्रहृत्य । पार्श्वतः कृत्य । नानाकृत्य । द्विधाकृत्य । समास इति किम्? कृत्वा । हृत्वा । अनञ्पूर्व इति किम्? अकृत्वा । अहृत्वा । परमकृत्वा । उत्तमकृत्वा । अनञ् इति हि नञाऽन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते । तेन नञ् अनव्ययं चानञ् न भवति । स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति । अथ वा - समासे इति निर्धारणे सप्तमी । तेन क्त्वान्तः समास एव परिगृह्यते । स च येन विधिस्तदन्तस्य(व्या.प.3) इत्यनेन तदन्तविधिना, नतु `कृद्ग्रहणे गतिकारकपूर्वस्यापि(व्या.प.126) इति । तथा च अनञ्पूर्वे इत्युच्यते । गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति, नञ्न गतिः , न च कारकमिति । प्रधाय, प्रस्थायेत्यादिषु हिप्रभृतीन् अन्तरङ्गानपि विधीन्बहि रङ्गो ल्यब्बाधत तएव - इति ज्ञापितमेतत् ।।
</7-1-37>
क्त्वापि छन्दसि ।। <7-1-38> ।।
समासेऽनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययमादेशो भवति, अपिशब्दाल्ल्यबपि भवति छन्दसि विषये । `कृष्णं वासो यजमानं परिधापयित्वा(काठ.सं.11-10) । `प्रत्यञ्चमर्कं प्रत्यर्पयित्वा(अ.वे.2-12-55) । ल्यबपि भवति -
`उद्धृत्य जुहोति(काठ.सं.6-8) । वा छन्दसि इति नोक्तम्, सर्वोपाधिव्यभिचारार्थम् । तेनासमासे ल्यबभवति - अर्च्य तान् देवान् गतः । छन्दोऽधिकारः आज्जसेरसुक्(7-1-50/3572) इति यावत् ।।
</7-1-38>
सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ।। <7-1-39> ।।
छन्दसि विषये सुपां स्थाने सु, लुक् , पुर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल् - इत्येते आदेशा भवन्ति । सु - `अनृक्षरा ऋजवः सन्तु पन्थाः(ऋ.10-85-23) । पन्थान इति प्राप्ते ।

- सुपां सुपो भवन्तीति वक्तव्यम् *(म.भा.3-256)। `धुरि दक्षिणायाः(ऋ.1-164-9) । दक्षिणायामिति प्राप्ते ।
- तिङां तिङो भवन्तीति वक्तव्यम् *(म.भा.3-256)।

`चषालं ये अश्वयूपायतक्षति(ऋ.1-162-6) । तक्षन्तीति प्राप्ते । लुक् - `आर्द्रे चर्मन्(तै.1-5-9-3), `लोहिते जर्मन्(काठ.संय24-2) । चर्मणीति प्राप्ते । हविर्द्धाने यत्सुन्वन्ति तत्सामिधेनीरन्वाह । यस्मिन्सुन्वन्ति तस्मिन्सामिधेनीरिति प्राप्ते । पूर्वसवर्णः - `धीती(ऋ.1-164-8) । मती । `सुष्टुती(ऋ.2-32-4) । धीत्या, मत्या, सुष्टुत्या इति प्राप्ते। आ - `उभा यन्तारौ(तै.सं.4-6-9-3) । उभौ यन्तारौ इति प्राप्ते । आत् - न ताद् ब्राह्मणाद् निन्दामि । तान् ब्राह्मणानिति प्राप्ते । शे - `न युष्मे बाजवन्धवः(ऋ.8-68-19) । `अस्मे इन्द्राबृहस्पती(ऋ.4-49-4) । यूयं वयमिति प्राप्ते । यूयादेशः , वयादेशश्च छान्दसत्वान्न भवति । या - `उरुया(मै.3-7-8) । धृष्णुया । उरुणा, धृष्णुनेति प्राप्ते । डा - `नाभा पृथिव्याम्(अ.7-61-1) । नाभौ वृथिव्यामिति प्राप्ते । ड्या - `अनुष्टया च्यावयतात्(मै.4-13-4-25) । अनुष्टुभेति प्राप्ते । याच् - `साधुया(ऋ.10-66-12) । साध्विति सोर्लुकि प्राप्ते । आल् - `वसन्ता यजेत(मै.2-3-4) । वसन्त इति प्राप्ते ।

- इयाडियाजीकारणामुपसंख्यानम् *(म.बा.3-256)। इया - `उर्विया परिधानम्(ऋ.10-10-2) । दार्विया । उरुणा, दारुणेति प्राप्ते । डियाच् - `सुक्षेत्रिया । `सुगात्रिया(ऋ.1-97-2) । सुक्षेत्रिणा, सुगात्रिणेति प्राप्ते । ईकारः - `दृतिं न शुष्कं सरसी शयानम्(ऋ.7-10-3-2) । सरसि शयानमिति प्राप्ते ।
- आङ्याजयारामुपसंख्यानम् *(म.भा.3-256)। आङ् - `प्रबाहवा(ऋ.2-38-2) । प्रबाहुनेति प्राप्ते । अयाच् - `स्वप्नया सचसे जनम्(अ.5-7-8) । स्वनेति प्राप्ते । अयार्-`सिन्धुमिव नवया(ऋ.1-97-8) । नावेति प्राप्ते ।।

</7-1-39>
अमो मश् ।। <7-1-40> ।।
अम् इति मिबादेशो गृह्यते । तस्य छन्दसि विषये मशादेशो भवति । `वधीं पुत्रम्(ऋ.1-165-8) । क्रमीं वृक्षस्य शाखाम् । लुङि बहुलं छन्दस्यमाङ्योगेऽपि(6-4-75/3546) इत्यडागमाभावः । शित्करणं सर्वादेशार्थम् । मकारस्यापि हि मकारवचनमनुस्वारनिवृत्यर्थं स्यात् ।।
</7-1-40>
लोपस्त आत्मनेपदेषु ।। <7-1-41> ।।
आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति । `देवा अदुह्र(मै.4-2-1) । गन्धर्वाप्सरसो अदुह्र । अदुहतेति प्राप्ते । `दुहामश्विभ्यां पयो अघ्न्येयम्(ऋ.1-164-27) । दुग्धामिति प्राप्ते । `दक्षिणतः शये(काठ.20-6) । शेत इति प्राप्ते । अपीत्यधिकारन्न भवति - तत्र

आत्मानमनृतं कुरुते । आत्मनेपदेष्विति किम्? `वत्सं दुहन्ति कलशं चतुर्बिलम्(तै.ब्रा.3-7-4-16) ।।
</7-1-41>
ध्वमो ध्वात् ।। <7-1-42> ।।
छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति । `अन्तरेवोष्प्राणं वारयध्वात्(मै.3-4-13) । वारयध्वमिति प्राप्ते ।।
</7-1-42>
यजध्वैनमिति च ।। <7-1-43> ।।
यजध्वम् इत्येतस्य एनमित्येतस्मिन्परतो मकारलोपो निपात्यते वकारस्य च यकारश्छन्दसि विषये । `यजध्वैनं प्रियमेधाः(ऋ.8-2-37) । यजध्वमेनमिति प्राप्ते ।।
</7-1-43>
तस्य तात् ।। <7-1-44> ।।
तशब्दस्य लोण्मध्यमपुरुषबहुवजनस्य स्थाने तात् इत्ययमादेशो भवति । `गात्रंगात्रमस्या नूनं कृणुतात्(ै.4-13-4-25) । कृणुतेति प्राप्ते । `ऊवध्य गोहं पार्थिवं खनतात्(मै.4-13-4-25) । खनतेति प्राप्ते । `अस्मान्नक्षः संसृजतात्(मै.4-13-4-25) । संसृजतेति प्राप्ते । `सूर्यं चक्षुर्गमयतात्(मै.4-13-4-24) । गमयतेति प्राप्ते ।।
</7-1-44>
तप्तनप्तनथनाश्च ।। <7-1-45> ।।
तस्य इति वर्त्तते । छन्दसि विषये तस्य स्थाने तप्, तनप्, तन, थन - इत्येते आदेशा भवन्ति । तप् - `शृणोत ग्रावाणः(तै.1-3-13-1) । शृणुतेति प्राप्ते । `सुनोत(ऋ.7-32-8) । सुनुतेति प्राप्ते । तनप् - `संवरत्रा दधातन(ऋ.10-101-5) । दत्तेति प्राप्ते । तन - `जुजुष्टन(ऋ.4-36-7) । जुषतेति प्राप्ते । छान्दसत्वात् श्लुः । थन - `यदिष्ठन(ऋ.10-63-6) । यदिच्छतेति प्राप्ते । पित्करणमङित्त्वार्थम् ।।
</7-1-45>
इदन्तो मसि ।। <7-1-46> ।।
छन्दसि विषये मसित्ययं शब्द इकारान्तो भवति । मसः सकारान्तस्य इकारगमो भवति, सच तस्यान्तो भवति । तद्ग्रहणेन गृह्यत इत्यर्थः । `पुनस्त्वां दीपयामसि(अ.वे.12-2-5) । दीपयाम इति प्राप्ते । `शलभं भञ्चयामसि(पै.5-20-4) । भञ्जयाम इति प्राप्ते । `त्वयि रात्रिं वासयामसि(शौ.19-47-9) । वासयाम इति पाप्ते ।
</7-1-46>
क्त्वो यक् ।। <7-1-47> ।।
क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये । `दत्त्वाय सविता धियः(ऋ.10-85-33) । दत्त्वेति प्राप्ते । क्त्वापि छन्दसि(7-1-38/3360) इत्यस्यानन्तरमिदं कस्मान्नोच्यते समासे इति तत्रानुवर्त्तते ।।
</7-1-47>
इष्ट्वीनमिति च ।। <7-1-48> ।।
इष्ट्वीनम् - इत्ययं शब्दो निपात्यते छन्दसि विषये । यजेः क्त्वाप्रत्ययान्तस्य ईनमादेशोऽन्त्यस्य निपात्यते । `इष्ट्वीनं देवान्(आश्व.श्रौ.पृ.204) । इष्ट्वा देवानिति प्राप्ते । पीत्वीनमित्यपीष्यते । चकारस्यानुक्तसमुच्चयार्थत्वात्सिद्धम् ।।
</7-1-48>
स्नात्व्यादयश्च ।। <7-1-49> ।।
स्नात्वी इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये । `स्नात्वी मलादिव(मै.सं.3-11-10) । स्नात्वेति प्राप्ते । `पीत्वी सोमस्य वावृधे(ऋ.3-40-7) । पीत्वेति प्राप्ते । प्रकारार्थोऽयमादिशब्दः ।।
</7-1-49>
आज्जसेरसुक् ।। <7-1-50> ।।
अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये । `ब्राह्मणासः पितरः सोम्यासः(ऋ.6-75-10) । ब्राह्मणाः सोम्या इति प्राप्ते । `ये पूर्वासो य उपरासः(ऋ.10-15-2) - इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानाच्छीभावः प्राप्तः, `सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव(व्या.प.40) इति न भवति ।।
</7-1-50>
अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ।। <7-1-51> ।।
छन्दसि इत्यतः प्रभृति निवृत्तम् । अश्व, क्षीर, वृष, लवण- इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति । अश्वस्यति वडवा । क्षीरस्यति माणवकः । वृषस्यति गौः (म.भा.3-258)।
लवणस्यत्युष्ट्रः । आत्मप्रीताविति किम् अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति ।

- अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् *(म.भा.3-258)।
- क्षीरलवणयोर्लालसायामिति वक्तव्यम् *(म.भा.3-258)। तृष्णातिरेकः - लालसा । अन्यत्रात्मप्रीतावपि न भवति । अपर आह -
- सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः *(म.भा.3-258)। दध्यस्यति, मध्वस्यति, इत्येवमाद्यर्थम् । अपर आह -

- सुग्वक्तव्यः *(म.भा.3-258)। दधिस्यति, मधुस्यति - इत्येवमाद्यर्थम् ।।

</7-1-51>

आमि सर्वनाम्नः सुट् ।। <7-1-52> ।।

आत् इति वर्त्तते । अवर्णात्सर्वनाम्न उत्तरस्यामः सुडागमो भवति । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । सर्वासाम् । यासाम् । तासाम् । आदित्येव - भवताम् । आमि इति षष्ठीबहुवचनं गृह्यते, न ङेराम्नद्याम्नीभ्यः(8-3-116/2471) इति, तस्य हि परत्वादाड्याट्स्याटो भवन्ति । यश्च किमेतिङव्ययघादामुः(5-4-11/2004) आमश्च लिटि न तौ सर्वनाम्नः स्तः । सानुबन्धकाविति वा, तौ न गृह्येते । आमि इति सप्तमीनिर्द्देश उत्तरार्थः । इह तु सर्वनाम्नः इति पञ्चमीनिर्द्देशात् तस्मादित्युत्तरस्य(1-1-67/41) इति षष्ठीप्रक्लृप्तिर्भविष्यति ।।

</7-1-52>

त्रेस्त्रयः ।। <7-1-53> ।।

त्रि इत्येतस्य आमि परे त्रय इत्ययमादेशो भवति । त्रयाणाम् । त्रीणामित्यपि छन्दसीष्यते - त्रीणामपि समुद्राणामिति ।।

</7-1-53>

ह्रस्वनद्यापो नुट् ।। <7-1-54> ।।

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति । ह्रस्वान्तात्तावत् -- वृक्षाणाम् । प्लक्षाणाम् । अग्नीनाम् । वायूनाम् । कर्तृणाम् । नद्यन्तात् - कुमारीणाम् । किशोरीणाम् । गौरीणाम् । शार्ङ्गरवीणाम् । लक्ष्मीणाम् । ब्रह्मबन्धूनाम् । वीरबन्धूनाम् । मालानाम् । बहुराजानाम् । कारीषगन्ध्यानाम् ।।

</7-1-54>

षट्चतुर्भ्यश्च ।। <7-1-55> ।।

षट्संज्ञकेभ्यश्चतुः शब्दाच्चोत्तरस्यामो नुगाडमो भवति । षण्णाम् । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । चतुर्णाम् । रेफान्तायाः संख्यायाः षट्संज्ञा न विहिता, षड्भ्यो लुक्(7-1-22/261) इति लुग्मा भूत् । बहुवचननिर्द्देशादत्र संख्याप्रधानस्य ग्रहणं भवति - परमषण्णाम् । परमपञ्चानाम् । परमसप्तानाम् । परमचतुर्णाम् । उपसर्जनीभूतायास्तु संख्याया न भवति - प्रियषषाम् , प्रियपञ्चाम् , प्रियचतुरामिति ।।

</7-1-55>

श्रीग्रामण्योश्छन्दसि ।। <7-1-56> ।।

श्री, ग्रामणी - इत्येतयोश्छन्दसि विषये आमो नुडागमो भवति । `श्रीणामुदारो धरुणो रयीणाम्(ऋ.10-45-5) । `अप्यत्र सूतग्रामणीनाम्(काठ.28-3) । श्रीशब्दस्य वामि(1-4-5/304) इति विकल्पेन नदीसंज्ञा, तत्र नित्यार्थं वचनम् । सूतग्रामणीनामिति - यदा सूताश्च ग्रामण्यश्च सूतग्रामण्यो भवन्ति, तदर्थमिदं वचनम् । यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा ह्रस्वादित्येव सिद्धम् ।।

</7-1-56>

गोः पादान्ते ।। <7-1-57> ।।

गो इत्येतस्माद्दक्पादान्ते वर्त्तमानादुत्तरस्यामो नुडागमो भवति । `विद्मा हि त्वा सत्पतिं
शूरगोनाम्(ऋ.10-47-2) । पादान्त इति किम्? `गवां गोत्रमुदसृजो यदङ्गिरः(ऋ.2-23-18) । `सर्वे विधयश्छन्दसि विकल्प्यन्ते(पु.प.35) इति पादान्तेऽपि क्वचिन्न भवति । `हन्तारं शात्रूणां कृधि विराजं गोपतिं गवाम्(ऋ.10-166-1) ।।

</7-1-57>

इदितो नुम् धातोः ।। <7-1-58> ।।

इदितो धातोर्नुमागमो भवति । कुडि - कुण्डिता, कुण्डितुम् , कुण्डितव्यम्, कुण्डा । हुडि - हुण्डिता, हुण्डितुम् , हुण्डितव्यम्, हुण्डा । इदित इति किम्? पचति । पठति । अयं धातूपदेशावस्थायामेव नुमागमो भवति - कुण्डा, हुण्डेति गुरोश्च हलः(3-3-103/3280) इत्यकारप्रत्ययो यथा स्यात् । तथा हि - धिन्विकृण्व्योर च(3-1-80/2332) इति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम् । धातुग्रहणं चेह क्रियते - धातूपदेशकाल एव नुमागमो यथा स्यादित्येवमर्थम् । तासिसिचोरिदित्कार्यं नास्ति - इत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते ।
अमंस्तेत्येवमादौ हि हनः सिच्(1-2-24/2697) इति कित्त्वविधानसामर्थ्यान्नकारलोपो न भवति । मन्ता - इत्यत्रापि असिद्धवदत्राभात्(6-4-22/2183) इति टिलोपस्यासिद्धत्वान्नलोपो न भवति । इह कस्मान्न भवति - भेत्ता, छेत्तेति `इरितां समुदायस्येत्संज्ञा(7-2-4/2268.वा.) इतीदित्त्वं नास्ति । अवयवशोऽपीत्संज्ञायां सत्याम् गोः पादान्ते(7-1-57/3574) इतोऽन्तग्रहणमनुवर्त्तयितव्यम् । तेनान्तेदितो धातवो गृह्यन्ते ।।

</7-1-58>

शे मुचादीनाम् ।। <7-1-59> ।।

शे प्रत्यये परतो मुचादीनां नुमागमो भवति । मुच्लृ - मुञ्चति । लुप्लृ - लुम्पति । विद्लृ -- विन्दति । लिपि - लिम्पति । सिच् - सिञ्चति । कृती - कृन्तति । खिद - खिन्दसि । पिश - पिंशति । शे इति किम्? मोक्ता, मोक्तुम् , मोक्तव्यम् । मुचादीनामिति किम्? तुदति, नुदति ।

- शेतृम्फादीनामुपसंख्यानं कर्तव्यम् *(म.भा.3-261)। के पुनस्तृम्फादय? `तृफ तृम्फ तृप्तौ(धा.पा.1308,1309) । `दृफ दृम्फ उत्क्लेशे(धा.पा.1314,1315), `गुफ गुम्फ ग्रन्थे(धा.पा.1318,1319) `उभ उम्भ पूरणे(धा.पा.1320,1321) , `शुभ शुम्भ शोभार्थे(धा.पा.1322,1323) - इत्यत्र ये सानुषङ्गास्तृम्फादयः , तेषाम् अनिदितां हल उपधायाः क्ङिति(6-4-24/415) इत्यनुनासिकलोपे

कृते नुम्विधीयते, स च विधानसामर्थ्यान्न लुप्यते - तृम्फति, दृम्फति, गुम्फति, उम्भति, शुम्भति । ये तु निरनुषङ्गाः, तेषां तृफति, दृफति, गुफति, उभति , शुभतीत्येवं भवति ।।
</7-1-59>
मस्जिनशोर्झलि ।। <7-1-60> ।।
मस्जि, नशि - इत्येतयोरङ्गयोर्झलादौ प्रत्यये नुमागमो भवति । मङ्क्ता , मङ्क्तुम्, मङ्क्तव्यम् । नंष्टा, नंष्टुम्, नंष्टव्यम् । झलीति किम्? मज्जनम् । नशनम् । `मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम्(8-2-21/2541.वा.) । मग्नः । मग्नवान् ।
</7-1-60>
रधिजभोरचि ।। <7-1-61> ।।
रधि, जभि - इत्येतयोरजादौ प्रत्यये नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्धंरन्धम् । रन्धो वर्त्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भंजम्भम् । जम्भो वर्त्तते । परापि सती वृद्धिर्नुमा बाध्यते नित्यत्वात् । अचीति किम्? रद्धा । जभ्यम् ।।
</7-1-61>
नेट्यलिटि रधेः ।। <7-1-62> ।।
इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति । रधिता । रधितुम् । रधितव्यम् । इटीति किम्? रन्धनम्, रन्धकः । अलिटिति किम्? ररन्धिव, ररन्धिम । नुमि कृते संयोगान्तत्वाद् असंयोगाल्लिट् कित्(1-2-5/2242) इति कित्त्वं नास्तीति नलोपो न भवति । अथ क्वसौ कथं भवतितव्यम्? रेधिवानिति ।
कथम्? एत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते, ततो नुमागमः, तस्यौपदेशिककित्वाश्रयो लोपः । अथ इटि लिटीत्येवं नियमः कस्मान्न क्रियते - लिट्येवेटि नान्यत्रेति विपरीतमप्यवधारणं सम्भाव्येत - इट्येव लिटि नान्यत्रेति । तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव ।।
</7-1-62>
रभेरशब्लिटोः ।। <7-1-63>।।
रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्त्तते । अशब्लिटोरिति किम्? आरभते । आरेभे । अचीत्येव - आरब्धा ।।
</7-1-63>

लभेश्च ।। <7-1-64>।।
लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति । लम्भयति । लम्भकः । साधुलम्भी । लम्भंलम्भम् । लम्भो वर्त्तते । अशब्लिटोरित्येव - लभते । लेभे । अचीत्येव - लब्धा । लभेश्च पृथग्योगकरणमुत्तरार्थम् ।।
</7-1-64>
आङो यि ।। <7-1-65> ।।
आङ उत्तरस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति आलम्भ्या गौः । आलम्भ्या वडवा । प्राक्प्रत्ययोत्पत्तेर्नुमि कृते विहितमदुपधत्वमिति ऋहलोर्ण्यत्(3-1-124/2872) इति ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरितत्वं भवति । यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात् । आङ इति किम्? लभ्यम् । `कथमग्निष्टोम आलभ्य(मै.3-9-5) इति `सर्वे विधयश्छन्दसि विकल्प्यन्ते(पु.प.35) । अथ वा - आलभ्य इत्यत्र नुमि कृतेऽनुषङ्गलोपः क्रियते ।।
</7-1-65>
उपात्प्रशंसायाम् ।। <7-1-66> ।।
उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति । उपलम्भ्या भवता विद्या । उपलम्भ्यानि धनानि । ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव । प्रशंसायामिति किम्? उपलभ्यमस्माद् वृषलात्किञ्चित् । पोरदुपधत्वाद्यत्प्रत्ययान्तमिदम् ।।
</7-1-66>
उपसर्गात्खल्घञोः ।। <7-1-67> ।।
उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । घञि - प्रलम्भः , विप्रलम्भः । सिद्धे सत्यारम्भो नियमार्थः - उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र । ईषल्लभः । लाभो वर्त्तते ।।
</7-1-67>
न सुदुर्भ्यां केवलाभ्याम् ।। <7-1-68> ।।
सु, दुर् - इत्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य लभेः खल्घञोः परतो नुमागमो न भवति । सुदुर्लभम् । सुलभम् । दुर्लभम् । घञि - सुलाभः , दुर्लाभः । केवलाभ्यामिति किम्? सुप्रलम्भः । दुष्प्रलम्भः । सुदुर्भ्याम् इति तृतीयां मत्वा केवलग्रहणं क्रियते । पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः । अतिसुलभमित्यत्र कर्मप्रवचनीयत्वादतेः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः । यदा त्वतिशब्दो न कर्मप्रवचनीयः, तदा नुम्भवत्येव - अतिसुलम्भ इति पञ्चमीनिर्देशपक्षेऽप्येवमर्थं केवलग्रहणं कर्त्तव्यम् ।।
</7-1-68>
विभाषा चिण्णमुलोः ।। <7-1-69> ।।

चिण्, णमुल् - इत्येतयोर्विभाषा लभेर्नुम्भवति । अलाभि, अलम्भि। लाभंलाभम् । लम्भंलम्भम् । व्यवस्थितविभाषा चेयम्, तेनानुपसृष्टस्य विकल्पः । उपसृष्टस्य नित्यं नुम्भवति - प्रालम्भि, प्रलम्भम् ।।
</7-1-69>
उगिदचां सर्वनामस्थानेऽधातोः ।। <7-1-70> ।।
उगितामङ्गानां धातुवर्जितानामञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति । भवतु - भवन्तौ , भवन्तः । ईयसुन् - श्रेयान्, श्रेयांसौ, श्रेयासः । शतृ - पचन् , पचन्तौ, पचन्तः । अञ्चतेः - प्राङ्, प्राञ्चौ , प्राञ्चः । उगिदचामिति किम्? दृषत्, दृषदौ, दृषदः । सर्वनामस्थान इति किम्? भवतः पश्य । श्रेयसः पश्य। अञ्चतिग्रहणं नियमार्थम् - अञ्चतेरेव धातोरन्यस्य मा भूत् । उखास्रत् । पर्णध्वत् । अधातोरिति किम्? अधातुभूतपूर्वस्य यथा स्यात् । गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः - गोमान् । अत्र हि धातुत्वादञ्चतिग्रहणान्न स्यात् ।।
</7-1-70>
युजेरसमासे ।। <7-1-71> ।।
युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति । युङ्, युञ्जौ, युञ्जः । असमासे इति किम्? अश्वयुक्, अश्वयुजौ, अश्वयुजः । युजेः इतीकारनिर्देशाद् `युज समाधौ(धा.पा.1178) इत्यस्य ग्रहणं न भवति - युजमापन्ना ऋषयः ।।
</7-1-71>
नपुंसकस्य झलचः ।। <7-1-72> ।।
नपुंसकस्य झलन्तस्याजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति । उदश्विन्ति । शकृन्ति । यशांसि । पयांसि । अजन्तस्य - कुण्डानि । वनानि । त्रपूणि । जतूनि । नपुंसकस्येति किम्? अग्निचिद् ब्राह्मणः । झलच इति किम्? बहुपुरि । बहुधुरि । विमलदिवि । चत्वारि । अहानि । उगितो झलन्तस्य नपुंसकस्य परत्वादेनेनैव नुम्भवति । श्रेयांसि, भूयांसि, कुर्वन्ति, कृषन्ति ब्राह्मणकुलानि ।

- बहूर्जि प्रतिषेधो वक्तव्यः *(म.भा.3-265)। बहूर्जि ब्राह्मणकुलानि । अन्त्यात्पूर्वं नुमेक इच्छन्ति । बहूर्न्जि ब्राह्मणकुलानि ।।

</7-1-72>
इकोऽचि विभक्तौ ।। <7-1-73> ।।
इगन्तस्य नपुंसकस्याङ्गस्याजादौ नुमागमो भवति । त्रपुणी । जतुनी । तुम्बुरुणी । त्रपुणे । जतुने । तुम्बुरुणे । इक इति किम्? कुण्डे । पीठे । अचीति किम्? उत्तरार्थम् । यद्येवम् , तत्रैव कर्त्तव्यम् इह तु करणस्य एतत्प्रयोजनम् - हे त्रपो इत्यत्र नुम् मा भूदिति, न ङिसम्बुद्ध्योः(8-2-8/352) इति नलोपप्रतिषेधः स्यात् । ननु च न लुमताङ्गस्य(1-1-63/263) इति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति एतदेवाज्ग्रहणं ज्ञापकम् - प्रत्ययलक्षणप्रतिषेधोऽत्र न भवतीति । तथा च - सम्बुद्धिगुणः क्रियते । विभक्ताविति किम्? तौम्बुरवं चूर्णम् ।
इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति।
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किञ्चित्त्रपो इति ।।(म.भा.3-267)
</7-1-73>
तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ।। <7-1-74> ।।
तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कमिगन्तं नपुंसकं गालवस्याचार्यस्य मतेन पुंवद्भवति । यथा पुंसि ह्रस्वनुमौ न भवतः ,तद्वदत्रापि न भवत इत्यर्थः । ग्रामणीर्ब्राह्मणः, ग्रामणि ब्राह्मणकुलम् । ग्रामण्या ब्राह्मणकुलेन, ग्रामणिना ब्राह्मणकुलेन । ग्रामण्ये ब्राह्मणकुलाय, ग्रामणिने ब्राह्मणकुलाय । ग्रामण्यो ब्राह्मणकुलात्, ग्रामणिनो ब्राह्मणकुलात् । ग्रामण्यो ब्राह्मणकुलस्य, ग्रामणिनो ब्राह्मणकुलस्य । ग्रामण्योर्ब्राह्मणकुलयोः, ग्रामणिनोर्ब्राह्मणकुलयोः । ग्रामण्यां ब्राह्मणकुलानाम् - नुमचिर(8-2-24/280.वा.) इति पूर्वविप्रतिषेधेन नुट्, ग्रामणीनां ब्राह्मणकुलानाम् । ग्रामण्यां ब्राह्मणकुले, ग्रामणिनि ब्राह्मणकुले । शुचिर्ब्राह्मणः, शुचि ब्राह्मणकुलम् ।
शुचिना ब्राह्मणकुलेन । शुचये ब्राह्मणकुलाय, शुचिने ब्राह्मणकुलाय । शुचेर्ब्राह्मणकुलात्, शुचिनो ब्राह्मणकुलात् । शुचेर्ब्राह्मणकुलस्य, शुचिनो ब्राह्मणकुलस्य । शुच्योर्ब्राह्मणकुलयोः, शुचिनोर्ब्राह्मणकुलयोः। शुचौ ब्राह्मणकुले, शुचिनि ब्राह्मणकुले । तृतीयादिष्विति किम्? ग्रामणिनी ब्राह्मणकुले । शुचिनी ब्राह्मणकुले । भाषितपुंस्कमिति किम्? त्रपुणे, जतुने ।
इह कस्मान्न भवति - पीलुर्वृक्षः, पीलु फलम् - फीलुने फलायेति समानायामाकृतौ यद्भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः । इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य, फलाकृतिर्नपुंसके । तदेतदेवं कथं भवति - भाषितपुंस्कमिति भाषितः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम् । तस्य प्रतिपादकं यच्छब्दरूपं तदपि भाषितपुंस्कमिति । इक इत्येव - कीलालपा ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन । अचीत्येव - ग्रामणीभ्यां ब्राह्मणकुलाभ्याम् ।।
</7-1-74>
अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।। <7-1-75> ।।
अस्थि, दधि, सक्थि, अक्षि - इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतोऽनङित्ययमादेशो भवति , स चोदात्तो भवति । अस्थ्ना, अस्थ्ने । दध्ना, दध्ने । सक्थ्ना, सक्थ्ने । अक्ष्णा, अक्ष्णे । अस्थ्यादय आद्युदात्ताः, तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तवचनम् । तत्र भसंज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति । एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्याप्यङ्गस्य तदन्तग्रहणमिष्यते प्रियास्थ्ना ब्राह्मणेन, प्रियदध्ना । तृतीयादिष्विति किम्? अस्थिनी, दधिनी । अचीत्येव -अस्थिभ्याम्, दधिभ्याम् ।

</7-1-75>
छन्दस्यपि दृश्यते ।। <7-1-76> ।।
अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते । यत्र विहितस्ततोऽन्यत्रापि दृश्यते । अचि इत्युक्तम्, अनजादावपि दृश्यते - `इन्द्रो दधीचो अस्थभिः(ऋ.1-84-13) । `भद्रं पश्येमाक्षभिः(वा.सं.25-21) । तृतीयादिषु इत्युक्तम्, अतृतीयादिष्वपि दृश्यते - अस्थान्युत्कृत्य जुहोति । विभक्तौ इत्युक्तम्, अविभक्तावपि दृश्यते - अक्षण्वता लाङ्गलेन । `अस्थन्वन्तं यदनस्था बिभर्ति(ऋ.1-164-4) ।।
</7-1-76>
ई च द्विवचने ।। <7-1-77> ।।
द्विवचने परतश्छन्दसि विषयेऽस्थ्यादीनामीकारादोशो भवति, स चोदात्तः। अक्षी ते इन्द्र पिङ्गले कपेरिव । `अक्षीभ्यां ते नासिकाभ्याम्(ऋ.10-163-1) । अक्षी - इत्यत्र नुम्परत्वादीकारेण बाध्यते, तत्र कृते `सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव(व्या.प.40) इति पुनर्नुम्न क्रियते ।।
</7-1-77>
नाभ्यस्ताच्छतुः ।। <7-1-78> ।।
अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम्न भवति । ददत् , ददतौ, ददतः । दधत् , दधतौ, दधतः । जक्षत्, जक्षतौ, जक्षतः । जाग्रत्, जाग्रतौ , जाग्रतः । शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ।।
</7-1-78>
वा नपुंसकस्य ।। <7-1-79> ।।
अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति । ददति ददन्ति कुलानि । दधति दधन्ति कुलानि । जक्षति जक्षन्ति कुलानि । जाग्रति जाग्रन्ति कुलानि ।।
</7-1-79>
आच्छीनद्योर्नुम् ।। <7-1-80> ।।
अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः । तुदती कुले, तुदन्ती कुले । तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी। याती कुले, यान्ती कुले । याती ब्राह्मणी, यान्ती ब्राह्मणी । करिष्यती कुले, करिष्यन्ती कुले ।
करिष्यति ब्राह्मणी, करिष्यन्ती ब्राह्मणी । अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तम्, `उभयत आश्रये नान्तादिवत्(व्या.प.51) इत्यन्तादिवद्भावोऽपि नास्ति , भूतपूर्वगत्याश्रयणे वा - अदती, घ्नतीत्येवमादिष्वतिप्रसङ्ग इति अत्र समाधिं केचिदाहुः - शतुरवयवे शतृशब्दो वर्त्तते, अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति । अपरे पुनराहुः - आत् इत्येतेन शीनद्यावेव विशेष्येते, अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम्भवतीति । तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति तकारेणैव व्यवधानमाश्रयिष्यते । आदिति किम्? कुर्वती । सुन्वती । शीनद्योरिति किम्? तुदताम् । नुदताम् ।
</7-1-80>
शप्श्यनोर्नित्यम् ।। <7-1-81> ।।
शप् , श्यन् - इत्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले, पचन्ती ब्राह्मणी । दीव्यन्ती कुले, दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले, सीव्यन्ती ब्राह्मणी । नित्यग्रहणम् वा इत्यस्याधिकारस्य निवृत्त्यर्थम् । इहारम्भसामर्थ्यान्नित्यमुत्तरत्र विकल्प एवेत्याशङ्क्येत ।।
</7-1-81>
सावनडुहः ।। <7-1-82> ।।
सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् । अत्र केचित् आत् - इत्यधिकारादाममोः कृतयोर्नुमं कुर्वन्ति । तेन नुमाऽमामौ न बाध्येते, आमम्भ्यां च नुमिति । अपरे तु - सत्यपि सामान्यविशेषत्वे आममोर्नुमश्च समावेशमिच्छन्ति, न बाध्यबाधकभावम्, यथा - चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति ।।
</7-1-82>
दृक्स्ववस्वतवसां छन्दसि ।। <7-1-83> ।।
दृक्, स्ववस्, स्वतवस् - इत्येतेषां सौ परतो मुमागमो भवति छन्दसि विषये । ईदृङ् । तादृङ् । यादृङ् । सदृङ् । स्ववान् । स्वतवान्पायुरग्ने ।।
</7-1-83>
दिव औत् ।। <7-1-84> ।।
दिव - इत्येतस्य सौ परतः औत् इत्यमादेशो भवति । द्यौः । दिविति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः, स इह न गृह्यते - अक्षद्यूः ।।
</7-1-84>
पथिमथ्यृभुक्षामात् ।। <7-1-85> ।।
पथिन्, मथिन्, ऋभुक्षिन् - इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यनुनासिकेऽपि आकारोऽनुनासिको न भवति । भाव्यमानेन सर्वानां ग्रहणं न भवतीति शुद्धो ह्ययमुच्चार्यते ।।
</7-1-85>
इतोऽत्सर्वनामस्थाने ।। <7-1-86> ।।

पथ्यादीनामिकारस्य स्थाने अकारादेशो भवति सर्वनामस्थाने परतः । पन्थाः, पन्थानौ, पन्थानः, पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः, मन्थानम्, मन्थानौ । ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः, ऋभुक्षाणम्, ऋभुक्षाणौ । आत् इति वर्त्तमाने पुनरद्वचनं षपूर्वार्थम् । ऋभुक्षणमित्यत्र वा षपूर्वस्य निगमे(6-4-9/3541) इति दीर्घविकल्पः ।।
</7-1-86>
थो न्थः ।। <7-1-87> ।।
पथिमथोस्थकारस्य स्थाने न्थ - इत्ययमादेशो भवति सर्वनामस्थाने परतः । पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः ।
</7-1-87>
भस्य टेर्लोपः ।। <7-1-88> ।।
पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति । पथः, पथा, पथे । मथः, मथा, मथे । ऋभुक्षः, ऋभुक्षा , ऋभुक्षे । सर्वनामस्थाने इत्यनुवर्त्तमानमपि विरोधादिह न सम्बद्ध्यते ।।
</7-1-88>
पुंसोऽसुङ् ।। <7-1-89> ।।
पुंस इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति । पुमान् । पुमांसौ । पुमांसः । इह परमपुमानिति प्रागेव च प्रत्ययोत्पत्तेः समासान्तोदात्तत्वमुत्पन्नायां विभक्तौ असुञित्यनिष्टः स्वरः प्राप्नोति? तदर्थमसुङि उपदेशिवद्वचनं कर्त्तव्यम् । तेन परमपुमानित्यन्तोदात्तो भवति । पुमानित्ययं पुनराद्युदात्त एव ।।
</7-1-89>
गोतो णित् ।। <7-1-90> ।।
गोशब्दात्परं सर्वनामस्थानं णिद्भवति । णित्कार्यं तत्र भवतीत्यर्थः । गौः, गावौ, गावः । तपरकरणं किम्? चित्रगुः। शबलगुः । कथं हे चित्रगो, हे शबलगव इति `अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य(व्या.प.34) इति सम्बुद्धिजसोर्गुणे कृते णित्त्वं न भवति । अथ वा - गोतः इति सम्बन्धलक्षणा षष्ठी, गोतः सम्बन्धि यत्सर्वनामस्थानमिति । यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते । चित्रगुशब्दात्तु सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह । तपरकरणं तु निर्देशार्थमेव । केचित् `ओतो णित् इति पठन्ति । द्योशब्दादपि यत्सर्वनामस्थानं विद्यते तदर्थम् । द्यौः, द्यावौ, द्यावः । गोतः इत्येतदेव तपरकरणनिर्देशादोकारान्तोपलक्षणं द्रष्टव्यम् । वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम् ।।
</7-1-90>
णलुत्तमो वा ।। <7-1-91> ।।
उत्तमो णल्वा णिद् भवति । णित्कार्यं तत्र वा भवतीत्यर्थः । अहं चकार, अहं चकर । अहं पपाच, अहं पपच ।।
</7-1-91>
सख्युरसम्बुद्धौ ।। <7-1-92> ।।
असम्बुद्धौ यः सखिशब्दः तस्मात्परं सर्वनामस्थानं णिद्वद्भवति । सखायौ । सखायः । असम्बुद्धाविति किम्? हे सखे ।।
</7-1-92>
अनङ् सौ ।। <7-1-93> ।।
सखिशब्दस्य सौ परतोऽनङित्ययमादेशो भवति, स चेत्सुशब्दः सम्बुद्धिर्न भवति । सखा । असम्बुद्धाविति किम्? हे सखे ।।
</7-1-93>
ऋदुशनस्पुरुदंसोऽनेहसां च ।। <7-1-94> ।।
ऋकारान्तानामङ्गानाम्, उशनस्, पुरुदंसस्, अनेहस् - इत्येतेषां चासम्बुद्धौ सौ परतोऽनङादेशो भवति । कर्त्ता । हर्त्ता । माता । पिता । भ्राता । उशना । पुरुदंसा । अनेहा । असम्बुद्धावित्येव - हे कर्त्तः । हे मातः । हे पितः । हे पुरुदंसः । हे अनेहः । हे उशनः । उशनसः सम्बुद्धावपि पक्षेऽनङ् इष्यते - हे उशनन् । न ङिसम्बुद्ध्योः(8-2-8/352) इति नलोपप्रतिषेधोऽपि पक्ष इष्यते - हे उशन । तथा चोक्तम् -
सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ।। इति तपरकरणमसन्देहार्थम् ।।
</7-1-94>
तृज्वत्क्रोष्टुः ।। <7-1-95> ।।
क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थानेऽसम्बुद्धौ परतः तृज्वद्भवति । तृजन्तस्य यद्रूपं तदस्य
भवतीत्यर्थः । रूपातिदेशोऽयम् । प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद्रूपं तदतिदिश्यते । तच्च क्रोष्टृ इत्येतदन्तोदात्तम् । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ । सर्वनामस्थाने इत्येव - क्रोष्टून् । असम्बुद्धौ इत्येव - हे क्रोष्टो ।।
</7-1-95>
स्त्रियां च ।। <7-1-96> ।।
असर्वनामस्थानार्थमारम्भः । स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति । क्रोष्ट्री । क्रोष्ट्रीभ्याम्, क्रोष्ट्रीभिः । क्रोष्टुशब्दं केचिद् गौरादिषु पठन्ति, ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति । तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्टृभी रथैरिति स्त्रीशब्दस्य लुकि कृते न सिद्ध्यति, तत्र प्रतिविधेयम् । ये तु गौरादिषु न पठन्ति, तेषां स्त्रियामित्यर्थनिर्देशः - स्त्रियां वर्त्तमानः क्रोष्टुशब्दः तृज्वद्भवति । कृतेऽतिदेशे, ऋन्नेभ्यो ङीप्(4-1-5/306) इति

ङीप्प्रत्ययः । तत्र उदात्तयणो हल्पूर्वात्(6-1-174/3720) इत्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति ।।
</7-1-96>
विभाषा तृतीयादिष्वचि ।। <7-1-97> ।।
तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद्भवति । क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे, क्रोष्टवे । क्रोष्टुः, क्रोष्टोः । क्रोष्टरि, क्रोष्टौ । क्रोष्ट्रोः , क्रोष्ट्वोः । तृतीयादिष्विति किम्? क्रोष्टून् । अचीति किम्? क्रोष्टुभ्याम् ।
क्रोष्टुभिः ।

- तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्नुटौ भवतः *(म.भा.3-276)। प्रियक्रोष्टुनेऽरण्याय । हतक्रोष्टुने वृषलकुलाय । नुट् - क्रोष्टूनाम् ।।

</7-1-97>
चतुरनडुहोरामुदात्तः ।। <7-1-98> ।।
चतुर्, अनडुह् - इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः । चत्वारः । अनड्वान्, अनड्वाहौ, अनड्वाहः , अनवड्वाहम् । तदन्तविधिरत्रेष्यते । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । प्रियान्ड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः ।* अनडुहः स्त्रियां वेति वक्तव्यम् *(म.भा.3-276)। अनुडुही, अनड्वाही। गौरादिपाठात्सिद्धम् ।।
</7-1-98>
अम्सम्बुद्धौ ।। <7-1-99> ।।
सम्बुद्धौ परतश्चतुरनडुहोरमागमो भवति । पूर्वस्यायमपवादः । हे प्रियचत्वः । हे पियानड्वन् ।।
</7-1-99>
ॠत इद्धातोः ।। <7-1-100> ।।
ॠकारान्तस्य धातोरङ्स्य इकारादेशो भवति । किरति । गिरति । आस्तीर्णम् । विशीर्णम् । धातोरिति किम्? मातॄणाम् । पितॄणाम् । लाक्षणिकस्याप्यत्र ग्रहणमिष्यते । चिकीर्षतीत्यत्रापि यथा स्यादिति धातुग्रहणं क्रियते ।।
</7-1-100>
उपधायाश्च ।। <7-1-101> ।।
उपधायाश्च ॠकारस्य इकारादेशो भवति । कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति ।।
</7-1-101>
उदोष्ठ्यपूर्वस्य ।। <7-1-102> ।।
ओष्ठ्यः पूर्वो यस्माद् ॠकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । पूर्त्ताः पिण्डाः । पुपूर्षति । मुमूर्षति । सुस्वूर्षति । दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीति अत्रापि भवति -- वुवूर्षति ॠत्विजम् , प्रावुवूर्षति कम्बलम् । ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन `ॠ गतौ(धा.पा.1498) इत्यस्य सम्पूर्वस्य समीर्णमिति भवति ।

- इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन *(म.भा.3-27)। आस्तरणम्, आस्तारकः । निपरणम्, निपारकः ।

निगरणम्, निगारकः ।।
</7-1-102>
बहुलं छन्दसि ।। <7-1-103> ।।
छन्दसि विषये ॠकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति । ओष्ठ्यपूर्वस्य इत्युक्तम् , अनोष्ठ्यपूर्वस्यापि भवति - `मित्रावरुणौ ततुरिः(ऋ.1-145-3) । `दूरे ह्यध्वा जगुरिः(ऋ.10-108-1) । ओष्ठ्यपूर्वस्यापि न भवति - पप्रितमम्, वव्रितमम् । क्वचिद् भवति - `पपुरिः(ऋ.1-46-4) ।।
इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ
सप्तमाध्यायस्य प्रथमः पादः
</7-1-103>

# काशिका/सप्तमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pc0
< काशिका | सप्तमोऽध्यायः

अथ सप्तमाध्याये द्वितीयः पादः

सिचि वृद्धिः परस्मैपदेषु ।। <7-2-1> ।।
परस्मैपदपरे सिचि परत इगन्तस्याङ्गस्य वृद्धिर्भवति । अचैषीत् । अनैषीत् । अलावीत् । अपावीत्। अकार्षीत् । अहार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद्बाधते । न्यनुवीत् , न्यधुवीद् - इत्यत्र कुटादित्वान्ङित्त्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः क्रियते । परस्मैपदेष्विति किम्? अच्योष्ट । अप्लोष्ट ।।
</7-2-1>
अतो ल्रान्तस्य ।। <7-2-2> ।।
रेफलकारौ यावतोऽन्तौ - समीपौ, तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति । क्षर - अक्षारीत् । त्सर - अत्सारीत् । ज्वल - अज्वालीत् । ह्मल - अह्मालीत् । अतो हलादेर्लघोः(7-2-7/2284) इति विकल्पस्यायमपवादः । अत इति किम्? न्यखोरीत् । न्यमीलीत् । ल्रान्तस्येति किम्? मा भवानटीत् । मा भवानशीत् । अन्तग्रहणं किम् अवभ्रीत् । अश्वल्लीत् । अत्र यौ रेफलकाराङ्गस्यान्तौ न तावतः समीपौ ।।
</7-2-2>
वदव्रजहलन्तस्याचः ।। <7-2-3> ।।
वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदिव्रजिग्रहणम् । हलन्तानाम् - अपाक्षीत् । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् । अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिद्ध्यति, कथम्? वदिव्रज्योरित्यत्र प्रथमयोगे अतः इति स्थानी अनुवर्त्तते, ततो यत् अचः इति सूत्रम्, तत्राङ्गेनाज्विशेष्यते - अङ्गस्याचः सिचि परतो वृद्धिर्भवति । तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम् । इहापि स्यात् - अराङ्क्षीत्, असाङ्क्षीत्। अन्यथा हि येन नाव्यधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधाने स्यात्, अनेकेन हला न स्यात् । उदवोढाम्, उदवोढमित्यत्र वहेः सिचि ढत्वसलोपादीनां पूर्वत्रासिद्धम्(8-2-1/12) इत्यसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोप निमित्तमोत्वम् । तत्र कृते पुनर्वृद्धिर्न भवति, कृतत्वात् ।यत्र त्वकृता वृद्धिः, ओकारस्यैव तत्र भवति - सोढामित्रस्यापत्यं सौढामित्रिरिति ।।
</7-2-3>
नेटि ।। <7-2-4> ।।
इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् । हलन्तस्य इत्येव - अलावीत् । नन्वत्रैतदप्यन्तरङ्गत्वाद् गुणावादेशोः कृतयोर्हलन्तं भवति नैतदेवम्, अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्यात्सिचि वृद्धिर्बाधते इत्युक्तम् ।।
</7-2-4>
ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।। <7-2-5> ।।
हकारान्तानां मकारान्तानां यकारान्तानामङ्गानाम्, क्षण, श्वस, जागृ, णि, श्वि - इत्येतेषामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति। ग्रह-अग्रहीत्। स्यम-अस्यमीत्। व्यय-अव्ययीत्। टुवम् - अवमीत् । क्षण - अक्षणीत् । श्वस् - अश्वसीत् । जागृ - अजागरीत् । णि - औनयीत्, ऐलयीत् । श्वि - अश्वयीत् । एदिताम् - रगे , अरगीत् । कखे - अकखीत् । ह्म्यन्तक्षणश्वसामेदितां च अतो हलादेर्लघोः(7-2-7/2284) इति विकल्पे प्राप्ते प्रतिषेधः । जागृ - णि - श्वीनां तु सिचि वृद्धिः प्राप्ता, सा च नेटि(7-2-4/2268) इति न प्रतिषिध्यते । न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति सिचि वृद्धेरनवकाशत्वात् । यदि पूर्वं गुणः स्यात्, इह णिश्विग्रहणमनर्थकं स्यात्, गुणायादेशायोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात् । तस्मादिदमेव णिश्विग्रहणं ज्ञापकम् - न सिच्यन्तरङ्गमस्तीति । अथ जागृग्रहणं किमर्थम्? जाग्रोऽविचिण्णल्ङित्सु(7-3-85/2480) इति जागर्त्तेर्गुणो वृद्धेरपवादो विधीयते, स यथा अचो ञ्णिति(6-2-115/254) इति वृद्धिं बाधते, तथा सिचिवृद्धिमपि बाधिष्यते नैतदस्ति, कृते गुणे अतो ल्रान्तस्य(7-2-2/2330) इति या वृद्धिः प्राप्नोति सा प्रतिषिध्यते । अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते, यथा जागरयतीत्यत्र अत उपधायाः(7-1-113/2282) इत्यपि वृद्धिर्न भवति, तथा चिण्णलोः प्रतिषेधोऽर्थवान्भवति इति शक्यमिह जागृग्रहणमकर्त्तुम् तत् क्रियते विस्पष्टार्थम् ।।
</7-2-5>
ऊर्णोतेर्विभाषा ।। <7-2-6> ।।
ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । प्रौर्णवीत्, प्रौर्णावीत् । विभाषोर्णोः(1-2-3/2447) इत्यङित्वपक्षे वृद्धिविकल्पोऽयम् । ङित्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति - प्रौर्णुवीत् ।।
</7-2-6>
अतो हलादेर्लघोः ।। <7-2-7> ।।
हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । अकणीत् , अकाणीत् । अरणीत्, अराणीत् । अत इति

किम्? अदेवीत् । असेवीत् । न्यकुटीत्, न्यपुटीत् - इत्यत्र अतः इत्यस्मिन्नसति स्थानिनिर्देशार्थम् अचः इत्येतदनुवर्तयितव्यम् । तत्र अङ्लक्षणा वृद्धिरिग्लक्षणा न भवतीति क्ङिति च(1-1-5/2217) इति प्रतिषेधो न स्यात् । हलादेरिति किम्? मा भवानशीत् । मा भवानटीत् । लघोरिति किम्? अतक्षीत् । अक्षरीत् । अथेह कस्मान्न भवति - अचकासीदिति येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति हला व्यवधानमाश्रितम्, न पुनरचापि व्यवधानमिति वृद्धिर्न भवति । अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेन - इति कल्पने शक्यमकर्तुम् लघोः इति, अतक्षीदित्यत्रानेकेन व्यवधानमिति न भविष्यति तत्क्रियते विस्पष्टार्थम् । इटीत्येव - अपाक्षीत् ।।
</7-2-7>
नेड्वशि कृति ।। <7-2-8> ।।
वशादौ कृति प्रत्यये परत इडागमो न भवति । वरमनादौ प्रयोजनम् । ईशिता, ईशितुम् - ईश्वरः । दीपिता, दीपितुम् - दीप्रः । भसिता, भसितुम् - भस्म । याचिता, याचितुम् - याच्ञा । वरमनादौ इत्युदाहरणप्रदर्शनार्थम्, न परिगणनम् । तेन `त्रमन्ताण्ड्ङः(उ.119) इत्येवमादावपि हि प्रतिषेधो भवति । अथ तत्र उणादयो बहुलम्(3-3-1/3169) इति समाधीयते सम्भवोदाहरणप्रदर्शनमेतत् । कृतीति किम्? रुरुदिव । रुरुदिम ।।
</7-2-8>
तितुत्रतथसिसुसरकसेषु च ।। <7-2-9> ।।
ति, तु , त्र , त, थ , सि, सु, सर, क, स - इत्येतेषु कृत्सु इडागमो म भवति । ति इति - क्तिन्क्तिचोः सामान्यग्रहणम् । क्तिच् - तनिता, तनितुम् - तन्तिः । क्तिन् - दीपिता, दीपितुम् - दीप्तिः । तु - `सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्(उ.72), सचिता, सचितुम् - सक्तुः । त्र - दाम्नीशसयुयुज(3-3-182/3162) इति ष्ट्रन् , पतिता, पतितुम् - पत्त्रम् - वाहनम् । उणादिष्वपि `सर्वधातुभ्यः ष्ट्रन्(उ.608), तनिता, तनितुम् - तन्त्रम्। त - `हसिमृगृण्वमिदमितमिलूपूधुर्विभ्यस्तन्(उ.373) , हसिता, हसितुम् - हस्तः । लविता, लवितुम् - लोतः । पविता, पवितुम् - पोतः । धूर्विता, धूर्वितुम् - धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य हसितमित्येव हि तत्र भवति । थ - `हनिकुषिनीरमिकाशिभ्यः क्थन्(उ.167) , कोषिता, कोषितुम्, कुष्ठम् । काशिता, काशितुम् - काष्ठम् । सि - `प्लुषिशुषिकुषिभ्यः क्सिः(उ.443), कोषिता, कोषितुम् - कुक्षिः । सुक् च इषेः , एषिता, एषितुम् - इक्षुः । सर - अशेः क्सरन्, अशिता, अशितुम् - अक्षरम् । क - `इण्भीकापाशल्यतिमर्चिभ्यः कन्(उ.330) शलिता, शलितुम् - शल्कः । स - `वृतृवदिहनिक्रमिकषियुमुचिभ्यः सः(उ.349), वदिता, वदितुम् - वत्सः ।

- तितुत्रतथेष्वग्रहादीनामिति वक्तव्यम् *(म.भा.3-283)। ग्रहादयो ग्रहप्रकाराः, येषामिट् क्तिनि दृश्यते । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः । कृति इत्येव - रोदिति । स्वपिति ।।

</7-2-9>
एकाच उपदेशेऽनुदात्तात् ।। <7-2-10> ।।
उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति । प्रकृत्याश्रयोऽयं प्रतिषेधः । के पुनरुपदेशेऽनुदात्ताः ये तथा गणे पठ्यन्ते, त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते -

`अनिट्स्वरान्तो भवतीति दृश्यताम्, इमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ।।
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चिताः ततो हलन्तानपि सन्निबोधतः ।।

द्वये त एव धातवः - स्वरान्ताः , व्यञ्जनान्ताश्च । तत्र सर्वे स्वरान्ता एकाचोऽनुदात्ताः, अदन्तादीन्वर्जयित्वा । दाता । नेता । चेता । स्तोता । कर्त्ता । हर्त्ता । अजन्तादय उदात्ताः - अवधिष्ट । ॠदन्तम् - तरिता, तरीता । ॠतां च वृङ्वृञौ - निर्वरिता, निर्वरीता। प्रवरिता, प्रवरीता । श्विडीङिवर्णेष्वथ शीङ्श्रियावपि -- श्वयिता, उड्डयिता, शयिता, श्रयिता। गणस्थमूदन्तम् - लविता । पविता । उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः - रीविता । प्रस्नविता । क्षविता । प्रोर्णविता । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् - इत्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते । यविता । नविता । क्ष्णविता । इति स्वरान्ता निपुणं समुच्चिताः, ततो हलन्तानपि सन्निबोधत ।

शकिस्तु कान्तेष्वनिडेक इष्यते, धसिश्च सान्तेषु वसिः प्रसारणी ।।

घसिः प्रकृत्यन्तरमस्ति -घस्ता । वसिः प्रसारणी -- वस्ता । प्रसारणीति किम्? वसिता वस्त्राणाम् । `वस निवासे(धा.पा.1006) इत्यस्य यजादित्वात्सम्प्रसारणं विहितम्, न तु `वस आच्छादने(धा.पा.1024) इत्यस्य ।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ।

आरब्धा । यब्धा । लब्धा ।
यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम् ।।
यन्ता । रन्ता । मन्ता । श्यनीति किम्? मनुतेर्मनिता - इत्येव भवति । नन्ता । हन्ता । गन्ता ।
दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ।।
देग्धा । दोग्धा । मेढा । आरोढा । वोढा । नद्धा । दग्धा । लेढा । मुक्तसंशया इति किम्? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते -- सहिमुहिरिहिलुहयः । तत्र सहेर्विकल्पस्तकारादौ, मुहिरपि रधादौ पठ्यते, तेन तौ ससंशयौ सविकल्पौ । इतरौ तु धातुषु न पठ्येते । कैश्चिदभ्युपगम्येते इति स्वरूपेणैव

ससंशयौ ।
दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशं च शान्तानिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ।।
देष्टा, द्रष्टा, दंष्टा, आम्रष्टा, आमर्ष्टा, स्प्रष्टा, स्पर्ष्टा । ऋदुपधानामुदात्तोपदेशानां मृजिदृशी वर्जयित्वा अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्(6-1-59/2402) इति रमागमविकल्पः । रेष्टा रोष्टा, क्रोष्टा, प्रवेष्टा, लेष्टा ।
रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ।। रोद्धा । राद्धा । योद्धा । बन्द्धा । साद्धा । क्रोद्धा । क्षोद्धा । शोद्धा । बोद्धा । व्यद्धा । सेद्धा । बुध्यतिसिध्यत्योः श्यना निर्द्देशात् न्याय्यविकरणयोर्बुद्धिसिध्योरिड् भवत्येव - बोधिता, सेधिता। निष्ठायामपि प्रतिषेधाभावात् - बुधितम् , सिधितमित्येव भवति ।
शिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ।।
शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा। द्वेष्टा । क्रष्टा । कर्ष्टा । कृषेस्तौदादिकस्य , भौवादिकस्य च कृषिकर्षती - इति निर्द्देशः ।
तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम्।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ।।
तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव । इट् त्वनयो रधादिपाठाद्विकल्पेन भवति - त्रप्ता, तर्प्ता, तर्पिता, द्रप्ता, दर्प्ता, दर्पिता। तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव - त्रप्ता, तर्प्ता । शप्ता । छोप्ता। क्षेप्ता ।
अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्वद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान्दश पञ्च चानिटः ।।
अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । क्षेत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यतीति श्यना निर्द्देशः - `ञिष्विदा(धा.पा.979) इत्यस्य ग्रहणं मा भूत् । उदात्त एवायम् । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यति विन्त इत्यपि - श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः । वेतिविन्ती उदात्तावेव - नेदिता विद्यानाम् , वेदिता धनस्य ।।
पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ।।
पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । प्रष्टा । निर्णेक्ता । सेक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा । मृजिरयमूदित्पठ्यते, ततोऽस्य विकल्पेनेटा भवतितव्यम् - मार्ष्टा , मर्जिता इति अमागमोऽप्यस्य न दृश्यते? तदिह पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विचिं पठन्ति - सृजिं विजिं विद्ध्यनिट्स्वरानिति । निजादिषु यो विजिरसावनिडिष्यते । तथा च ग्रन्थान्तरे - निजिविजिष्वञ्जिवर्जम् इत्युक्तम् । एकाच इति किम्? अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते । उपदेशग्रहणं किम्? इह च यथा स्यात् - लविष्यति, पचिष्यति । इह च मा भूत् - कर्ता कटान्, कर्तुमिति ।।
</7-2-10>
श्र्युकः किति ।। <7-2-11>।।
श्रि इत्येतस्य, उगन्तानां च किति प्रत्यये परत इडागमो न भवति । श्रित्वा, श्रितः, श्रितवान् । उगन्तानां च - युत्वा, युतः, युतवान् । लूत्वा, लूनः, लूनवान् । वृत्वा, वृतः, वृतवान् । तीर्त्वा, तीर्णः, तीर्णवान् । श्र्युक इति किम्? विदितः । कितीति किम्? श्रयिता, श्रयितुम्, श्रयितव्यम् । केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति - भूष्णुरित्येवं यथा स्यात्, सौत्रत्वाच्च निर्देशस्य श्र्युकः किति इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति । ग्लाजिस्थश्च क्स्नुः(3-2-139/3119) इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः
सिद्धत्वान्न किञ्चिदेतत् । उपदेशे इत्येव - तीर्ण इत्यत्रापि यथा स्यात् । इत्वे हि कृते रपरत्वे च न स्यात् । मा भूदेवम्, इट् सनि वा(7-2-41/2625)इति विकल्पे विहिते यस्य विभाषा(7-2-15/3025) इति निष्ठायां प्रतिषेधो भविष्यति? कस्य पुनः सा विभाषा? ऋतः । यद्येवम्, इत्वे हि कृते नायमृकारान्तो भवतिष्यति स्थानिवद्भावाद्भविष्यति । अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम्? तस्मादनुवर्त्तयितव्यमुपदेश इति । तथा च सति - जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थम् एकाचः इत्यनुवर्त्तयिव्यम् । ऊर्णोतेस्तु -
वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ।।
प्रोर्णुतः । प्रोर्णुतवान् ।।
</7-2-11>
सनि ग्रहगुहोश्च ।। <7-2-12> ।।
ग्रह, गुह - इत्येतयोरुगन्तानां च सनि प्रत्यये परत इडागमो न भवति । जिघृक्षिति । जुघुक्षति। उगन्तानां च रुरूषति । लुलूषति । सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्(7-2-49/2618) इति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । ग्रहेर्नित्यं प्राप्तः । गुहेरुदित्वाद् विकल्पः ।।

</7-2-12>
कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।। <7-2-13> ।।
कृ, सृ, भृ, वृ, स्तु, द्रु, स्रु, श्रु - इत्येतेषां लिटि प्रत्यय इडागमो न भवति । कृ - चकृव, चकृम । सृ - ससृव, ससृम । भृ - बभृव, बभृम । वृञ् - ववृव, ववृम । वृङ् - ववृवहे, ववृमहे । स्तु - तुष्टुव, तुष्टुम । द्रु - दुद्रुव, दुद्रुम । स्रु - सुस्रुव, सुस्रुम । श्रु - शुश्रुव, शुश्रुम । `सिद्धे सत्यारम्भो नियमार्थः(कात.प.62) - कादय एव लिट्यनिटः , ततोऽन्ये सेट इति । बिभिदिव, बिभिदिम । लुलुविव, लुलुविम । अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः, तदुभयस्याप्ययं नियमः । वृञो हि थलि ववर्थेति निपातनाद् व्यवस्था । स्तुद्रुस्रुश्रुवां तु ऋतो भारद्वाजस्य(7-2-63/2296) इत्यस्मादपि नियमाद् य इट् प्राप्नोति सोऽपि नेष्यते - तुष्टोथ, दुद्रोथ, सुस्रोथ, शुश्रोथ ।

- कृञोऽसुट्कस्येति वक्तव्यम् *(म.भा.3-286)। ससुट्कस्य इडागमो यथा स्यात् । सञ्चस्करिव । सञ्चस्करिम । ऋतो भारद्वाजस्य(7-2-63/2296) इत्येतदप्यसुट्कस्यैवेष्यते - सञ्चस्करिथ ।।

</7-2-13>
श्वीदितो निष्ठायाम् ।। <7-2-14> ।।
श्वयतेरीदितश्च निष्ठायामिडागमो न भवति । शूनः, शूनवान्। ईदितः - ओलजी , लग्नः, लग्नवान्। ओविची - उद्विग्नाः, उद्विग्नवान् । ओदितश्च(8-2-45/3019) इति निष्ठातकारस्य नकारः । दीपी - दीप्तः , दीप्तवान् । डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य । स हि नत्वार्थः, नत्वं च निष्ठातोऽनन्तरस्य विधीयते । उड्डीनः । उड्डीनवान् । निष्ठायामित्यधिकारः आर्धधातुकस्येड्वलादेः(7-2-35/2184) इति यावत् ।।
</7-2-14>
यस्य विभाषा ।। <7-2-15> ।।
यस्य धातोर्विभाषा क्वचिदिडुक्तस्तस्य निष्ठायां परत इडागमो न भवति । वक्ष्यति --स्वरतिसूतिसूयतिधूञूदितो वा(7-2-44/2279) विधूतः, विधूतवान् । गुहू - गूढः, गूढवान् । उदितो वा(7-2-56/3328) - वृद्धः, वृद्धवान् । तनिपतिदरिद्राणामुपसंख्यानम् इति पतेर्विभाषितेट्कस्यापि द्वितीयाश्रितातीतपतित(2-1-24/686) इति निपातनादिडागमः ।।
</7-2-15>
आदितश्च ।। <7-2-16> ।।
आदितश्च धातोर्निष्ठायामिडागमो न भवति । `ञिमिदा(धा.पा.1244) -- मिन्नः, मिन्नवान् । `ञिक्ष्विदा(धा.पा.1245) - क्ष्विण्णः, क्ष्विण्णवान् । `ञिष्विदा(धा.पा.744) - स्विन्नः, स्विन्नवान् । चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः । वान्तः ।
योगविभागकरणं किमर्थम्, आदितश्च विभाषा भावादिकर्मणोः इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्याम् यस्य विभाषा(7-2-15/3025) इति प्रतिषेधो भविष्यति? ज्ञापनार्थमेतत् । ज्ञापयति - यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः इति । तेन विभाषा गमहनविदविशाम्(7-2-68/3099) इत्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य प्रतिषेधो न भवति । विदितः । विदितवान् ।।
</7-2-16>
विभाषा भावादिकर्मणोः ।। <7-2-17> ।।
भावे आदिकर्णणि च आदितो धातोर्विभाषा निष्ठायमिडागमो न भवति । मिन्नमनेन, मेदितमनेन । प्रमिन्नः, प्रमेदितः । सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन । शकितो घटः कर्तुम् । शक्तो घटः कर्तुम् ।
भावे न भवत्येव - शक्तमनेन । अस्यतेर्भावे - असितमनेन । आदिकर्मणि च न भवत्येव- अस्यः काण्डः ।।
</7-2-17>

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु ।। <7-2-18>।।
क्षुब्ध, स्वान्त, धवान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ - इत्येते निपात्यन्ते यथासंख्यं मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास , भृश - इत्येतेष्वर्थेषु । क्षुब्ध इति भवति मन्थाभिधानं चेत् । क्षुब्धो मन्थः ।
क्षुभितमन्यत् । क्षुभितं मन्थेन, क्षुब्धा गिरिनदी - इत्येवमाद्युपमानाद्भविष्यति । स्वान्तमिति मनोऽभिधानं चेत् । स्वनितमन्यत्, स्वनितो मृदङ्गः । स्वनितं मनसा । ध्वान्तमिति भवति तलोऽभिधानं चेत् । ध्वनितमन्यत् । ध्वनितो मृदङ्गः । ध्वनितं तमसा । लग्वमिति भवति सक्तं चेत् । लगितमन्यत् । म्लिष्टमिति भवति अविस्पष्टं चेत् । म्लेच्छितमन्यत् । इत्वमप्यकारस्य निपातनादेव । विरिब्धमिति स्वरश्चेत् । विरेभितमन्यत् । `रेभृ शब्दे(धा.पा.385) इत्यस्यैतन्निपातनम् । अन्ये तु विरिभितमन्यदिति पठन्ति । रभिं सौत्रं धातुं पठन्ति, ते विरिभितमिति प्रत्युदाहरन्ति । फाण्टमिति भवत्यनायासश्चेत् । फाणितमन्यत् । यदशृतम्पिष्टं च कषायमुदकसम्पर्कमात्राद् विभक्तरसमीषदुष्णं तत्फाण्टम् । तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते । बाढमिति भवति भृशं चेत् । बाहितमन्यत् । `बाहृ प्रयत्ने(धा.पा.645) इत्यस्य धातोरेतन्निपातनम् । अतिशयश्च भृशमिहोच्यते ।।
</7-2-18>
धृषिशसी वैयात्ये ।। <7-2-19> ।।
वियातस्य भवो वैयात्यम् - प्रागल्भ्यम्, अविनीतता । तत्र धृष, शस - इत्येतयोर्निष्ठायामिडागमो न भवति । धृष्टोऽयम् । विशस्तोऽयम् । धृषेः आदितश्च(7-2-16/3036) इति प्रतिषेधः सिद्ध एव, शसेरपि उदितो वा(7-2-56/3328), यस्य विभाषा(7-2-15/3025) इति नियमार्थं वचनम् -

धृषिशस्योर्वैयात्ये एवेड् न भवति । भावादिकर्णणोरपि वैयात्ये धृषिर्नास्ति । धृष्टः । विशस्तः । वैयात्य इति किम्? धर्षितः । विशसितः ।।
</7-2-19>
दृढः स्थूलबलयोः ।। <7-2-20> ।।
दृढः इति निपात्यते, स्थूले बलवति चार्थे । दृढः स्थूलः । दृढो बलवान् । किमत्र निपात्यते? दृंहेः क्तप्रत्ये इडभावः, हकारनकारयोर्लोपः, परस्य ढत्वम् । अथ दृहिः प्रकृत्यन्तरमस्ति ? तत्राप्येतदेव सर्वं नलोपवर्जम्, नकारस्याभावात् । हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा,द्रढीयान्, द्रढीयतीत्यत्र र ॠतो हलादेर्लघोः(6-2-161/1785) इति रेफो न स्यात्, इह च परिद्रढय्य गत इति ल्यपि लघुपूर्वात्(6-4-56/3436) इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं पारिदृढी कन्येति गुरुपोत्तमलक्षणः ष्यङ्(4-9-78/1198) च प्रसज्येत । स्थूलबलयोरिति किम्? दृंहितम्, दृहितम् ।।
</7-2-20>
प्रभौ परिवृढः ।। <7-2-21> ।।
परिवृढः इति निपात्यते प्रभुश्चेद्भवति । परिवृढः कुटुम्बी । पूर्वेण तुल्यमेतत् । वृंहेर्निपातनम् । वृहिश्च यदि प्रकृत्यन्तरमस्ति, तस्यापि तदेव सर्वम् । हलोपनिपातनस्य च तदेव प्रयोजनम् । परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्येति । परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते । संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते नान्यस्मादिति । तथा सति परिव्रढयतीति तिङ्ङतिङः(8-2-28/3935) इति निघातो भवति । परिव्रढय्येत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति । प्रभाविति किम्? परिवृंहितम्, परिवृहितम् ।।
</7-2-21>
कृच्छ्रगहनयोः कषः ।। <7-2-22> ।।
कृच्छ्र, गहन - इत्येतयोरर्थयोः कषेर्धातोर्निष्ठायामिडागमो न भवति । कष्टोऽग्निः । कष्टं व्याकरणम् । ततोऽपि
कष्टतराणि सामानि । कृच्छ्रम् - दुखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते । गहने - कष्टानि वनानि । कष्टाः पर्वताः । कृच्छ्रगहनयोरिति किम्? कषितं सुवर्णम् ।।
</7-2-22>
घुषिरविशब्दने ।। <7-2-23> ।।
घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति । घुष्टा रज्जुः । घुष्टौ पादौ । अविशब्दन इति किम्? अवघुषितं वाक्यमाह । विशब्दनम् - प्रतिज्ञानम् । `घुषिरशब्दार्थे(धा.पा.653) इति भूवादिषु पठ्यते, `घुषिर् विशब्दने(धा.पा.17-27) इति चुरादिषु, तयोरिह सामान्येन ग्रहणम् । विशब्दनप्रतिषेधश्च ज्ञापकः - चुरादिणिज्विशब्दनार्थस्यानित्यः इति । तेनायमपि प्रयोग उपपन्नो भवति - महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः इति । स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः ।।
</7-2-23>
अर्देः संनिविभ्यः ।। <7-2-24> ।।
सम्, नि, वि - इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति । समर्णः । न्यर्णः । व्यर्णः । अर्देरिति किम्? समेधितः । संनिविभ्य इति किम्? अर्दितः ।।
</7-2-24>
अभेश्चाविदूर्ये ।। <7-2-25> ।।
अभिशब्दादुत्तरस्यार्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति । अभ्यर्णा सेना । अभ्यर्णा शरत् । आविदूर्य इति किम्? अभ्यर्दितो वृषलः । शीतेन पीडित इत्यर्थः । विदूरम् - विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भाव आविदूर्यम् । एतस्मादेव निपातनात् न नञ्पूर्वात्तत्पुरुषात्(5-1-121/1783) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति ।।
</7-2-25>
णेरध्ययने वृत्तम् ।। <7-2-26> ।।
ण्यन्तस्य वृतेर्निष्ठायामध्ययनार्थे वृत्तमितीडभावो णिलुक्च निपात्यते । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन । अध्ययन इति किम्? वर्त्तितमन्यत् । वृतिरयमकर्मकः, स ण्यर्थे वर्त्तमानः सकर्मको भवति । तेन निर्वृत्तम् इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते । तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकम् तत्क्रियते - यदापि णिचैव ण्यर्थोऽभिधीयते तदा वर्त्तितमित्यध्ययने मा भूदिति केचित् । अपरे तु- वर्त्तितो गुणो देवदेत्तेन इत्यपीच्छन्ति ।।
</7-2-26>
वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।। <7-2-27> ।।
णेः इत्यनुवर्त्तते । दम्, शम्, पूरी, दस्, स्पश्, छद्, ज्ञप् - इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते । दान्तः, दमितः। शान्तः, शमितः । पूर्णः, पूरितः । दस्तः , दासितः । स्पष्टः, स्पाशितः । छन्नः, छादितः । ज्ञप्तः, ज्ञपितः । इट्प्रतिषेधो णिलुक्च निपात्यते । ज्ञपेस्तु भरज्ञपिसनाम् इति विकल्पविधानाद् यस्य विभाषा(7-2-15/3025) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ।।
</7-2-27>
रुष्यमत्वरसंघुषास्वनाम् ।। <7-2-28> ।।
वा इति वर्तते । रुषि, अम, त्वर, सङ्घुष, आस्वन - इत्येतेषां निष्ठायां वा इडागमो न भवति । रुष्टः, रुषितः । तीषसहलुभरुषरिषः(4-2-102/1327) इति विकल्पविधानाद् यस्य विभाषा(7-2-15/3025) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् । अम - अभ्यान्तः , अभ्यमितः । त्वर

- तूर्णः, त्वरितः । आदितश्च(7-2-16/3035) इति प्रतिषधे प्राप्ते वचनम् । सङ्घुष - सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ । सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह । सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ । सम्पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति । आस्वन् - आस्वान्तो देवदत्तः,आस्वनितो देवदत्तः । आस्वान्तं मनः, अस्वनितं
मनः । अङ्पूर्वस्य स्वनेर्मनोभिधानेऽपि परत्वादयं विकल्पः क्षुब्धस्वान्त(7-2-18/3058) इति निपातनं बाधते ।।
</7-2-28>
हृषेर्लोमसु ।। <7-2-29> ।।
लोमसु वर्त्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति । हृष्टानि लोमानि, हृषितानि लोमानि । हृष्टं लोमभिः, हृषितं लोमभिः । हृष्टाः केशाः, हृषिताः केशाः । हृष्टं केशैः, हृषितं केशैः । `हृषु अलीके(धा.पा.709) इत्युदित्वान्निष्ठायामनिट् , `हृष तुष्टौ(धा.पा.1230) इत्ययं सेट्, तयोरुभयोरिह ग्रहणमित्युभयत्रविभाषेयम् । लोमानि मूर्धजानि, अङ्गजानि च सामान्येन गृह्यन्ते यथा - लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यम् इति । तद्विषये च हर्षे वर्तमानो लोमसु वर्तत इत्युच्यते । लोमस्विति किम्? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ।

- विस्मितप्रतिघातयोश्चेति वक्तव्य् *(म.भा.3-290) । हृष्टो देवदत्तः, हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः , हृष्टो देवदत्तः, हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः, हृषिता दन्ताः । प्रतिहता इत्यर्थः ।।

</7-2-29>
अपचितश्च ।। <7-2-30> ।।
अपचितः इति वा निपात्यते । अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते । अपचितोऽनेन गुरुः । अपचायितोऽनेन गुरुः ।

- क्तिनि नित्यमिति वक्तव्यम् *(म.भा.3-290)। क्तिनि नित्यं चिभावो निपात्यते । अपचितिः ।।

</7-2-30>
हु ह्वरेश्छन्दसि ।। <7-2-31> ।।
ह्वरतेर्धातोर्निष्ठायां छन्दसि हु इत्ययमादेशो भवति । हुतस्य चाहुतस्य च । `अहुतमसि हविर्धानम्(वा.सं.1-7) । छन्दसीति किम्? ह्वृतम् ।
</7-2-31>
अपरिह्वृताश्च । <7-2-32> ।।
अपरिह्वृता इति निपात्यते छन्दसि विषये । हु इत्येतस्यादेशस्याभावो निपात्यते । `अपरिह्वृताः सनुयाम वाजम्(ऋ.1-100-19) ।।
</7-2-32>
सोमे ह्वरितः ।। <7-2-33> ।।
ह्वरितः इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति । मा नः सोमो ह्वरितः, विह्वरितस्त्वम् ।।
</7-2-33>
ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीतिच ।।<7-2-34> ।।
ग्रसित स्कभित, स्तभित, उत्तभित, चत्त, विकस्त, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्रीः, उज्ज्वलिति, क्षिरिति, वमिति, अमिति - इत्येतानि छन्दसि निपात्यन्ते । तत्र ग्रसितस्कभितस्तभितोत्तभितेति - ग्रसु, स्कन्भु, स्तन्भु इत्येतेषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते । `ग्रसितं वा एतत्सोमस्य(मै.3-7-4) । ग्रस्तमिति भाषायाम् । स्कभित - `विष्कभिते अजरे(ऋ.6-70-1) । विष्कब्ध इति भाषायाम् । स्तभित - `येन स्वस्तभितम्(ऋ.10-121-5) । स्तब्धमिति भाषायाम् । उत्तभित - `सत्येनोत्तभिता भूमिः(ऋ.10-85-1) । उत्तब्धेति भाषायाम् । उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति । चत्त विकस्तेति - चतेः, कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते । चत्ता वर्षेण वियुत् । चतितेति भाषायाम् । विकस्त - `उत्तानाया हृदयं यद् विकस्तम्(मै.2-7-4) । विकसितमिति भाषायाम् ।
निपातनं बहुत्वापेक्षम् , विकस्ताः इति बहुवचनं कृतम् । अपरे, तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः । विशस्तृ, शंस्तृ, शास्त्रिति - शसेर्विपूर्वस्य, शंसेः, शसेश्च तृचि इडभावो निपात्यते । विशस्तृ - `एकस्त्वष्टुरश्वस्याविशस्ता(ऋ.1-162-19) । विशसितेति भाषायाम् । शंस्तृ - `उत शंस्ता सुविप्रः(ऋ.1-162-5) । शंसितेति भाषायाम् । शास्तृ - `प्रशास्ता(ऋ.1-94-6) । प्रशासितमिति भाषायाम् । तरुतृतरूतृवरुतृवरूतृवरूत्रीरिति - तरतेः, वृङ्वृञोश्च तृचि उट्, ऊट् - इत्येतावागमौ निपात्येते । `तरुतारं रथानाम्(ऋ.10-178-1), तरूतारम् । तरितारम्, तरीतारमिति भाषायाम् । वरुतारं रथानाम्, वरूतारं रथानाम् । वरितारम्, वरीतारमिति भाषायाम्। `वरुत्री त्वा देवीर्विश्वदेव्यावती(मै.2-7-6) । जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम् । अतन्त्रं चैतत्, इदमपि हि भवति - अहोरात्राणि वै वरूत्रय इति । छान्दसिकमत्र ह्रस्वत्वम् । प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्, वरूतृशब्दो ही निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः । उज्ज्वलिति, क्षरिति, क्षमिति, वमिति, अमितीति च - ज्वलतेरुत्पुर्वस्य, क्षर, क्षम, वम, अम - इत्येतेषां च तिपि शप इकारादेशो निपात्यते, शपो लुग्वा, इडागमः । अग्निरुज्ज्वलिति । उज्ज्वलतीति भाषायाम् । क्षमिति - स्तोमं क्षमिति । क्षमतीति भाषायाम् । वमिति - यः सोमं वमिति । वमतीति भाषायाम्। अमिति - अभ्यमिति वरुणः । अभ्यमतीति भाषायाम् । इतिकरणं प्रदर्शनार्थम्, तेन क्वचिदीकारो भवति - `रविमभ्यमीति वरुणः(वा.22-5) इत्यपि हि वेदे पठ्यते ।।
</7-2-34>
आर्धधातुकस्येड्वलादेः ।। 7 - <<2-0-35>> ।।

छन्दसि इति निवृत्तम् । आर्धधातुकस्य वलादेरिडागमो भवति । लविता, लवितुम्, लवितव्यम् । पविता, पवितुम्, पवितव्यम् । आर्धधातुकस्येति किम्? आस्ते । शेते । वस्ते । रुदादिभ्यः सार्वधातुके(7-2-76) इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवतीति आर्धधातुकग्रहणं क्रियते । वलादेरिति किम्? लव्यम्, पव्यम् । लवनीयम्, पवनीयम् । इडिति वर्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम् ।।
</2-0-35>
स्नुक्रमोरनात्मनेपदनिमित्ते ।। <7-2-36> ।।
नियमार्थमिदम् । स्नुक्रमोरार्धधातुकस्य वलादेरिडागमो भवति, न चेत्स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः । क्व च तावात्मनेपदस्य निमित्तम्? यत्रात्मनेपदं तदाश्रयं भवति - भावकर्म - कर्मकर्तृ - कर्मव्यतिहाराः, क्रमेर्वृत्यादयश्च । तेनायं सत्यात्मनेपदे प्रतिषेधो भवति, नासतीति । प्रतिषेधफलं चेदं सूत्रम् । स्नुक्रमोरुदित्वादिट् सिद्ध एव । प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम् । प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यम् ।
अनात्मनेपदनिमित्ते इति किम्? प्रस्नोषीष्ट, प्रक्रंसीष्ट । प्रस्नोष्यते, प्रक्रंस्यते । प्रसुस्नूषिष्यते , प्रचिक्रंसिष्यते । सर्वत्रैवात्र स्नौतिः, क्रमिश्चात्मनेपदस्य निमित्तम् । सनन्तादपि हि पूर्ववत्सनः(1-3-62/1764) इत्यात्मनेपदं विधीयते । निमित्तग्रहणं किम्? सीयुडादेस्तत्परपरस्य च प्रतिषेधार्थम् । इह तु प्रस्नवितेवाचरतीति प्रस्नवित्रीयत इति क्यङन्तमात्मनेपदस्य निमित्तम् , न स्नौतिः ।

- क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः *(म.भा.3-292)। प्रक्रन्ता । उपक्रन्ता । कर्तरीति किम्? प्रक्रमितव्यम् । उपक्रमितव्यम् । आत्मनेपदविषयादिति किम्? निष्कमिता । स्नौतेः सनि किति च प्रत्यये सनि ग्रहगुहोश्च(7-2-12/2610) श्र्युकः किति(7-2-11/2381), इत्येव प्रतिषेधो भवति - प्रसुस्नूषति । प्रस्नुतः । प्रस्नुतवान् ।।

</7-2-36>
ग्रहोऽलिटि दीर्घः ।। <7-2-37> ।।
ग्रह उत्तरस्य इटः अलिटि दीर्घो भवति । ग्रहीता, ग्रहीतुम्, ग्रहीतव्यम् । अलिटीति किम्? जगृहिव । जगृहिम । प्रकृतस्येटो दीर्घत्वम्, इदं चिण्वदिटो न भवति -- ग्राहिता, ग्राहिष्यते ।।
</7-2-37>
वृतो वा ।। <7-2-38> ।।
वृ इति वृङ्वृञोः सामान्येन ग्रहणम् । तस्मादुत्तरस्य, ॠकारान्तेभ्यश्चेटो वा दीर्घो भवति । वरिता, वरीता। प्रावरिता, प्रावरीता। ॠकारान्तेभ्यः - तरिता, तरीता । आस्तरिता, आस्तरीता । वृत इति किम्? करिष्यति । हरिष्यति । अलिटीत्येव - ववरिथ । तेरिथ।।
</7-2-38>
न लिङि ।। <7-2-39> ।।
वृत उत्तरस्य इटो लिङि दीर्घो न भवति । विवरिषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । विस्तरिषीष्ट ।।
</7-2-39>
सिचि च परस्मैपदेषु ।। <7-2-40> ।।
परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घो न भवति । प्रवारिष्टाम्, प्रवारिषुः । अतारिष्टाम्, अतारिषुः । आस्तारिष्टाम् , आस्तारिषुः । परस्मैपदेष्विति किम्? प्रावरिष्ट, प्रवरीष्ट ।
</7-2-40>
इट् सानि वा ।। <7-2-41> ।।
वृतः सनो वा इडागमो भवति । वुवूर्षति । विवरिषते, विवरीषते । प्रवुवूर्षति, प्राविवरिषति, प्राविवरीषति । ॠकारान्तेभ्यः - तितीर्षति, तितरिषति, तितरीषति । आतिस्तीर्षति, आतिस्तरिषति, आतिस्तरीषति । सनि ग्रहगुहौश्च(7-2-12/2610) इति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते । इटश्च वृतो वा (7-2-38/2391) इति पक्षे दीर्घः । चिकीर्षति, जिहीर्षति - इत्यत्रोपदेशाधिकारात्, लाक्षणिकत्वाच्च इडागमो न भवति ।।
</7-2-41>
लिङ्सिचोरात्मनेपदेषु ।। <7-2-42> ।।
वृतो लिङि सिचि च आत्मनेपदपरे वा इडागमो भवति । वृषीष्ट, वरिषीष्ट। प्रावृषीष्ट, प्रावरिषीष्ट । आस्तरिषीष्ट, आस्तीर्षीष्ट। सिचि खल्वपि - अवृत, अवरिष्ट, अवरीष्ट । प्रावृत, प्रावरिष्ट, प्रावरीष्ट । आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट । आत्मनेपदेष्विति किम्? प्रावारिष्टाम्, प्रावारिषुः । लिङः प्रत्युदाहरणं न दर्शितम्, असम्भवात्, यासुटोऽवलादित्वादिति ।।
</7-2-42>
ऋतश्च संयोगादेः ।। <7-2-43> ।।
ऋदन्ताद्धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति । ध्वृषीष्ट, ध्वरिषीष्ट । स्मृषीष्ट, स्मरिषीष्ट । अध्वृषाताम्, अध्वरिषाताम्। अस्मृषाताम्, अस्मरिषाताम् । ऋत इति किम्? च्योषीष्ट, प्लोषीष्ट । अच्योष्ट, अप्लोष्ट । संयोगादेरिति किम्? कृषीष्ट, हृषीष्ट । अकृत, अहृत । आत्मनेपदेषु इत्येव - अध्वार्षीत् , अस्मार्षीत् । संस्कृषीष्ट, समस्कृत -- इत्यत्रोपदेशाधिकारात्, अभाक्तत्वाच्च सुट इडागमो न भवति ।।
</7-2-43>

स्वरतिसूतिसूयतिधूञूदितो वा ।। <7-2-44> ।।

स्वरति, सूति, सूयति, धूञ् - इत्येतेभ्यः, ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । स्वर्त्ता, स्वरिता । सूति-प्रसोता, प्रसविता । सूयति - सोता, सविता । धूञ् - धोता , धविता । ऊदिद्भ्यः खल्वपि - गाहू । विगाढा, विगाहिता । गुपू - गोप्ता , गोपिता । वा इति वर्त्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम् । सूतिसूयत्योर्विकरणनिर्देशः `षू प्रेरणे(धा.पा.1409) इत्यस्य निवृत्त्यर्थः । धूञ् इति सानुबन्धकस्य निर्देशः - `धू निधूनने(धा.पा.1399) इत्येतस्य निवृत्त्यर्थः । सविता, धुवितेत्येव नित्यमेतयोर्भवति । स्वरतेरेतस्माद्विकल्पाद् ऋद्धनोः स्ये(7-2-70) इत्येतद्भवति विप्रतिषेधेन - स्वरिष्यति । किति तु प्रत्यये श्र्युकः किति(7-2-11/2381) इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन - स्वृत्वा, सूत्वा, धूत्वा ।।

</7-2-44>

रधादिभ्यश्च ।। <7-2-45> ।।

`रध हिंसासंसिद्ध्योः(धा.पा.1194) इत्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । रद्धा, रधिता ।

नंष्टा, नशिता । त्रप्ता, तर्प्ता, तर्पिता । द्रप्ता, दर्प्ता , दर्पिता । द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता। स्नोग्धा, स्नोढा, स्नोहिता । स्नेग्धा, स्नेढा, स्नेहिता । क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति । अपरे पुनराहुः - पुर्वविधेरिण्निषेधविधानसामर्थ्याद् बलीयस्त्वं प्रतिषेधनियमस्येति नित्यमिटा भवतितव्यम् - ररन्धिव, ररन्धिमेति भवति ।।

</7-2-45>

निरः कुषः ।। <7-2-46> ।।

निर् इत्येवम्पूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । निष्कोष्टा, निष्कोषिता। निष्कोष्टुम्, निष्कोषितुम् । निष्कोष्टव्यम्, निष्कोषितव्यम् । निर इति किम्? कोषिता, कोषितुम्, कोषितव्यम् । निसः इति वक्तव्ये निरः इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । तस्य हि निलयनमिति उपसर्गस्यायतौ(8-2-19/2326) इति लत्वं भवति । निसो हि रुत्वस्यासिद्धत्वाल्लत्वं न स्यात् ।।

</7-2-46>

इण्निष्ठायाम् ।। <7-2-47> ।।

निरः कुषो निष्ठायामिडागमो भवति । निष्कुषितः । निष्कुषितवान् । इड्ग्रहणं नित्यार्थम् । आरम्भो हि यस्य विभाषा(7-2-15/3025) इत्यस्य बाधकः, अन्यथा हि विकल्पार्थ एव स्याद् । अत्रैव नित्यमिडागमः, उत्तरत्र विकल्प एवेति ।।

</7-2-47>

तीषसहलुभरुषरिषः ।। <7-2-48> ।।

तकारादावार्धधातुके इषु, सह, लुभ, रुष, रिष - इत्येतेभ्यो वा इडागमो भवति । इषु - एष्टा, एषिता । `इषु इच्छायाम्(धा.पा.1352) - इत्यस्यायं विकल्प इष्यते । यस्तु `इष गतौ(धा.पा.1128) इति दैवादिकः, तस्य - प्रेषिता, प्रेषितुम्, प्रेषितव्यमिति नित्यं भवति । योऽपि `इष आभीक्ष्ण्ये(धा.पा.1526) इति क्र्यादौ पठ्यते, तस्याप्येवमेव । तदर्थमेव `तीषसह इति सूत्रे केचिदुदितमिषं पठन्ति । सह - सोढा, सहिता । लुभ - लोब्धा, लोभिता। रुष - रोष्टा, रोषिता। रिष - रेष्टा, रेषिता । तीति किम्? एषिष्यति ।।

</7-2-48>

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।। <7-2-49> ।।

इवन्तानाम् धातूनाम् , ऋधु, भ्रस्ज, दम्भु , श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन् - इत्येतेषां च सनि वा इडागमो भवति । इवन्तानाम् - दिदेविषति, दुद्यूषति । सिसेविषति, सुस्यूषति । ऋध् - अर्दिधिषति, ईर्त्सति । भ्रस्ज - बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति । दम्भु -- दिदिम्भिषति, धिप्सति, धीप्सती । श्रि -- उच्छिश्रयिषति, उच्छिश्रीषति । स्वृ -- सिस्वरिषति, सुस्वूर्षति । यु -- यियविषति , युयूषति । ऊर्णु - प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति । भर इति भृञित्येतस्य भौवादिकस्य ग्रहणम्। शपा निर्देशात् । बिभरिषति, बुभूर्षति । ज्ञपि - जिज्ञपयिषति, ज्ञीप्सति । सन् - सिसनिषति, सिषासति । केचिदत्र `भरज्ञपिसनितनिपतिदरिद्राणाम् इति पठन्ति । तितनिषति, तितंसति , तितांसति । पिपतिषति, पित्सति । दिदरिद्रिषति, दिदरिद्रासति । सनीति किम्? देवता । भ्रष्टा ।।

</7-2-49>

क्लिशः क्त्वानिष्ठयोः ।। <7-2-50> ।।

क्लिशः क्त्वानिष्ठयोर्वा इडागमो भवति । क्लिष्ट्वा, क्लिशित्वा । क्लिष्टः क्लिष्टवान् । क्लिशितः, क्लिशितवान् । `क्लिशू विबाधने(धा.पा.1523) - इत्येतस्य क्त्वायां विकल्पः सिद्ध एव, निष्ठायां तु यस्य विभाषा(7-2-15/3025) इति प्रतिषेधः प्राप्नोति । क्लिश उपतापे - इत्यस्य तु क्त्वायाम् , निष्ठायां च नित्यमिडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते ।।

</7-2-50>

पूङश्च ।। <7-2-51> ।।

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति । पूत्वा, पवित्वा । सोमोऽतिपूतः, सोमोऽतिपवितः । पूतवान्, पवितवान् । श्र्युकः किति(7-2-11/2381) इति प्रतिषेधे प्राप्ते विकल्पो विधीयते ।।

</7-2-51>

वसतिक्षुधोरिट् ।। <7-2-52> ।।

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् । वसति इति विकरणनिर्देशः धातुनिर्धेशार्थ एव । वस्तेस्तूदात्तत्वादेव भवितव्यमिटा । पुनरिड्ग्रहणं नित्यार्थम् ।।

</7-2-52>
अञ्चेः पूजायाम् ।। <7-2-53> ।।
अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः । उदितो वा(7-2-56/3328) इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायाम् यस्य विभाषा(7-2-15/3025) इति प्रतिषेधः प्राप्तः, तदर्थमिदं प्रारब्धम् । पूजायामिति किम्? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ।।
</7-2-53>
लुभो विमोहने ।। <7-2-54> ।।
लुभो विमोहनेऽर्थे वर्त्तमानात् क्त्वानिष्ठयोरिडागमो भवति । लुभित्वा, लोभित्वा । विलुभिताः केशाः । विलुभितः सीमन्तः । विलुभितानि पदानि । विमोहनम् - आकुलीकरणम्, तत्र क्त्वायां तीषसहलुभ(7-2-48/2340) इति विकल्पः, निष्ठायाम् यस्य विभाषा(7-2-15/3025) इति प्रतिषेधः प्राप्तः । विमोहन इति किम्? लुब्धो वृषलः । शीतेन पीडित इत्यर्थः । लुब्धा, लुभित्वा , लोभित्वा । गार्ध्ये यथाप्राप्तमेव भवति ।।
</7-2-54>
जॄव्रश्च्योः क्त्वि ।। <7-2-55> ।।
जॄ व्रश्चि - इत्येतयोः क्त्वाप्रत्यये इडागमो भवति । जरित्वा, जरीत्वा । व्रश्चित्वा । जॄ इत्येतस्य श्र्युकः किति(7-2-11/2381) इति प्रतिषेधः प्राप्तः व्रश्चेरुदित्त्वाद्विकल्पः । क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम् ।।
</7-2-55>
उदितो वा ।। <7-2-56> ।।
उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति । शमु - शमित्वा, शान्त्वा । तमु - तमित्वा, तान्त्वा । दमु - दमित्वा, दान्त्वा ।।
</7-2-56>
सेऽसिचि कृतचृतच्छृदतृदनृतः ।। <7-2-57> ।।
सकारादावसिच्यार्धधातुके कृत, चृत, छृद, तृद, नृद - इत्येतेभ्यो धातुभ्यो वा इडागमो भवति । कृत् -- कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति । चृत -- चर्त्स्यति । अचर्त्स्य । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति । छृद - छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति । तृद् -- तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति । नृत् - नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । निनर्तिषति । से इति किम्? कर्तिता । असिचीति किम्? अकर्तीत् ।।
</7-2-57>
गमेरिट् परस्मैपदेषु ।। <7-2-58> ।।
गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति । गमेरिति किम्? चेष्यति । इड्ग्रहणं नित्यार्थम् । परस्मैपदेष्विति किम्? संगंसीष्ट । संगंस्यते । संजिगंसते, संजिगंसिष्यते । अधिजिगांसते, अधिजिगांसिष्यते । गमेरिङादेशस्य अज्झनगमां सनि(6-4-16/2614) इति
दीर्घत्वम् । से इत्येव - गन्तास्मि, गन्तास्वः, गान्तास्मः । आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते । अन्यत्र सर्वत्रैवेष्यते । कृत्यपि हि भवति, परस्मैपदलुकि च - सञ्जिगमिषिता, अधिजिगमिषिता व्याकरणस्य, जिगमिष त्वमिति । पदशेषकारस्य पुनरिदं दर्शनम् - गम्युपलक्षणार्थं परस्मैपदग्रहणम् , परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात्सकारादेरार्धधातुकस्येड् भवति । तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य - इत्येव भवितव्यम् ।।
</7-2-58>
न वृद्भ्यश्चतुर्भ्यः ।। <7-2-59> ।।
वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वृत् - वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । वृधू - वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । श्रृधु - शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्दू - स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्स्यति । चतुर्भ्यः इति न वक्तव्यम् । वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते - `कृपू समार्थ्ये(धा.पा.811) वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते, न किञ्चिदनिष्टं प्राप्नोति तत्क्रियते स्यन्देरूदिल्क्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेतेति । चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः सन्निधापितो भवति । परस्मैपदेषु इत्येव । वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते । अत्राप्यात्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते । अन्यत्र सर्वत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति - विवृत्सिता, विवृत्स त्वमिति ।।
</7-2-59>
तासि च क्लृपः ।। <7-2-60> ।।
कृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । श्वः कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । परस्मैपदेषु इत्येव । कल्पितासे । कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते । क्लृपेरप्यात्मनेपदेन समानपदस्थस्य इडागम इष्यते । अन्यत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति - चिक्लृप्सिता, चिक्लृप्स त्वमिति ।।
</7-2-60>
अचस्तास्वत्थल्यनिटो नित्यम् ।। <7-2-61> ।।
तासौ ये नित्यानिटो धातवोऽजन्ताः तेभ्यस्तासाविव थलीडागमो न भवति । याता - ययाथ । चेता - चिचेथ । नेता - निनेथ । होता - जुहोथ ।

अच इति किम्? भेत्ता - बिभेदिथ । तास्वदिति किम्? लूत्वा-लुलविथ । थलिति किम्? याता - ययिव । ययिम । अनड्ग्रहणं नित्यमित्यनेन विशेषणार्थम् । नित्यग्रहणं किम्? विधोता, विधविता विदुधविथ । तासि विभाषितेट्, थलि नित्यमिडागमो भवति । तास्वदिति वतिनिर्द्देशः किमर्थः तासौ सतस्थलि प्रतिषेधार्थः । यो हि तासावसन्, असत्त्वाच्च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति - जघसिथ । उवयिथ । उत्तरसूत्रेऽपि तास्वत् इति वर्त्तते । अदादेशो हि घसिः, वेञादेशाश्च वयिस्तासौ नास्ति ।।

</7-2-61>

उपदेशेऽत्वतः ।। <7-2-62> ।।

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविवथलीडागमो न भवति । पक्ता - पपक्थ । यष्टा - इयष्ट । शक्ता - शशक्थ । उपदेशे इति किम्? कर्ष्टा - चकर्षिथ । अत्वत इति किम्? भेता - भिभेदिथ । तपरकरणं किम्? राद्धा - रराधिथ । तास्वदित्येव - जिघृक्षति । जग्रहिथ । नित्यमनिट इत्येव - अङ्क्ता , अञ्जिता - आनञ्जिथ ।।

</7-2-62>

ऋतो भारद्वाजस्य ।। <7-2-63> ।।

ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति । स्मर्ता - सस्मर्थ । ध्वर्त्ता - दध्वर्थ । सिद्धे सत्यारम्भो नियमार्थः - ऋत एव भारद्वाजस्य, नान्येषां धातूनाम् । ययिथ । वविथ । पेचिथ । शेकिथ । तदयमर्थात्पूर्वयोर्योगयोर्विकल्पः । तपरकरणमृकारान्तस्य निवृत्त्यर्थम् । तथा हि सति
विध्यर्थमेतत्स्यात् ।।

</7-2-63>

बभूथाततन्थजगृभ्मववर्थेति निगमे ।। <7-2-64> ।।

बभूथ, आततन्थ, जगृभ्म, ववर्थ - इत्येतानि निपात्यन्ते निगमविषये । निगमः - वेदः । बभूथ - `त्वं हि होता प्रथमो बभूथ(तै.3-1-4-4) । बभूविथेति भाषायाम् । आततन्थ - `येनान्तरिक्षमुर्वाततन्थ(ऋ.3-22-2) । आतेनिथेति भाषायाम् । जगृभ्म -- `जगृभ्मा ते दक्षिणमिन्द्र हस्तम्(ऋ.10-47-1) । जगृहिमेति भाषायाम् । ववर्थ - `ववर्थ त्वं हि ज्योतिषा । ववरिथेति भाषायाम् । क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम् - निगम एव, न भाषायामिति ।।

</7-2-64>

विभाषा सृजिदृशोः ।। <7-2-65> ।।

सृजि, दृशि -- इत्येतयोस्थलि विभाषा इडागमो न भवति । सस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ ।।

</7-2-65>

इडत्त्यर्तिव्ययतीनाम् ।। <7-2-66> ।।

अत्ति, अर्ति, व्ययति - इत्येतेषां थलीडागमो भवति । आदिथ । आरिथ । संविव्ययिथ । व्येञः न व्यो लिटि(6-1-46/2416) इत्यात्वप्रतिषेधः । अतिव्ययत्योः ऋतो भारद्वाजस्य(7-2-63/2296) इति नियमाद्विकल्पः । अर्त्तेरपि नित्यं प्रतिषेधः । अत्रेड्ग्रहणं विस्पष्टार्थम् । विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकम्, प्रतिषेधविधाने चार्त्तिग्रहणमिति नित्योऽयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम् ।।

</7-2-66>

वस्वेकाजाद्घसाम् ।। <7-2-67> ।।

कृतद्विर्वचनानां धातूनामेकाचाम् आकारान्तनाम्, घसेश्च वसाविडागमो भवति । आदिवान् । आशिवान् । पेचिवान् । शेकिवान् । धात्वभ्यासयोरेकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति । आत् - ययिवान् । तस्थिवान् । घस् - जक्षिवान् । सिद्धे सत्यारम्भो नियमार्थः - एकाजाद्घसामेव वसाविडागमो भवति, नान्येषाम् । बिभिद्वान् । चिच्छिद्वान् । बभूवान् । शिश्रिवान् । क्रादिनियमात्, प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते । आद्ग्रहणमनेकाज्ग्रहणार्थम् । द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम् । दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यम् । दरिद्राञ्चकार । अथाप्याम्न क्रियते, तथापि च दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधौ इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति , ददरिद्रवानिति भवितव्यम् । घसेरपि यदि ग्रहणमिह न क्रियते , तदा द्विर्वचनात् परत्वाद् घसिभसोर्हलि च(6-4-100/3550) इति उपधालोपे कृते द्विर्वचनमेव न स्यात् अनच्कत्वाद् । इह तु घसिग्रहणात् उपधालोपमपि परत्वादिडागमो बाधते । तत्र कृते गमहनजनखनघसाम्(6-4-98/2363) इत्युपधालोपः । स च द्विर्वचनेऽचि(1-1-59/2243) इति द्विर्वचने कर्तव्ये स्थानिवद्भवति । तेन जक्षिवान् इति सिद्ध्यति ।।

</7-2-67>

विभाषा गमहनविदविशाम् ।। <7-2-68> ।।

गम, हन, विद, विश - इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति । गम - जग्मिवान्, जगन्वान् । मो नो धातोः(8-2-64/341) इति नकारः । हन - जघ्निवान् , जघन्वान् । विद - विविदिवान्, विविद्वान् । विश-विविशिवान्, विविश्वान् । विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम् । ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति ।

- दृशेश्चेति वक्तव्यम् *(म.भा.3-301)। ददृशिवान्, ददृश्वान् ।।

</7-2-68>
सनिंससनिवांसम् ।। <7-2-69> ।।
सनोतेः , सनतेर्वा धातोः सनिंससनिवांसम् इति निपात्यते। `अग्नित्वाग्ने सनिंससनिवांसम्(आ.श्रौ.1-3-4-16) । इडागम एत्वाभ्यासलोपाभावश्च निपात्यते । सनिङ्पूर्वादन्यत्र सेनिवांसमित्येव भवति । छन्दसीदं निपातनं विज्ञायते । भाषायां सेनिवांसमिति भवति ।।
</7-2-69>
ऋद्धनोः स्ये ।। <7-2-70> ।।
ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति । करिष्यति । हनिष्यति । हरिष्यति । स्वरतेर्वेट्त्वाद्, ऋद्धनोः स्ये इत्येतद्भवति विप्रतिषेधेन - स्वरिष्यति । तपरकरणं विस्पष्टार्थम् ।।
</7-2-70>
अञ्जेः सिचि ।। <7-2-71> ।।
अञ्जेः सिचि इडागमो भवति । आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः । सिचीति किम्? अङ्क्ता, अञ्जिता। ऊदित्वाद् विभाषा भवति ।।
</7-2-71>
स्तुसुधूञ्भ्यः परस्मैपदेषु ।। <7-2-72> ।।
स्तु, सु , धूञ् - इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति । अस्तावीत् । असावीत् । अधावीत् । परस्मैपदेष्विति किम्? अस्तोष्ट । असोष्ट । अधोष्ट, अधविष्ट ।।
</7-2-72>
यमरमनमातां सक्च ।। <7-2-73> ।।
यम, रम, नम - इत्येतेषामङ्गानाम्, आकारान्तानां च सगागमो भवति परस्मैपदे सिचि , इडागमश्च । यम - अयंसीत्, अयंसिष्टाम्, अयंसिषुः । रम- व्यरंसीत्, व्यरंसिष्टाम्, व्यरंसिषुः । नम - अनंसीत्, अनंसिष्टाम्, अनंसिषुः । आकारान्तानाम् - अयासीत्, अयासिष्टाम्, अयासिषुः । यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा नेटि(7-2-4/2268) इति प्रतिषिध्यते । परस्मैपदेष्वित्येव - अयंस्त, अरंस्त, अनंस्त ।।
</7-2-73>
स्मिपूङ्रञ्ज्वशां सनि ।। <7-2-74> ।।
स्मिङ्, पूङ् , ऋ , अञ्जू, अशू - इत्येतेषां धातूनां सनीडागमो भवति । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । ङकारग्रहणं पूञो मा भूत् । पुपूषति इत्येव तस्य भवति । अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमोऽस्त्येव ।।
</7-2-74>
किरश्च पञ्चभ्यः ।। <7-2-75> ।।
किरादिभ्यः पञ्चभ्यस्सनि इडागमो भवति । कृ - चिकरिषति । गृ-जिगरिषति । दृङ् - दिदरिषते । धृङ् - दिधरिषते । प्रच्छ - पिप्रच्छिषति । पञ्चभ्य इति किम्? सिसृक्षति । किरतिगिरत्योः इट् सनि वा (7-2-41/2625) इति विकल्पः प्राप्तः, वृतो वा(7-2-38/2391) इति च । अस्येटो दीर्घत्वं नेच्छन्ति ।।
</7-2-75>
रुदादिभ्यः सार्वधातुके ।। <7-2-76> ।।
रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद् - रोदिति । स्वप् - स्वपिति । श्वस् - श्वसिति । अन् - प्राणिति । जक्ष् - जक्षिति । पञ्चभ्यः इत्येव - जागर्ति । सार्वधातुक इति किम्? स्वप्ता । वलादेः इत्येव - रुदन्ति ।।
</7-2-76>
ईशः से ।। <7-2-77> ।।
ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । इशिष्व ।।
</7-2-77>
ईडजनोर्ध्वे च ।। <7-2-78> ।।
ईड, जन - इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य, से इत्येतस्य च सार्वधातुकस्य इडागमो भवति । ईडिध्वे । ईडिध्वम् । ईडिषे । ईडिष्व । जनिध्वे । जनिध्वम् । जनिषे । जनिष्व । जनी प्रादुर्भावे - इत्येतस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च । `जन जनने(धा.पा.1105) - इत्येतस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते । तस्य कर्मव्यतिहारे - व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम् - इति च भवति । ध्वेशब्दे ईशेरपि इडागम इष्यते । ईषिध्वे, ईषिध्वमिति । तदर्थं केचित् - `ईडिजनोः स्ध्वे च इति सूत्रं पठन्ति । तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते । `ईशीडिजनां सेध्वयोः इत्येकमेव सूत्रं न पठितम् विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति । ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा ।।
</7-2-78>
लिङः सलोपोऽनन्त्यस्य ।। <7-2-79> ।।
सार्वधातुके इति वर्त्तते । सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति । कः पुनरनन्त्यो लिङः सकारः यो यासुट् - सुट् - सीयुटाम् । कुर्यात् , कुर्याताम्, कुर्युः । कुर्वीत, कुर्वीयाताम्, कुर्वीरन् । अनन्त्यस्येति किम्? कुर्युः, कुर्याः । सार्वधातुके इत्येव - क्रियास्ताम्, क्रियासुः । कृषीष्ट, कृषीयास्ताम्, कृषीरन्।।

</7-2-79>
अतो येयः ।। <7-2-80> ।।
अकारान्तादङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इय् इत्ययमादेशो भवित । पचेत्, पचेताम्, पचेयुरिति । अत्र उस्यपदान्तात्(6-1-96/1214) इति पररुपं बाधितम् । अत इति किम्? चिनुयात् । सुनुयात् । तपरकरणं किम्? यायात् । सार्वधातुक इत्येव - चिकीर्ष्यात् । ननु च अतो लोपः(6-4-48/2308)इत्यनेनात्र भवितव्यम्, पचेदित्यत्रापि हि तर्हि अतो दीर्घो यञि(7-3-101/2170) इति दीर्घत्वेन भवितव्यम्, तदनेनावश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधकः, एवमतो लोपस्यापि बाधकः स्यात्, स्यादेतदेवम्, यदि दीर्घः सार्वधातुके विधीयते । अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यात्, न पुनरतो लोपस्य । येयः इत्यविभक्तिको निर्द्देशः । यः इति वा षष्ठीनिर्देशे यलोपस्यासिद्धत्वमनाश्रित्य आद्गुणः(6-1-87/69) कृतः, सौत्रत्वान्निर्द्देशस्येति । केचिद् अत्र - `अतो यासियः - इति सूत्रं पठन्ति। तेषां सकारान्तः स्थानी, षष्ठीसमासश्च ।।
</7-2-80>
आतो ङितः ।। <7-2-81> ।।
आकारस्य ङिदवयवस्य आकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति । पचेते , पचेथे । पचेताम्, पचेथाम् । यजेते, यजेथे । यजेताम् , यजेथाम् । सार्वधातुकमपित्(1-2-4/2234) इत्यत्र न ङितीव ङिद्वदित्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वदिति । पूर्वसूत्रे एव उच्चुकुटिषतीति प्रसिद्धये तथाङ्गीकरणम् । यदि गाङ्कटादिसूत्रे(1-2-1/2461) ङित इव ङिद्वद्भवतीत्येवमङगीक्रियते , तदा अनुदात्तङित आत्मनेपदम्(1-3-12/2157) इति आत्मनेपदं प्राप्नोतीति । आत इति किम्? पचन्ति , यजन्ति। पचन्ते, यजन्ते । ङित इति किम्? पचावहै, पचामहै । अत इत्येव - चिन्वाते, सुन्वाते । तपरकरणं किम्? मिमाते । मिमाथे ।।
</7-2-81>
आने मुक् ।। <7-2-82> ।।
आने परतोऽङ्गस्यातो मुगागमो भवति । पचमानः, यजमानः । अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यते इति अदुपदे शात् इति लसार्वधातुकानुदात्तत्वं भवति । यद्येवम्, आतो ङितः(7-2-81/2235) इत्ययमपि विधिः प्राप्नोति तपरनिर्देशान्न भविष्यति । मुकि सत्यध्यर्धमात्रो भवति । लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति नैष दोषः, उपदेशग्रहणं तत्र क्रियते । तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम् । तथा च -
पचावः, पचाम इत्यत्रापि भवति ।।
</7-2-82>
ईदासः ।। <7-2-83> ।।
आस उत्तरस्यानशब्दस्य ईकारादेशो भवति । आसीनो यजते । अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते ।।
</7-2-83>
अष्टन आ विभक्तौ ।। <7-2-84> ।।
अष्टनो विभक्तौ परत आकारादेशो भवति । अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । विभक्ताविति किम्? अष्टत्वम् । अष्टता । आ इति व्यक्तिनिर्द्देशोऽयम्, आकृतिनिर्द्देशे तु नकारस्थानेऽनुनासिकाकारः स्यात् । विकल्पेनायमाकारो भवति, एतज्ज्ञापितम् - अष्टनो दीर्घात्(6-1-172/3718) इति दीर्घग्रहणात्, अष्टाभ्य औश्(7-1-21/372) इति च कृतात्वस्य निर्द्देशात् । तेनाष्टभिः, अष्टभ्य इत्यपि भवति । तदन्तविधिश्चात्रेष्यते - प्रिया अष्टौ येषां ते प्रियाष्टानः । प्रियाष्टौ ।।
</7-2-84>
रायो हलि ।। <7-2-85> ।।
रै इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति । राभ्याम् । राभिः । हलीति किम्? रायौ, रायः । विभक्ताविति किम्? रैत्वम्, रैता । मृजेर्वृद्धिः(7-2-114/2473) इत्यतः प्राग्विभक्त्यधिकारः ।।
</7-2-85>
युष्मदस्मदोरनादेशे ।। <7-2-86> ।।
युष्यदस्मदित्येतयोरनादेशो विभक्तौ परत आकारादेशो भवति । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु । अनादेश इति किम्? युष्मत् । अस्मत् । हलि इत्यधिकारादप्यत्र न स्यात्, उत्तरत्र त्वनादेशग्रहणेन प्रयोजनम् - योऽचि(7-2-89/392) इति, तदिहैव क्रियते ।।
</7-2-86>
द्वितीयायां च ।। <7-2-87> ।।
द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति । त्वाम्, माम् । युवाम्, आवाम् । युष्मान्, अस्मान् । आदेशार्थं वचनम् ।।
</7-2-87>
प्रथमायाश्च द्विवचने भाषायाम् ।। <7-2-88> ।।
प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति । युवाम्, आवाम् । प्रथमाया इति किम्? युवयोः, आवयोः । द्विवचन इति किम्? त्वम्, अहम् । यूयम्, वयम् । भाषायामिति किम्? `युवं वस्त्राणि पीवसा वसाथे(ऋ.1-152-1) ।।
</7-2-88>
योऽचि ।। <7-2-89> ।।

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति । त्वया, मया । त्वयि, मयि । युवयोः , आवयोः । अचीति किम्? युवाभ्याम्, आवाभ्याम् । युष्मदस्मदोरनादेशे(7-2-86/396) इत्यत्र यदि हलि(7-2-85/286) इत्यनुवर्त्तते, शक्यमकर्तुम् अचि इत्येतत्? तत्क्रियते विस्पष्टार्थम् । अनादेश इत्येव - त्वद् गच्छति । मद् गच्छति ।।

</7-2-89>

शेषे लोपः ।। <7-2-90> ।।

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति । कश्च शेषः यत्राकारो यकारश्च न विहितः ।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।

यान्यद्विवचनान्यत्र तेषु लोपो विधीयते ।।

त्वम्, अहम् । यूयम्, वयम्। तुभ्यम्, मह्यम्। युष्मभ्यम्, अस्मभ्यम् । त्वत्, मत्। युष्मत्, अस्मत्। तव, मम। युष्माकम्, अस्माकम् ।

शेषग्रहणं विस्पष्टार्थम् । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवति - त्वं ब्राह्मणी, अहं ब्राह्मणी? `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) । अलिङ्गे वा युष्मदस्मदी इति । केचित्तु शेषेलोपं टिलोपमिच्छन्ति । कथम्? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते, तेन मपर्यन्ताद् योऽन्यः स शेष इति, तत्रायं लोप इति टिलोपो भवति ।।

</7-2-90>

मपर्यन्तस्य ।। <7-2-91> ।।

मपर्यन्तस्य इत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः मपर्यन्तस्य इत्येवं तद्वेदितव्यम् । वक्ष्यति - युवावौ द्विवचने(7-2-92/386) । युवाम्, आवाम् । मपर्यन्तस्येति किम्? युवकामावकामिति साकच्कस्य मा भूत् । त्वमावेकवचने(7-2-97/389) । त्वया । मया । मपर्यन्तस्येति किम्? साकच्कस्य सर्वस्य मा भूत् । तथा च सति त्वमयोरकारस्य योऽचि(7-2-89/392) इति यकारे कृतेऽनिष्टं रूपं स्यात् । मान्तस्येत्येव सिद्धे, अस्मिन् यत्परिग्रहणं कृतम्, अवधिद्योतनार्थं तत, मान्ते मा भूत् । कदा? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः । स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते ।।

</7-2-91>

युवावौ द्विवचने ।। <7-2-92> ।।

द्विवचने इत्यर्थग्रहणम् । द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव, आव - इत्येतावादेशौ भवतः । युवाम्, आवाम्। युवाभ्याम्, आवाभ्याम्। युवयोः, आवयोः । यदा समासे द्व्यर्थे युष्मदस्मदी भवतः , समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति, तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि त्वाहौ सौ(7-2-94/384) इत्येवमादिना आदेशान्तरेण न बाध्येते । अतिक्रान्तं युवाम् अतियुवाम्, अत्यावाम्। अतिक्रान्तान् युवाम् अतियुवान्, अत्यावान् । अतिक्रान्तेन युवाम् अतियुवया, अत्यावया । अतिक्रान्तैर्युवाम् अतियुवाभिः, अत्यावाभिः । अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम्, अत्यावभ्यम् । अतिक्रान्ताद् युवाम् अतियुवत्, अत्यावत्। अतिक्रान्तेभ्यो युवाम् अतियुवत्, अत्यावत्। अतिक्रान्तानां युवाम् अतियुवाकम् , अत्यावाकम् । अतिक्रान्ते युवाम् अतियुवयि, अत्यावयि । अतिक्रान्तेषु युवाम् अतियुवासु, अत्यावासु । त्वाहादीनां तु विषये परत्वात्त एव भवन्ति - अतिक्रान्तो युवाम् अतित्वम्, अत्यहम् । अतिक्रान्ता युवाम् अतियूयम्, अतिवयम् । अतिक्रान्ताय युवाम् अतितुभ्यम्, अतिमह्यम् । अतिक्रान्तस्य युवाम् अतितव, अतिमम । यदा तु यष्मदस्मदी एकत्वबहुत्वयोर्वर्तते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः । अतिक्रान्तौ त्वाम्, अतित्वाम्, अतिमाम् । अतिक्रान्तौ युष्मान् अतियुष्मान्, अत्यस्मान्। एवमुन्नेयम् ।।

</7-2-92>

यूयवयौ जसि ।। <7-2-93> ।।

युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय, वय - इत्येतावादेशौ भवतः । यूयम्, वयम् । परमयूयम्, परमवयम् । अतियूयम्, अतिवयम् । तदन्तविधिरत्र भवति, `अङ्गाधिकारे तस्य च तदुत्तरपदस्य च(सीर.प.77) इति ।

</7-2-93>

त्वाहौ सौ ।। <<7-2-94>> ।।

युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व, अह - इत्येतावादेशौ भवतः । त्वम्, अहम् । परमत्वम्, परमाहम् । अतित्वम्, अत्यहम् ।।

</7-2-94>

तुभ्यमह्यौ ङयि ।। <7-2-95> ।।

युष्मदस्मदोर्मपर्यन्तस्य तुभ्य, मह्य - इत्येतावादेशौ भवतो ङयि परतः । तुभ्यम्, मह्यम् । परमतुभ्यम् ,
परमह्ययम् । अतितुभ्यम्, अतिमह्यम् ।।

</7-2-95>

तवममौ ङसि ।। <7-2-96> ।।

युष्मदस्मदोर्मपर्यन्तस्य तव, मम - इत्येतावादेशौ भवतो ङसि परतः । तव, मम । परमतव, परममम। अतितव, अतिमम ।।

</7-2-96>

त्वमावेकवचने ।। <7-2-97> ।।

एकवचने इत्यर्थनिर्देशः । एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व, म - इत्येतावादेशौ भवतः । त्वाम्, माम् ।

त्वया, मया । त्वत्, मत् । त्वयि , मयि । यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः । आदेशान्तराणां तु त्वाहौ सौ(7-2-94/384) - इत्येवमादीनां विषये पुर्वविप्रतिषेधेन ते एवेष्यन्ते । अतिक्रान्तस्त्वामतित्वम्, अत्यहम्। अतिक्रान्तौ त्वाम् अतित्वाम्, अतिमाम्। अतिक्रान्तान् त्वाम् अतित्वान् ,अतिमान्। अतिक्रान्ताभ्यां त्वाम् अतित्वाभ्याम्, अतिमाभ्याम् । अति क्रान्तैस्त्वाम् अतित्वाभिः, अतिमाभिरिति । एवमाद्युदाहर्तव्यम् ।।
</7-2-97>
प्रत्ययोत्तरपदयोश्च ।। <7-2-98> ।।
एकवचने इत्यनुवर्तते । प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व, म - इत्येतावादेशौ भवतः । तवायं त्वदीयः, मदीयः । अतिशयेन त्वं त्वत्तरः, मत्तरः । त्वामिच्छति त्वद्यति, मद्यति । त्वमिवाचारति त्वद्यते, मद्यते । उत्तरपदे - तव पुत्रः त्वत्पुत्रः मम पुत्रो मत्पुत्रः । त्वं नाथोऽस्य त्वन्नाथः, अहं नाथोऽस्य मन्नाथः । एकवचन इत्येव - युष्माकमिदं युष्मदीयम्, अस्मदीयम् । युष्माकं पुत्रोऽस्माकं पुत्रो युष्मत्पुत्रः, अस्मत्पुत्रः । विभक्तौ इत्यधिकारात् पूर्वयोगो विभक्तावेव । ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः । ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः? नैवं शक्यम्, लुका तस्या भवितव्यम् । बहिरङ्गो लुक् अन्तरङ्गावादेशौ प्रथमं तौ भवतिष्यः एतदेव तर्ह्यादेशवचनं ज्ञापकम् - अन्तरङ्गानपि विधीन्बहिरङ्गोऽपि लुग्बाधते इति । तेन गोमान्प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते । एवं च सति त्वाहौ सौ(7-2-94/384) इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति । त्वं प्रधानमेषां त्वत्प्रधनाः, मत्प्रधानाः । यूयं पुत्रा अस्य युष्मत्पुत्रः, अस्मत्पुत्रः। तुभ्यं हितं त्वद्धितम्, मद्धितम् । तव पुत्रस्त्वत्पुत्रः मत्पुत्रः । अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते? लक्ष्यस्थित्यपेक्षया । ज्ञापकार्थे ह्येतस्मिन् बहुतरमिष्टं संगृह्यते ।।
</7-2-98>
त्रिचतुरोः स्त्रियां तिसृचतसृ ।। <7-2-99> ।।
त्रि, चतुर् - इत्येतयोः स्त्रियां वर्तमानयोस्तिसृ, चतसृ - इत्येतावादेशौ भवतो विभक्तौ परतः । तिस्रः । चतस्रः । तिसृभिः । चतसृभिः । स्त्रियामिति किम्? त्रयः । चत्वारः। त्रीणि । चत्वारि । स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणम्, नाङ्गस्य । तेन यदा त्रिचतुः शब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदाप्यादेशौ भवत एव - प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मण इति । प्रियतिस्रौ, प्रियतिस्रः । प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि । प्रियचतसा, प्रियचतस्रौ , प्रियचतस्रः । प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि । नद्यृतश्च(5-4-153/833) इति समासान्तो न भवति, विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात् । यदा च त्रिचतुः शब्दौ लिङ्गान्तरे, स्त्रियामङ्गम्, तदा आदेशौ न भवतः - प्रियास्त्रयोऽस्याः , प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः सा प्रियत्रिः, प्रियत्री, प्रियत्रयः । प्रियचत्वाः , प्रियचत्वारौ, प्रियचत्वारः ।

- तिसृभावे संज्ञायां कन्युपसंख्यानं कर्तव्यम् *(म.भा.3-307)। तिसृका नाम ग्रामः ।
- चतसर्याद्युदात्तनिपातनं कर्तव्यम् *(म.भा.3-307)। चतस्रः पश्येत्यत्र चतुरः शसि(6-1-137/3682) इत्येष स्वरो मा भूत् । चतसृणामित्यत्र तु षट्त्रिचतुर्भ्यो हलादिः(6-1-179/3725) इत्येव स्वरो भवति । हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते ।।

</7-2-99>
अचि र ऋतः ।। <7-2-100> ।।
तिसृ, चतसृ - इत्येतयोर्ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः । तिस्रस्तिष्ठन्ति, तिस्रः पश्य । चतस्रस्तिष्ठन्ति, चतस्रः पश्य । प्रियतिस्र आनय, प्रियचतस्र आनय । प्रियतिस्रः स्वम्, प्रियचतस्रः स्वम् । प्रियतिस्रि निधेहि, प्रियचतस्रि निधेहि । पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानामपवादः । परमपि हि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते । अचीति किम्? तिसृभिः । चतसृभिः । ऋतः इति किम्? तिसृचतस्रोः प्रतिपत्त्यर्थम्, अन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत ।।
</7-2-100>
जराया जरसन्यतरस्याम् ।। <7-2-101> ।।
जरा - इत्येतस्य जरस् - इत्ययमादेशो भवति अन्यतरस्यामजादौ विभक्तौ परतः । जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते । जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः । अचि इत्येव - जराभ्याम्, जराभिः । नुमो विधानात् जरसादेशो विप्रतिषेधेन । अतिजरांसि ब्राह्मणकुलानि । इहातिजरसं ब्राह्मणकुलं पश्येति लुग्न भवति, आनुपूर्व्या सिद्धत्वात् । अतिजर - अमिति स्थिते लुक्, अम्भावः, जरस्भावः - इति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति। तत्र लुक् तावदपवादत्वाद् अम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन । न च पुनर्लुक्शास्त्रं प्रवर्तते, भ्रष्टावसरत्वादिति एवमेव भवति - अतिजरसं ब्राह्मणकुलं पश्येति । प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति,अतिजरैरिति च भवितव्यमिति गोनर्दीयमतेन (म.भा.3-309)। किं कारणम्? `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति । अन्ये तु - अनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैरित्येवं भवितव्यमिति मन्यन्ते ।।
</7-2-101>
त्यदादीनामः ।। <7-2-102> ।।
त्यत् इत्येवमादीनामकारादेशो भवति विभक्तौ परतः । त्यद्-स्यः, त्यौ, त्ये । तद् - सः, तौ, ते । यद् - यः , यौ, ये । एतद् - एषः , एतौ, एते । इदम् - अयम्, इमौ, इमे । अदस् - असौ, अमू, अमी । द्वि - द्वौ , द्वाभ्याम् । द्विपर्यन्तानां त्यदादीनामत्वमिष्यते (म.भा.3-309)। इह न भवति - भवत् - भवान् । संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति - त्यद् , त्यदौ, त्यदः । अतित्यद, अतित्यदौ, अतित्यदः । त्यदादिप्रधाने तु शब्दे भवत्येव - परमसः, परमतौ, परमते ।।

</7-2-102>
किमः कः ।। <7-2-103> ।।
किम् - इत्येतस्य क - इत्ययमादेशो भवति विभक्तौ परतः। कः, कौ, के । साकच्कस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते किमोऽत्(5-3-12/1959) इति ।।
</7-2-103>
कु तिहोः ।। <7-2-104> ।।
तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य कु इत्ययमादेशो भवति । कुतः । कुत्र । कुह । तिहोः इतीकार उच्चारणार्थः ।।
</7-2-104>
क्वाति ।। <7-2-105> ।।
अति इत्येतस्यां विभक्तौ परतः किमित्येतस्य क्व - इत्ययमादेशो भवति । क्व गमिष्यसि । क्व भोक्ष्यते । आदेशान्तरवचनमोर्गुण(6-4-146/847)निवृत्त्यर्थम् । किमो ड्वत् इति प्रत्ययान्तरं न विधीयते, साकच्कार्थम् ।।
</7-2-105>
तदोः सः सावनन्त्ययोः ।। <7-2-106> ।।
त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः । त्यद् - स्यः । तद् - सः । एतद् - एषः । अदस् - असौ । अनन्त्ययोरिति किम्? हे स । सा ।।
</7-2-106>
अदस औ सुलोपश्च ।। <7-2-107> ।।
अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति । असौ ।

- औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च *(म.भा.3-312)। यदा चौत्वप्रतिषेधः, तदा सकारादुत्तरस्य उत्वं भवति । असुकः, असुकौ ।
- उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः *(म.भा.3-312)। परमाहम् । परमायम् । परमानेन ।

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते।
ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ।।
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ।।
</7-2-107>
इदमो मः ।। <7-2-108> ।।
इदमः सौ परतो मकारोऽन्तादेशो भवति । इयम् । अयम् । इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ।।
</7-2-108>
दश्च ।। <7-2-109> ।।
इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः । इमौ, इमे। इमम्, इमौ, इमान् ।।
</7-2-109>
यः सौ ।। <7-2-110> ।।
इदमो मकारस्य यकारादेशो भवति सौ परतः । इयम् । उत्तरसूत्रे पुंसि इति वचनात्स्त्रियामयं यकारः ।।
</7-2-110>
इदोऽय् पुंसि ।। <7-2-111> ।।
इदम इद्रूपस्य पुंसि सौ परतः अय् इत्ययमादेशो भवति । अयं ब्राह्मणः । पुंसीति किम्? इयं ब्राह्मणी ।।
</7-2-111>
अनाप्यकः ।। <7-2-112> ।।
इदमोऽककारस्य इद्रूपस्य स्थाने अन इत्ययमादेशो भवति आपि विभक्तौ परतः । अनेन । अनयोः । अक इति किम्? इमकेन । इमकयोः । आपि इति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण ।।
</7-2-112>
हलि लोपः ।। <7-2-113> ।।
हलादौ विभक्तौ परत इदमोऽककारस्य इद्रूपस्य लोपो भवति । आभ्याम्, एभिः । एभ्यः । एषाम् । एषु । `नानर्थकेऽलोन्त्यविधिः(व्या.प.62) इति सर्वस्यायमिद्रूपस्य लोपः । अथवा - नायमिल्लोपः । अनाप्यकः(7-2-112/346) इति अन्ग्रहणमनुवर्त्तते ।।
</7-2-113>
मृजेर्वृद्धिः ।। <7-2-114> ।।
विभक्तौ इति निवृत्तम् । मृजेरङ्गस्य इको वृद्धिर्भवति । मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम् । मृजेरिति धातुग्रहणमिदम् , धातोश्च कार्यमुच्यमानं धातुप्रत्यय एव वेदितव्यम् । तेन कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र न भवति ।।

</7-2-114>
अचो ञ्णिति ।। <7-2-115> ।।
अजन्तस्याङ्गसाय ञिति णिति च वृद्धिर्भवति । ञिति - एकस्तण्डुलनिश्चायः । द्वौ शूर्वनिष्पावौ । कारः । हारः । णिति - गौः, गावौ, गावः। सखायौ, सखायः । जैत्रम् । यौत्रम् । च्यौत्नः । जयतेः, यौतेश्च उणादयो बहुलम्(3-3-1/3139) इति ष्ट्रन् प्रत्ययः । च्यवतेरपि त्नण् ।।
</7-2-115>
अत उपधायाः ।। <7-2-116> ।।
अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति । पाकः, त्यागः, यागः । पाचयति, पाचकः । पाठयति , पाठकः । अत इति किम्? भेदयति, भेदकः । उपधाया इति किम्? चकासयति, तक्षकः ।।
</7-2-116>
तद्धितेष्वचामादेः ।। <7-2-117> ।।
तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । गार्ग्यः । वात्स्यः । दाक्षिः । प्लाक्षिः । णिति - औपगवः । कापटवः । त्वाष्ट्रः, जागत इत्यत्राचामादेर्वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते ।।
</7-2-117>
किति च ।। <7-2-118> ।।
किति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । नडादिभ्यः फक्(4-1-99/1171) - नाडायनः , चारायणः । प्राग्वहतेष्ठक्(4-4-1/1548) - आक्षिकः , शालाकिकः ।।

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ
सप्तमाध्यायस्य द्वितीयः पादः ।
</7-2-118>

# काशिका/सप्तमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pc1
< काशिका | सप्तमोऽध्यायः

अथ सप्तमाध्याये तृतीयः पादः

देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात् ।। <7-3-1> ।।
देविका, शिंशपा, दित्यवाट्, दीर्घसत्त्र, श्रेयस्---इत्येतेषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारो भवति ञिति, णिति, किति तद्धिते परतः । देविकायां भवमुदकं दाविकमुदकम् । देविकाकूले भवाः शालयो दाविकाकूलाः शालयः । पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः । प्राचां ग्रामनगराणाम्(7-3-14/1400) इत्युत्तरपदवृद्धिः, साप्याकार एव भवति ।
शिंशपा--शिंशपाया विकारश्चमसः शांशपश्चमसः । पलाशादिरयम्, तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ् । शिंशपास्थले भवाः शांशपास्थलाः । पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः ।
दित्यवाट्---दित्यौह इदं दात्यौहम् । दीर्घसत्त्रे भवं दार्घसत्त्रम् । श्रेयस्---श्रेयसि भवं श्रायसम् ।

- वहीनरस्येद्वचनं कर्तव्यम् * (म.भा.3-317)। वृद्धिविषयेऽचामादेरचः स्थाने वहीनरस्य इकारादेशो भवति । वहीनरस्यापत्यं वैहीनरिः । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ।।

</7-3-1>
केकयमित्त्रयुप्रलयानां यादेरियः ।। <7-3-2> ।।
केकय, मित्त्रयु, प्रलय---इत्येतेषां यकारादेः `इय---इत्ययमादेशो भवति तद्धिते ञिति, णिति, किति च परतः । केकयस्यापत्यं कैकेयः । जनपदशब्दात्क्षत्त्रियादञ्(4-1-168/1186) इत्यञ्प्रत्ययः ।
मित्त्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते । गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु(5-1-134/1799) इति वुञ् । लौकिकं हि तत्र गोत्रं गृह्यते । लोके च ऋषिशब्दः `गोत्रम् इत्यभिधीयते ।
प्रलय---प्रलयादागतं प्रालेयमुदकम् ।।
</7-3-2>
न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।। <7-3-3> ।।
यकारवकारभ्यामुत्तरस्य अचामादेरचः स्थाने वृद्धिर्न भवति; ताभ्यां तु यकारवकाराभ्यां पूर्वमैजागमौ भवतो ञिति, णिति, किति च तद्धिते परतः । यकारादैकारः, वकारादौकारः । व्यसने भवं वैयसनम् । व्याकरणमधीते वैयाकरणः । स्वश्वस्यापत्यं सौवश्वः ।
य्वाभ्यामिति किम् ? न्नर्थस्यापत्यं न्नार्थिः । पदान्ताभ्यामिति किम् ? यष्टिः प्रहरणमस्य याष्टीकः । यत इमे छात्त्रा याताः (म.भा.3-318)। प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थम् । इह मा भूद्---दाध्यश्विः, माध्वश्विरिति, न ह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति । वृद्धेरभावात् प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः ।
उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते । पूर्वत्र्यलिन्दे भवः पूर्वत्रैयलिन्दः । यत्र तूत्तरपदसम्बन्धी यण्न भवति तत्र नेष्यते प्रतिषेधः---द्वे अशीति भृतो भूतो भावी वा द्व्याशीतिकः ।।
</7-3-3>
द्वारादीनां च ।। <7-3-4> ।।
`द्वार---इत्येवमादीनां य्वाभ्याम् उत्तपदस्याचामादेरचः स्थाने वृद्धिर्न भवति, पूर्वौ तु ताभ्यामैजागमौ भवतः । द्वारे नियुक्तो दौवारिकः । द्वारपालस्येदं दौवारपालम् । तदादिविधिश्चात्र भवति । स्वर---स्वरमधिकृत्य कृतो ग्रन्थः सौवरः । सौवरोऽध्यायः । सौवर्यः सप्तम्य इति । व्यल्कश---व्यल्कशे भवः वैयल्कशः । स्वति---स्वस्तीत्याह सौवस्तिकः । स्वर्---स्वर्भवः सौवः ।

- अव्ययानां भमात्रे टिलोपः * । स्वर्गमनमाह सौवर्गमिकः ।

स्वाध्याय इति केचित्पठन्ति, तदनर्थकम् । शोभनोऽध्याय इत्येतस्यां व्युत्पत्तौ तु पूर्वेणैव सिद्धम् । अथाप्येवं
प्युत्पत्तिः क्रियते---स्वोऽध्यायः स्वाध्याय इति ? एवमप्यत्रैव स्वशब्दस्यैव पाठात्सिद्धम् । तदादावपि हि वृद्धिरियं भवत्येव ।
स्फ्यकृत---स्फ्यकृतस्यापत्यं स्फैयकृतः । स्वादुमृदुन इदं सौवादुमृदवम् ।
श्वन्---शुन इदं शौवनम् । अणि अन्(6-4-167/1155) इति प्रकृतिभावः । शुनो विकारो मांसं शौवम् । प्राणिरजतादिभ्योऽञ्(4-3-154/1532) इत्यञ् । श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः । स्वस्येदं सौवम् । स्वग्रामे भवः सौवग्रामिकः । अध्यात्मादित्वाट्ठञ् (वा.456)। अपदान्तार्थोऽयमारम्भः ।
द्वार । स्वर । स्वाध्याय । व्यल्कश । स्वस्ति । स्वर् । स्फ्यकृत । स्वादुमृदु । श्वन् । स्व । द्वारादिः ।।

</7-3-4>
न्यग्रोधस्य च केवलस्य ।। <7-3-5> ।।
न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति, तस्माच्च पूर्वमैकार आगमो भवति । न्यग्रोधस्य विकारो नैयग्रोधश्चमसः ।
केवलस्येति किम् ? न्यग्रोधमूले भवाः शालयः न्याग्रोधमूला शालयः । `न्यग्रोहयतीति न्यग्रोधः---इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे विध्यर्थम् ।।
</7-3-5>
न कर्मव्यतिहारे ।। <7-3-6> ।।
कर्मव्यतिहारे यदुक्तं तन्न भवति । प्रतिषेधागमयोरयं प्रतिषेधः । व्यावक्रोशी, व्यावलेखी, व्याववर्ती, व्यावहासी वर्त्तते । कर्मव्यतिहारे णच् स्त्रियाम्(3-3-43/3215) इति णच् प्रत्ययः, तदन्तात् णचः स्त्रियामञ्(5-4-14/3216) ।।
</7-3-6>
स्वागतादीनां च ।। <7-3-7> ।।
`स्वागत---इत्येवमादीनां यदुक्तं तन्न भवति । स्वागतमित्याह स्वागतिकः । स्वध्वरेण चरति स्वाध्वरिकः । स्वङ्गस्यापत्यं स्वाङ्गिः । व्यङ्गस्यापत्यं व्याङ्गिः । व्यडस्यापत्यं व्याडिः । व्यवहारेण चरति व्यावहारिकः । व्यवहारशब्दोऽयं लौकिके वृत्ते वर्त्तते, न तु कर्मव्यतिहारे । स्वपतौ साधुः स्वापतेयः । द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः ।
स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति । स्वागतादिः ।।
</7-3-7>
श्वादेरिञि ।। <7-3-8> ।।
श्वादेरङ्गस्य इञि परतो यदुक्तं तन्न भवति । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । श्वन्शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम् ।

- इकारादिग्रहणं कर्तव्यं श्वागणिकाद्यर्थम् * (म.भा.3-319)। श्वगणेन चरति श्वागणिकः । श्वायूथिकः ।

तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते । श्वाभस्त्रेरिदं श्वाभस्त्रम् ।।
</7-3-8>
पदान्तस्यान्यतरस्याम् ।। <7-3-9> ।।
पश्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्यां यदुक्तं तन्न भवति । श्वापदस्येदं श्वापदम्, शौवापदम् ।।
</7-3-9>
उत्तरपदस्य ।। <7-3-10> ।।
`उत्तरपदस्य इत्ययमधिकारः, हनस्तोऽचिण्णलोः(7-3-32/2474) इति प्रागेतस्मात् यदित ऊर्ध्वमनुक्रमिष्यामः, `उत्तरपदस्य इत्येवं तद्वेदितव्यम् । वक्ष्यति---अवयवादृतोः(7-3-11/1397) । पूर्ववार्षिकम् । अपरवार्षिकम् । पूर्वहैमनम् । अपरहैमनम् ।
यत्र पञ्चमीनिर्देशो नास्ति---जे प्रोष्ठपदानाम्(7-3-18/1409) इत्येवमादौ, तदर्थमुत्तरपदाधिकारः ।
पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम्, वृद्धेश्च व्यपदेशार्थम् । उत्तरपदवृद्धौ सर्वं च(6-2-105/3839) इत्युत्तरपदाधिकारे या वृद्धिरित्येवं विज्ञायते ।।
</7-3-10>
अवयवादृतोः ।। <7-3-11> ।।
अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । पूर्ववार्षिकम् । पूर्वहैमनम् । अपरवार्षिकम् । अपरहैमनम् । पूर्वं वर्षाणाम्, अपरं वर्षाणामित्येकदेशिसमासः । तत्र भवः(4-3-53/1428) इत्येतस्मिन्नर्थे वर्षाभ्यष्ठक्(4-3-18/1389), हेमन्ताच्च(4-3-21/3452), सर्वत्राण् च तलोपश्च(4-3-22/1390) इत्यण्प्रत्ययः, तत्र ऋतोर्वृद्धिमद्विधौ `अवयवात् इति तदन्तविधिः ।
अवयवादिति किम् ? पूर्वासु वर्षासु भवं पौर्ववर्षिकम् । कालाट्ठञ्(4-3-11/1381) इति ठञ् । अवयवपूर्वस्यैव तदन्तविधिः, नान्यस्य ।।
</7-3-11>
सुसर्वार्धाज्जनपदस्य ।। <7-3-12> ।।
सु, सर्व, अर्ध---इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । जनपदतदवध्योश्च(4-2-124/1248), अवृद्धादपि बहुवचनविषयात्(4-2-125/1349) इति वुञ् । `सुसर्वार्धदिक्शब्देभ्यो जनपदस्य इति तदन्तविधिः ।।
</7-3-12>
दिशोऽमद्राणाम् ।। <7-3-13> ।।
दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । पूर्वपाञ्चालकः । अपरपाञ्चालकः । दक्षिणपाञ्चालकः । पूर्ववत्तदन्तविधिः प्रत्ययश्च ।
दिश इति किम् ? पूर्वः पञ्चालानां पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः । आपरपञ्चालकः । अमद्राणामिति किम् ? पौर्वमद्रः । आपरमद्रः ।

मद्रेभ्योऽञ्(4-2-108/1329) इत्यञ्प्रत्ययः ।।
</7-3-13>
प्राचां ग्रामनगराणाम् ।। <7-3-14> ।।
प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति,किति च परतः ।
ग्रामाणाम्---पूर्वेषु कामशम्यां भवः पूर्वैषुकामशमः । अपरैषुकामशमः । पूर्वकार्ष्णमृत्तिकः । अपरकार्ष्णमृत्तिकः ।
नगराणाम्---पूर्वस्मिन्पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः । अपर पाटलिपुत्रकः । पूर्वकान्यकुब्जः । अपरकान्यकुब्जः ।
ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत्सम्बन्धभेदप्रतिपत्त्यर्थम् । दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादिः ग्रामनामधेयम् । पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह । तत्र ग्रामवाचिनामङ्गानामवयवस्य दिक्शब्दादुत्तरस्य च नगरवाचिनामुत्तरपदानामवयवस्य वृद्धिर्भवतीत्येवमभिसम्बन्धः क्रियते । इतरत्र तु दिश उत्तरेषां नगराणामित्येव ।
पूर्वैषुकामशमः---इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितम् नेन्द्रस्य परस्य(7-3-22/1240) इति प्रतिषेधेन ।।
</7-3-14>
संख्यायाः संवत्सरसंख्यस्य च ।। <7-3-15> ।।
संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । द्वौ, संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः ।
संख्यायाः---द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः । द्विसाप्ततिकः । द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्त्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति ।
परिमाणान्तस्य(7-3-17/1683) इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः, त्रैसमिकः---इत्युत्तरपदवृद्धिर्न भवति । द्विवर्षा त्रिवर्षा माणविकेति अपरिमाणबिस्ताचित(4-1-22/480) इति पर्युदासो न भवति ।।
</7-3-15>
वर्षस्याभविष्यति ।। <7-3-16> ।।
संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः, स चेत्तद्धितो भविष्यत्यर्थे न भवति । द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः । त्रिवार्षिकः ।
अभविष्यतीति किम् ? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये, अधिकं वापि विद्येत, स सोमं पातुमर्हति । त्रीणि वर्षाणि भावीति त्रैवर्षिकम् ।
अधीष्टभृतयोः `अभविष्यति इति प्रतिषेधो न भवति । गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः ।।
</7-3-16>
परिमाणान्तस्यासंज्ञाशाणयोः ।। <7-3-17> ।।
परिमाणान्तस्याङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः; संज्ञायां विषये शाणे चोत्तरपदे न भवति । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । विभाषा कार्षापणसहस्राभ्याम्(5-1-29/1694) इत्यत्र `सुवर्णशतमानयोरुपसंख्यानम्(वा.505) इति लुको विकल्पः । द्वाभ्यां निष्काभ्यां क्रीतम् द्वित्रिपूर्वान्निष्काद्(5-1-30/1695)---द्विनैष्किकम् ।
असंज्ञाशाणयोरिति किम् ? पाञ्चलोहितिकम् । पाञ्चकलापिकम् । पञ्च लोहित्यः परिमाणस्य, पञ्च कलापानि परिमाणमस्येति विगृह्य तदस्य परिमाणम्(5-1-57/1723) इति योगविभागात्प्रत्ययः, तद्धितान्तश्चायं समुदायः संज्ञा । द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम् । त्रैशाणम् । शाणाद्वा(5-1-35/1700), द्वित्रिपूर्वादण्च(5-1-36/1701) इत्यण्प्रत्ययः ।
`असंज्ञाशाणकुलिजानाम् इति केचित्पठन्ति । द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः ।।
</7-3-17>
जे प्रोष्ठपदानाम् ।। <7-3-18> ।।
`जे इति जातार्थो निर्दिश्यते । तत्र यस्तद्धितो विहितस्तस्मिन् ञिति, णिति, किति च परतः प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धिर्भवति । प्रोष्ठपदा नाम नक्षत्रम्, ताभिर्युक्तः काल इत्यण् । तस्य लुबविशेषे(4-2-4/1205) इति लुप् । प्रोष्ठपदासु जातः---ऋतुनक्षत्रेभ्योऽण्(4-3-16/1387) इत्यण्---प्रोष्ठपदो माणवकः ।
जे इति किम् ? यदा प्रोष्ठपदो मघो धरणीमभिवर्षति---प्रोष्ठपदासु भवः प्रोष्ठपदः ।
`प्रोष्ठपदानाम् इति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते---भद्रपाद इति ।।
</7-3-18>
हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।। <7-3-19> ।।
हृद्, भग, सिन्धु---इत्येवमन्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । सुहृदयस्येदं सौहार्दम् । सुहृदयस्य भावः सौहार्द्यम् । सुभगस्य भावः सौभाग्यम् । दौर्भाग्यम् । सुभगाया अपत्यं सौभागिनेयः । दौर्भागिनेयः ।
कल्याण्यादिषु(5-1-126/1131) `सुभगदुर्भग इति पठ्यते । `सुभग मन्त्रे इत्युद्गात्रादिषु(5-1-129/1794) पठ्यते, तत्रोत्तरपदवृद्धिर्नेष्यते---महते सौभगाय; छन्दसि सर्वविधीनां विकल्पितत्वात् ।
सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तुसैन्धवः । पानसैन्धवः । सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरिष्यते इत्यण्प्रत्ययः ।।

</7-3-19>
अनुशतिकादीनां च ।। <7-3-20> ।।
`अनुशतिक---इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । अनुशतिकस्येदम् आनुशातिकम् । अनुहोडेन चरति आनुहौडिकः । अनुसंवरणे दीयते आनुसांवरणम् । अनुसंवत्सरे दीयते आनुसांवत्सरिकः । अङ्गारवेणुर्नाम कश्चित्, तस्यापत्यम् आङ्गारवैणवः ।
असिहत्य---तत्र भवं आसिहात्यम् । `अस्यहत्य इति केचित् पठन्ति, ततोऽपि विमुक्तादित्वाद्ण्(5-2-61/1861) । अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति आस्यहात्यः । `अस्यहेतिः इत्येवमपरे पठन्ति, अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः । अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक् ।
वध्योग इति---बिदादिरयम्(4-1-104/1106), तस्यापत्यं वाध्यौगः । पुष्करसत्, अनुहरत्--एतौ बाह्वादिषु(4-1-96/1096) पठ्येते । पौष्करसादिः, आनुहारतिः । कुरुकत---गर्गादिः(4-1-105/1107), कौरुकात्यः । कुरुपञ्चाल---कुरुपञ्चालेषु भवः कौरुपाञ्चालः । `जनपदसमुदायो जनपदग्रहणेन न गृह्यते इति वुञ् न भवति---उदकशुद्धस्यापत्यम् औदकशौद्धिः ।
इहलोक, परलोक---तत्र भवः ऐहलौकिकः, पारलौकिकः । `लोकोत्तरपदस्य(वा.459) इति ठञ् । सर्वलोक---तत्र विदितः सार्वलौकिकः । सर्वपुरुषस्येदं सार्वपौरुषम् । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । प्रयोग---तत्र भवः प्रायोगिकः । परस्त्री---पारस्त्रैणेयः । कुलटाया वा(4-1-127/1132) इतीनङ् ।

- राजपुरुषात् ष्यञि * (ग.सू.176)। राजपौरुष्यम् । ष्यञीति किम् ? राजपुरुषस्यापत्यं राजपुरुषायणिः । उदीचां वृद्धादगोत्रात्(4-1-157/1181) इति फिञ् ।

शतकुम्भसुखशयनादयः---शतकुम्भे भवः शातकौम्भः । सौखशायनिकः । पारदारिकः । सूत्रनडस्यापत्यं सौत्रनाडिः । आकृतिगणश्चायमिष्यते । तेनेदमपि सिद्धं भवति---अभिगममर्हति आभिगामिकः । अधिदेवे भवमाधिदैविकम् । आधिभौतिकम् । चतस्र एव विद्याः चातुर्वैद्यम् । स्वार्थे ष्यञ् ।
अनुशतिक । अनुहोड । अनुसंवरण । अनुसंवत्सर । अङ्गारवेणु । असिहत्य । वध्योग । पुष्करसत् । अनुहरत् । कुरुकत । कुरुपञ्चाल । उदकशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री । * राजपुरुषात् ष्यञि * (ग.सू.176)। सूत्रनड । अनुशतिकादिः ।।
</7-3-20>
देवताद्वन्द्वे च ।। <7-3-21> ।।
देवताद्वन्द्वे च पूर्वपदस्योत्तपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । `आग्निमारुतीमनड्वाहीमालभेत(मै.2-5-7) । आग्निमारुतं कर्म ।
यो देवताद्वन्द्वः सूक्तहविः सम्बन्धी, तत्रायं विधिः । इह च न भवति---स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः । ब्रह्मप्रजापती---ब्राह्मप्रजापत्यम् ।।
</7-3-21>
नेन्द्रस्य परस्य ।। <7-3-22> ।।
इन्द्रशब्दस्य परस्य यदुक्तं तन्न भवति । सौमेन्द्रः । आग्नेन्द्रः ।
परस्येति किम् ? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत् ।
इन्द्रशब्दे द्वावचौ---तत्र तद्धिते एकस्य यस्येति च(6-4-148/311)इति लोपः, अपरस्य पूर्वेण सहैकादेश इत्यप्राप्तिरेव वृद्धेः, तददें प्रतिषेधवचनं ज्ञापकम्---बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति, पश्चादेकादेश इति । तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति ।।
</7-3-22>
दीर्घाच्च वरुणस्य ।। <7-3-23> ।।
दीर्घादुत्तरस्य वरुणस्य यदुक्तं तन्न भवति । ऐन्द्रावरुणम् । मैत्रावरुणम् ।
दीर्घादिति किम् ? `आग्निवारुणीमनड्वाहीमालभेत(काठ.13-6) । अग्नेः---ईदग्नेः
सोमवरुणयोः(6-3-27/923) इत्यस्यानङपवादस्य इद्वृद्धौ(6-3-28/925) इति प्रतिषेधो विधीयते, तेन दीर्घात्परो न भवति ।।
</7-3-23>
प्राचां नगरान्ते ।। <7-3-24> ।।
प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । सुह्मनगरे भवः सौह्मनागरः । पौण्ड्रनागरः ।
प्राचामिति किम् ? मद्रनगरमुदक्षु, तत्र भवः माद्रनगरः ।।
</7-3-24>
जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ।। <7-3-25> ।।
जङ्गल, धेनु, वलज---इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति, विभाषितमुत्तरम्=उत्तरपदस्य विभाषा भवति तद्धिते ञिति, णिति, किति च परतः । कुरुजङ्गलेषु भवं कौरुजङ्गलम्, कौरुजाङ्गलम् । वैश्वधेनवम्, वैश्वधैनवम् । सौवर्णवलजः, सौवर्णवालजः ।।

</7-3-25>
अर्धात्परिमाणस्य पूर्वस्य तु वा ।। <7-3-26> ।।
अर्धशब्दात्परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति च परतः । अर्धद्रोणेन क्रीतमार्धद्रौणिकम्, अर्धद्रौणिकम् । आर्धकौडविकम्, अर्धकौडविकम् ।
परिमाणस्येति किम् ? अर्धक्रोशः प्रयोजनमस्यार्धक्रोशिकम् ।।
</7-3-26>
नातः परस्य ।। <7-3-27> ।।
अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, च परतः । अर्धप्रस्थिकः, आर्धप्रस्थिकः । अर्धकंसिकः, आर्धकंसिकः ।
अत इति किम् ? आर्धकौडविकः । तपरकरणं किम् ? इह मा भूत्---अर्धखार्यां भवा अर्धखारी । किं च स्यात् ? अर्धखारी भार्या यस्य अर्धखारीभार्यः---वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे(6-3-39/840) इति पुंवद्भावप्रतिषेधो न स्यात् । यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते, स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते, यथा---वैयाकरणी भार्या अस्य वैयाकरणभार्य इति ।।
</7-3-27>
प्रवाहणस्य ढे ।। <7-3-28> ।।
प्रवाहणस्य ढे परत उत्तपदस्याचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति । प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः । शुभ्रादिभ्यश्च(4-1-123/1126) इति ढक् प्रत्ययः ।।
</7-3-28>
तत्प्रत्ययस्य च ।। <7-3-29> ।।
ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः । प्रावाहणेयकम्, प्रवाहणेयकम् ।
बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः ।।
</7-3-29>
नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ।। <7-3-30> ।।
नञ उत्तरेषां शुचि, ईश्वर, क्षेत्रज्ञ, कुशल, निपुण--इत्येतेषामचामादेरचो वृद्धिर्भवति, पूर्वपदस्य वा भवति तद्धिते ञिति, णिति, किति च परतः । शुचि--आशौचम्, अशौचम् । ईश्वर---आनैश्वर्यम्, अनैश्वर्यम् । क्षेत्रज्ञ---आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम् । कुशल---आकौशलम्, अकौशलम् । निपुण---आनैपुणम्, अनैपुणम् ।
अत्र केचिदाहुः--इयं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते । न नञ्पूर्वात्तत्पुरुषात्(5-1-121/1783)
इत्युत्तरो भावप्रत्ययः प्रतिषिध्यते, तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद्भवतीति ।
तदपरे न मृष्यन्ते---भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्तमपत्यादिष्वर्थेषु नञ्समासादेव विद्यते । बहुव्रीहेश्च नञ्समासाद्भाववचनोऽप्यस्ति, तत्राङ्गाधिकारोपमर्द्दनं न युज्यत इति ।
अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु पठ्येति, ततस्ताभ्यां भावे ष्यञ्भवति ।।
</7-3-30>
यथातथायथापुरयोः पर्यायेण ।। <7-3-31> ।।
यथातथ, यथापुर---इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । आयथातथ्यम्, अयाथातथ्यम् । आयथापुर्यम्, अयाथापुर्यम् । अयथातथ, अयथापुरेति ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ ।
सुत्रे यथातथ---यथापुरशब्दौ तु यथाऽसादृश्ये(2-1-7/661) इति अव्ययीभावसमासौ, तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम् । भाष्ये तु यथा दर्शितम्---`अयथातथा भावः(म.बा.3-322) इति तथा `सुप्सुपा इति समासो लक्ष्यते ।।
</7-3-31>
हनस्तोऽचिण्णलोः ।। <7-3-32> ।।
`तद्धितेषु इति निवृत्तम्, तत्सम्बद्धम् `किति इत्यपि । `ञ्णिति इति वर्तते । हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः, चिण्णलौ वर्जयित्वा घातयति । घातकः । साधुघाती । घातङ्घातम् । घातो वर्तते ।
अचिण्णलोरिति किम् ? अघानि । जघान ।
धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते । इह न भवति---वार्त्रघ्नमितरदिति ।।
</7-3-32>
आतो युक्चिण्कृतोः ।। <7-3-33> ।।
आकारान्तस्याङ्गय चिणि कृति ञ्णिति युगागमो भवति । अदायि । अधायि । कृति---दायः, दायकः; धायः, धायकः ।
चिण्कृतोरिति किम् ? ददौ, दधौ । चौडिः, बालाकिः---बाह्वादित्वादिञ् (4-1-96/1096)। ज्ञा देवता अस्य ज्ञः ।।
</7-3-33>
नोदात्तोपदेशस्य मान्तस्यानाचमेः ।। <7-3-34> ।।

उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तन्न भवति । किञ्चोक्तम् ? अत उपधायाः(7-2-116/2282) इति वृद्धिः । अशमि, अतमि, अदमि । कृति खल्वपि---शमकः, तमकः, दमकः । शमः, तमः, दमः ।
उदात्तोपदेशस्येति किम् ? यामकः, रामकः ।
कथमुद्यमोपरमौ ? `अङ उद्यमे(धा.पा.358), `यम उपरमे(धा.पा.985)---इति निपातनादनुगन्तव्यौ । उपदेशग्रहणं किम् ? शमी, दमी, तमीत्यत्र यथा स्यात्; इह मा भूत्---यामकः, रामक इति । मान्तस्येति किम् ? चारकः, पाठकः । अनाचमेरिति किम् ? आचामकः ।

- अनाचमिकमिवमीनामिति वक्तव्यम् * । आचामः । कामः । वामः । आम इति---चौरादिकस्य णिचि वृद्धौ सत्यां भवति । तत्र हि मित्त्वं नास्ति---`नान्ये मितोऽहेतौ(धा.पा.985) इति ।

`सूर्यविश्रामा भूमिः---इत्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते ।
चिण्कृतोरित्येव---शशाम, तताम ।।
</7-3-34>
जनिवध्योश्च ।। <7-3-35> ।।
जनि, वधि---इत्येतयोश्चिणि कृति च ञ्णिति यदुक्तं तन्न भवति । अजनि, जनकः, प्रजनः । अवधि, वधकः, वधः ।
वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति, तस्यायं प्रतिषेधो विधीयते `भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते---इति हि प्रयोगो दृश्यते वधादेशस्यादन्तत्वादेव वृद्धेरभावः ।
चिण्कृतोरित्येव---`जजान गर्भं महिमानमिन्द्रम्(अ.वे.3-10-12) ।।
</7-3-35>
अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।। <7-3-36> ।।
सर्वं निवृत्तम्, `अङ्गस्य इति वर्त्तते । अर्ति, ह्री, व्ली, री क्नूयी, क्ष्मायी---इत्येतेषामङ्गानामाकारान्तानां च पुगागमो भवति णौ परतः । अर्ति---अर्पयति । ह्री---ह्रेपयति । व्ली---व्लेपयति । री--रेपयति । क्नूयी---क्नोपयति । क्ष्मायी---क्ष्मापयति । आकारान्तानाम्-दापयति, धापयति ।
अर्तीति `ऋ गतिप्रापणयोः(धा.पा.937), `ऋ गतौ(धा.पा.1099)---इति द्वयोरपि धात्वोर्ग्रहणम् ।
रीत्यपि--`री गतिरेषणयोः(धा.पा.1501) `रीङ् श्रवणे(धा.पा.1139) इति ।
पुकः पूर्वान्तकरणम्---अदीदपदित्यत्रोपधाह्रस्वो यथा स्यादिति ।।
</7-3-36>
शाच्छासाह्वाव्यावेपां युक् ।। <7-3-37> ।।
शा, छा, सा, ह्वा, व्या, वे, पा---इत्येतेषामङ्गानां युगागमो भवति णौ परतः । शा--निशाययति । छा---अवच्छाययति । सा-अवसाययति । ह्वा---ह्वाययति । व्या---संव्याययति । वे---वाययति । पा---पाययति ।
पाग्रहणे `पै ओवै शोषणे(धा.पा.921,922)---इत्यस्यापीह ग्रहणमिच्छन्ति । `पा रक्षणे(धा.पा.1057) इत्यस्य लुग्विकरणत्वान्न भवति ।

- लुगागमस्तु तस्य वक्तव्यः * (म.भा.3-323)। पालयति ।
- धूञ्प्रीञोर्नुग्वक्तयः * (म.भा.3-323)। धूनयति । प्रीणयति ।

एतेऽपि पूर्वान्ता एव क्रियन्ते, तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणत्---इत्युपधाह्रस्वत्वं भवति ।
शाच्छासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम् । किमेतस्याख्याने प्रयोजनम् ? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीत्युपदिश्यते । तेनाध्यापयति, जापयति---इत्येवमादि सिद्धं भवति ।।
</7-3-37>
वो विधूनने जुक् ।। <7-3-38> ।।
`वा---इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः । पक्षेणोपवाजयति ।
विधूनन इति किम् ? आवापयति केशान् ।
किमर्थं सूत्रम्, `वज गतौ(धा.पा.252) ण्यन्तस्य सिद्धत्वात् ? वातेः पुग्मा भूदित्येवमर्थम् । `पै ओवै शोषणे(धा.पा.921,922) इत्यस्यैतद्रूपम् ।।
</7-3-38>
लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ।। <7-3-39> ।।
ली, ला--इत्येतयोरङ्गयोरन्यतरस्यां नुक्, लुक्---इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे । घृतं विलाययति । विलीनयति घृतम् । विलालयति । विलापयति ।
ली ई इतीकारः प्रश्लिष्यते, तत ईकारान्तस्यैव लुग्भवति, न तु कृतात्वस्य विभाषा लीयतेः(6-1-51/2509) इति ।
स्नेहविपातन इति किम् ? जतु विलापयति । जटाभिरालापयते ।
`ली इति लीलीङोर्ग्रहणम् । `ला इति लातेः, कृतात्वस्य च लीयतेः ।।
</7-3-39>
भियो हेतुभये षुक् ।। <7-3-40> ।।
`भी इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः । मुण्डो भीषयते । जटिलो भीषयते ।

अत्रापि भी + ई इतीकारप्रश्लेषः कृतात्वस्य षुग्निवृत्त्यर्थः । मुण्डो भापयते---इत्येवं हि तत्र भवति ।
हेतुभय इति किम् ? कुञ्चिकयैनं भाययति । नात्र हेतुः प्रयोजको भयकारणम्, किं तर्हि ? कुञ्चिका ।।
</7-3-40>
स्फायो वः ।। <7-3-41> ।।
`स्फाय् इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः । स्फावयति ।।
</7-3-41>
शदेरगतौ तः ।। <7-3-42> ।।
शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः पुष्पाणि शातयति ।
अगताविति किम् ? गाः शादयति गोपालकः ।।
</7-3-42>
रुहः पोऽन्यतरस्याम् ।। <7-3-43> ।।
रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति णौ परतः । व्रीहीन् रोपयति । व्रीहीन् रोहयति ।।
</7-3-43>
प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ।। <7-3-44> ।।
प्रत्ययस्थात्ककारात् पूर्वस्याकारस्य इकारादेशो भवति, आपि परतः, स चेदाप्सुपः परो न भवति । जटिलिका । मुण्डिका । कारिका । हारिका । एतिकाश्चरन्ति ।
प्रत्ययग्रहणं किम् ? शक्नोतीति शका ।
स्थग्रहणं विस्पष्टार्थम्, ककारमात्रं प्रत्ययो नास्तीति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम् ।
कादिति किम् ? मण्डना । रमणा । पूर्वस्येति किम् ? परस्य मा भूत्---पटुका । मृदुका । अत इति किम् ? गोका । नौका । तपरकरणं किम् ? राका, धाका । आपीति किम् ? कारकः, धारकः ।
अथ आपीत्यनेन किं विशिष्यते ? ककारः । यद्येवम्, कारिकेत्यत्रापि न प्राप्नोति, अकारेण व्यवहितत्वात् ? एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ? वचनाद् व्यवधानमीदृशं यत्स्थानिवद्भावकृतमेकेन वर्णेन तदाश्रीयते । रथ कट्यादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमिति इत्त्वं न भवति ।
असुप इति किम् ? बहवः परिव्राजका अस्यां मथुरायां बहुपरिव्राजका मथुरा । सुबन्तादयं परिव्राजकशब्दात्पर आबिति प्रतिषेधो भवति । प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः । पर्युदासे हि सति समुदायादसुबन्तात्पर आबितीत्त्वमत्र स्यादेव । अविद्यमानः सुप् यस्मिन् सोऽयमसुबिति---अयमपि नाश्रीयते । तथा हि सति बहुचर्मिकेत्यत्रापि न स्यात्।

- मामकनरकयोरुपसंख्यानं कर्त्तव्यमप्रत्ययस्थत्वात् * (म.भा.3-324)। मम इयं मामिका । नरिका । अणि ममकादेशः । केवलमामक(4-1-30/488) इति नियमात् संज्ञाच्छन्दसोरीकारो नास्त्यत्र । तेनाणप्रत्ययान्तादपि टाब्भवति,नरान् कायतीति नरिका । आतोऽनुपसर्गे कः(3-2-3/2915) इति कः प्रत्ययः ।
- प्रत्ययनिषेधे त्यक्त्यपोश्चोपसंख्यानम् * (म.भा.3-324)। उदीचामातः स्थाने यकपूर्वायाः(7-3-46/465) इति विकल्पो मा भूदिति, दाक्षिणात्यिका । इहत्यिका ।।

</7-3-44>
न यासयोः ।। <7-3-45> ।।
`या, `सा---इत्येतयोरिकारादेशो न भवति । यका । सका ।
`यासा इति निर्देशोऽतन्त्रम्, यत्तदोरुपलक्षणमेतत् । इहापि प्रतिषेध इष्यते---यकांयकामधीमहे, तकांतकां पचामहे इति ।

- यासयोरित्त्वप्रतिषेधे त्यकन उपसंख्यानम् * (म.भा.3-325)। उपत्यका । अधित्यका ।
- पावकादीनां छन्दस्युपसंख्यानम् * (म.भा.3-325)। `हिरण्यवर्णाः शुचयः पावकाः(अ.वे.1-33-1) । यासु अलोमकाः । छन्दसीति किम् ? पाविका ।
- आशिषि चोपसंख्यानम् * (म.भा.3-325)। जीवताद् जीवका । नन्दताद् नन्दका । भवताद् भवका ।
- उत्तरपदलोपे चोपसंख्यानम् * (म.भा.3-325)। देवदत्तिका, देवका । यज्ञदत्तिका, यज्ञका ।
- क्षिपकादीनां चोपसंख्यानम् * (म.भा.3-325)। क्षिपका । ध्रुवका ।
- तारका ज्योतिष्युपसंख्यानम् *(म.भा.3-325) । तारका । ज्योतिषीति किम् ? तारिका दासी ।
- वर्णका तान्तव उपसंख्यानम् * (म.भा.3-325)। वर्णका=प्रावरणभेदः । तान्तव इति किम् ? वर्णिका भागुरी लौकायते ।

- वर्तका शकुनौ प्राचामुपसंख्यानम् * (म.बा.3-326)। वर्तका शकुनिः । प्राचामन्यत्र उदीचां तु---वर्तिका । शकुनाविति किम् ? वर्तिका भागुरी लौकायतस्य ।
- अष्टका पितृदैवत्ये * (म.भा.3-326)। अष्टका । पितृदैवत्य इति किम् ? अष्टिका खारी ।
- वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम् * (म.भा.3-326)। सूतिका, सूतका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका ।।

</7-3-45>
उदीचामातः स्थाने यकपूर्वायाः ।। <7-3-46> ।।
उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्चातः स्थाने योऽकारस्तस्यातः स्थाने इकारादेशो भवति । `उदीचाम्---ग्रहणं विकल्पार्थम् । इभ्यिका, इभ्यका । क्षत्त्रियिका, क्षत्त्रियका । ककारपूर्वायाः---चटकिका, चटकका । मूषिकिका, मूषिकका ।
आत इति किम् ? सांकाश्ये भवा सांकाश्यिका ।
स्थानग्रहणमनुवादेऽपि स्थानसम्बन्धप्रतिपत्त्यर्थम् । `आत इत्यनेन ह्यत इति स्थानी विशिष्यते ।
यकपूर्वाया इति किम् ? अश्वा, अश्विका । `यकपूर्वायाः इति स्त्रीलिङ्गनिर्देशः---आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम् । इह न भवति---शुभं यातीति शुभंयाः, शुभंयिका । भद्रं यातीति भद्रंयाः, भद्रंयिका ।

- यकपूर्वाया धात्वन्तप्रतिषेधः * (म.भा.3-326)। धात्वन्तयोर्यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः । सुनयिका । सुशयिका । सुपाकिका । सुशोकिका ।

</7-3-46>
भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।। <7-3-47> ।।
एषामातः स्थाने योऽकारस्तस्य इत्वं न भवति उदीचामाचार्याणां मतेन । भस्त्रा---भस्त्रका, भस्त्रिका; अभस्त्रका, अभस्त्रिका । एषका, एषिका । अजा---अजका, अजिका; अनजका, अनजिका । ज्ञा---ज्ञका, ज्ञिका, अज्ञका, अज्ञिका । द्वा---द्वके, द्विके । स्वा---स्वका, स्विका; अस्वका, अस्विका ।
एषाद्वे नञ्पूर्वे न प्रयोजयतः, किं कारणम् ? अत्र हि सति यदि साकच्काभ्यां नञ्सामासः, अथापि कृते नञ्समासे पश्चादकच् उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां सत्यां त्यदाद्यत्वे सति टापा भवितव्यम्, सोऽन्तर्वर्त्तिन्या विभक्त्या सुबन्तात्पर इति इत्वस्य प्राप्तिरेव नास्ति । तेन अनेषका, अद्वके---इत्येव नित्यं भवितव्यम् ।
स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति ।
`भस्त्रा---इत्ययमभाषितपुंस्कः, तस्य अभाषितपुंस्काच्च(7-3-48/467) इत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम् । अविद्यमाना भस्त्रा यस्या अभस्त्रा, साल्पा अभस्त्रका, अभस्त्रिका । अत्रोपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद् यष्टाबुत्पद्यते तस्य केऽणः(7-4-13/834) इति यो ह्रस्वः, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति ।`नञ्पूर्वाणामपि इत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते । निर्भस्त्रिका, निर्भस्त्रका । बहुभस्त्रिका, बहुभस्त्रका---इत्येवमनयोरपीष्यते । अत्र `नञ्पूर्वाणाम्
इति वचनमनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थः ।।
</7-3-47>
अभाषितपुंस्काच्च ।। <7-3-48> ।।
अभाषितपुंस्काद्विहितस्यातः स्थाने योऽकारस्तस्योदीचामाचार्याणां मतेन इकारादेशो न भवति । खट्वका, खट्विका । अखट्वका, अखट्विका । परमखट्वका, परमखट्विका ।
बहुव्रीहौ यदा कपि ह्रस्वः क्रियते तदा भवितव्यमनेन विधिना । अत्राप्यभाषितपुंस्काद्विहितस्यातः स्थाने भवत्यकार इति । यदा तु अविद्यमाना खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विकेति, तदा न भवति । तथा अतिक्रान्ता खट्वामतिखट्वा, अल्पा अतिखट्वा अतिखट्विका ।।
</7-3-48>
आदाचार्याणाम् ।। <7-3-49> ।।
अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामाकारादेशो भवति । खट्वाका, अखट्वाका, परमखट्वाका ।।
</7-3-49>
ठस्येकः ।। <7-3-50> ।।
अङ्गस्य निमित्तं यष्ठः, कश्चाङ्गस्य निमित्तम् ? प्रत्ययः, तस्य प्रत्ययठस्य इक इत्ययमादेशो भवति । प्राग्वहतेष्ठक्(4-4-1/1548), आक्षिकः, शालाकिकः । लवणाट्ठञ्(4-4-52/1501), लावणिकः ।
ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः; तदा इहाप्यकार उच्चारणार्थः, वर्णमात्रं तु स्थानित्वेनोपादीयते । सङ्घातग्रहणे तु प्रत्ययेऽत्रापि सङ्घातग्रहणमेव । तत्र `कणेष्ठः(उ.108), कण्ठः---इत्येवमादीनामुणादीनाम् उणादयो बहुलम्(3-3-1/3169) इति न भवति । मथितं पण्यमस्य माथितिकः---इत्यत्र तु यस्येति च(6-4-148/311) इति लोपे कृते इसुसुक्तान्तात्कः(7-3-51/1221) इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति; `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति न भवति । यस्येति च(6-4-148/311) इति लोपस्य स्थानिवद्भावाद्वा । पूर्वस्मादपि हि विधौ स्थानिवद्भावः ।।
</7-3-50>

इसुसुक्तान्तात् कः ।। <7-3-51> ।।
इस्, उस्---इत्येवमन्तानामुगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य `क इत्ययमादेशो भवति । इस्---सार्पिष्कः । उस्---धानुष्कः । याजुष्कः । उक्---नैषादकर्षुकः । शाबरजम्बुकः । मातृकम् । पैतृकम् । तान्तात्---औदश्वित्कः । शाकृत्कः । याकृत्कः ।
इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति---आशिषा चरति आशिषिकः । उषा चरति औषिकः ।

- दोष उपसंख्यानम् * । दोर्भ्यां चरति दौष्कः ।।

</7-3-51>
चजोः कु घिण्ण्यतोः ।। <7-3-52> ।।
चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः । घिति---पाकः । त्यागः । रागः । ण्यति---पाक्यम् । वाक्यम् । रेक्यम् ।।
</7-3-52>
न्यङ्क्वादीनां च ।। <7-3-53> ।।
`न्यङ्कु---इत्येवमादीनां कवर्गादेशो भवति । न्यङ्कुः---`नावञ्चेः(उ.17) इति उप्रत्ययः । मद्गुः---`मिमस्जिभ्य उः(उ.7) इति मस्जेरुप्रत्ययः । भृगुः---`प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च(उ.28) इत्युप्रत्ययः ।
दूरेपाकः । फलेपाकः । दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव---पचाद्यच्(3-1-134/2896), निपातनाद्वृद्धिः, तत्पुरुषे कृति बहुलम्(6-3-14/972) इति सप्तम्या अलुक् । क्षणेपाकः---इत्यपि हि केचित् पठन्ति । दूरेपाकाः, फलेपाकाः---इति टाबन्तमपरेऽधीयते । उकारान्तावपरे---दूरेपाकुः, फलेपाकुरिति । तेषामुप्रत्ययो निपातनादेव ।
तक्रम्, वक्रमिति---तञ्चतेः, वञ्चतेश्च `स्फायितञ्चिवञ्चि(उ.178) इत्यादिना सूत्रेण रक् । व्यतिषङ्गः । व्यतिषजतीति पचाद्यच् (3-1-134/2896)। अनुषङ्गः । अवसर्गः । उपसर्गः । मेघः । श्वपाकः, मांसपाकः, कपोतपाकः, उलूकपाक इति---कर्मोपपदादण्प्रत्ययः ।
संज्ञायम्---मेघः । अवदाघः । निदाघः । अर्हतेर्घञ्---अर्घः । अवपूर्वस्य निपूर्वस्य च दहेः---अवदाघः । निदाघः ।
संज्ञाया अन्यत्र---अर्हः । अवदाहः । निदाहः । न्यग्रोधः, वीरुत्---इत्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि विपूर्वस्य क्विपि धकारो विधीयते । न्यग्रोहयतीति न्यग्रोधः । विरोहयतीति वीरुत् ।।
</7-3-53>
हो हन्तेर्ञ्णिन्नेषु ।। <7-3-54> ।।
हन्तेर्हकारस्य कवर्गादेशो भवति ञिति, णिति प्रत्यये परतो नकारे च । घातयति । घातकः । साधुघाती । घातङ्घातम् । घातो वर्तते । नकारे---घ्नन्ति । घ्नन्तु । अघ्नन् ।
ह इति किम् ? अलोऽन्त्यस्य मा भूत् । हन्तेरिति किम् ? प्रहारः । प्रहारकः ।
ञ्णित्प्रत्ययो हन्तेर्विशेषणम् । नकारो हकारस्य---नकारे अनन्तरस्य हन्तिहकारस्येति । तच्चानन्तर्यं श्रुतिकृतं सन्निपातकृतमाश्रीयते । स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्; वचनसामर्थ्यात् ।
यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते, तथापि `येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्(व्या.प.46) इति ञ्णिति धात्ववयवेन व्यवहितेऽपि सति भवति । इह तु न भवति---हननमिच्छति हननीयति, हननीयतेर्ण्वुल्, हननीयक इति ।।
</7-3-54>
अभ्यासाच्च ।। <7-3-55> ।।
अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति । जिघांसति । जङ्घन्यते । अहं जघन ।
अभ्यासनिमित्ते प्रत्ययो हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत् कुत्वम् । इह न भवति--हननीयितुमिच्छति जिहननीयिषति ।।
</7-3-55>
हेरचङि ।। <7-3-56> ।।
हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि । प्रजिघीषति । प्रजेघीयते । प्रजिघाय ।
अचङीति किम् ? प्राजीहयद् दूतम् ।
अचङीति शक्यमकर्त्तुम् । कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति विज्ञायमाने प्राप्तिरेव नास्ति ? तत्क्रियते ज्ञापकार्थम् । एतज्ज्ञाप्यते---`हेरचङि इति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धं भवति ।।
</7-3-56>
सन्लिटोर्जेः ।। <7-3-57> ।।
सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति । जिगीसति । जिगाय । सन्लिटोरिति किम् ? जेजीयते ।
जिनातेः सम्प्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात्तस्य ग्रहणं न भवति । जिज्यतुः, जिज्युः---इत्येव भवति ।।
</7-3-57>
विभाषा चेः ।। <7-3-58> ।।
चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति । चितीषति, चिकीषति । चिकाय, चिचाय ।
`सन्लिटोः इत्येव---चेचीयते ।

</7-3-58>
न क्वादेः ।। <7-3-59> ।।
कवर्गादेर्धातोश्चजोः कवर्गादेशो न भवति । कूजो वर्त्तते । खर्जः । गर्जः । कूज्यं भवता, खर्ज्यं गर्ज्यं भवता ।।
</7-3-59>
अजिव्रज्योश्च ।। <7-3-60> ।।
अजि, व्रजि---इत्येतयोश्च कवर्गादेशो न भवति । समाजः । उदाजः । व्रजि---परिव्राजः । परिव्राज्यम् ।
`अजेस्तु---अजेर्व्यघञपोः(2-4-56/2292) इति वीभावस्य विधानात् ण्यति नास्त्युदाहरणम् ।।
</7-3-60>
भुजन्युब्जौ पाण्युपतापयोः ।। <7-3-61> ।।
भुज, न्युब्ज---इत्येतौ शब्दौ निपात्येते पाणौ, उपतापे च । भुज्यतेऽनेनेति भुजः=पाणिः । हलश्च(3-3-121/3300) इति घञ् । तत्र कुत्वाभावः गुणाभावश्च निपात्यते । `उब्ज आर्जवे(धा.पा.1304), न्युब्जिताः शेरतेऽस्मिन्निति न्युब्जः । उपतापः=रोगः, तथैव घञि कुत्वाभावो निपात्यते ।
पाण्युपतापयोरिति किम् ? भोगः, समुद्गः ।।
</7-3-61>
प्रयाजानुयाजौ यज्ञाङ्गे ।। <7-3-62> ।।
प्रयाज, अनुयाज---इत्येतौ निपात्येते यज्ञाङ्गे । `पञ्च प्रयाजाः(आश्व.श्रौ.1-4-2) । पञ्चानुयाजाः । त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात् ।
यज्ञाङ्गे इति किम् ? प्रयागः अनुयागः । प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्---अन्यत्राप्येवम्प्रकारे कुत्वं न भवति । `एकादशोपयाजाः(ऐ.ब्रा.2-1-8), उपांशुयाजमन्तरा यजति, `अष्टौ पत्नीसंयाजा भवन्ति(ऐ.ब्रा.2-3-2), `ऋतुयाजैश्चरन्ति(ऐ.ब्रा.2-9-9)---इत्येवमादि सिद्धं भवति ।।
</7-3-62>
वञ्चेर्गतौ ।। <7-3-63> ।।
वञ्चेरङ्गस्य गतौ वर्तमानस्य कवर्गादेशो न भवति । वञ्च्यं वञ्चन्ति वणिजः ।
गताविति किम् ? वङ्कं काष्ठम् । कुटिलमित्यर्थः ।।
</7-3-63>
ओक उचः के ।। <7-3-64> ।।
उचेर्धातोः के प्रत्यये `ओकः इति निपात्यते । किं पुनरत्र निपात्यते ? कुत्वम्, गुणश्च । न्योकः शकुन्तः । न्योको गृहम् ।
कर्त्तरि इगुपधलक्षणः कः प्रत्ययः । अधिकरणादौ तु कारकान्तरे `घञर्थे कविधानम्(वा.306) इति ।
किमर्थं पुनरयं घञ्येव न व्युत्पाद्यते ? स्वरार्थमन्तोदात्तोऽयमिष्यते, घञि सत्याद्युदात्तः स्यात् ।
दिवौकसः, जलौकसः---इत्येवमादावप्यसुनि प्रत्यये उणादयो बहुलम्(3-3-1/3169) इति कुत्वं द्रष्टव्यम् ।।
</7-3-64>
ण्य आवश्यके ।। <7-3-65> ।।
ण्ये परतः आवश्यकेऽर्थे कवर्गो न भवति । अवश्यपाच्यम् । अवश्यवाच्यम् । अवश्यरेच्यम् ।
आवश्यके इति किम् ? पाक्यम् । वाक्यम् । रेक्यम् ।।
</7-3-65>
यजयाचरुचप्रवचर्चश्च ।। <7-3-66> ।।
यज, याच, रुच, प्रवच, ऋच---इत्येतेषां ण्ये परतः कवर्गादेशो न भवति । यज---याज्यम् । याच---याच्यम् । रुच---रोच्यम् । प्रवच---प्रवाच्यम् ।
ऋच---अर्च्यम् । ऋदुपधादपि ऋचेरत एव निपातनाद् ण्यद्भवति ।
प्रवचग्रहणं शब्दसंज्ञार्थम् । प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति ।
अपरे पुनराहुः---उपसर्गपूर्वस्य नियमार्थम्---प्रपूर्वस्यैव वचेरशब्दसंज्ञायां कुत्वप्रतिषेधो यथा स्यात्,
अन्योपसर्गपूर्वस्य मा भूदिति । `अविवाक्यमहः इति पठन्ति, एतत्तु विशेष एवेष्यते---दशरात्रस्य यद् दशममहः । अन्यत्राविवाच्यमेव भवति ।

- ण्यति प्रतिषेधे त्यजेरुपसंख्यानम् * (म.भा.3-332)। त्याज्यम् ।।

</7-3-66>
वचोऽशब्दसंज्ञायाम् ।। <7-3-67> ।।
वचोऽशब्दसंज्ञायां ण्यति परतः कवर्गो न भवति । वाच्यमाह । अवाच्यमाह ।
अशब्दसंज्ञायामिति किम् ? अवघुषितं वाक्यमाह ।।
</7-3-67>
प्रयोज्यनियोज्यौ शक्यार्थे ।। <7-3-68> ।।
प्रयोज्य, नियोज्य---इत्येतौ शब्दौ शक्यार्थे निपात्येते । शक्यः प्रयोक्तुं प्रयोज्यः । शक्यो नियोक्तुं नियोज्यः ।
शक्यार्थ इति किम् ? प्रयोग्यः, नियोग्यः ।।

</7-3-68>
भोज्यं भक्ष्ये ।। <7-3-69> ।।
भोज्यं निपात्यते भक्ष्येऽभिधेये । भोज्य ओदनः । भोज्या यवागूः । इह भक्ष्यमभ्यवहार्यमात्रम् ।
भक्ष्य इति किम् ? भोग्यः कम्बलः ।।
</7-3-69>
घोर्लोपो लेटि वा ।। <7-3-70> ।।
घुसंज्ञकानां लेटि परतो वा लोपो भवति । `दधद्रत्नानि दाशुषे(ऋ.4-15-3) । `सोमो ददद् गन्धर्वाय(ऋ.10-85-41) । न च भवति---यदग्निरग्नये ददात् ।
आडागमे सति लोपेऽपि ददादिति सिद्धं भवति । तत्र वावचनं विस्पष्टार्थम् । एषा हि कस्यचिदाशङ्का स्याद्---ददादित्येव नित्ये प्राप्ते लोप आरभ्यमाणो बाधत एवैतद्रूपमिति ।।
</7-3-70>
ओतः श्यनि ।। <7-3-71> ।।
ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति । शो---निश्यति । छो---अवच्छ्यति । दो---अवद्यति । सो---अवस्यति ।।
</7-3-71>
क्सस्याचि ।। <7-3-72> ।।
क्सस्याजादौ प्रत्यये लोपो भवति । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि ।
अचीति किम् ? अधुक्षत् । अधुक्षताम् । ककारवत उपादानं किम् ? इह मा भूत्---उत्सौ, उत्साः । वत्सौ, वत्साः ।।
</7-3-72>
लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।। <7-3-73> ।।
दुह, दिह, लिह, गुह---इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवति । अदुग्ध, अधुक्षत । अदुग्धाः, अधुक्षथाः । अदुग्ध्वम्, अधुक्षध्वम् । अदुह्वहि, अधुक्षावहि । दिह---अदिग्ध, अधिक्षत । लिह---अलीढ, अलिक्षत । गुह--न्यगूढ, न्यघुक्षत ।
दुहादीनामिति किम् ? व्यत्यपुक्षत ।
आत्मनेपदे इति किम् ? अधुक्षत् । दन्त्ये इति किम् ? अधुक्षामहि ।
लोप इति वर्तमाने लुग्ग्रहणं सर्वादेशार्थम्, तच्च बह्वर्थम् । अन्यत्र त्वन्त्यस्यैव लोपे कृते झलो झलि(8-2-26/2281) इति सकारलोपेन सिद्ध्यति । स्थानिवद्भावोऽपि अकारलोपस्य नास्ति; `पूर्वत्रासिद्धे न स्थानिवत्(पु.वृ.112) इति ।
दन्त्योष्ठ्योऽपि वकारो दन्त्य इति गृह्यते । यदि स न गृह्येत, ततस्तौग्रहणमेवात्र कृतं स्यात् ।।
</7-3-73>
शामामष्टानां दीर्घः श्यनि ।। <7-3-74> ।।
शमादीनामष्टानां दीर्घो भवति श्यनि परतः । शम्---शाम्यति । तम्---ताम्यति । दम्---दाम्यति । भ्रम्---भ्राम्यति । क्षम्---क्षाम्यति । क्लम्---क्लाम्यति । मदी---माद्यति ।
अष्टानामिति किम् ? अस्यति । श्यनीति किम् ? भ्रमति । वा भ्राश(3-1-70/2321) इति श्यनो विकल्पः । बभ्राम ।।
</7-3-74>
ष्ठिवुक्लम्याचमां शिति ।। <7-3-75> ।।
ष्ठिवु, क्लमि, आचम्---इत्येतेषां दीर्घो भवति शिति परतः । ष्ठीवति । क्लमु---क्लामति । आचामति ।
क्लमिग्रहणं शबर्थम् ।
चमेराङ्पूर्वस्य ग्रहणम्, इह मा भूत्---चमति, विचमति ।।
</7-3-75>
क्रमः परस्मैपदेषु ।। <7-3-76> ।।
क्रमः प्रस्मैपदपरे शिति परतो दीर्घो भवति । क्रामति, क्रामतः, क्रामन्ति ।
परस्मैपदेष्विति किम् ? आक्रमते आदित्यः ।
इह उत्क्राम्, संक्राम---इति हेर्लुकि कृते न लुमताङ्गस्य(1-1-66/263) इति प्रत्ययलक्षणप्रतिषेधाद्दीर्घो न प्राप्नोति ? नैष दोषः; लुमता शब्देन लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः । न च हौ क्रमिरङ्गम्, किं तर्हि ? शपि ।।
</7-3-76>
इषुगमियमां छः ।। <7-3-77> ।।
इषु, गमि, यम---इत्येतेषां शिति परतश्छकारादेशो भवति । इच्छति । गच्छति । यच्छति ।
इषेरुदितो ग्रहणम्, इह मा भूत्---इष्यति, इष्णातीति ।
ये इषिमुदितं नाधीयते, इह च सूत्रे `अचि---इत्यनुवर्तयन्ति । तच्च प्रधानमज्ग्रहणं शितीत्यनेन विशेष्यते इति वर्णयन्ति । तथा च सति तदादिविधिर्न भवति । `यस्मिन्विधिस्तदादावल्ग्रहणे(व्या.प.127)---इत्येतदपि विशेषणेनैवेष्यते, तेन इषाणेत्यत्र छत्वं न भवति । न ह्ययमजेव शिदिति ।।

</7-3-77>
प्राघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।। <7-3-78> ।।
पा, घ्रा, ध्मा, स्था, म्ना, दाण्, दृशि, अर्ति, सर्ति, शद, सद इत्येतेषां पिब, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद---इत्येते आदेशा भवन्ति शिति परतः । पा---पिबति । घ्रा---जिघ्रति । ध्मा---धमति । स्था---तिष्ठति । म्ना---मनति । दाण्यच्छति । दृशि---पश्यति । अर्ति---ऋच्छति । सर्ति---धावति । शद-शीयते । सद्---सीदति ।
पिबतेर्लघूपधगुणः प्राप्नोति, सः `अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठतस्य(व्या.प.38) इति न भवति । अथ वा---अकारान्तोऽयमादेश आद्युदात्तो निपात्यते ।
सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति । अन्यत्र---सरति, अनुसरतीत्येव भवति ।।
</7-3-78>
ज्ञाजनोर्जा ।। <7-3-79> ।।
ज्ञा, जन---इत्येतयोर्जादेशो भवति शिति परतः । जानाति । जायते । जनेर्दैवादिकस्य ग्रहणम् ।।
</7-3-79>
प्वादीनां ह्रस्वः ।। <7-3-80> ।।
`पू---इत्येवमादीनां ह्रस्वो भवति शिति परतः ।
प्वादयः क्र्यादिषु पठ्यन्ते । `पूञ् पवने(धा.पा.1483)---इत्यतः प्रभृति `व्ली गतौ वृत्(धा.पा.1504) इति यावत्केचिदिच्छन्ति, वृत्करणमेतल्ल्वादीनां प्वादीनां च परिसमास्त्यर्थमिति । अपरे तु---ल्वादीनामेव परिसमास्त्यर्थं वृत्करणमेतदिच्छन्ति, आगणान्ताः प्वादय इति ।
पूञ्---पुनाति । लूञ्---लुनाति । स्तृञ्---स्तृणाति ।
येषामागणान्ताः प्वादयः, तेषां जानातीत्यत्र ह्रस्वः प्राप्नोति, ज्ञाजनोर्जा(7-3-79/2511) इति दीर्घकरणसामर्थ्यान्न भवति । जनेरपि हि जादेशे सपि अतो दीर्घो यञि(7-3-101/2170) इति दीर्घत्वेन---जायते इति सिद्ध्यति ।।
</7-3-80>
मीनातेर्निगमे ।। <7-3-81> ।।
मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये । प्रमिणन्ति व्रतानि ।
निगम इति किम् ? प्रमीणाति ।।
</7-3-81>
मिदेर्गुणः ।। <7-3-82> ।।
मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः । मेद्यति, मेद्यतः, मेद्यन्ति । शितीत्येव---मिद्यते ।।
</7-3-82>
जुसि च ।। <7-3-83> ।।
जुसि च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । अजुहवुः । अबिभयुः । अबिभरुः ।
अथ चिनुयुः, सुनुयुरित्यत्र कस्मान्न भवति ? अत्र द्वे ङित्त्वे---सार्वधातुकाश्रयम्, यासुडाश्रयं च । तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते । यासुडाश्रयङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति ।।
</7-3-83>
सार्वधातुकार्धधातुकयोः ।। <7-3-84> ।।
सार्वधातुके आर्धधातुके च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । तरति । नयति । भवति । आर्धधातुके---कर्ता, चेता, स्तोता ।
सार्वधातुकार्धधातुकयोरिति किम् ? अग्नित्वम् । अग्निकाम्यति । यदि हि प्रत्यये, सङीति वोच्येत, इहापि स्यात् ।।
</7-3-84>
जाग्रोऽविचिण्णल्ङित्सु ।। <7-3-85> ।।
`जागृ---इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः । जागरयति । जागरकः । साधुजागरी । जागरंजागरम् । जागरो वर्त्तते । जागरितः । जागरितवान् ।
वृद्धिविषये, प्रतिषेधविषये च यथा स्यात्---इति जागर्त्तेरयं गुण आरभ्यते । तस्मिन् कृते या अत उपधायाः(7-2-116/2282) वृद्धिः प्राप्नोति, सा न भवति । यदि हि स्याद्, अनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमनर्थकम् ।
अविचिण्णल्ङित्स्विति किम् ? `जॄशॄस्तॄजागृभ्यः क्विन्(उ.503)---जागृविः । चिण्---अजागारि । णल्---जजागार । ङित्---जागृतः, जागृथः ।
`वि इति केचिदिकारमुच्चारणार्थं वर्णयन्ति । क्वसावपि वकारादौ गुणो न भवति---जजागृवान् । कथमजागरुः, अहं जजागर इति, अत्र प्रतिषेधः प्राप्नोति ? न; अप्रतिषेधात् । अविचिण्णल्ङित्स्विति पर्युदासोऽयम् ।
अथ वा---`जाग्रः इति प्राप्तिरसावानन्तर्याद् विचिण्णल्ङित्सु प्रतिषिध्यते; या तु जुसि च(7-3-83/2481), सार्वाधातुकार्धधातुकयोः(7-3-84/2168) इति च प्राप्तिः, सा न प्रतिषिध्यते ।।
</7-3-85>
पुगन्तलघूपधस्य च ।। <7-3-86> ।।

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयोर्गुणो भवति । पुगन्तस्य---व्लेपयति, ह्रेपयति, क्नोपयति । लघूपधस्य---भेदनम्, छेदनम्, भेत्ता, छेत्ता ।
प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्यते---इति ज्ञापितमेतत् क्नुसनोः कित्करणेन । त्रसिगृधिधृषिक्षिपेः क्नुः(3-2-140/3120) । हलन्ताच्च(1-2-10/2613) इति ।
संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ।।
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनल्लोपशीदीर्घत्वे विध्यपेक्षे न सिध्यतः ।।
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्वं ज्ञापकं स्याल्लघोर्गुणे ।।
उपधा चात्र इगेव गृह्यते, ततो भिनत्तीति गुणो न भवति ।
अपरे---पुकि अन्तः पुगन्तः; लघ्वी उपधा उघूपधा; पुगन्तश्च लघूपधा च पुगन्तलघूपधमिति सूत्रार्थं वर्णयन्ति ।।
</7-3-86>
नाभ्यस्तस्याचि पिति सार्वधातुके ।। <7-3-87> ।।
अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो न भवति । नेनिजानि, वेविजानि, परिवेविषाणि । अनेनिजम्, अवेविजम्, पर्यवेविषम् ।
अभ्यस्तस्येति किम् ? वेदानि । अचीति किम् ? नेनेक्ति ।
पिद्ग्रहणमुत्तरार्थम् । सार्वधातुक इति किम् ? निनेज ।
लघूपधस्येत्येव---जुहवानि । अजुहवम् ।

- बहुलं छन्दसीति वक्तव्यम् * (म.भा.3-338)। जुजोषदिति यथा स्यात् । पस्पशाते । चाकशीति । वावशीति । यङ्लुकि छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम् । पस्पशाते---इत्यत्राभ्यासह्रस्वत्वं च ।

प्रकृत्यन्तराणां वा स्पशिकशिवशीनामेतानि रूपाणि ।।
</7-3-87>
भूसुवोस्तिङि ।। <7-3-88> ।।
भू, सू---इत्येतयोस्तिङि सार्वधातुके गुणो न भवति । अभूत्, अभूः, अभूवम् । सुवै, सुवावहै, सुवामहै । सूतेर्लुग्विकरणस्येदं ग्रहणम् ।
सुवति---सूयत्योर्विकरणेन तिङो व्यवधानम् । विकरणस्यैव ङित्त्वाद् गुणाभावः सिद्धः ।
तिङीति किम् ? भवति ।
`सार्वधातुके इत्येव---व्यतिभविषीष्ट ।
अथ बोभवीतीति यङ्लुकि गुणप्रतिषेधः कस्मान्न भवति ? ज्ञापकात् । यदयं बोभूत्विति गुणाभावार्थं निपातनं करोति ।।
</7-3-88>
उतो वृद्धिर्लुकि हलि ।। <7-3-89> ।।
`सार्वधातुके, `पिति इति वर्तते । उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके । यौति, यौषि, यौमि । नौति, नौषि, नौमि । स्तौति, स्तौषि, स्तौमि ।
उत इति किम् ? एति, एषि, एमि । लुकीति किम् ? सुनोति, सुनोषि, सुनोमि । हलीति किम् ? यवानि, रवाणि ।
`पिति इत्येव---युतः, रुतः ।
अपि स्तुयाद्राजानम्---इत्यत्र हि `ङिच्च पिन्न भवति इति पित्त्वप्रतिषेधाद् वृद्धेरभावः ।
नाभ्यस्तस्य(7-3-87/2503) इत्येतदिहानुवर्त्तते---योयोति, रोरोति---इत्येवमाद्यर्थम् ।
</7-3-89>
ऊर्णोतेर्विभाषा ।। <7-3-90> ।।
ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके । प्रोर्णौति, प्रोर्णोति । प्रोर्णौषि, प्रोर्णोषि । प्रोर्णौमि, प्रोर्णोमि ।
`हलि इत्येव---प्रोर्णवानि ।
</7-3-90>
गुणोऽपृक्ते ।। <7-3-91> ।।
ऊर्णोतेर्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति । प्रोर्णोत् । प्रोर्णोः ।
`हलि इति वर्तमाने यदपृक्तग्रहणं क्रियते, तेनैव ज्ञाप्यते---भवत्येषा परिभाषा `यस्मिन्विधिस्तदादावल्ग्रहणे(व्या.प.127) इति ।।
</7-3-91>
तृणह इम् ।। <7-3-92> ।।
`तृणह इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् ।

वर्णाश्रयेऽप्यत्र प्रत्ययलक्षणमिष्यते ।
हलीति किम् ? तृणहानि ।
`पिति इत्येव---तृण्ढः ।
`तृणह---इत्यागतश्नम्को गृह्यते, श्नमि कृते इमागमो यथा स्यादिति ।।
</7-3-92>
ब्रुव ईट् ।। <7-3-93> ।।
`ब्रू---इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति । ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् ।
हलीत्येव---ब्रवाणि । पितीत्येव---ब्रूतः ।।
</7-3-93>
यङो वा ।। <7-3-94> ।।
यङ उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा । शाकुनिको लालपीति । दुन्दुभिर्वावदीति । `त्रिधा बद्धो वृषभो रोरवीति । महो देवो मर्त्यां आविवेश(ऋ.4-58-3) ।
न च भवति---वर्वर्ति, चर्कर्ति चक्रम् ।
हलादेः पितः सार्वधातुकस्य यङन्तादभाव इति यङ्लुगन्तस्योदाहरणम् ।।
</7-3-94>
तुरुस्तुशम्यमः सार्वधातुके ।। <7-3-95> ।।
`तु इति सौत्रोऽयं धातुः, `रु शब्दे(धा.पा.1035), `ष्टुञ् स्तुतौ(धा.पा.1044), `शम उपशमे(धा.पा.1202), `अम गत्यादिषु(धा.पा.465)----इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति । उत्तौति, उत्तवीति । उपरौति, उपरवीति । उपस्तौति, उपस्तवीति । शाम्यध्वम्, शमीध्वम् । अभ्यमति, अभ्यमीति ।
शम्यमोः बहुलं छन्दसि(2-4-73/3400) इति विकरणलुकि सति हलादिसार्वधातुकमनन्तरं सम्भवति ।
आपिशलाः---`तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि इति पठन्ति । तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति ।
`सार्वधातुके---इत्यनुवर्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम् । स्तुवीत, शमीध्वमित्यत्रापि यथा स्यात् इति ।।
</7-3-95>
अस्तिसिचोऽपृक्ते ।। <7-3-96> ।।
अस्तेरङ्गात् सिजन्ताच्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति । अस्तेः---आसीत् । आसीः ।
सिजन्तात्---अकार्षीत् । असावीत्, अलावीत् । अपावीत् ।
अपृक्ते इति किम् ? अस्ति । अकार्षम् ।
`आहिभुवोरीटि प्रतिषेधः इति स्थानिवद्भावप्रतिषेधः, तेनेह न भवति---आत्थ । अभूदिति ।।
</7-3-96>
बहुलं छन्दसि ।। <7-3-97> ।।
अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये । आप एवेदं सलिलं सर्वमाः । आसीदिति स्थाने आः क्रियापदम् ।
`अहरेवासीन्न रात्रिः(मै.1-5-12) ।
सिचः खल्वपि---`गोभिरक्षाः(ऋ.9-107-9) । `प्रत्यञ्चमत्साः(ऋ.10-28-4) ।
अभैषीर्मा पुत्रकेति च भवति; छान्दसत्वात् । माङ्योगेऽप्यडागमो भवति---अक्षाः, अत्सा इति । सिच इडभावश्च ।।
</7-3-97>
रुदश्च पञ्चभ्यः ।। <7-3-98> ।।
रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति । अहोदीत्, अरोदीः । अस्वपीत्, अस्वपीः । अश्वसीत्, अश्वसीः । प्राणीत्, प्राणीः । अजक्षीत्, अजक्षीः ।
पञ्चभ्य इति किम् ? अजागर्भवान् ।
`अपृक्तस्य इत्येव---रोदिति ।।
</7-3-98>
अड् गार्ग्यगालवयोः ।। <7-3-99> ।।
रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन । अरोदत्, अरोदः । अस्वपत्, अस्वपः । अश्वसत्, अश्वसः । प्राणत्, प्राणः । अजक्षत्, अजक्षः ।
गार्ग्यगालवयोर्ग्रहणं पूजार्थम् ।।
</7-3-99>
अदः सर्वेषाम् ।। <7-3-100> ।।
`अद भक्षणे(धा.पा.1012)---अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आदः ।
`अपृक्तस्य इत्येव---अत्ति । असि ।।

</7-3-100>
अतो दीर्घो यञि ।। <7-3-101> ।।
अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः ।
पचामि, पचावः, पचामः । पक्ष्यामि, पक्ष्यावः, पक्ष्यामः ।
अत इति किम् ? चिनुवः, चिनुमः । यञीति किम् ? पचतः । पचथः ।
`सार्वधातुके इत्येव---अङ्गना, केशवः ।
केचिदत्र `तिङि इत्यनुवर्त्तयन्ति, तेषां भववानिति क्वसौ सार्वधातुकदीर्घो न भवति ।।
</7-3-101>
सुपि च ।। <7-3-102> ।।
अतो दीर्घो यञि(7-3-101/2170) इत्यनुवर्त्तते । सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति । वृक्षाय । प्लक्षाय । वृक्षाभ्याम् । प्लक्षाभ्याम् ।।
`अतः इत्येव---अग्निभ्याम् ।
`यञि इत्येव---वृक्षस्य । प्लक्षस्य ।।
</7-3-102>
बहुवचने झल्येत् ।। <7-3-103> ।।
बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षेभ्यः । प्लक्षेभ्यः । वृक्षेषु । प्लक्षेषु ।
बहुवचन इति किम् ? वृक्षाभ्याम् । प्लक्षाभ्याम् । झलीति किम् ? वृक्षाणाम् । सुपीत्येव---यजध्वम् । पचध्वम् ।।
</7-3-103>
ओसि च ।। <7-3-104> ।।
ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षयोः स्वम् । प्लक्षयोः स्वम् । वृक्षयोर्निधेहि । प्लक्षयोर्निधेहि ।।
</7-3-104>
आङि चापः ।। <7-3-105> ।।
`आङ् इति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते । तस्मिन्नाङि परतश्चकारादोसि च आबन्तस्याङ्गस्यैकारादेशो भवति । खट्वया, मालया । खट्वयोः, मालयोः । बहुराजया, कारीषगन्ध्यया । बहुराजयोः, कारीषगन्ध्ययोः ।
आप इति पितो ग्रहणं किम् ? कीलालपा ब्राह्मणेन । कीलालपोर्ब्राह्मणकुलयोः ।
`ङ्याब्ग्रहणेऽदीर्घग्रहणम् इति वचनादिह न भवति---अतिखट्वेन ब्राह्मणकुलेन ।।
</7-3-105>
सम्बुद्धौ च ।। <7-3-106> ।।
`आपः इति वर्त्तते । सम्बुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति । हे खट्वे ! हे बहुराजे ! हे कारीषगन्ध्ये ! ।।
</7-3-106>
अम्बार्थनद्योर्ह्रस्वः ।। <7-3-107> ।।
`सम्बुद्धौ इति वर्त्तते । अम्बार्थनामङ्गानां नद्यन्तानां ह्रस्वो भवति सम्बुद्धौ परतः । हे अम्ब ! हे अक्क ! हे अल्ल !
नद्याः खल्वपि---हे कुमारि । हे शार्ङ्गरवि ! हे ब्रह्मबन्धु ! हे अम्बिके !

- डलकवतीनां प्रतिषेधो वक्तव्यः * (म.भा.3-340)। हे अम्बाडे ! हे अम्बाले ! हे अम्बिके !
- छन्दसि वेति वक्तव्यम् * । हे अम्बाड, हे अम्बाडे ! हे हे अम्बाल, हे अम्बाले ! हे अम्बिक, हे अम्बिके !
- तलो ह्रस्वो वा ङिसम्बुद्ध्योरिति वक्तव्यम् * । देवते भक्तिः, देवतायां भक्तिः । हे देवत, हे देवते ! । छन्दस्येव ह्रस्वत्वमिष्यते ।
- मातृणां मातच् पुत्रार्थमर्हते * (म.भा.3-340)। मातृणां मातजादेशो वक्तव्यः सम्बुद्धौ, पुत्राय पुत्रमभिधातुम्, कीदृशाय ? अर्हते । मात्राव्यपदेशमर्हति श्लाघनीयत्वाद्यः पुत्रस्तदर्थम् । हे गार्गीमात ! नद्यृतश्च(5-4-153/833) इति समासान्तापवादो मातजादेशः । चित्करणमन्तोदात्तार्थम् ।।

</7-3-107>
ह्रस्वस्य गुणः ।। <7-3-108> ।।
`सम्बुद्धौ इति वर्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति सम्बुद्धौ परतः । हे अग्ने ! हे वायो ! हे पटो !
हे कुमारि, हे ब्रह्मबन्धु---इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति । यदि गुण इष्टः स्यात्, `अम्बार्थानां ह्रस्वः इत्युक्त्वा `नदीह्रस्वयोर्गुणः इत्येवं ब्रूयात् ।।
</7-3-108>
जसि च ।। <7-3-109> ।।
जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति । अग्नयः । वायवः । पटवः । धेनवः । बुद्धयः ।

- जसादिषु छन्दसि वावचनं प्राग्णौ चङ्युपधाया ह्रस्व इत्येतस्मात् * (म.भा.3-341)। इतः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम् । किं प्रयोजनम् ? अम्बे, दर्वि, शतक्रत्वः, पश्वे भृत्यः, किकिदीव्या । अम्बे, अम्ब । पूर्णा दर्वि, पूर्णा दर्वी । अधा शतक्रत्वः, शतक्रतवः । पश्वे भृत्यः, पशवे भृत्यः । किकिदीव्या, किकिदीविना ।।

</7-3-109>
ऋतो ङिसर्वनामस्थानयोः ।। <7-3-110> ।।
`गुणः इति वर्त्तते । ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति । ङौ---मातरि, पितरि, भ्रातरि, कर्तरि । सर्वनामस्थाने---कर्तारौ, कर्तारः । मातरौ, पितरौ, भ्रातरौ ।
तपरकरणं मुखसुखार्थम् ।।
</7-3-110>
घेर्ङिति ।। <7-3-111> ।।
घ्यन्तस्याङ्स्य ङिति प्रत्यये परतो गुणो भवति । अग्नये । वायवे । अग्नेरागच्छति, वायोरागच्छति । अग्ने स्वम् । वायोः स्वम् ।
घेरिति किम् ? सख्ये, पत्ये । ङितीति किम् ? अग्निभ्याम् ।।
`सुपि इत्येव---पट्वी । कुरुतः ।।
</7-3-111>
आण्नद्याः ।। <7-3-112> ।।
नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याडागमो भवति । कुमार्यै, ब्रह्मबन्ध्वै । कुमार्याः, ब्रह्मबन्ध्वाः ।।
</7-3-112>
याडापः ।। <7-3-113> ।।
आबन्तादङ्गादुतरस्य ङितः प्रत्ययस्य याडागमो भवति । खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः ।
अतिखट्वाय---इत्यत्राकृते दीर्घे ङ्याब्ग्रहणे `अदीर्घः इति वचनाद्याडागमो न भवति, कृते तु लाक्षणिकत्वात् ।
</7-3-113>
सर्वनाम्नः स्याड्ढ्रस्वश्च ।। <7-3-114> ।।
सर्वनाम्न आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति । सर्वस्यै, विश्वस्यै, यस्यै, तस्यै, कस्यै, अन्यस्यै सर्वस्याः, विश्वस्याः, यस्याः, तस्याः, कस्याः, अन्यस्याः ।
`आपः इत्येव---भवति । भवते ।।
</7-3-114>
विभाषा द्वितीयातृतीयाभ्याम् ।। <7-3-115> ।।
द्वितीया, तृतीया---इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याडागमो भवति, द्वितीयातृतीययोश्च ह्रस्वो भवति । द्वितीयस्यै, द्वितीयायै । तृतीयस्यै, तृतीयायै ।।
</7-3-115>
ङेराम्नद्याम्नीभ्यः ।। <7-3-116> ।।
नद्यन्तादाबन्तान्नीत्येतस्माच्चोत्तरस्य ङेरामित्ययमादेशो भवति । कुमार्याम् । गौर्याम् । ब्रह्मबन्ध्वाम् । धीबन्ध्वाम् ।
आपः---खट्वायाम् । बहुराजायाम् । कारीषगन्ध्यायाम् ।
नी---राजन्याम् । सेनान्याम् ।।
</7-3-116>
इदुद्भ्याम् ।। <7-3-117> ।।
इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति । कृत्याम् । धन्वाम् ।।
</7-3-117>
औत् ।। <7-3-118> ।।
इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति । यन्न नदीसंज्ञं नापि घिसंज्ञमिकारान्तम्, तदिहोदाहरणम् । सख्यौ पत्यौ ।।
</7-3-118>
अच्च घेः ।। <7-3-119> ।।
`औत् इति वर्तते । घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति, तस्य च घेरकारादेशो भवति । अग्नौ । वायौ । कृतौ । धेनौ । पटौ ।
अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम् ।
`औदच्च घेः इति येषामेकमेवेदं सूत्रम्, ते प्रधानशिष्टमिदुद्भ्यामौत्वं वर्णयन्ति---अन्वाचयशिष्टं घेरकारमिति ।।
</7-3-119>
आङो नाऽस्त्रियाम् ।। <7-3-120> ।।
घेरुत्तरस्याङो नाभावो भवति अस्त्रियाम् । अग्निना । वायुना । पटुना ।

`पुंसि इति नोक्तम्; अमुना ब्राह्मणकुलेन ।
अस्त्रियामिति किम्? कृत्या । धेन्वा ।।

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ
सप्तमाध्यायस्य तृतीयः पादः

</7-3-120>

# काशिका/सप्तमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/pc2
< काशिका | सप्तमोऽध्यायः

अथ सप्तमाध्याये चतुर्थः पादः
णौ चङ्युपधाया ह्रस्वः ।। <7-4-1> ।।
अङ्गस्य(6-4-1/200) इति वर्तते । चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति । अचीकरत् । अजीहरत् । अलीलवत् । अपीपवत् ।
अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम् । इह तु---मा भवानटिटदिति नित्यत्वात् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहितमिति ह्रस्वो न स्यात् ? नैष दोषः; ओणेर्ऋदित्करणं ज्ञापकम्--नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति ।
णाविति किम् ? `चङ्युपधाया ह्रस्वः इत्युच्यमाने, अलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गमपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात् । अदीदपदित्यत्र ह्रस्वत्वेन पुको बाधः स्यात् । अपीपचदित्येवमादौ तु नैव स्यात् ।
चङीति किम् ? कारयति । हारयति ।
उपधाया इति किम् ? अचकाङ्क्षत् । अववाञ्छत् । तदेतदुपधाग्रहणमुत्तरार्थमवश्यं कर्त्तव्यं तदिहापि ह्रस्वत्वं निवर्त्तयतीत्येवमर्थम्, `येन नाव्यवधानम्(व्या.प.46) इत्येतन्नाश्रयितव्यमिति ।

- उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् * (म.भा.3-345)। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेनाग्लोपित्वादङ्गस्य ह्रस्वो न प्राप्नोति । ण्याकृतिनिर्देशात् सिद्धम् ।।

</7-4-1>
नाग्लोपिशास्वृदिताम् ।। <7-4-2> ।।
अग्लोपिनामङ्गानां शासेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न भवति । अग्लोपिनां तावत्---मालामाख्यत् अममालत् । मातरमाख्यत् अममातरत् । राजानमतिक्रान्तवान् अत्यरराजत् । लोमान्यनुमृष्टवान् अन्वलुलोमत् ।
अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्, हलचोरादेशे तु न सिद्ध्यतीति तदर्थमेतद्वचनम् ।
शासेः---अशशासत् । ऋदिताम्---बाधृ, अबबाधत्; याचृ-- अययाचत्; ढौकृ, अडुढौकत् ।।
</7-4-2>
भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।। <7-4-3> ।।
भ्राज, भास, भाष दीप, जीव, मील, पीड---इत्येतेषामङ्गानां णौ चङ्युपधाया ह्रस्वो भवत्यन्यतरस्याम् । भ्राज---अबिभ्रजत्, अबभ्राजत् । भास---अबभासत्, अबीभसत् । भाष---अबभाषत्, अबीभषत् । दीप---अदिदीपत्, अदीदिपत् । जीव---अजिजीवत्, अजीजिवत् । मील---अमिमीलत्, अमीमिलत् । पीड---अपिपीडत्, अपीपिडत् ।
भ्राजभासोर्ऋदित्करणमपाणिनीयम् ।

- काण्यादीनां वेति वक्तव्यम् * (म.भा.3-346)। अचकाणत्, अचीकणत् ।।

</7-4-3>
लोपः पिबतेरीच्चाभ्यासस्य ।। <7-4-4> ।।
पिबतेरङ्गस्य णौ चङ्युपधाया लोपो भवति अभ्यासस्येकारादेशो भवति । अपीप्यत्, अपीप्यताम्, अपीप्यन् । उपधालोपे कृते ओः पुयण्ज्वचनं(7-4-80/2577) ज्ञापकम्---णौ स्थानिवद्भावस्येति । स्थानिवद्भावाद् द्विर्वचनम् ।।
</7-4-4>
तिष्ठतेरित् ।। <7-4-5> ।।
तिष्ठतेरङ्गस्य णौ चङ्युपधाया इकारादेशो भवति । अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन् ।।
</7-4-5>
जिघ्रतेर्वा ।। <7-4-6> ।।
जिघ्रतेरङ्गस्य णौ चङ्युपधाया इकारादेशो वा भवति । अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन् । अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन् ।।
</7-4-6>
उर्ऋत् ।। <7-4-7> ।।
णौ चङ्युपधाया ऋवर्णस्य स्थाने वा ऋकारादेशो भवति । इररारामपवादः । इर्---अचिकीर्त्त्, अचीकृतत् । अर्---अववर्त्तत्, अवीवृतत् । आर्---अममार्जत्, अमीमृजत् । वचनसामर्थ्यादन्तरंङ्गा अपि इररारो बाध्यन्ते ।
तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्---अचीकृतदिति । न चायं भाव्यमानः, किन्तु आदेशान्तरनिवृत्त्यर्थं

स्वरूपमेवैतदभ्यनुज्ञायते ।।
</7-4-7>
नित्यं छन्दसि ।। <7-4-8> ।।
छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य स्थाने ऋकारादेशो भवति नित्यम् । अवीवृधत्पुरोडाशेन, अवीवृधताम्, अवीवृधन् ।।
</7-4-8>
दयतेर्दिगि लिटि ।। <7-4-9> ।।
दयतेरङ्गस्य लिटि परतो दिगीत्ययमादेशो भवति । अवदिग्ये, अवदिग्याते, अवदिग्यिरे ।
दयतेरिति दीङो ग्रहणम्, न तु `दय दाने(धा.पा.1135)---इत्यस्य । तस्य हि लिट्याम्विहितः ।
दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते ।।
</7-4-9>
ऋतश्च संयोगादेर्गुणः ।। <7-4-10> ।।
ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः । स्वृ---सस्वरतुः, सस्वरुः । ध्वृ---दध्वरतुः, दध्वरुः । स्मृ---सस्मरतुः, सस्मरुः ।
ऋत इति किम् ? चिक्षियतुः, चिक्षियुः । संयोगादेरिति किम् ? चक्रतुः, चक्रुः ।
प्रतिषेधविषयेऽपि गुणो यथा स्यादित्ययमारम्भः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । सस्वार । सस्मार । लिटीत्येव---स्मृतः । स्मृतवान् ।

- संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्त्तव्यम् * (म.भा.3-348)। सञ्चस्करतुः, सञ्चस्करुः---इति । अत्र हि `पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण(सी.प.128) इत्यत्र दर्शने लिटि कृते तदाश्रये च द्विर्वचने पश्चादुपसर्गयोगे सति अडभ्यासव्यवायेऽपि(6-1-136/2539) इति सुट् क्रियते । एवं च कृत्वा संस्कृषीष्ट, उपस्कृषीष्टेत्यत्र सुटो बहिरङ्गलक्षणस्यासिद्धत्वात् `ऋतश्च संयोगादेः इति इडागमो न भवति ।।

</7-4-10>
ऋच्छत्यृताम् ।। <7-4-11> ।।
ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ॠकारान्तानां च लिटि परतो गुणो भवति । ऋच्छ---आनर्च्छ, आनर्च्छतुः, आनर्च्छुः । ऋ---आरतुः, आरुः ।
ॠकारान्तानाम्---निचकरतुः, निचकरुः । निजगरतुः, निजगरुः ।
ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ॠतां तु प्रतिषिद्धः ।
वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । निचकार । निजगार ।।
</7-4-11>
शॄदॄप्रां ह्रस्वो वा ।। <7-4-12> ।।
शॄ, दॄ, पॄ----इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति । विशश्रतुः, विशश्रुः । विशशरतुः, विशशरुः । विदद्रतुः, विदद्रुः । विददरतुः, विददरुः । निपप्रतुः, निपप्रुः । निपपरतुः निपपरुः ।
ह्रस्ववचनमित्त्वोत्त्वनिवृत्त्यर्थम् ।
केचिदेतत्सूत्रं प्रत्याचक्षते । `श्रा पाके(धा.पा.1054), `द्रा कुत्सायाम्(धा.पा.1055), `प्रा पूरणे(धा.पा.1062)---इत्येतेषामनेकार्था धातव इति शॄदॄप्रामर्थे वर्त्तमानानाम्---विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः निपप्रुः---इत्येतानि रूपाणि <K.6.144> साधयन्ति । तथा च सति क्वसौ विशशॄवानित्येतद्रूपं
न स्यात् ।
</7-4-12>
केऽणः ।। <7-4-13> ।।
के प्रत्यये परतोऽणो ह्रस्वो भवति । ज्ञका । कुमारिका । किशोरिका ।
अण इति किम् ? गोका । नौका ।
राका, धाका इत्यत्र उणादयो बहुलम् इति ह्रस्वो न भवति । न कपि इति प्रतिषेधसामर्थ्यात्कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति ।।
</7-4-13>
न कपि ।। <7-4-14> ।।
कपि प्रत्यये परतोऽणो ह्रस्वो न भवति । बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः ।
<K.6.145> गोस्त्रियोरुपसर्जनस्य इत्ययमपि ह्रस्वः कपि न भवति । समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ।।
</7-4-14>
<K.6.146>
आपोऽन्यतरस्याम् ।। <7-4-15> ।।
आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम् । बहुखट्वाकः, बहुखट्वकः । बहुमालाकः, बहुमालकः ।।

</7-4-15>
ऋदृशोऽङि गुणः ।। <7-4-16> ।।
ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः---अदर्शत्, अदर्शताम्, अदर्शन् ।।
</7-4-16>
अस्यतेस्थुक् ।। <7-4-17> ।।
अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः । आस्थत्, आस्थताम्, आस्थन् ।।
</7-4-17>
श्वयतेरः ।। <7-4-18> ।।
श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः । अश्वत्, अश्वताम्, अश्वन् ।।
</7-4-18>
पतः पुम् ।। <7-4-19> ।।
पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत्, अपप्तताम्, अपप्तन् ।।
</7-4-19>
वच उम् ।। <7-4-20> ।।
वचेरङ्गस्य अङि परत उमागमो भवति । अवोचत्, अवोचताम्, अवोचन् ।।
</7-4-20>
शीङः सार्वधातुके गुणः ।। <7-4-21> ।।
शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । शेते, शयाते, शेरते । सार्वधातुक इति किम् ? शिश्ये ।।
</7-4-21>
अयङ्यि क्ङिति ।। <7-4-22> ।।
यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्य `अयङ्---इत्ययमादेशो भवति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य ।
यीति किम् ? शिश्ये । क्ङितीति किम् ? शेयम् ।।
</7-4-22>
उपसर्गाद्ध्रस्व ऊहतेः ।। <7-4-23> ।।
उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः । समुह्यते । समुह्य गतः । अभ्युह्यते । अभ्युह्य गतः ।
उपसर्गादिति किम् ? ऊह्यते । ऊहतेरिति किम् ? समीह्यते ।
`यि इत्येव---समूहितम् । `क्ङिति इत्येव---समूह्योऽयमर्थः । `अणः इत्येव---आ ऊह्यते=ओह्यते । समोह्यते ।।
</7-4-23>
एतेर्लिङि ।। <7-4-24> ।।
एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । आशिषि लिङि अकृत्सार्वधातुकयोः(7-4-25/2298) इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति ।
उपसर्गादित्येव---ईयात् । `अणः इत्येव---आ ईयात् = एयात् । समेयात् ।।
</7-4-24>
अकृत्सार्वधातुकयोर्दीर्घः ।। <7-4-25> ।।
अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति । भृशायते । सुखायते । दुःखायते । चीयते, चेचीयते । स्तूयते, तोष्टूयते । चीयात् । स्तूयात् ।
अकृदिति किम् ? प्रकृत्य । प्रहृत्य । परत्वाद्दीर्घत्वेन तुको बाधः स्यात् ।
असार्वधातुक इति किम् ? चिनुयात् । सुनुयात् ।
`क्ङिति इत्येव---उरुया । धृष्णुया ।।
</7-4-25>
च्वौ च ।। <7-4-26> ।।
च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति । शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरीति । पटूभवति । पटूस्यात् ।।
</7-4-26>
?Bरीङ् ऋतः ।। <7-4-27> ।।
ऋकारान्तस्याङ्गस्य अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परतः `रीङ् इत्ययमादेशो भवति । माक्षीयति, माक्षीयते । पित्रीयति, पित्रीयते । चेक्रीयते । मात्रीभूतः ।
`क्ङिति इत्येतन्निवृत्तम्, तेनेहापि भवति---पितुरागतं पित्र्यम् ।
ऋत इति तपरकरणं किम् ? चेकीर्यते । निजेगिल्यते ।।

</7-4-27>
रिङ् शयग्लिङ्क्षु ।। <7-4-28> ।।
ऋकारान्तस्याङ्गस्य श, यक्---इत्येतयोर्लिङि च यकारादावसार्वधातुके परतः `रिङ् इत्ययमादेशो भवति । श---आद्रियते, आध्रियते । यक्---क्रियते, ह्रियते । लिङ्---क्रियात् । ह्रियात् ।
रिङ्वचनं दीर्घनिवृत्त्यर्थम् ।
`असार्वधातुके इत्येव---बिभृयात् । `यि इत्येव---कृषीष्ट, हृषीष्ट ।।
</7-4-28>
गुणोऽर्तिसंयोगाद्योः ।। <7-4-29> ।।
ऋतः यकि लिङि इति वर्त्तते । `श इत्यत्रासम्भवान्निवृत्तम् । गुणो भवत्यर्तेः संयोगादीनामृकारान्तानां यकि परतो लिङि च यकारादावसार्वधातुके । अर्यते, अर्यात् । स्मर्यते, स्मर्यात् ।
इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वाद्, अभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति
गुणो न प्रवर्त्तते ।
`यि इत्येव---स्वृषीष्ट । ध्वृषीष्ट ।`असार्वधातुके इत्येव---इयृयात् ।।
</7-4-29>
यङि च ।। <7-4-30> ।।
यङि च परतः, अर्त्तेः संयोगादेश्च ऋतो गुणो भवति । अरार्यते । सास्वर्यते । दाध्वर्यते । सास्मर्यते । अर्तेः `अट्यर्त्यशूर्णोतीनामुपसंख्यानम्(7-4-82/2630.वा.) इति यङ्।
न न्द्राः संयोगादयः(6-1-3/2446) इति द्विर्वचनप्रतिषेधो यकारस्य नेष्यते ।

- हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः * (म.भा.3-349)। जेघ्नीयते । हिंसायामिति किम् ? जङ्घन्यते ।।

</7-4-30>
ई घ्राध्मोः ।। <7-4-31> ।।
`घ्रा, `ध्मा---इत्येतयोर्यङि परत ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ।।
</7-4-31>
अस्य च्वौ ।। <7-4-32> ।।
`ई इति वर्तते । अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति । शुक्लीभवति, शुक्लीस्यात् । खट्वीकरोति, खट्वीस्यात् ।।
</7-4-32>
क्यचि च ।। <7-4-33> ।।
`अस्य इति वर्त्तते । क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति । पुत्रीयति । घटीयति । खट्वीयति । मालीयति । अकृत्सार्वधातुकयोर्दीर्घः(7-4-25/2298) इत्यस्यापवादः ।
पृथग्योगकरणमुत्तरार्थम् ।।
</7-4-33>
अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ।। <7-4-34> ।।
अशनाय, उदन्य, धनाय---इत्येतानि निपात्यन्ते, बुभुक्षा, पिपासा, गर्ध---इत्येतेष्वर्थेषु । अशनायेति---अशनशब्दस्यात्वं क्यचि निपात्यते । अशनायतीति भवति, बुभुक्षा चेत् । अशनीयतीत्येवान्यत्र ।
उदन्येति---उदकशब्दस्य उदन्नादेशो निपात्यते । उदन्यतीति भवति, पिपासा चेत् । उदकीयतीत्येवान्यत्र ।
धनायेति---धनशब्दस्यात्वं निपात्यते । धनायतीति भवति, गर्धश्चेत् । धनीयतीत्येवान्यत्र ।।
</7-4-34>
नच्छन्दस्यपुत्रस्य ।। <7-4-35> ।।
छन्दसि विषये पुत्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति । किं चोक्तम् ? दीर्घत्वम्, ईत्वं च । `मित्रयुः(मै.2-6-12) । `संस्वेदयुः(मै.4-12-2) । `देवाञ्जिगाति सुम्नयुः(ऋ.3-27-1) ।
अपुत्रस्येति किम् ? `पुत्रीयन्तः सुदानवः(ऋ.7-96-4) ।

- अपुत्रादीनामिति वक्तव्यम् * (म.भा.3-349)। `जनीयन्तोऽन्वग्रवः(ऋ.7-96-4) ।।

</7-4-35>
दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ।। <7-4-36> ।।
दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति---इत्येतानि छन्दसि निपात्यन्ते । दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते । अवियोना दुरस्युः । दुष्टीयतीति प्राप्ते ।
द्रविणशब्दस्य द्रविणस्भावो निपात्यते । `द्रविणस्युर्विपन्यया(ऋ।6-16-34) । द्रविणीयतीति प्राप्ते ।
वृषशब्दस्य वृषण्भावो निपात्यते । `वृषण्यति(ऋ.9-5-6) । वृषीयतीति प्राप्ते ।।

रिष्टशब्दस्य रिषणभावो निपात्यते । `रिषण्यति(ऋ.2-23-12) । रिष्टीयतीति प्राप्ते ।।
</7-4-36>
अश्वाघस्यात् ।। <7-4-37> ।।
अश्व, अघ---इत्येतयोः क्यचि परतश्छन्दसि विषये आकारादेशो भवति । `अश्वायन्तो मघवन्(ऋ.7-32-23) । `मा त्वा वृका अघायवो विदन्(काठ.2-7-39) ।
एतदेवात्ववचनं ज्ञापकम्---नच्छन्दस्यपुत्रस्य(7-4-35/3588) इति दीर्घप्रतिषेधो भवतीति ।।
</7-4-37>
देवसुम्नयोर्यजुषि काठके ।। <7-4-38> ।।
देव, सुम्न---इत्येतयोः क्यचि परत आकारादेशो भवति काठके यजुषि । `देवायन्तो यजमानाय(काठ.2-9) । `सुम्नायन्तो हवामहे(काठ.8-17-76) ।
यजुषीति किम् ? `देवाञ्जिगाय सुम्नयुः(ऋ.3-27-1) । काठक इति किम् ? `सुम्नयुरिदमासीत्(तै.2-5-7-4) ।।
</7-4-38>
कव्यध्वरपृतनस्यर्चि लोपः ।। <7-4-39> ।।
कवि, अध्वर, पृतना---इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये । कव्यन्तः सुमनसः । अध्वर---`अध्वर्यन्तः(4-6-3-3) । पृतना---`पृतन्यन्तस्तिष्ठन्ति(पै.2-89-4) ।।
</7-4-39>
द्यतिस्यतिमास्थामित्ति किति ।। <7-4-40> ।।
द्यति, स्यति, मा, स्था---इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः । द्यति---निर्दितः, निर्दितवान् । स्यति---अवसितः, अवसितवान् । मा---मितः, मितवान् । स्था---स्थितः, स्थितवान् ।
तीति किम् ? अवदाय । कितीति किम् ? अवदाता ।।
</7-4-40>
शाच्छोरन्यतरस्याम् ।। <7-4-41> ।।
शा, छा---इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति । शा---निशितम्, निशातम् । निशितवान्, निशातवान् । छा---अवच्छितम्, अवच्छातम् । अवच्छितवान्, अवच्छातवान् ।

- श्यतेरित्वं व्रते नित्यमिति वक्तव्यम् * (म.भा.3-350)। संशितो ब्राह्मणः । संशितव्रत इत्यर्थः । व्यस्थितविभाषाविज्ञानात् सिद्धम् ।

`देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः ।।(म.भा.3-350)
</7-4-41>
दधातेर्हिः ।। <7-4-42> ।।
दधातेरङ्गस्य `हि इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । हितः । हितवान् । हित्वा ।।
</7-4-42>
जहातेश्च क्त्वि ।। <7-4-43> ।।
जहातेरङ्गस्य `हि इत्ययमादेशो भवति क्त्वाप्रत्यये परतः । हित्वा राज्यं वनं गतः । हित्वा गच्छति ।
जहातेर्निर्देशाज्जिहीतेर्न भवति---हात्वा ।।
</7-4-43>
विभाषा छन्दसि ।। <7-4-44> ।।
जहातेरङ्गस्य विभाषा `हि इत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः । `हित्वा शरीरं(तै.ब्रा.2-5-6-5) यातव्यम् । हात्वा ।।
</7-4-44>
सुधितवसुधितनेमधितधिष्वधिषीय च ।। <7-4-45> ।।
सुधित, वसुधित, नेमधित, धिष्व, धिषीय---इत्येतानि छन्दसि विषये निपात्यन्ते । तत्र सुधित, वसुधित, तेमधित---इति सु--वसु--नेमपूर्वस्य दधातेः क्त्वाप्रत्यये इत्त्वमिडागमो वा प्रत्ययस्य निपात्यते । `गर्भं माता सुधितम्(ऋ.10-27-16) । सुहितमिति प्राप्ते । वसुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते । `नेमधिता(ऋ.10-93-13) बाधन्ते । नेमहिता इति प्राप्ते ।
धिष्वेति---लोण्मध्यमैकवचने दधातेरित्त्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते । `धिष्व सोमम्(ऋ.8-33-15) । धत्स्वेति प्राप्ते ।
धिषीयेति---आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य निपात्यते । `धिषीय(तै.1-6-4-4) । धासीयेति प्राप्ते ।।
</7-4-45>
दो दद् घोः ।। <7-4-46> ।।
`दा---इत्येतस्य घुसंज्ञकस्य `दद् इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । दत्तः । दत्तवान् । दत्तिः ।
द इति किम् ? धातः । धातवान् । धेट एतद्रूपम् । घोरिति किम् ? `दाप् लवने(धा.पा.1060) । दातं बर्हिः । `दैप् शोधने(धा.पा.925) । अवदातं

मुखम् ।
अयमादेशस्थान्त इष्यते । एवं ह्युक्तम्---
`तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम् ।।(म.भा.3-350,351)
यदि तु `दस्ति इति तकारादौ दीर्घत्वम्, तदा तान्तेऽप्यदोषः । दान्तधान्तयोरपि `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.पा.12) इति नत्वधत्वे न भविष्यत इति न दोषः ।।
`अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ।।(म.भा.3-351)
अच उपसर्गात्तः(7-4-47/3078) इति प्राप्ते निपात्यन्ते । अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ।।
</7-4-46>
अच उपसर्गात्तः ।। <7-4-47> ।।
अजन्तादुपसर्गादुत्तरस्य `दा---इत्येतस्य घुसंज्ञकस्य `त---इत्ययमादेशो भवति तकारादौ किति । प्रत्तम्, अवत्तम्, नीत्तम्, परीत्तम् ।
अच इति किम् ? निर्दत्तम् । दुर्दत्तम् ।
उपसर्गादिति किम् ? दधि दत्तम् । मधु दत्तम् ।
`घोः इत्येव---अवदातं मुखम् ।
उपसर्गादिति पञ्चमीनिर्द्देशादादेरलः प्राप्नोति ? तत्र समाधिमाहुः---`अचः इत्येतद् द्विरावर्तयिव्यम्, तत्रैकं पञ्चम्यन्तम् उपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने तकारो भवति । द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात् सर्वस्य भविष्यति । अपो भि(7-4-48/442) इत्यत्र पञ्चम्यन्तम् `अचः इत्यनुवर्त्तते, तेन पकारमात्रस्य भविष्यति ।

- द्यतेरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन * (म.भा.3-351)। अवत्तम् । `प्रत्तं जुहोति(मै.1-6-9) ।।

</7-4-47>
अपो भि ।। <7-4-48> ।।
`अप्---इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतः `त इत्ययमादेशो भवति । अद्भिः । अद्भ्यः ।
भीति किम् ? अप्सु ।

- स्ववः स्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ *(म.भा.3-352)। स्ववद्भिः । स्वतवद्भिः

। माद्भिरिष्ट्वा इन्द्रो वृत्रहा । `समुषद्भिरजायथाः(ऋ.1-6-3) ।।
</7-4-48>
सः स्यार्धधातुके ।। <7-4-49> ।।
सकारान्तस्याङ्गस्य सकारादावार्धधातुके परतस्तकारादेशो भवति । वत्स्यति; अवत्स्यत् । विवत्सति । जिघत्सति ।
स इति किम् ? वक्ष्यति । सीति किम् ? घासः । वासः । आर्धधातुक इति किम् ? आस्से । वस्से ।।
</7-4-49>
तासस्त्योर्लोपः ।। <7-4-50> ।।
तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति । तासेः---कर्तासि । कर्तासे । अस्तेः---त्वमसि । व्यतिसे ।
अस्तेरकारसकारयोर्लुप्तयोः `से इति प्रत्ययमात्रमेतत्पदम्, तेन सात्पदाद्योः(8-3-111/2123) इति षत्वं न भवति ।।
</7-4-50>
रि च ।। <7-4-51> ।।
रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति । कर्तारौ, कर्तारः । अध्येतारौ, अध्येतारः ।।
</7-4-51>
ह एति ।। <7-4-52> ।।
तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । कर्ताहे । अस्तेः---व्यतिहे ।।
</7-4-52>
यीवर्णयोर्दीधीवेव्योः ।। <7-4-53> ।।
यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति । यकारादौ---आदीध्य गतः । आवेव्य गतः । आदीध्यते । आवेव्यते ।
इवर्णादौ---आदीधिता । आवेविता । लिङि---आदीधीत । आवेवीत ।
यीवर्णयोरिति किम् ? आदीध्यनम् । आवेव्यनम् ।।
</7-4-53>
सनि मीमाघुरभलभशकपतपदामच इस् ।। <7-4-54> ।।
सनि प्रत्यये सकारादौ परतो मी, मा, घु, रभ, लभ, शक, पत, पद---इत्येतेषामङ्गानामचः स्थाने इसित्ययमादेशो भवति । `मी इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । मित्सति । प्रमित्सति । `मा इति गामादाग्रहणेष्वविशेषः । मित्सते । अपमित्सते । घु---दित्सति,

धित्सति । रभ---आरिप्सते । लभ---आलिप्सते । शक---शिक्षति । पत---पित्सति । पद---प्रपित्सते ।
सनीति किम् ? दास्यति ।
`सि इत्येव---पिपतिषति । * तनिपतिदरिद्राणामुसंख्यानम् *(कात्या.वा.5059) इति पतेरिडागमविकल्पः ।

- सनि राधो हिंसायामच इस्वक्तव्यः * । प्रतिरित्सति । हिंसायामिति किम् ? आरिरात्सति ।।

</7-4-54>
आप्ज्ञप्यृधामीत् ।। <7-4-55> ।।
आप्, ज्ञपि, ऋध---इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः । आप्---ईप्सति । ज्ञपि--ज्ञीप्सति । ऋध्--ईर्त्सति ।
ज्ञपेर्द्वावचौ, तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य त्वीत्त्वम् ।
`सनि इत्येव---प्राप्स्यति । सीत्येव---जिज्ञपयिषति । अर्दिधिषति । सनीवन्तर्ध(7-2-49/2618) इति ज्ञपेः, ऋधेश्चेटो विकल्पः ।।
</7-4-55>
दम्भ इच्च ।। <7-4-56> ।।
दम्भेरच इकारादेशो भवति, चकारादीच्च सनि सकारादौ परतः । धीप्सति, धिप्सति । `सि इत्येव---दिदम्भिषति ।।
</7-4-56>
मुचोऽकर्मकस्य गुणो वा ।। <7-4-57> ।।
मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः । हलन्ताच्च(1-2-10/2613) इति कित्त्वप्रतिषेधो विकल्प्यते । मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव ।
अकर्मकस्येति किम् ? मुमुक्षति वत्सं देवदत्तः । कर्मकर्त्तरि मुचिरकर्मको भवति, कर्मविशेषस्याविवक्षितत्वाद्वा ।।
</7-4-57>
अत्र लोपोऽभ्यासस्य ।। <7-4-58> ।।
यदेतत्प्रक्रान्तम्---सनि मीमा(7-4-54/2623) इत्यादि मुचोऽकर्मकस्य(7-4-57/2624) इति यावत्, अत्राभ्यासलोपो भवति । तथैवोदाहृतम् ।
`अभ्यासस्य इत्येतच्चाधिकृतं वेदितव्यम् आ अध्यायपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यामोऽभ्यासस्येत्येवं तद्वेदितव्यम् । वक्ष्यति---ह्रस्वः(7-4-59/2180) । डुढौकिषते । तुत्रौकिषते ।
`सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्च इत्येवं सिद्धे यद् `अत्र ग्रहणमिह क्रियते तद्विषयावधारणार्थम्---अत्रैवाभ्यासलोपो भवति, सन्वद्भावविषये न भवति । अमीमपत् । अदीदपत् । सन्वल्लघुनि चङ्परे(7-4-93/2316) इति सन्वद्भावात् प्राप्नोति ।
सर्वस्याभ्यासस्यायं लोप इष्यते, तदर्थमेव केचिद् `अत्र ग्रहणं वर्णयन्ति ।
`नानर्थकेऽलोऽन्त्यविधिः(व्या.प.62)---इत्यपरे सर्वस्य कुर्वन्ति ।।
</7-4-58>
ह्रस्वः ।। <7-4-59> ।।
ह्रस्वो भवत्यभ्यासस्य । डुढौकिषते, तुत्रौकिषते । डुढौके, तुत्रौके । अडुढौकत्, अतुत्रौकत् ।

- अभ्यासस्यानचि * (म.भा.3-352)। अभ्यासस्य यदुच्यते अनचि तद्भवतीति वक्तव्यम् । चराचरः । चलाचलः । पतापतः । वदावदः । हलादिः शेषो न भवति ।।

</7-4-59>
हलादिः शेषः ।। <7-4-60> ।।
अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते । जग्लौ । मम्लौ । पपाच । पपाठ । आट, आटतुः, आटुः ।
आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, तत्र अभ्यासजातेराश्रयणात् क्वचिदपि वर्त्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति ।
अपरे तु ब्रुवते---शेषशब्दोऽयं निवृत्या विशिष्टमवस्थानमाह । तदवस्थानमुक्तितो यद्यपि प्रधानम्, अविधेयत्वात्तु तदप्रधानम्; निवृत्तेरेव तु विधेयत्वात्प्राधानम् । तत्रायमर्थोऽस्य जायते---अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति । सा किमित्यादेरविधेयां सतीमनिवृत्तिमपेक्षिष्यत इति ।।
</7-4-60>
शर्पूर्वाः खयः ।। <7-4-61> ।।
अभ्यासस्य शपूर्वाः स्वयः शिष्यन्ते, अन्ये हलो लुप्यन्ते । चुश्च्योतिषति । तिष्ठासति । पिस्पन्दिषते ।
शर्पूर्वा इति किम् ? पपाच । खय इति किम् ? सस्नौ ।

- खर्पूर्वाः खय इति वक्तव्यम् * (म.भा.3-353)। उचिच्छिषतीत्यत्र उच्छेरन्तरङ्गत्वात्तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे सत्यभ्यासे तकारः श्रूयेत ।।

</7-4-61>
कुहोश्चुः ।। <7-4-62> ।।
अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति । चकार । चखान । जगाम । जघान । हकारस्य---जहार । जिहीर्षति । जहौ ।

</7-4-62>
न कवतेर्यङि ।। <7-4-63> ।।
कवतेरभ्यासस्य यङि परतश्चुर्न भवति । कोकूयते उष्ट्रः । कोकूयते खरः ।
`कवतेः इति विकरणनिर्द्देशः कौतेः, कुवतेश्च निवृत्त्यर्थः । तयोश्चुत्वमेव भवति---चोकूयते ।
यङीति किम् ? चुकुवे ।।
</7-4-63>
कृषेश्छन्दसि ।। <7-4-64> ।।
कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति । करीकृष्यते यज्ञकुणपः ।
छन्दसीति किम् ? चरीकृष्यते कृषीवलः ।।
</7-4-64>
दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत् करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ।। <7-4-65> ।।
दाधर्ति, दर्धति, दर्धर्षि, बोभूतु, तेतिक्ते, अलर्षि, आपनीफणत्, संसनिष्यदत्, करिक्रत्, कनिक्रदत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य, आगनीगन्ति---इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते । दाधर्ति दर्धर्ति दर्धर्षीति---धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च । दाधर्ति । एवं दर्धति---श्लौ रुगभ्यासस्य निपात्यते । तथा दर्धर्षीति । अत्र च यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् ।
बोभूत्विति---भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते । नैतदस्ति प्रयोजनम्; अत्र भूसुवोस्तिङि(7-3-88/2224) इति गुणाभावः सिद्धः ? ज्ञापनार्थं तर्हि निपातनमेतत् । ज्ञापयति---अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति । बोभोति, बोभवीति ।
तेतिक्ते---तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । यङो ङित्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव ? ज्ञापनार्थं तु आत्मनेपदनिपातनम्---`अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति ।
अलर्षीति---इयर्तेर्लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते । सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते---`अलर्ति दक्षः(ऋ.8-48-8) ।
आपनीफणदिति(ऋ.4-40-4)---फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीग्निपात्यते ।
संसनिष्यदिति(मै.1-11-2)---स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येवाभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते । न चास्य सम्पूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते---आसनिष्यददिति ।
करिक्रदिति(ऋ.1-131-3)---करोतेर्यङ्लुन्तस्य शतरि चुत्वाभावः, अभ्यासककारस्य रिगागमो निपात्यते ।
कनिक्रददिति(ऋ.1-128-3)----क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते । तथा चास्य हि विवरणं कृतम् । अक्रन्दीदिति भाषायाम् ।
भरिभ्रदिति(ऋ.10-45-7)---बिभर्त्तेर्यङ्लुगन्तस्य शतरि भृञामित्(7-4-76/2496) इति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते ।
दविध्वत इति---ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत् । अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते । `दविध्वतो रश्मयः सूर्यस्य(ऋ.4-13-4) ।
दविद्युतदिति(ऋ.6-16-45)---द्युतेर्यङ्लुन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावः, अत्वम्, विगागमश्च निपात्यते ।
तरित्रत इति---तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते ।
सरीसृपतमिति---सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमो निपात्यते ।
वरीवृजदिति(ऋ.7-24-4)--वृजेः शतरि श्लौ रीगागमो निपात्यतेऽभ्यासस्य ।
मर्मृज्येति---मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते । ततः मृजेर्वृद्धिः(7-2-114/2473) न भवति; अलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते ।
आगनीगन्तीति---आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । `वक्ष्यन्ती देवदागनीगन्ति कर्णम्(ऋ.6-75-3) ।
इतिकरणमेवम्प्रकाराणामन्येषामप्युपसंग्रहार्थम् ।।
</7-4-65>
उरत् ।। <7-4-66> ।।
ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति । ववृते, ववृधे, शशृधे ।
नर्नति, नरिनर्त्ति, नरीनर्ति---इत्येवमादौ `अभ्यासविकारेषु अपवादो नोत्सर्गान्विधीन्बाधते(व्या.प.23) इत्युरदत्वे कृते रुगादय आगमाः क्रियन्ते ।।
</7-4-66>
द्युतिस्वाप्योः सम्प्रसारणम् ।। <7-4-67> ।।
द्युति, स्वापि---इत्येतयोरभ्यासस्य सम्प्रसारणं भवति । विदिद्युते । व्यदिद्युतत् । विदिद्योतिषते । विदिद्युतिषते । विदेद्युत्यते ।
स्वापेः---सुष्वापयिषति ।

स्वापिर्ण्यन्तो गृह्यते, तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणमिष्यते । इह न भवति---स्वापयतेर्ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयतेः सन्---सिष्वापकीयिषति ।।
</7-4-67>
व्यथो लिटी ।। <7-4-68> ।।
व्यथेर्लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति । विव्यथे, विव्यथाते, विव्यथिरे । हलादिः शेषेण यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, यकारस्य न सम्प्रसारणे सम्प्रसारणम्(6-1-37/363) इति प्रतिषिध्यते । लिटीति किम् ? वाव्यथ्यते ।।
</7-4-68>
दीर्घ इणः किति ।। <7-4-69> ।।
इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः । ईयतुः । ईयुः । इणो यण्(6-4-81/2455) इति यणादेशे कृते स्थानिवद्भावाद् द्विर्वचनम् ।
कितीति किम् ? इयाय । इययिथ ।।
</7-4-69>
अत आदेः ।। <7-4-70> ।।
अभ्यासस्यादेरकारस्य दीर्घो भवति लिटि परतः । अतो गुणे(6-1-97/191) पररूपत्वस्यापवादः । आट, आटतुः, आटुः ।
आदेरिति किम् ? पपाच । पपाठ ।।
</7-4-70>
तस्मान्नुड् द्विहलः ।। <7-4-71> ।।
तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति । आनङ्ग, आनङ्गतुः, आनङ्गुः । आनञ्ज, आनञ्जतुः, आनञ्जुः ।
द्विहल इति किम् ? आट, आटतुः, आटुः ।
ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते । तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति---आनृधतुः, आनृधुः ।।
</7-4-71>
अश्नोतेश्च ।। <7-4-72> ।।
अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति । व्यानशे, व्यानशाते, व्यानशिरे ।
`अश्नोतेः इति विकरणनिर्देशो अश्नातेर्मा भूदिति---आश, आशतुः, आशुः ।।
</7-4-72>
भवतेरः ।। <7-4-73> ।।
भवतेरभ्यासस्याकारादेशो भवति लिटि परतः । बभूव, बभूवतुः, बभूवुः ।
`भवतेः इति धातुनिर्द्देशादिहापि भवति---अनुबभूवे कम्बलो देवदत्तेन । `लिटि इत्येव---भुभूषति । बोभूयते ।।
</7-4-73>
ससूवेति निगमे ।। <7-4-74> ।।
`ससूव इति निपात्यते । सूतेर्लिटि परस्मैपदं वुगागमः, अभ्यासस्य चात्वं निपात्यते । `ससूव स्थविरं विपश्चिताम्(ऋ.4-18-10) । सुषुवे इति भाषायाम् ।।
</7-4-74>
णिजां त्रयाणां गुणः श्लौ ।। <7-4-75> ।।
निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति । णिजिर्---नेनेक्ति । विजिर्---वेवेक्ति । विष्लृ---वेवेष्टि ।
त्रिग्रहणमुत्तरार्थम् । एषां हि वृत्करणं समाप्त्यर्थं पठ्यत एवेति ।
श्लाविति किम् ? निनेज ।।
</7-4-75>
भृञामित् ।। <7-4-76> ।।
भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति । भृञ्---बिभर्त्ति । माङ्---मिमीते । ओहाङ्---जिहीते ।
`त्रयाणाम् इत्येव---जहाति । `श्लौ इत्येव---बभार ।।
</7-4-76>
अर्तिपिपर्त्योश्च ।। <7-4-77> ।।
अर्ति, पिपर्ति---इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ । इयर्ति धूमम् । पिपर्ति सोमम् ।।
</7-4-77>
बहुलं छन्दसि ।। <7-4-78> ।।
छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । `पूर्णा विवष्टि(ऋ.7-16-11)- वशेरेतद्रूपम् । तथा वचेः---`जनिमा विवक्ति(ऋ.1-97-7) । सचेः---`वत्सं न माना सिषक्ति(ऋ.1-38-8) । जिघर्ति सोमम् । न च भवति---ददातीत्येवं ब्रूयात् । `जजनदिन्द्रम्(मै.1-9-1) `माता यद्वीरं दधनन्धनिष्ठा(ऋ.10-73-1) ।।

</7-4-78>
सन्यतः ।। <7-4-79> ।।
सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । पिपासति ।
सनीति किम् ? पपाच । अत इति किम् ? लुलूषति । तपरकरणं किम् ? पपचिषते ।।
</7-4-79>
ओः पुयण्ज्यपरे ।। <7-4-80> ।।
`सनि इति वर्तते, `इत् इति च । उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः । पवर्गेऽपरे---पिपविषते, पिपावयिषति । विभावयिषति ।
यण्यपरे---यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति ।
ज्यपरे--`जु इति सौत्रोऽयं धातुः, जिजावयिषति ।
एतदेव `पुण्ज्यपरे इति वचनं ज्ञापकम्---अद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीति । ओरिति किम् ? पापच्यते । सन्---पापचिषते । पुयण्जीति किम् ? अवतुतावयिषति । जुहावयिषति । अपर इति किम् ? बुभूषति ।।
</7-4-80>
स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।। <7-4-81> ।।
स्रवति, शृणोति, द्रवति, प्रवति, प्लवति, च्यवति---इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वा इकारादेशो भवति सनि परतः । सिस्रावयिषति, सुस्रावयिषति । शृणोति---शिश्रावयिषति, शुश्रावयिषति । द्रवति---दिद्रावयिषति, दुद्रावयिषति । प्रवति---पिप्रावयिषति, पुप्रावयिषति । प्लवति---पिप्लावयिषति, पुप्लावयिषति । च्यवति---चिच्यावयिषति, चुच्यावयिषति ।
वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते । पूर्वसूत्रेण त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम्
`अपर इत्येव---सुस्रूषति । शुश्रूषते ।।
</7-4-81>
गुणो यङ्लुकोः ।। <7-4-82> ।।
यङि, यङ्लुकि च इगन्तस्याभ्यासस्य गुणो भवति । चेचीयते । लोलूयते । यङ्लुकि---जोहवीति । यङो वा इतीड्विकल्पः । चोक्रुशीति ।।
</7-4-82>
दीर्घोऽकितः ।। <7-4-83> ।।
अकितोऽभ्यासस्य दीर्घो भवति यङि यङ्लुकि च । पापच्यते । पापचीति । यायज्यते । यायजीति ।
अकित इति किम् ? यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।
ननु चात्रापवादत्वान्नुकि कृतेऽभ्यासस्यानजन्तत्वादेव दीर्घत्वं न भविष्यति ? एवं तर्हि `अकितः इत्यनेनैतज्ज्ञाप्यते---`अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन्बाधन्ते(व्या.प.23) इति ।
किमेतस्य ज्ञापने प्रयोजनम् ? डोढौक्यते इत्यत्र `दीर्घोऽकितः इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते; अचीकरदित्यत्र दीर्घो लघोः(7-4-94/2318) इत्यनेन सन्वदित्वं न बाध्यते; मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते---मीमांसते; ई च गणः(7-4-97/2573) इतीत्वेन हलादिशेषो न बाध्यते---अजीगणत् ।।
</7-4-83>
नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।। <7-4-84> ।।
वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद, स्कन्द---इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च । वञ्चु---वनीवच्यते । वनीवञ्चीति । स्रंसु---सनीस्रस्यते । सनीस्रंसीति । ध्वंसु---दनीध्वस्यते । दनीध्वंसीति । भ्रंसु---बनीभ्रस्यते । बनीभ्रंसीति । कस---चनीकस्यते । चनीकसीति । पत---पनीपत्यते । पनीपतीति । पद---पनीपद्यते । पनीपदीति । स्कन्द---चनीस्कद्यते । चनीस्कन्दीति ।।
</7-4-84>
नुगतोऽनुनासिकान्तस्य ।। <7-4-85> ।।
अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः । तन्तन्यते । तन्तनीति । जङ्गम्यते । जङ्गमीति । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।
नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम् । स्थानिना ह्यादेशो लक्ष्यते । तेन यंयम्यते--- इत्येवमादावझल्परत्वेऽप्यनुस्वारो भवति ।

- पदान्तवच्चेति वक्तव्यम् * (म.भा.3-359)। वा पदान्तस्य(8-4-59/125) इति परसवर्णविकल्पो यथा स्यादिति ।

अत इति किम् ? तेतिम्यते ।
तपरकरणं तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्---बाभाम्यते । अनुनासिकान्तस्येति किम् ? पापच्यते ।।
</7-4-85>
जपजभदहदशभञ्जपशां च ।। <7-4-86> ।।
जप, जभ, दह, दश, भञ्ज, पश---इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः । जञ्जप्यते ।
जञ्जपीति । जभ---जञ्जभ्यते । जञ्जभीति । दह---दन्दह्यते । दन्दहीति । दश---दन्दश्यते । दन्दशीति ।

`दश---इति दंशिरयं नकारलोपार्थमेव निर्द्दिष्टः । तेन यङ्लुक्यपि नकारलोपो भवति । भन्ज---बम्भज्यते । बम्भञ्जीति ।
`पश इति सौत्रो धातुः---पम्पश्यते । पम्पशीति ।।
</7-4-86>
चरफलोश्च ।। <7-4-87> ।।
चर, फल---इत्येतयोरभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः । चञ्चूर्यते । चञ्चूरीति । पम्फल्यते । पम्फुलीति ।।
</7-4-87>
उत्परस्यातः ।। <7-4-88> ।।
चरफलोरभ्यासात्परस्यात उकारादेशो भवति यङ्यङ्लुकोः परतः । चञ्चूर्यते । चञ्चूरीति । पम्फुल्यते । पम्फुलीति ।
परस्येति किम् ? अभ्यासस्य मा भूत् । अत इति किम् ? अलोऽन्त्यस्य मा भूत् ।
उदिति तपरकरणम्--चञ्चूर्ति, पम्फुलीति इत्यत्र लघूपधगुणनिवृत्त्यर्थम् । दीर्घस्यासिद्धत्वादिह लघुत्वं न निवर्तते ।।
</7-4-88>
ति च ।। <7-4-89> ।।
तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति । चरणं चूर्तिः । ब्रह्मणश्चूर्तिः । प्रफुल्तिः । प्रफुल्ताः सुमनसः ।
`यङ्यङ्लुकोः, `अभ्यासस्य---इति चानुवर्त्तमानमपि वचनसामर्थ्यादिह नाभिसम्बध्यते ।।
</7-4-89>
रीगृदुपधस्य च ।। <7-4-90> ।।
ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङ्यङ्लुकोः परतः । वरीवृत्यते । वरीवृध्यते । वरीवृतीति । वरीवृधीति । नरीनृत्यते । नरीनृतीति ।

- रीगृत्वत इति वक्तव्यम् * (म.भा.3-359)। इहापि यथा स्यात्---वरीवृश्च्यते । परीपृच्छ्यते । वरीवृश्चीति । परीपृच्छीति ।।

</7-4-90>
रुग्रिकौ च लुकि ।। <7-4-91> ।।
यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतश्चकाराद्रीक्च । नर्नर्ति, नरिनर्ति, नरीनर्ति । वर्वर्ति, वरिवर्ति, वरीवर्ति । उकार उच्चारणार्थः ।

- मर्मृज्यते मर्मृज्यमानास इत्युपसंख्यानम् * (म.भा.3-359)। मर्मृज्यते । मर्मृज्यमानासः ।।

</7-4-91>
ऋतश्च ।। <7-4-92> ।।
ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक्च यङ्लुकि । चर्कर्ति, चरिकर्ति, चरीकर्ति । जर्हर्ति, जरिहर्ति, जरीहर्ति ।
तपरकरणं किम् ? किरतेः---चाकर्ति ।
`किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ।।(म.भा.3-359)
तत्रेयं प्राप्तिः---तपरकरणसामर्थादङ्गविशेषणम् `ऋतः इत्येतत्, तथा चाप्राप्तिः किरते रुगादीनामिति ।।
</7-4-92>
सन्वल्लघुनि चङ्परेऽनग्लोपे ।। <7-4-93> ।।
लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे । सन्यतः(7-4-79/1317) इत्युक्तम्, चङ्परेऽपि तथा---अचीकरत् । अपीपचत् ।
ओः पुयण्ज्यपरे(7-4-80/2577) इत्युक्तम्, चङ्परेऽपि तथा---अपीपवत् । अलीलवत् । अजीजवत् ।
स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा(7-4-81/2578) इत्युक्तम्, चङ्परेऽपि तथा---असिस्रवत्, असुस्रुवत् । अशिश्रवत्, अशुश्रवत् । अदिद्रवत्, अदुद्रवत् । अपिप्रवत्, अपुप्रवत् । अपिप्लवत्, अपुप्लवत् । अचिच्यवत्, अचुच्यवत् ।
लघुनीति किम् ? अततक्षत् । अररक्षत् । जागरयतेः---अजजागरत् ।
अत्र केचिद् गशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यमभ्यासेन नास्तीति व्यवधानेऽपि वचनप्रामाण्याद्भवितव्यम् ? तदसत्; `येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्(व्या.प.46) इत्येकेन व्यवधानमाश्रीयते, न पुनरनेकेन ।
यद्येवम्, कथमचिक्षणदिति ? आचार्यप्रवृत्तिर्ज्ञापयति---भवत्येवञ्जातीयकानामित्त्वमिति । यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं विदधाति ।
चङ्पर इति किम् ? अहं पपच । परग्रहणं किम् ? चङ्येव केवले मा भूत्---अचकमत । अनग्लोप इति किम् ? अचकथत् । दृषदमाख्यातवान् अददृषत् ।
वादितवन्तं प्रयोजितवान् अवीवददित्यत्र योऽसौ णौ णेर्लोपः, नासावग्लोप इत्याश्रीयते, किं कारणम् ? `चङ्परे इति णिजातेर्निमित्तत्वेनाक्षेपात् ततोऽन्यस्याको लोपः परिगृह्यते । भीमादीनामत्र ग्रहणात् `सन्वद्भावेनाभ्यासलोपो न भवति इत्युक्तम् ।
किञ्च---सन्वदिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः सनमेवापेक्षते, किं तर्हि ? इस्भावाद्यपि; तदभावाद् अमीमपदित्यादावभ्यासलोपो न भविष्यति ।।

</7-4-93>
दीर्घो लघोः ।। <7-4-94> ।।
दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे ।
अचीकरत् । अजीहरत् । अलीलवत् । अपीपचत् ।
लघोरिति किम् ? अबिभ्रजत् ।
`लघुनि इत्येव---अततक्षत् । अररक्षत् ।
`चङि इत्येव---अहं पपच ।।
`पर इत्येव---अचकमत ।
`अनग्लोपे इत्येव---अचकथत् ।।
</7-4-94>
अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।। <7-4-95> ।।
स्मृ, दृ, त्वर, प्रथ, म्रद, स्तृ, स्पश---इत्येतेषामभ्यासस्य `आत् इत्ययमादेशो भवति चङ्परे णौ परतः । स्मृ---असस्मरत् । दृ---अददरत् । त्वर---अतत्वरत् । प्रथ---अपप्रथत् । म्रद---अमम्रदत् । स्तृ---अतस्तरत् । स्पश---अपस्पशत् । सन्वद्भावादित्त्वं प्राप्तमनेन बाध्यते ।
तपकरणसामर्थ्यादति कृते दीर्घो लघोः(7-4-94/2318) इत्येतदपि न भवति---अददरत् ।।
</7-4-95>
विभाषा वेष्टिचेष्ट्योः ।। <7-4-96> ।।
वेष्टि, चेष्टि---इत्येतयोरभ्यासस्य विभाषा `अत् इत्ययमादेशो चङ्परे णौ परतः । अववेष्टत्, अविवेष्टत् । अचचेष्टत्, अचिचेष्टत् । अभ्यासह्रस्वत्वे कृते अत्त्वं पक्षे भवति ।।
</7-4-96>
ई च गणः ।। <7-4-97> ।।
गणेरभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारादच्च । अजीगणत्, अजगणत् ।।
इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ
सप्तमस्याध्यायस्य चतुर्थः पादः
।। </7-4-97> ।।

# काशिका/अष्टमोऽध्यायः/प्रथमः पादः

https://sa.wikisource.org/s/pc3
< काशिका | अष्टमोऽध्यायः

अथ अष्टमाध्याये प्रथमः पादः

सर्वस्य द्वे ।। <8-1-1> ।।
`सर्वस्य इति च `द्वे इति चैतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः पदस्य(8-1-16/401) इत्यतः प्राक् `सर्वस्य द्वे भवतः इत्येवं तद्वेदितव्यम् । वक्ष्यति---नित्यवीप्सयोः(8-1-2/2140) इति, तत्र सर्वस्य स्थाने द्वे भवतः । के द्वे भवतः ? ये शब्दतश्चार्थतश्चोभयथान्तरतमे । एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः---पचतिपचति । ग्रामोग्रामो रमणीयः ।
यदा तु `द्विः प्रयोगो द्विर्वचनम्, तदा स एव पचतिशब्दो द्विरावर्तते, तस्य द्वे आवृत्ती भवतः ।
सर्वस्येति किम् ? विस्पष्टार्थम् । अथ पदस्येत्येव कस्मान्नोच्यते ? नैवं शक्यम्, इह हि न स्यात्---प्रपचति, प्रपचतीति । इह द्रोग्धा, द्रोढा---इति घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्---द्रोग्धा द्रोढा, द्रोढा द्रोग्धेति । तस्माद्वक्तव्यमेतत्---`पूर्वत्रासिद्धीयमद्विर्वचने(पु.प.92) इति ।
`सर्वस्य इत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम् ।।
</8-1-1>
तस्य परमाम्रेडितम् ।। <8-1-2> ।।
तस्य द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसज्ञं भवति । चौर चौर3, वृषल वृषल3, दस्यो दस्यो3 घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ।
आम्रेडितप्रदेशाः---आम्रेडितं भर्त्सने(8-2-95/3614) इत्येवमादयः ।।
</8-1-2>
अनुदात्तं च ।। <8-1-3> ।।
अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् । भुङ्क्ते भुङ्क्ते पशून्पशून् ।।
</8-1-3>
नित्यवीप्सयोः ।। <8-1-4> ।।
नित्ये चार्थे वीप्सायां च यद्वर्तते तस्य द्वे भवतः । केषु नित्यता ? तिङ्क्षु नित्यता, अव्ययकृत्सु च । कुत एतत् ? आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्ता प्राधान्येनानुपरमन्करोति तन्नित्यम् । पचतिपचति । जल्पतिजल्पति । भुक्त्वा भुक्त्वा व्रजति । भोजंभोजं व्रजति । लुनीहिलुनीहीत्येवायं लुनाति । क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायामेव पौनः पुन्यप्रकाशने शक्तिः ।
यङ्तु तन्निरपेक्षः प्रकाशयति---पुनः पुनः पचति पापच्यत इति ।
यदा तु तत्र द्विर्वचनं तदा क्रियासमभिहारे पौनः पुन्यं द्रष्टव्यम्---पापच्यते पापच्यत इति ।
अथ केषु वीप्सा ? सुप्सु वीप्सा । का पुनर्वीप्सा ? व्याप्तिविशेष विषया प्रयोक्तुरिच्छा वीप्सा । का पुनः सा ? नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा ।
नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत्प्रयोक्तुमिच्छा वीप्सा । ग्रामो ग्रामो रमणीयः । जनपदो जनपदो रमणीयः । पुरुषः पुरुषो निधनमुपैति ।
यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते---पचतिपचतितरामिति ।
इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ।।
</8-1-4>
परेर्वर्जने ।। <8-1-5> ।।
परीत्येतस्य वर्जनेऽर्थे द्वे भवतः । परिपरि त्रिगर्त्तेभ्यो वृष्टो देवः । परिपरि सौवीरेभ्यः । परिपरि सर्वसेनेभ्यः । वर्जनम्=परिहारः ।
वर्जन इति किम् ? ओदनं परिषिञ्चति ।

- परेर्वर्जनेऽसमासे वेति वक्तव्यम् * (म.भा.3-367)। परिपरि त्रिगर्त्तेभ्यो वृष्टो देवः, परि त्रिगर्त्तेभ्यः ।

समासे तु तेनैवोक्तत्वाद्वर्जनस्य नैव भवति---परित्रिगर्त्तं वृष्टो देव इति ।
</8-1-5>
प्रसमुपोदः पादपूरणे ।। <8-1-6> ।।
प्र, सम्, उप, उत्---इत्येतेषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्यते । `प्रप्राचमग्निर्भरतस्य शृण्वे(ऋ.7-8-4) । `संसमियुवसे वृषन्(ऋ.10-191-1) । `उपोप मे परामृश(ऋ.1-126-7) । `किं नोदुदुहर्षसे दातवाउ(ऋ.4-21-9) ।
पादपूरण इति किम् ? `प्रदेवं देव्या धिया(ऋ.10-176-2) । सामर्थ्याच्छन्दस्येवैतद्विधानम् । भाषायामनर्थकं स्यात्; प्रयोगाभावात् ।।

</8-1-6>
उपर्यध्यधसः सामीप्ये ।। <8-1-7> ।।
उपरि, अधि, अधस्---इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते । सामीप्यम्=प्रत्यासत्तिः कालकृता, देशकृता च । उपर्युपरि दुःखम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो नगरम् ।।
सामीप्य इति किम् ? उपरि चन्द्रमाः ।
इह कस्मान्न भवति---उपरि शिरसो घटं धारयति ? औत्तराधर्यमेव विविक्षितं न सामीप्यमिति द्विर्वचनं न भवति ।।
</8-1-7>
वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ।। <8-1-8> ।।
एकार्थः पदसमूहः=वाक्यम् । वाक्यादेरामन्त्रितस्य द्वे भवतः असूया---सम्मति---कोप---कुत्सन---भर्त्सनेषु यदि तद्वाक्यं भवति ।
तत्र परगुणानामसहनम्=असूया । पूजा=सम्पतिः । कोपः=क्रोधः । निन्दनम्=कुत्सनम् । अपकारशब्दैर्भयोत्पादनम्=भर्त्सनम् । एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः ।
असूयायां तावत्---माणवक3 माणवक, अभिरूपक3 अभिरूपक, शोभनः खल्वसि ।
कोपे---माणवक3 माणवक, अविनीतक3 अविनीतक, इदानीं ज्ञास्यसि जाल्म ।
कुत्सने---शक्तिके3 शक्तिके, यष्टिके3 यष्टिके, रिक्ता ते शक्तिः ।
भर्त्सने---चौर3 चौर, वृषल3 वृषल घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ।
असूयादिषु स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु(8-2-103/3622)---इति पूर्वपदस्य प्लुतः । भर्त्सने तु आम्रेडितं भर्त्सने(8-2-95/3614) इत्याम्रेडितस्यैव प्लुतः ।
वाक्यादेरिति किम् ? अन्तस्य मध्यस्य च मा भूत्---शोभनः खल्वसि माणवक । आमन्त्रितस्येति किम् ? देवदत्त गामभ्याज शुक्लाम् ।।
</8-1-8>
एकं बहुव्रीहिवत् ।। <8-1-9> ।।
एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति । बहुव्रीहिवत्त्वे प्रयोजनम्--सुब्लोपपुंवद्भावौ । एकैकमक्षरं पठति । एकैकयाऽऽहुत्या जुहोति । सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते । तेनातिदेशिके बहुव्रीहौ न भवन्ति । एकैकस्मै---न बहुव्रीहौ(1-1-29/222) इति प्रतिषेधो न भवति; बहुव्रीहिरेव यो बहुव्रीहिरिति विज्ञानात् । नन, सुसु---नञ्सुभ्याम्(6-2-172/3906) इत्यन्तोदात्तत्वं न भवति । ऋक्--ऋक्, पूः पूः,---ऋक्पुः(5-4-74/940) इति समासान्तो न भवति ।।
</8-1-9>
आबाधे च ।। <8-1-10> ।।
आबाधनमाबाधः=पीडाप्रयोक्तृधर्मः, नाभिधेयधर्मः; तत्र वर्तमानस्य द्वे भवतः, बहुव्रीहिवच्चास्य कार्यं भवति । गतगतः । नष्टनष्टः । पतितपतितः । गतगता । नष्टनष्टा । पतितपतिता । प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवं प्रयुङ्क्ते प्रयोक्ता ।।
</8-1-10>
कर्मधारयवदुत्तरेषु ।। <8-1-11> ।।
इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं भवतीत्येतद्वेदितव्यम् ।
कर्मधारयत्वे प्रयोजनम्---सुब्लोपपुंवद्भावान्तोदात्तत्वानि । सुब्लोपः---पटुपटुः । मृदुमृदुः । पण्डितपण्डितः । पुंवद्भावः---पटुपट्वी । मृदुमृद्वी । कालककालिका ।
कोपधाया अपि हि कर्मधारयवद्भावात् पुंवत्कर्मधारय(6-3-42/746) इति पुंवद्भावो भवति ।
अन्तोदात्तत्वम्---पटुपटुः । पटुपट्वी । समासान्तोदात्तत्वमनेनैव विधीयत इति परत्वादाम्रेडितानुदात्तत्वं बाध्यते ।
अधिकारेणैव सिद्धे यद् `उत्तरेषु इति वचनं तद्विस्पष्टार्थम् ।।
</8-1-11>
प्रकारे गुणवचनस्य ।। <8-1-12> ।।
प्रकारः---भेदः, सादृश्यं च । तदिह सादृश्यं प्रकारो गृह्यते । प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः । पटुपटुः । मृदुमृदुः । पण्डितपण्डितः । अपरिपूर्णगुण इत्यर्थः । परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं प्रयुज्यते ।
जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते । पटुजातीयः । मृदुजातीयः---इत्यपि हि भवति । तत्कथम् ? वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोः शेषो विज्ञायते ।
प्रकार इति किम् ? पटुर्देवदत्तः ।
गुणवचनस्येति किम् ? अग्निर्माणवकः । गौर्वाहीकः । यद्यप्यत्राग्निशब्दः, गोशब्दश्च मुख्यार्थसम्बन्धादवभृतभेदं तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितुं प्रवृत्तः; तथापि सर्वदा गुणवचनो न भवतीति न द्विरुच्यते ।

- आनुपूर्व्ये द्वे भवत इति वक्तव्यम् * (म.भा.3-369)। मूलेमूले स्थूलाः । अग्रेऽग्रे सूक्ष्माः । ज्येष्ठंज्येष्ठं प्रवेशय ।
- स्वार्थे अवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् * (म.भा.3-369)। अस्मात् कार्षापणादिह भवद्भ्यां माषंमाषं देहि । स्वार्थ एतद् द्विर्ववनम्, न वीप्सायाम् । अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसम्बन्धिनो माषाः; तेन वीप्सा न विद्यते ।

अवधार्यमाण इति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन्वा माषान् देहि।
अनेकस्मिन्निति किम्? अस्मात् कार्षाणादिह भवद्भ्यां माषमेकं देहि।

- चापले द्वे भवत इति वक्तव्यम् *(म.भा.3-369)। सम्भ्रमेण प्रवृत्तिः=चापलम्। अहिरहिः बुध्यस्व बुध्यस्व। नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किं तर्हि ? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः---अहिरहिरहिः बुध्यस्वबुध्यस्वबुध्यस्व इति।
- क्रियासमभिहारे द्वे भवत इति वक्तव्यम् * (म.भा.3-369)। स भवान् लुनीहिलुनीहीत्येवायं लुनाति।
- आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् * (म.भा.3-370)। भुक्त्वाभुक्त्वा व्रजति। भोजंभोजं व्रजति। नित्य(8-1-4/2140) इत्येव सिद्धम् इति तत्रोक्तम्।
- डाचि द्वे भवतः इति वक्तव्यम् * (म.बा.3-370)। पटपटाकरोति। पटपटायते।

अव्यक्तानुकरणे डाजन्तस्य द्विर्वचनमिष्यते। इह न भवति---द्वितीयाकरोति, तृतीयाकरोति। तदर्थं केचिद् `डाचि बहुलम् इति पठन्ति।

- पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् * (म.भा.3-370)। पूर्वंपूर्वं पुष्प्यन्ति। प्रथमं प्रथमं पच्यन्ते। आतिशायिकोऽपि दृश्यते--पूर्वतरं पुष्प्यन्ति। प्रथमतरं पच्यन्त इति।
- डतरडतमयोः समसम्प्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम् * (म.भा.3-370)। उभाविमावाढ्यौ। कतराकतरा अनयोराढ्यता। सर्व इमे आढ्याः। कतमाकतमा एषामाढ्यता। इतरडतमाभ्यामन्यत्रापि हि दृश्यते---उभाविमावाढ्यौ। कीदृशीकीदृशी अनयोराढ्यता। तथा स्त्रीनिगदाद्भावादन्यत्रापि हि

दृश्यते---उभाविमावाढ्यौ। कतरः कतरोऽनयोर्विभव इति।

- कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम् * (म.भा.3-370)। समासवच्च बहुलम्। यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य। अन्यमन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यस्य ब्राह्मणा भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति।
- स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः * (म.भा.3-370)। अन्योऽन्यामिमे ब्राह्मण्यौ भोजयतः। अन्योऽन्यं भोजयतः। इतरेतरां भोजयतः। इतरेतरं भोजयतः। अन्योऽन्यामिमे ब्राह्मणकुले भोजयतः। इतरेतरामिमे ब्राह्मणकुले भोजयतः। इतरेतरमिमे ब्राह्मणकुले भोजयतः॥

</8-1-12>
अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्॥ <8-1-13>॥
प्रिय, सुख---इत्येतयोरन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये। कृच्छ्रम्=दुःखम्, तदभावोऽकृच्छ्रम्। प्रियप्रियेण ददाति। सुखसुखेन ददाति। प्रियेण ददाति। सुखेन ददाति। अखिद्यमानो ददातीत्यर्थः।
अकृच्छ्र इति किम्? प्रियः पुत्रः। सुखो रथः॥
</8-1-13>
यथास्वे यथायथम्॥ <8-1-14>॥
यो य आत्मा यद्यदात्मीयं तत्तद्यथास्वं तस्मिन् यथायथमिति निपात्यते। यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते। ज्ञाताः सर्वे पदार्था यथायथम्। यथास्वभावमित्यर्थः। सर्वेषां तु यथायथं यथात्मीयमित्यर्थः॥
</8-1-14>
द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु॥ <8-1-15>॥
`द्वन्द्वम् इति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावः। अत्वं चोत्तरपदस्य निपात्यते रहस्य, मर्यादावचन, व्युत्क्रमण, यज्ञपात्र, प्रयोग, अभिव्यक्ति---इत्येतेषु अर्थेषु। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः। द्वन्द्वं मन्त्रयन्ते। मर्यादावचने---मर्यादा=स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते। माता पुत्रेण मिथुनं गच्छति, पौत्रेण, तत्पुत्रेणापीति मर्यादार्थः। व्युत्क्रमणे---द्वन्द्वं व्युत्क्रान्ताः। व्युत्क्रमणम्=भेदः, पृथगवस्थानम्। द्विवर्गसम्बन्धेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते। यज्ञपात्रप्रयोगे---द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः। अभिव्यक्तौ---द्वन्द्वं नारदपर्वतौ। द्वन्द्वं संकर्षणवासुदेवौ। द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः।
अन्यत्रापि द्वन्द्वमित्येतद् दृश्यते, तदर्थं योगविभागः कर्तव्यः। द्वन्द्वं युद्धं वर्तते। द्वन्द्वानि सहते धीरः। चार्थे द्वन्द्वः(2-2-29/901) इति॥
</8-1-15>
पदस्य॥ <8-1-16>॥
`पदस्य इत्ययमधिकारः प्रागपदान्ताधिकारात्। यदित ऊर्ध्वमनुक्रमिष्यामः पदस्येत्येवं तद्वेदितव्यम्। वक्ष्यति---संयोगान्तस्य लोपः(8-2-23/54) पचन्। यजन्। पदस्येति किम्? पचन्तौ। यजन्तौ।
वक्ष्यमाणवाक्यापेक्षया `पदस्य इत्यधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या---क्वचित् स्थानषष्ठी, क्वचिदवयवषष्ठी॥

</8-1-16>
पदात् ।। <8-1-17> ।।
पदादित्ययमधिकारः प्राक् कुत्सने च सुप्यगोत्रादौ(8-1-69/3976) इत्येतस्माद् । यदित ऊर्ध्वमनुक्रमिष्यामः पदादित्येवं तद्वेदितव्यम् । वक्ष्यति---आमन्त्रिस्य च(8-1-19/3654) । आमिन्त्रितस्य पदात्परस्यानुदात्तादेशो भवतीति । पचसि देवदत्त । पदादिति किम् ? देवदत्त पचसि ।।
</8-1-17>
अनुदात्तं सर्वमपादादौ ।। <8-1-18> ।।
`अनुदात्तम् इति च, `सर्वम् इति च, `अपादादौ इति च---एतत्त्रयमधिकृतं वेदितव्यमापादपरिसमाप्तेः । इत
उत्तरं यद्वक्ष्यामः अनुदात्तं सर्वमपादादौ इत्येवं तद्वेदितव्यम् । वक्ष्यति---आमन्त्रितस्य च(8-1-19/3654) इति । पचसि देवदत्त । अपादादाविति किम् ? `यत्ते नियतं रजसं मृत्यो अनवधृष्ण्यम्(अ.वे.8-2-10) । बहुवचनस्य वस्नसौ(8-1-21/405) । ग्रामो वः स्वम् । जनपदो नः स्वम् । अपादादाविति किम् ?
रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं शत्रुमर्दनः ।।
पादग्रहणेनात्र ऋक्पादः, श्लोकपादश्च गृह्यते ।
सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति ।
तेन युष्मदस्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते ।
युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः---यत्रापि स्वादिपदं पदसंज्ञं भवति । ग्रामो वां दीयते । जनपदो नौ दीयते ।।
</8-1-18>
आमन्त्रितस्य च ।। <8-1-19> ।।
आमन्त्रितस्य पदस्य पदात्परस्यापादादौ वर्तमानस्य सर्वस्यानुदात्तो भवति । पचसि देवदत्त । पचसि यज्ञदत्त । आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् ।

- समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः *(म.भा.3-372) । इह मा भूवन्---अयं दण्डो हरानेन, ओदनं पच तव भविष्यति, ओदनं पच मम भविष्यति ।

इह च यथा स्यात्---इह देवदत्त माता ते कथयति । नद्यास्तिष्ठति कूले । शालीनां ते ओदनं दास्यामि इति ।
आमन्त्रितान्तं तिङन्तं युष्मदस्मदादेशाश्च यस्मात्पराणि न तेषां सामर्थ्यमिति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः; समर्थः पदविधिः(2-1-1/647) इति वचनात् ।।
</8-1-19>
युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।। <8-1-20> ।।
युष्मद् अस्मद्---इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वाम्, नौ---इत्येतावादेशौ भवतस्तौ चानुदात्तौ । `पदस्य, पदात्,अनुदात्तं सर्वमपादादौ इति सर्वमिह सम्बध्यते । ग्रामो वां स्वम् । जनपदो नौ स्वम् । ग्रामो वां दीयते । जनपदो नौ दीयते । ग्रामो वां पश्यति । जनपदो नौ पश्यति ।
एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोरेतावादेशौ विज्ञायेते ।
षष्ठीचतुर्थीद्वितीयास्थचोरिति किम् ? ग्रामे युवाभ्यां कृतम् ।
स्थग्रहणं श्रूयमाणविभक्त्यर्थम् । इह मा भूत्---इति युष्मत्पुत्र इति ।।
</8-1-20>
बहुवचनस्य वस्नसौ ।। <8-1-21> ।।
बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस्, नस्--इत्येतावादेशौ भवतः । ग्रामो वः स्वम् । जनपदो नः स्वम् । ग्रामो वो दीयते । जनपदो नो दीयते । ग्रामो वः पश्यति । जनपदो नः पश्यति ।।
</8-1-21>
तेमयावेकवचनस्य ।। <8-1-22> ।।
युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते, मे---इत्येतावादेशौ भवतः । ग्रामस्ते स्वम् । ग्रामो मे स्वम् । ग्रामस्ते दीयते । ग्रामो मे दीयते ।
द्वितीयान्तस्यादेशान्तरविधानसामर्थ्यात्षष्ठीचतुर्थ्योरेवायं योगः ।।
</8-1-22>
त्वामौ द्वितीयायाः ।। <8-1-23> ।।
`एकवचनस्य इति वर्तते । द्वितीयाया यदेकवचनं तदन्तयोर्युष्मदस्मदोर्यथासंख्यं त्वा, मा---इत्येतावादेशौ भवतः
। ग्रामस्त्वा पश्यति । ग्रामो मा पश्यति ।।
</8-1-23>

न चवाहाहैवयुक्ते ।। <8-1-24> ।।
च, वा, ह, अह, एव--एभिर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति । पूर्वेण प्रकरणेन प्राप्ताः प्रतिषिद्ध्यन्ते । ग्रामस्तव च स्वम्, ग्रामो मम च स्वम्, युवयोश्च स्वम्, आवयोश्च स्वम्; युष्माकं च स्वम्, अस्माकं च स्वम् । ग्रामस्तुभ्यं च दीयते, ग्रामो मह्यं च दीयते; युवाभ्यां च दीयते, आवाभ्यां च दीयते; युष्मभ्यं च दीयते, अस्मभ्यं च दीयते । ग्रामस्त्वां च पश्यति, ग्रामो मां च पश्यति; युवां च पश्यति, आवां च पश्यति; युष्मांश्च पश्यति, अस्मांश्च पश्यति ।
वा---ग्रामस्तव वा स्वम्, ग्रामो मम वा स्वम्; युवयोर्वा स्वम्, आवयोर्वा स्वम्; युष्माकं वा स्वम्, अस्माकं वा स्वम् । ग्रामस्तुभ्यं वा दीयते, ग्रामो मह्यं वा दीयते; युवाभ्यां वा दीयते, आवाभ्यां वा दीयते; युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते । ग्रामस्त्वां वा पश्यति, ग्रामो मां वा पश्यति; युवां वा पश्यति, आवां वा पश्यति, युष्मान् वा पश्यति, अस्मान्वा पश्यति ।
ह---ग्रामस्तव ह स्वम्, ग्रामो मम ह स्वम्; युवयोर्ह स्वम्, आवयोर्ह स्वम्; युष्माकं ह स्वम्, अस्माकं ह स्वम् । ग्रामस्तुभ्यं ह दीयते, ग्रामो मह्यं ह दीयते; युवाभ्यां ह दीयते, आवाभ्यां ह दीयते; युष्मभ्यं ह दीयते, अस्मभ्यं ह दीयते । ग्रामस्त्वां ह पश्यति, ग्रामो मां ह पश्यति; युवां ह पश्यति, आवां ह पश्यति; युष्मान्ह पश्यति, अस्मान्ह पश्यति ।
अह---ग्रामस्तवाह स्वम्, ग्रामो ममाह स्वम्; युवयोरह स्वम्, आवयोरह स्वम्; युष्माकमह स्वम्, अस्माकमह स्वम् । ग्रामस्तुभ्यमह दीयते, ग्रामो मह्यमह दीयते; युवाभ्यामह दीयते, आवाभ्यामह दीयते; युष्मभ्यमह दीयते, अस्मभ्यमह दीयते । ग्रामस्त्वामह पश्यति, ग्रामो मामह पश्यति, युवामह पश्यति, आवामह पश्यति, युष्मानह पश्यति, अस्मानह पश्यति ।
एव---ग्रामस्तवैव स्वम्, ग्रामो ममैव स्वम्; युवयोरेव स्वम्, आवयोरेव स्वम्; युष्माकमेव स्वम्, अस्माकमेव स्वम् । ग्रामस्तुभ्यमेव दीयते, ग्रामो मह्यमेव दीयते; युवाभ्यामेव दीयते, आवाभ्यामेव दीयते; युष्मभ्यमेव दीयते, अस्मभ्यमेव दीयते । ग्रामस्त्वामेव पश्यति, ग्रामो मामेव पश्यति; युवामेव पश्यति, आवामेव पश्यति; युष्मानेव पश्यति, अस्मानेव पश्यति ।
युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् । युक्तयुक्ते प्रतिषेधो न भवति । ग्रामश्च ते स्वम्, नगरं च मे स्वम् ।।
</8-1-24>
पश्यार्थैश्चानालोचने ।। <8-1-25> ।।
पश्यार्थाः=दर्शनार्थाः, दर्शनम्=ज्ञानम्, आलोचनम्=चक्षुर्विज्ञानम् । तैः पश्यार्थैरनालोचने वर्तमानैर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति । ग्रामस्तव स्वं समीक्ष्यागतः, ग्रामो मम स्वं समीक्ष्यागतः, ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः, ग्रामो मह्यं दीयमानं समीक्ष्यागतः, ग्रामस्त्वां समीक्ष्यागतः, ग्रामो मां समीक्ष्यागतः ।
अनालोचन इति किम् ? ग्रामस्त्वा पश्यति, ग्रामो मा पश्यति ।
पश्यार्थैर्युक्तयुक्तेऽपि च प्रतिषेध इष्यते । तथा चैवोदाहृतम् ।।
</8-1-25>
सपूर्वायाः प्रथमाया विभाषा ।। <8-1-26> ।।
विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्विभाषा वान्नावादयो न भवन्ति । ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम्, ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम् । ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलस्तुभ्यं दीयते; ग्रामे कम्बलो मे दीयते, ग्रामे कम्बलो मह्यं दीयते । ग्रामे छात्त्रास्त्वा पश्यन्ति, ग्रामे छात्त्रास्त्वां पश्यन्ति; ग्रामे छात्त्रा मा पश्यन्ति, ग्रामे छात्त्रा मां पश्यन्ति ।
सपूर्वाया इति किम् ? कम्बलस्ते स्वम्, कम्बलो मे स्वम् । प्रथमाया इति किम् ? कम्बलो ग्रामे ते स्वम्, कम्बलो ग्रामे मे स्वम् ।

- युष्मदस्मदोर्विभाषा अनन्वादेश इति वक्तव्यम् *(म.भा.3-373) । इह मा भूत्---अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलो मे स्वम् ।

अपर आह---* सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्याः * । कम्बलस्ते स्वम्, कम्बलस्तव स्वम्; कम्बलो मे स्वम्, कम्बलो मम स्वम् । अनन्वादेश इति किम् ? अथो कम्बलस्ते स्वम्, अथो कम्बलो मे स्वम् ।
न तर्हीदानीमिदं वक्तव्यम्---`सपूर्वायाः प्रथमायाः विभाषा इति ? वक्तव्यं च । किं प्रयोजनम् ? अन्वादेशार्थम्, अन्वादेशे हि विभाषा यथा स्यात् । अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्तव स्वम्; अथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम् ।।
</8-1-26>
तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ।। <8-1-27> ।।
तिङन्तात्पदात्पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम् । जल्पति गोत्रम् । आभीक्ष्ण्ये---पचतिपचति गोत्रम् । जल्पतिजल्पति गोत्रम् ।
ब्रुव---पचति ब्रुवम् । जल्पति ब्रुवम् । जल्पतिजल्पति ब्रुवम् । पचतिपचति ब्रुवम् ।
`ब्रुवः---इति ब्रुवः कन्निपातनाद्, वच्यादेशाभावश्च ।
गोत्र । ब्रुव । प्रवचन । प्रहसन । प्रकथन । प्रत्ययन । प्रचक्षण । प्राय । विचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ । * वा नाम * (ग.सू.178)। नामेत्येतद्वा निहन्यते । पक्षे आद्युदात्तमेव भवति---पचति नाम, पठति नाम ।
तिङ इति किम् ? कुत्सितं गोत्रम् । गोत्रादीनीति किम् ? पचति पापम् । कुत्सनाभीक्ष्ण्ययोरिति किम् ? खनति गोत्रं समेत्य कूपम् ।
कुत्सनाभीक्ष्ण्यग्रहणं च पाठविशेषणं द्रष्टव्यम् । तेनान्यत्रापि गोत्रादिग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति ।।
</8-1-27>

तिङ्ङतिङः ।। <8-1-28> ।।
तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं भवति । देवदत्तः पचति । यज्ञदत्तः पचति ।
तिङिति किम् ? नीलमुत्पलम् । शुक्लं वस्त्रम् ।
अतिङ इति किम् ? भवति पचति ।।
</8-1-28>
न लुट् ।। <8-1-29> ।।
पूर्वेणातिप्रसक्ते प्रतिषेधः आरभ्यते । लुडन्तं तिङन्तं नानुदात्तं भवति । श्वः कर्ता । श्वः कर्तारौ । मासेन कर्तारः ।
तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे सति सर्वतासिरेवोदात्तः । यत्र तु टिलोपः, तत्रोदात्तनिवृत्तिस्वरो भवति ।
</8-1-29>
निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ।। <8-1-30> ।।
`न इति वर्तते । यत्, यदि हन्त, कुवित्, नेत्, चेत्, चण्, कच्चित्, यत्र---इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं भवति । यत्करोति, यत्पचति । यदि करोति, यदि पचति । हन्त करोति, हन्त पचति ।
कुवित्---कुवित्करोति, कुवित्पचति ।
नेत्---`नेज्जिह्मायन्तो नरकं पताम(ऋ.खि.3-22) ।
चेत्---स चेद् भुङ्क्ते । स चेदधीते ।
चण्---णिद्विशिष्टोऽयं चेदर्थे वर्तते । अयं च मरिष्यति । अयं चेन्मरिष्यतीत्यर्थः । समुच्चयादिषु तु यश्चशब्दस्तेन योगेन विधिरयं न भवति ।
कच्चित्-- कच्चिद् भुङ्क्ते । कच्चिदधीते । यत्र--- यत्र भुङ्क्ते । यत्राधीते ।
निपातैरिति किम् ? यत्कूजति शकटम् । गच्छत्कूजति शकटमित्यर्थः । इणः शतरि रूपमेतत् ।
युक्तमिति किम् ? `यत्र क्व च ते मनो दक्षं दधस उत्तरम्(ऋ.6-16-17) ।।
</8-1-30>
नह प्रत्यारम्भे ।। <8-1-31> ।।
`नह इत्येतेन युक्ते प्रत्यारम्भे तिङन्तं नानुदात्तं भवति । चोदितस्यावधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते । नह भोक्ष्यसे । नहाध्येष्यसे ।
प्रत्यारम्भ इति किम् ? नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति ।।
</8-1-31>
सत्यं प्रश्ने ।। <8-1-32> ।।
`सत्यम् इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने । सत्यं भोक्ष्यसे । सत्यमध्येष्यसे ।
प्रश्न इति किम् ? `सत्यं वक्ष्यामि नानृतम्(अ.वे.4-9-7) ।।
</8-1-32>
अङ्गाप्रातिलोम्ये ।। <8-1-33> ।।
`अङ्ग इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने नानुदात्तं भवति । अङ्ग कुरु । अङ्ग पच । अङ्ग पठ ।
अप्रातिलोम्य इति किम् ? अङ्ग कूज वृषल इदानीं ज्ञास्यसि जाल्म । कूजनमनभिमतमसौ कुर्वन्प्रतिलोमो भवति ।।
</8-1-33>
हि च ।। <8-1-34> ।।
`हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति । स हि कुरु । स हि पच । स हि पठ ।
`अप्रातिलोम्ये इत्येव---स हि कूज वृषल इदानीं ज्ञास्यति जाल्म ।।
</8-1-34>
छन्दस्यनेकमपि साकाङ्क्षम् ।। <8-1-35> ।।
`हि च इति वर्तते । छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति, एकमपि । कदाचिदेकम्, कदाचिदनेकमित्यर्थः । तत्रानेकं तावत्---अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति । तिङन्तद्वयमप्येतन्न निहन्यते (म.भा.3-375)।
एकं खल्वपि---अग्निर्हि अग्ने उदजयत् । तिङन्तद्वयमपि हिशब्दयुक्तमेतत् । तत्रैकमुदजयदित्यादिरुदात्तम्, अपरमनुदात्तम् । अजा ह्यग्नेरजनिष्ट गर्भम् । सा वा अपश्यज्जनितारमग्रे । अजनिष्टेत्याद्युदात्तम्, अपश्यदित्यनुदात्तम् ।।
</8-1-35>
यावद्यथाभ्याम् ।। <8-1-36> ।।
`यावत्, `यथा---इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति । यावद् भुङ्क्ते । यथा भुङ्क्ते । यावदधीते । यथाधीते । देवदत्तः पचति यावत् । देवदत्तः पचति यथा । परेणापि योगे भवति प्रतिषेधः ।।
</8-1-36>
पूजायां नानन्तरम् ।। <8-1-37> ।।
`यावत्, `यथा---इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति, किं तर्हि ? अनुदात्तमेव । यावत्पचति शोभनम् । यथा पचति

शोभनम् । यावत् करोति चारु । यथा करोति चारु ।
पूजायामिति किम् ? यावद् भुङ्क्ते । यथा भुङ्क्ते । अनन्तरमिति किम् ? यावद्देवदत्तः पचति शोभनम् । यथा देवदत्तः करोति चारु । पूर्वेणात्र निघातः प्रतिषिध्यते ।।
</8-1-37>
उपसर्गव्यपेतं च ।। <8-1-38> ।।
यावद्यथाभ्यां युक्तं उपसर्गव्यपतं च पूजायां विषये नानुदात्तं न भवति, किं तर्हि ? अनुदात्तमेव भवति ।
पूर्वमनन्तरमित्युक्तम्, उपसर्गव्यवधानार्थोऽयमारम्भः । यावत्प्रपचति शोभनम् । यथा प्रपचति शोभनम् । यावत्प्रकरोति चारु । यथा प्रकरोति चारु ।
अनन्तरमित्येव---यावद्देवदत्तः प्रपचति । यथा विष्णुमित्रः प्रकरोति चारु ।
</8-1-38>
तुपश्यपश्यताहैः पूजायाम् ।। <8-1-39> ।।
तु, पश्य, पश्यत, अह---इत्येतैर्युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । तु---माणवकस्तु भुङ्क्ते शोभनम् । पश्य---पश्य माणवको भुङ्क्ते शोभनम् । पश्यत---पश्यत माणवको भुङ्क्ते शोभनम् । अह---अह माणवको भुङ्क्ते शोभनम् ।
पूजायामिति किम् ? पश्य मृगो धावति । `पूजायाम् इति वर्तमाने पुनः `पूजायाम् इत्युच्यते निघातप्रतिषेधार्थम् । तद्धि प्रतिषेधस्य प्रतिषेधेन सम्बद्धमिति ।।
</8-1-39>
अहो च ।। <8-1-40> ।।
`अहो---इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । अहो देवदत्तः पचति शोभनम् । अहो विष्णुमित्रः करोति चारु ।
पृथग्योगकरणमुत्तरार्थम् ।।
</8-1-40>
शेषे विभाषा ।। <8-1-41> ।।
`अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति । कश्च शेषः ? यदन्यत्पूजायाः । कटमहो करिष्यसि । मम गेहमेष्यसि । असूयावचनमेतत् ।
`पूजायाम्----इत्यस्य पूर्वत्र चानुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ।।
</8-1-41>
पुरा च परीप्सायाम् ।। <8-1-42> ।।
`पुरा---इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे विभाषा नानुदात्तं भवति । परीप्सा=त्वरा । अधीष्व माणवक , पुरा विद्योतते विद्युत् । पुरा स्तनयति स्तनयित्नुः । पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति ।
परीप्सायामिति किम् ? नडेन स्म पुराधीयते । अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति । ऊर्णया स्म पुराधीयते ।।
</8-1-42>
नन्वित्यनुज्ञैषणायाम् ।। <8-1-43> ।।
`ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये । अनुज्ञाया एषणा=प्रार्थना, अनुज्ञैषणा । अनुज्ञाप्रार्थनेत्यर्थः । ननु करोमि भोः । ननु गच्छामि भोः । अनुजानीष्व माम्, करणं प्रतीत्यर्थः ।
अनुज्ञैषणायामिति किम् ? अकार्षीः कटं देवदत्त । ननु करोमि भोः । पृष्टप्रतिवचनमेतत्, नानुज्ञैषणा ।।
</8-1-43>
किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ।। <8-1-44> ।।
`किम्---इत्येतत्क्रियाप्रश्ने यदा वर्तते तदानेन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धं नानुदात्तं भवति । किं देवदत्तः पचति, आहोस्विद् भुङ्क्ते । किं देवदत्तः शेते, आहोस्विदधीते ।
अत्र केचिदाहुः---पूर्वं किंयुक्तमिति तन्न निहन्यते । उत्तरं तु न किंयुक्तमिति तन्निहन्यत एवेति ।
अपरे त्वाहुः---यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इति, उभयत्र प्रतिषेधेन भवितव्यमिति ।
क्रियाग्रहणं किम् ? साधनप्रश्ने मा भूत्---किं देवदत्त ओदनं पचति आहोस्विच्छाकमिति । प्रश्न इति किम् ? किमधीते देवदत्तः । क्षेपे किंशब्दोऽयम्, न प्रश्ने । अनुपसर्गमिति किम् ? किं देवदत्तः प्रपचति,
आहोस्वित्प्रकरोति । अप्रतिषिद्धमिति किम् ? किं देवदत्तो न पठति, आहोस्विन्न करोति ।।
</8-1-44>
लोपे विभाषा ।। <8-1-45> ।।
किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं विभाषा नानुदात्तं भवति ।
क्व चास्य लोपः ? यत्र गम्यते चार्थः, न च प्रयुज्यते किंशब्दः । देवदत्तः पचति आहोस्वित्पठति । विनैव किमा प्रश्नोऽवगम्यते ।
प्राप्तविभाषेयं किमर्थेन योगात् । पूर्ववत् प्रत्युदाहरणानि ।।
</8-1-45>

एहिमन्ये प्रहासे लृट् ।। <8-1-46> ।।
`एहिमन्ये---इत्यनेन युक्तं लृडन्तं नानुदात्तं भवति प्रहासे । प्रकृष्टो हासः प्रहासः=क्रीडा । एहि मन्ये ओदनं भोक्ष्यसे न हि भोक्ष्यसे भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्तेन पिता ।
प्रहास इति किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति । सुष्ठु मन्यसे । साधु मन्यसे ।
गत्यर्थलोटा लृट्(8-1-51/3958) इत्येव सिद्धे सत्यारम्भो नियमार्थः--एहिमन्येयुक्ते प्रहास एव यथा स्यात्, अन्यत्र मा भूदिति---एहि मन्यसे ओदनं भोक्ष्य इति ।
`एहिमन्ये इत्युत्तमोपादानमतन्त्रम् । प्रहास एव हि मन्यतेरुत्तमो विहितः, ततोऽन्यत्र मध्यम एव भवति । तत्रानेन नियमेन निवृत्तिः क्रियते---एहि मन्यसे ओदनं भोक्ष्य इति ।।
</8-1-46>
जात्वपूर्वम् ।। <8-1-47> ।।
`जातु इत्येतदविद्यमानपूर्वं तेन युक्तं तिङन्तं नानुदात्तं भवति । जातु भोक्ष्यसे । जातु करिष्यामि ।
अपूर्वमिति किम् ? कटं जातु करिष्यति ।।
</8-1-47>
किंवृत्तं च चिदुत्तरम् ।। <8-1-48> ।।
किमो वृत्तं किंवृत्तम् । किंवृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ । तत्किंवृत्तं चिदुत्तरमविद्यमानपूर्वं यत्तेन युक्तं नानुदात्तं भवति । कश्चिद्भोजयति । कश्चिदधीते । केनचित्करोति । कस्मैचिद्ददाति । कतरश्चित्करोति । कतमश्चिद् भुङ्क्ते ।
चिदुत्तरमिति किम् ? को भुङ्क्ते । अपूर्वमित्येव---देवदत्तः किञ्चित्पठति ।।
</8-1-48>
आहोउताहो चानन्तरम् ।। <8-1-49> ।।
निघातप्रतिषेधोऽनुवर्तते । `अपूर्वम् इति च । आहो, उताहो---इत्येताभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं भवति । आहो भुङ्क्ते । उताहो भुङ्क्ते । आहो पठति । उताहो पठति ।
अनन्तरमिति किम् ? शेषे विभाषां वक्ष्यति ।
`अपूर्वम् इत्येव---देवदत्त आहो भुङ्क्ते । देवदत्त उताहो भुङ्क्ते ।।
</8-1-49>
शेषे विभाषा ।। <8-1-50> ।।
`आहो, `उताहो---इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं शेषे विभाषा भवति । कश्च शेषः ? यदन्यदनन्तरात् । आहो देवदत्तः पचति, उताहो दवदत्तः पचति । आहो देवदत्तः पठति। उताहो देवदत्तः पठति ।।
</8-1-50>
गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ।। <8-1-51> ।।
गमिना समानार्था गत्यर्थाः, गत्यर्थानां लोट् गत्यर्थलोट्, तेन । गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति, न चेत्कारकं सर्वमन्यद्भवति । यत्रैव कारके कर्तरि कर्मणि वा लोट्, तत्रैव यदि लृडपि भवतीत्यर्थः ।
कर्तृकर्मणी एवात्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते, न करणादि कारकान्तरम् । आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम् । आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे । उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते । उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते ।
गत्यर्थग्रहणं किम् ? पच देवदत्तौदनं भोक्ष्यस एनम् । लोटेति किम् ? आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्येनम् । लृडिति किम् ? आगच्छ देवदत्त ग्रामं पश्यस्येनम् । न चेत्कारकं सर्वान्यदिति किम् ? आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यते । उह्यन्तां देवदत्तेन शालयः सक्तवस्तेन पास्यन्ते ।
सर्वग्रहणं किम् ? आगच्छ देवदत्त ग्रामं त्वं चाहं च द्रक्ष्याव एनम्---इत्यत्रापि निघातप्रतिषेधो यथा स्यात् । लृडन्तवाच्ये हि सर्वस्मिन् कारकेऽन्यस्मिन् भवितव्यम् । इह तु यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते इति ।
</8-1-51>
लोट् च ।। <8-1-52> ।।
लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति । लोडन्तयोरेकं कारकं यदि भवतीत्यर्थः । आगच्छ देवदत्त ग्रामं पश्य । आव्रज विष्णुमित्र ग्रामं शाधि । आगम्यतां देवदत्तेन ग्रामो दृश्यतां यज्ञदत्तेन ।
`गत्यर्थानाम् इत्येव---पच देवदत्तौदनं भुङ्क्ष्व एनम् ।
`लोटा इत्येव---आगच्छेर्देवदत्त ग्रामं पश्यैनम् । `न चेत्कारकं सर्वान्यत् इत्येव---आगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः ।
सर्वग्रहणानुवृत्तेस्त्विह भवत्येव---आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव । पृथग्योगकरणमुत्तरार्थम् ।।
</8-1-52>
विभाषितं सोपसर्गमनुत्तमम् ।। <8-1-53> ।।
सर्वं पूर्वमनुवर्तते । प्राप्तविभाषेयम् । लोडन्तं सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं विभाषितं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति । आगच्छ देवदत्त ग्रामं प्रविश । आगच्छ देवदत्त ग्रामं प्रशाधि ।
सोपसर्गमिति किम् ? आगच्छ देवदत्त ग्रामं पश्य । अनुत्तममिति किम् ? आगच्छानि देवदत्त ग्रामं प्रविशानि ।।

</8-1-53>
हन्त च ।। <8-1-54> ।।
पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा । `हन्त---इत्यनेन युक्तं लोडन्तं सोपसर्गमुत्तमवर्जितं विभाषितं नानुदात्तं भवति । हन्त प्रविश । हन्त प्रशाधि ।
सोपसर्गमित्येव---हन्त कुरु । निपातैर्यद्यदिहन्त(8-1-30/3937) इति नित्यमत्र निघातप्रतिषेधो भवति ।
अनुत्तममित्येव---हन्त प्रभुञ्जावहै । हन्त प्रभुञ्जामहै ।।
</8-1-54>
आम एकान्तरमामन्त्रितमनन्तिके ।। <8-1-55> ।।
आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके नानुदात्तं भवति । आम् पचसि देवदत्त3 । आम् भो देवदत्त3 ।
`भोः इत्यामन्त्रितान्तमपि नामन्त्रिते समानाधिकरणे सामान्यवचनम्(8-1-73/413) इति नाविद्यमानवद्भवति ।
आम इति किम् ? शाकं पचसि देवदत्त 3 । एकान्तरमिति किम् ? आम् प्रपचसि देवदत्त3 । आमन्त्रितमिति किम् ? आम् पचति देवदत्तः । अनन्तिक इति किम् ? आम् देवदत्तः ।
आम एकान्तरमामन्त्रितं यत्तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते (म.भा.3-377)। तदुभयमनेन क्रियत इति केचिदाहुः । प्लुतोदात्तः पुनरसिद्धत्वान्न प्रतिषिध्यते ।
अपरेषां दर्शनम्---`अनन्तिक इत्यनेन यन्न दूरं न सन्निकृष्टं तत् परिगृह्यते । तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति । प्लुतोदात्तोऽपि नोदाहर्तव्यः इति ।।
</8-1-55>
यद्धितुपरं छन्दसि ।। <8-1-56> ।।
`आमन्त्रितम्---इत्येतदस्वरितत्वान्नानुवर्तते । `तिङ् इति वर्तत एव । यत्परं हिपरं तुपरं च तिङन्तं छन्दसि नानुदात्तं भवति ।
यत्परं तावत्---`गवां गोत्रमुदसृजोऽयमङ्गिरः(ऋ.2-23-18) । हिपरम्---`इन्दवो वामुशन्ति हि(तै.सं.1-4-4-1) । तुपरम्--आख्यास्यामि ते ।
निपातैर्यद्यदिहन्त(8-1-30/3937) इति हि च(8-1-34/3941) इति, तुपश्यपश्यताहै(8-1-39/3946) इति च निघातप्रतिषेधे सिद्धे वचनमिदं नियमार्थम्---एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैरिति । इह न भवति---जाये स्वो रोहावैहि । एहीत्यनेन गत्यर्थलोटा युक्तस्य `रोहाव इत्येतस्य लोडन्तस्य निघातो भवत्येव ।।
</8-1-56>
चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।। <8-1-57> ।।
चन, चिद्, इव, गोत्रादि, तद्धित, आम्रेडित---इत्येतेषु परतः अगतेरुत्तरं तिङन्तं नानुदात्तं भवति । चन---देवदत्तः पचति चन । चित्---देवदत्तः पचति चित् । इव--देवदत्तः पचतीव । गोत्रादि---देवदत्तः पचति गोत्रम् । देवदत्तः पचति ब्रुवम् । देवदत्तः पचति प्रवचनम् । इहापि गोत्रादयः कुत्सनाभीक्ष्ण्योरेव गृह्यन्ते । तद्धित---देवदत्तः पचतिकल्पम् । देवदत्तः पचतिरूपम् । अनुदात्तस्तद्धित इहोदाहरणम्, अन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते---पचतिदेश्यः । आम्रेडित---देवदत्तः पचति पचति ।
अगतेरिति किम् ? देवदत्तः प्रपचति चन ।
अत्रागतिग्रहणे, सगतिरपि तिङ्(8-1-68/3975) इत्यत्र च उपसर्गग्रहणं द्रष्टव्यम् । इह मा भूत्---शुक्लीकरोति चन । यत्काष्ठं शुक्लीकरोति । यत्काष्ठं कृष्णीकरोति ।।
</8-1-57>
चादिषु च ।। <8-1-58> ।।
चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति । चादयः नचवाहाहैवयुक्ते(8-1-24/408) इत्यत्र ये निर्दिष्टाः, त इह परिगृह्यन्ते । चशब्दे तावत्---देवदत्तः पचति च खादति च । वा---देवदत्तः पचति वा खादति वा । ह---देवदत्तः पचति ह खादति ह । अह---देवदत्तः पचत्यह खादत्यह । एव---देवदत्तः पचत्येव खादत्येव ।
`अगतेः इत्येव---देवदत्तः प्रपचति च प्रखादति च । प्रथमस्यात्र तिङन्तस्य चवायोगे प्रथमेति निघातः प्रतिषिद्ध्यते एव । परं तु निहन्यते ।।
</8-1-58>
चवायोगे प्रथमा ।। <8-1-59> ।।
`अगतेः इति पूर्वसूत्रे चानुकृष्टमित्यत्र नानुवर्तते । च, वा---इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति । गर्दभाँश्च कालयति, वीणां च वादयति । गर्दभान्वा कालयति, वीणां वा वादयति ।
योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधो यथा स्यादिति ।
प्रथमाग्रहणम्---द्वितीयादेस्तिङन्तस्य मा भूदिति ।
चवायोगो हि द्विसमुच्चये विकल्पे च सति भवति, स चानेकस्य धर्म इति ।।
</8-1-59>
हेति क्षियायाम् ।। <8-1-60> ।।
`ह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति क्षियायां गम्यमानायाम् । क्षिया=धर्मव्यतिक्रमः आचारभेदः । स्वयं ह रथेन याति3 उपाध्यायं पदातिं गमयति । स्वयं हौदनं भुङ्क्ते3 उपाध्यायं सक्तून्पाययति । प्रथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते । क्षियाशीः प्रैषेषु

तिङाकाङ्क्षम्(8-2-104/3623) इति च प्लुतो भवति ।।
</8-1-60>
अहेति विनियोगे च ।। <8-1-61> ।।
`अह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने । चशब्दात् क्षियायां च । नानाप्रयोजनो नियोगः=विनियोगः । त्वमह ग्रामं गच्छ । त्वमह अरण्यं गच्छ । क्षियायाम्---स्वयमह रथेन याति3 उपाध्यायं पदातिं गमयति । स्वयमहौदनं भुङ्क्ते3 उपाध्यायं सक्तून्पाययति । पूर्ववन्निघातप्रतिषेधः, प्लुतश्च ।।
</8-1-61>
चाहलोप एवेत्यवधारणम् ।। <8-1-62> ।।
चलोपे अहलोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति । एवेत्येतच्चेदवधारणार्थं प्रयुज्यते, क्व चास्य लोपः ? यत्रार्थो गम्यते, न च प्रयुज्यते, तत्र लोपः । तत्र चशब्दः समुच्चयार्थः, अहशब्दः केवलार्थ इति---समानकर्तृके चलोपः, नानाकर्तृके अहलोपः ।
चलोपे---देवदत्त एव ग्रामं गच्छतु, स देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छत्वित्यर्थः । अहलोपे---देवदत्त एव ग्रामं गच्छतु यज्ञदत्त एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलमित्यर्थः ।
अवधारणमिति किम् ? देवदत्तः क्वेव भोक्ष्यते । अनवक्लृप्तावयमेवशब्दः । न क्वचिद्भोक्ष्यत इत्यर्थः । `एवे चानियोगे(वा.686) इति पररूपम् ।।
</8-1-62>
चादिलोपे विभाषा ।। <8-1-63> ।।
चादयः नचवाहाहैवयुक्ते(8-1-24/408) इति सूत्रनिर्दिष्टा गृह्यन्ते, तेषां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विभाषा । चलोपे---शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । भवन्तीत्येतद्विकल्पेन न निहन्यते । वालोपे---व्रीहिभिर्यजेत । यवैर्यजेत ।
एवं शेषेष्वपि यथादर्शनमुदाहार्यम् ।।
</8-1-63>
वैवावेति च च्छन्दसि ।। <8-1-64> ।।
`वै, `वाव---इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये । `अहर्वै देवानामासीद् रात्रिरसुराणाम्(तै.सं.1-5-9-2) । `बृहस्पतिर्वै देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम्(तै.सं.6-4-10-1) । वाव---अयं वाव हस्त आसीत् । नेतर आसीत् ।
</8-1-64>
एकान्याभ्यां समर्थाभ्याम् ।। <8-1-65> ।।
`एक, `अन्य---इत्येताभ्यां समर्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये । प्रजामेका जिन्वति। ऊर्जमेका रक्षति(अ.वे.8-9-13) । जिन्वतीत्येतत्पक्षे न निहन्यते । तयोरन्यः पिप्पलं स्वाद्वत्ति । अनश्नन्नन्यो अभिचाकशीति (ऋ.1-164-20)। अत्तीत्येतत्पक्षे न निहन्यते ।
समर्थाभ्यामिति किम् ? एको देवानुपातिष्ठत् । एक इति संख्यापदमेतद् अन्यार्थे न वर्त्तते । एकशब्दस्य व्यवस्थार्थं च समर्थग्रहणम्; व्यभिचारित्वात्तस्य ।।
</8-1-65>
यद्वृत्तान्नित्यम् ।। <8-1-66> ।।
`प्रथमा, `छन्दसि इति निवृत्तम् । निघातप्रतिषेध इत्येव । यदो वृत्तं यद्वृत्तम्, यत्र पदे यच्छब्दो वर्तते तत्सर्वं यद्वृत्तम् । इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरडतमौ च प्रत्ययौ इत्येतन्नाश्रीयते । तस्माद्यद्वृतादुत्तरं तिङन्तं नानुदात्तं भवति नित्यम् । यो भुङ्क्ते । यं भोजयति । येन भुङ्क्ते । यस्मै ददाति । `यत्कामास्ते जुहुमः(ऋ.10-121-10) । `यद्रियङ् वायुर्वाति(तै.5-5-1-1) । यद्वायुः पवते ।
पञ्चमीनिर्देशेऽप्यत्र व्यवहिते कार्यमिष्यते ।

- यथाकाम्ये वेति वक्तव्यम् * (म.भा.3-379)। यत्र क्वचन यजन्ते ।।

</8-1-66>
पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ।। <8-1-67> ।।
पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं भवति । काष्ठ---काष्ठाध्यायकः । काष्ठाभिरूपकः । दारुण---दारुणाध्यापकः । दारुणाभिरूपकः । अमातापुत्र---अमातापुत्राध्यापकः । अयुत---अयुताभिरूपकः । अयुताध्यापकः । अद्भुत---अद्भुताध्यापकः । अनुक्त---अनुक्ताध्यापकः । भृश---भृशाध्यापकः । घोर---घोराध्यापकः । परम---परमाध्यापकः । सु---स्वध्यापकः । अति--अत्यध्यापकः ।

- मलोपश्च * (म.भा.3-379)। इति वार्त्तिककारमतम् । मयूरव्यंसकादित्वात् समासः, समासे चैतदनुदात्तत्वम् ।

समासान्तोदात्तत्वापवाद इष्यते । दारुणमध्यायक इत्येवमादिषु न भवति । `मलोपश्च इत्यनेनाप्ययमेव विषय आख्यायते । यत्र विभक्तेरभावान्मकारो न श्रूयते तत्रानुदात्तत्वमिति ।
असमासे हि मलोपो नैवेष्यते । दारुणमधीते दारुणमध्यायक इति ।
पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितप्रतिपत्त्यर्थम् । एतदेव ज्ञापकम्---इह प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति । तथा च यद्वृत्तान्नित्यम्(8-1-66/3973) इत्यत्रोदाहृतम् ।
`अनुदात्तम् इति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम् ।।

</8-1-67>
सगतिरपि तिङ् ।। <8-1-68> ।।
सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्य परं पूजितं तिङन्तमनुदात्तं भवति । यत्काष्ठं पचति । यत्काष्ठं प्रपचति । यद्दारुणं पचति । यद्दारुणं प्रपचति ।
तिङ्ङतिङः(8-1-28/3935) इति निघातस्य निपातैर्यद्यदिहन्त(8-1-30-/3937) इति प्रतिषेधे प्राप्ते पुनर्विधानम् । सगतिग्रहणाच्च गतिरपि निहन्यते ।
गतिग्रहणेन चात्रोपसर्गग्रहणमिष्यते । इह न भवति---यत्काष्ठं शुक्लीकरोति । यत्काष्ठं कृष्णीकरोति ।।
</8-1-68>
कुत्सने च सुप्यगोत्रादौ ।। <8-1-69> ।।
`पदात् इति निवृत्तम् । `सगतिरपि तिङ् इति वर्तते । कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङ् अगतिरप्यनुदात्तो भवति । पचति पूति, प्रपचति पूति । पचति मिथ्या, प्रपचति मिथ्या ।
कुत्सने इति किम् ? पचति शोभनम् । सुपीति किम् ? पचति क्लिश्नाति । अगोत्रादाविति किम् ? पचति गोत्रम् । पचति ब्रुवम् । पचति प्रवचनम् ।

- क्रियाकुत्सन इति वक्तव्यम् * (म.भा.3-380)। कर्तुः कुत्सने मा भूत्---पचति पूतिर्देवदत्तः । प्रपचति पूतिः ।
- पूतिश्चानुबन्धो भवतीति वक्तव्यम् * (म.भा.3-380)। तेनायं चकारानुबन्धकत्वादन्तोदात्तो भवति ।
- विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वक्तव्यम् * (म.भा.3-380)। पचन्ति पूति । प्रपचन्ति पूति ।

`सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थम् ।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ।।(म.भा.3-380)
</8-1-69>
गतिर्गतौ ।। <8-1-70> ।।
गतिर्गतौ परतोऽनुदात्तो भवति । अभ्युद्धरति । समुदानयति । अभिसम्पर्याहरति ।
गतिरिति किम् ? देवदत्तः प्रपचति । गताविति किम् ? `आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः(ऋ.3-45-1) । याहीत्येतत्प्रति क्रियायोगादाङित्येष गतिः । तस्य गतावित्येतस्मिन्नसति गतिरित्यनाश्रितपरनिमित्तकमनुदात्तत्वं स्यात् ।।
</8-1-70>
तिङि चोदात्तवति ।। <8-1-71> ।।
`गतिः इति वर्त्तते । तिङन्तेऽनुदात्तवति परतो गतिरनुदात्तो भवति । यत्प्रपचति । यत्करोति ।
तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्; अन्यथा हि यं प्रति गतिः, तत्रानुदात्तो भवतीति धातावेवोदात्तवति स्यात्; प्रत्यये न स्यात्---यत्प्रकरोतीति । `यत्क्रियायुक्ताः प्रादयस्तेषां तं प्रति गत्युपसर्गसंज्ञे भवतः(जै.प.99) इति तिङन्ते धातुमेव प्रति गतिसंज्ञा ।
आमन्ते तर्हि न प्राप्नोति---प्रपचतितराम्, प्रपचतितमामिति ? अत्र केचिदामन्तेन गतेः समासं कुर्वन्ति; तेषामव्ययवूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणेऽपि तिङ्ग्रहणे परमनुदात्तवद्भवतीति गतिनिघातो नैव सिद्ध्यति ।
अथ तरबन्तस्य गतिसमासः ? एवमपि सतिशिष्टत्वादाम एव स्वरे सति गतेः अनुदात्तं पदमेकवर्जम्(6-1-158/3650) इत्येवानुदात्तत्वं सिद्धम् । येषां `गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः(पु.प.62) इत्यनेन वचनेन कृदन्तेनैव प्राक्सुबुत्पत्तेः समासो भवति, नान्येन, इति दर्शनम्, तेषामेवंविधे विषये समासेन नैव भवितव्यमिति । पृथक् स्वरप्रवृत्तौ सत्यामनेन निघातेन प्रयोजनमस्ति, तदर्थं यत्नः कर्तव्यः ।
उदात्तवतीति किम् ? प्रपचति । प्रकरोति ।।
</8-1-71>
आमन्त्रितं पूर्वमविद्यमानवत् ।। <8-1-72> ।।
आमन्त्रितं पूर्वमविद्यमानवद्भवति, तस्मिन् सति यत्कार्यं तन्न भवति, असति यत्तद्भवति ।
कानि पुनरविद्यमानवत्त्वे प्रयोजनानि? आमन्त्रित--तिङ्निघातयुष्मदस्मदादेशाभावाः । देवदत्त, यज्ञदत्तेत्यत्रामन्त्रितस्य पदात्परस्य(8-1-19/3654) इति निघातो न भवति, षाष्ठिकामन्त्रिताद्युदात्तत्वं(6-1-198/3653) भवति; देवदत्त पचसीत्यत्र तिङ्ङतिङः(8-1-28/3935) इति निघातो न भवति; देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वम्---इत्येवमादिषु युष्मदस्मदादेशा न भवन्ति । पूजायामनन्तरप्रतिषेधः प्रयोजनम्---यावद्देवदत्त पचसीत्यत्रापि पूजायां नानन्तरम्(8-1-37/3944) इत्येव प्रतिषेधो भवति । जात्वपूर्वम्(8-1-47/3954) इत्येतद्---देवदत्त जातु पचसीत्यत्रापि भवति । आहो उताहो चानन्तरम्(8-1-49/3956) इति---आहो देवदत्त पचसि उताहो देवदत्त पचसीत्यत्रापि भवति आम एकान्तरमामन्त्रितमनन्तिके(8-1-55/3962) इति---आम् भोः पचसि देवदत्त इत्यत्रापि भवति ।
आमन्त्रितमिति किम् ? देवदत्तः पचति । पूर्वमिति किम् ? देवदत्त इत्येतस्यामन्त्रिताद्युदात्तत्वे कर्तव्ये नाविद्यमानवद्भवति । पूर्वत्वं च परापेक्षं भवतीति परस्यैव कार्ये स्वनिमित्ते, अन्यनिमित्ते वा तदविद्यमानवद्भवति, न तु स्वकार्ये । देवदत्त पचसीत्यत्रापि ह्यामन्त्रिताद्युदात्तत्वं भवत्येव ।
इह---`इमं मे गङ्गे यमुने(ऋ.10-75-5) इति गङ्गेशब्दः पूर्वमामन्त्रितम्, ततः परस्य यमुनेशब्दस्यानुदात्तत्वे कर्तव्ये स्वयमविद्यमानवत्त्वान्निमित्तं न भवति । मेशब्दस्य निमित्तभावं न प्रतिबध्नाति ।।
</8-1-72>
नामन्त्रिते समानाधिकरणे सामान्यवचनम् ।। <8-1-73> ।।

अविद्यमानवत्त्वस्य प्रतिषेधः । आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं नाविद्यमानवद्भवति, किं तर्हि ? विद्यमानवदेव । `अग्ने गृहपते(तै.2-4-5-2) । माणवक जटिलकाध्यापक । पूर्वस्य विद्यमानवत्त्वात्परमनुदात्तमेव भवति ।
आमन्त्रित इति किम् ? देवदत्त पचसि । समानाधिकरण इति किम् ? देवदत्त पण्डित यज्ञदत्त । अत्र यज्ञदत्तविशेषणं पण्डितशब्दः; न पूर्वेण समानाधिकरणः । सामान्यवचनमिति किम् ? पर्यायेषु मा भूत्---अघ्न्ये देवि सरस्वति ईडे काव्ये विहव्ये । एते पर्यायाः । एवं ह्युक्तम्---`एतानि ह्यघ्न्ये नामानि(वा.सं.8-43)इति ।।
</8-1-73>
विभाषितं विशेषवचने बहुवचनम् ।। <8-1-74> ।।
पूर्वेणाविद्यमानवत्त्वे प्रतिषिद्धे विकल्प उच्यते । विशेषवचने समानाधिकरणे आमन्त्रितान्ते परतः पूर्वमामन्त्रितं बहुवचनान्तं विभाषितमविद्यमानवद्भवति । देवाः शरण्याः। देवाः शरण्याः । ब्राह्मणा वेयाकरणाः। ब्राह्मणा वैयाकरणाः ।
सामान्यवचनाधिकारादेव विशेषवचन इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम् ।
बहुवचनमिति किम् ? माणवक । जटिलक । नित्यमेतद्विद्यमानवदेव ।।
इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ
अष्टमस्याध्यायस्य प्रथमः पादः
</8-1-74>

# काशिका/अष्टमोऽध्यायः/द्वितीयः पादः

https://sa.wikisource.org/s/pc4
< काशिका | अष्टमोऽध्यायः

अथ अष्टमाध्याये द्वितीयः पादः
पूर्वत्रासिद्धम् ।। <8-2-1> ।।
`पूर्वत्रासिद्धम् इत्यधिकारोऽयमा अध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामः `पूर्वत्रासिद्धम् इत्येवं तद्वेदितव्यम् । तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति । इत उत्तरं चोत्तर उत्तरो योगः पूर्वत्रपूर्वत्रासिद्धो भवति=असिद्धवद्भवति । सिद्धकार्यं न करोतीत्यर्थः ।
तदेतदसिद्धत्ववचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च । अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्यः---इत्यत्र व्यलोपस्यासिद्धत्वात् आद्गुणः(6-1-87/69) इति, अकः सवर्णे दीर्घः(6-1-101/85) इति च न भवति । अमुष्मै, अमुष्मात्, अमुष्मिन्---इति उत्वस्यासिद्धत्वात् स्मायादयो भवन्ति ।
शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा ।
मतोर्वत्वे झलां जश्त्वे गुडलिण्मान्निदर्शनम् ।।
शुष्किकेति---अत्र शुषः कः(8-2-51/3030) इत्यस्यासिद्धत्वाद् उदीचामातः स्थाने यकपूर्वायाः(7-3-46/465) इत्येतन्न भवति ।
शुष्कजङ्घेति---न कोपधायाः(6-3-37/838) इति पुंवद्भावप्रतिषेधो न भवति ।
क्षामिमानिति---क्षामस्यापत्यं क्षामिः, क्षामो वा अस्यास्तीति क्षामी, क्षामिः, क्षामी वा यस्यास्तीति क्षामिमान् । क्षायो मः(8-2-53/3032) इत्यस्यासिद्धत्वात् मादुपधायाश्च(8-2-9/1897) इति वत्वं न भवति ।
औजढदिति--वहेर्निष्ठायामूढस्तमाख्यदिति णिच्, तदन्ताल्लुङ्; चङि(6-1-1/2315) इति द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च यष्टिलोपः, तस्य स्थानिवद्भावाद् हृत इत्येतद् द्विरुच्यते । `अनग्लोपे(7-4-93/2316) इति प्रतिषेधात्सन्वदित्वं नास्ति, तेन औजढदिति भवति । औजिढत् इत्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवति ।
गुडलिण्मानिति---गुडलिहोऽस्य सन्ति इति मतुप्, तत्र ढत्वजश्त्वपोरसिद्धत्वाद् झयः(8-2-10/1898) इति वत्वं न भवति ।
येऽत्र षष्ठीनिर्द्देशाः, सप्तमीनिर्द्देशाः, पञ्चमीनिर्द्देशाश्च; तेषाम् षष्ठीस्थानेयोगा(1-1-49/38), तस्मिन्निति निर्दिष्टे पूर्वस्य(1-1-60/40), तस्मादित्युत्तरस्य(1-1-67/41) इति च कर्तव्ये नासिद्धत्वं भवति; `कार्यकालं हि संज्ञापरिभाषम्(व्या.प.58) इति पूर्वत्वमासां परिभाषाणां नास्तीति । विप्रतिषेधे परम्(1-4-2/175) इत्येषा तु परिभाषा येन पूर्वेण लक्षणेन सह स्पर्द्धते, परं लक्षणं तत्प्रति तस्यासिद्धत्वान्न प्रवर्तते । तथा च विस्फोर्यम्, अवगोर्यमिति गुणः परेण हलि च(8-2-77/354) इति दीर्घत्वेन न बाध्यते । अपवादस्य तु परस्यापि उत्सर्गे कर्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति । तेन दोग्धा, दोग्धुमित्यत्र घत्वस्यासिद्धत्वाद् हो ढः(8-2-31/324) इति न भवति ।।
</8-2-1>
नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।। <8-2-2> ।।
नलोपः पूर्वत्रासिद्धो भवति सुब्विधौ, स्वरविधौ, संज्ञाविधौ, तुग्विधौ च कृति । विधिशब्दोऽयं प्रत्येकमभिसम्बध्यमानः स्वरसंज्ञातुकां विधेयत्वात्तैः कर्मषष्ठीयुक्तैर्भावसाधनोऽभिसम्बध्यते । सुपा तु सम्बन्धसामान्यवचनषष्ठ्यन्तेन कर्मसाधनः । तेन सुपः स्थाने यो विधिः, सुपि च परभूते, सर्वोऽसौ सुब्विधिरिति सर्वत्रासिद्धत्वं भवति ।
सुब्विधौ तावत्---राजभिः, तक्षभिरित्यत्र नलोपस्यासिद्धत्वाद् अतो भिस ऐस्(7-1-9/203) इति न भवति । राजभ्याम्, तक्षभ्याम्, राजसु, तक्षस्विति--सुपि च(7-3-102/202) इति, बहुवचने झल्येत्(7-3-103/205) इति दीर्घत्वम्, एत्वं च न भवति ।
स्वरविधौ---राजवतीत्यत्र नलोपस्यासिद्धत्वात् अन्तोऽवत्याः(6-1-220/3706) इति न भवति । पञ्चार्मम्, दशार्ममिति---अत्र नलोपस्यासिद्धत्वाद् अर्मे चावर्णं द्व्यच्त्र्यच्(6-2-90/3824) इति पूर्वपदस्याद्युदात्तत्वं न
भवति । पञ्चदण्डी---इत्यत्र नलोपस्यासिद्धत्वात् इगन्ते द्विगौ(6-2-29/3763) इति पूर्वपदप्रकृतिस्वरो न भवति ।
संज्ञाविधौ---पञ्च ब्राह्मण्यः, दश ब्राह्मण्य इति नलोपस्यासिद्धत्वाद् ष्णान्ता षट्(1-1-24/369) इति षट्संज्ञा भवति, ततश्च न षट्स्वस्रादिभ्यः(4-1-10/308) इति टापः प्रतिषेधो भवति । तदेतत्प्रयोजनं कथं भवति ? यदि `प्रतिकार्यं संज्ञाप्रवृत्तिः इत्येतद्दर्शनम् । या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता, तया स्त्रीप्रत्ययप्रतिषेधो न क्रियत इति सा पुनः प्रवर्तयितव्येति ।
तुग्विधौ---वृत्रहभ्याम्, वृत्रहभिरिति नलोपस्यासिद्धत्वाद् ह्रस्वस्य पिति कृति तुक्(6-1-71/2858) इति तुग्न भवति । अत्र केचित्--- `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वाऽसिद्धत्वात्तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः, तत् क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितुम् ।
कृतीति किम् ? वृत्रहच्छत्त्रम्, वृत्रहच्छाया---छे च(6-1-73/146) इति तुग्भवति । अत्र सिद्धे सत्यारम्भो नियमार्थः---एतेष्वेव नलोपोऽसिद्धो भवति, नान्यत्र । तेन राजीयति, राजायते, राजाश्वः--इति ईत्वम्, दीर्घत्वम्, एकादेशश्च सिद्धो भवति ।।
</8-2-2>
न मु ने ।। <8-2-3> ।।

मुभावो नाभावे कर्तव्ये नासिद्धो भवति । किं तर्हि ? सिद्ध एव । अमुना । मुभावस्यासिद्धत्वात् घिलक्षणो नाभावो न स्यात् । कृते तु नाभावे मुभावस्यासिद्धत्वात् सुपि च(7-3-102/202) इति दीर्घत्वं यत्प्राप्नोति, तत् `सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य(व्या.प.12) इति न भवति ।

अथ वा---योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम् ।

अथ वा---ने परतो यत्प्राप्नोति तस्मिन्कर्तव्ये मुभावो नासिद्ध इत्येष एवात्र सूत्रार्थः । ने तु कर्तव्ये मुभावस्य यत्सिद्धत्वं तदर्थतः संगृहीतम् । तेनात्र मुभावस्य सिद्धत्वान्नाभावश्च भवति, दीर्घत्वं च न भवति ।

- एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः * । किं प्रयोजनम् ? अयायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् । वृक्ष इदम्, प्लक्ष इदम् । अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः, स एकादेश उदात्तेनोदात्तः(8-2-5/3658) इत्युदात्तः, तस्य सिद्धत्वं वक्तव्यम् । आन्तर्यतः अयादेश उदात्तो यथा स्यात् ।

आय्---कुमार्या इदम् । कथमिदमुदाहरणम् ? यदि उदात्तयणो हल्पूर्वात्(6-1-174/3720) इत्युदात्तत्वे कृते विभक्तेराटश्चैकादेशः, तदा भवतीदमुदाहरणम् । अथ तु कृते तत्रैकादेशे उदात्तयणो हल्पूर्वात्(6-1-174/3720) इति स्वरः ? तदा नैतदस्य प्रयोजनं भवति ।

आव्---वृक्षाविदम्, प्लक्षाविदम् ।

एकादेशस्वरः---गाङ्गेऽनूप इति गाङ्गेशब्दे एकारः एकादेश उदात्तेनोदात्तः(8-2-5/3658) इत्युदात्तः, तस्य सिद्धत्वाद् यः पुनः एङः पदान्तादति(6-1-109/86) इति एकादेशः स एकादेश उदात्तेनोदात्तः(8-2-5/3658) इति, अतः स्वरितो वाऽनुदात्ते पदादौ(8-2-6/3659) इत्येतद्भवति ।

शतृस्वरः---तुदती । नुदती । `अदुपदेशात् इति लसार्वधातुकानुदात्तत्वे कृते एकादेशः, तदुदात्तस्य सिद्धत्वात् शतुरनुमो नद्यजादी(6-1-173/3719) `अन्तोदात्तात् इत्येष स्वरो भवति । `अनुमः इति प्रतिषेधो ज्ञापकः---एकादेशस्वरः शतृश्वरे सिद्ध इति । न हि सनुम्कं शत्रन्तं किञ्चिदेकदेशस्वरमन्तरेणान्तोदात्तमस्ति ।

एकाननुदात्तः । तुदन्ति । लिखन्ति । एकादेशस्वरस्य सिद्धत्वाद्, तेन अनुदात्तं पदमेकवर्जम्(6-1-158/3650) इति वर्ज्यमानता भवति ।

सर्वानुदात्तः---ब्राह्मणास्तुदन्ति, ब्राह्मणा लिखन्ति । एकादेशस्वरस्य सिद्धत्वात् कृते तस्मिन् तिङ्ङतिङः(8-1-27/3935) इति निघातो भवति । `अन्तरङ्गे इति वचनाद्बहिरङ्गस्यासिद्धत्वमेव---पचतीति, प्रपचतीति ।

- संयोगान्तस्य लोपो रोरुत्वे सिद्धो वक्तव्यः * (म.भा.3-391)।

किं प्रयोजनम् ? `हरिवो मेदिनं त्वा(तै.4-7-14-4) । हरिव इति मतुबन्तमेतत्; तत्र छन्दसीरः(8-2-15/3600) इति वत्वे, संयोगान्तस्य लोपे च कृते मतुवसो रु सम्बुद्धौ छन्दसि(8-3-1/3628) इति रुत्वम्, तस्य संयोगान्तस्य लोपस्यासिद्धत्वाद् हशि च(6-1-114/166) इत्युत्वं न प्राप्नोति ।

- सिज्लोप एकादेशे सिद्धो वक्तव्यः * (म.भा.3-391)। अलावीत् । अपावीत् । इट ईटि(8-2-28/2266) इति सिज्लोपस्य सवर्णदीर्घत्वं भवति ।
- निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः * (म.भा.3-392)। वृक्णः, वृक्णवान् । निष्ठादेशस्य सिद्धत्वात् झलीति षत्वं न भवति । कुत्वं तु प्रत्यसिद्ध एवेति तद्भवति । स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते । तत्र च निपातनमनेकधा समाश्रीयते---यदा क्षीबेर्निष्ठायामिटि कृते इत्---शब्दलोपो निपात्यते, तदा क्षीब इति संज्ञायामित्शब्दलोपस्यासिद्धत्वात् निष्ठा च द्व्यजनात्(6-1-205/3693) इत्येष स्वरो न प्राप्नोति; क्षीबे तरति क्षीबिक इति द्व्यज्लक्षणष्ठन्न प्राप्नोति; यदा तु तकारलोपो निपात्यते, तदा तस्यासिद्धत्वादिडागमः प्राप्नोति ।
- प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः * (म.भा.3-393)। अग्ना3 इच्छत्त्रम् । पटा33उच्छत्त्रम् । प्लुतविकारस्यासिद्धत्वात् छे च(6-1-73/146) इति ह्रस्वलक्षणो नित्यस्तुग् न प्राप्नोति ।
- श्चुत्वं धुटि सिद्धं वक्तव्यम् * (म.भा.3-393)। `श्च्युतिर् क्षरणे(धा.पा.41)---इत्ययं धातुः सकारादिः पठ्यते, तस्य श्चुत्वस्यासिद्धत्वाद् अट्श्च्योतति, रट्श्च्योतति इति ङः सि धुट्(8-3-29/131) इति प्राप्नोति । अटतीत्यड्, रटतीति रड्---क्विबन्तोऽयम् । किमर्थं पुनरयं सकारादिः पठ्यते ? इह मधुश्च्योततीति मधुश्च्युत्---क्विबन्तः, मधुश्च्युतमाचष्टे इति णिच्---मधुश्च्ययति, मधुश्च्यतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः, संयोगान्तत्वाद् यलोपः, चकारस्य कुत्वम्---मधुगिति सिद्धण् । शकारादौ पुनरेतस्मिन् संयोगान्तलोपेन यकारचकारयोर्लुप्तयोः शकारस्य षत्वे सति मधुडिति स्यात् ।
- अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये * (म.भा.3-393)। बभणतुः । बभणुः । अभ्यासजश्त्वस्यासिद्धत्वाद् अनादेशादेः इत्येत्त्वं प्राप्नोति । छिदेः---विचिच्छित्सति, उच्छेः---उचिच्छिषतीति अभ्यासादेशस्यासिद्धत्वात् छे च(6-1-73/146) इति तुग्न प्राप्नोति ।

- द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् * (म.भा.3-393)। सयँय्यन्ता, सवँव्वत्सरः, यलँल्लोकम्, तलँल्लोकमिति परसवर्णस्यासिद्धत्वाद् यरः--(8-4-47/48) इति द्विर्वचनं न स्यात् ।

- पदाधिकारश्चेल्लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि * (म.भा.3-393)। लत्वम्---गलो गलः । गरो गरः । घत्वम्---द्रोग्धा, द्रोग्धा । ढत्वम्---द्रोढा, द्रोढा । नत्वम्---नुन्नः, नुन्नः । रुत्वम्--अभिनोऽभिनः । अभिनदभिनत् । षत्वम्---मातुष्ष्वसा, मातुः स्वसा । पितुष्ष्वसा, पितुः स्वसा । णत्वम्--माषवापाणि, माषवापानि । अनुनासिक---वाङ्नयनम्, वाग्नयनम् । छत्वम्---वाक्छयनम्, वाक्शयनम् । लत्वादीनां विकल्पितानामसिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टाद्विकल्पे सति गरो गलः, गलो गरः---इत्येवं रूपमपि द्विरुक्तं स्यात् । तदेतत्सर्वम् `न मु ने इति योगविभागेन साध्यते । `न इत्येतावदनिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम् । ततः `मु नेइति, `न इत्येतदनुवर्तते ।।

</8-2-3>

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।। <8-2-4> ।।

उदात्तयणः स्वरितयणश्च परस्यानुदात्तस्य स्वरित आदेशो भवति । उदात्तयणः---कुमार्यौ, कुमार्यः । उदात्तनिवृत्तिस्वरेणायमीकार उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण्, तस्मात् परस्यानुदात्तस्य स्वरित आदेशो भवति । स्वरितयणः---सकृल्ल्व्याशा । खलप्व्याशा । सकृल्लूः, खलपूः---इति कृत्स्वरेणान्तोदात्तौ, तयोः रोः सुपि(8-3-16/339) इति यणादेशः स उदात्तयण्, ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात्स्वरितयणः परस्य आशा--शब्दाकारस्यानुदात्तस्य स्वरितो भवति ।

ननु च सप्तम्येकवचनस्य यदुदात्तयण इति स्वरितत्वम्, तदसिद्धं यणादेशे, तत्कथमयं स्वरितयण् भवति ?

आश्रयात् सिद्धत्वं भविष्यति ।

यद्येवम्, उदात्तादनुदात्तस्य स्वरितः(8-4-66/3660) इति एतस्याप्याश्रयात्सिद्धत्वं प्राप्नोति, ततश्च दध्याशेत्यत्रापि स्वरितः स्यात् ? तस्मादयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः ।।

केचित्तु ब्रुवते---उदात्तात्स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वं दृश्यते । तथा च तैत्तिरीयके शाखान्तरे पठ्यते---`यास्ते विश्वाः समिधः सन्त्यग्ने(तै.3-5-5-3) इति । `अग्ने इत्ययमकारः स्वरितः पठ्यते । तथा ब्राह्मणेऽपि--`दध्याशयति(तै.ब्रा.1-7-6-5) इत्याकारः स्वरितः पठ्यते इति ।

यथा तु वार्त्तिकं भाष्यं च, तथा उदात्तात्स्वरितयणः परस्यानुदात्तस्यानेन स्वरितत्वं न भवतीति स्थितम् । तथा च भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते; सकृल्ल्व्याशेत्येवमादावुदात्तयण इत्येवस्वरितस्य सिद्धत्वात् । स्वरितयण्व्यवधानमव्यवधानमेव, `स्वरविधौ व्यञ्जनमविद्यमानवत्(व्या.प.37) इति ।

तत्तु क्रियते---पूर्वस्मादपि विधौ स्थानिवद्भावाद् व्यवधानमस्ति, स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते इति ।

उदात्तस्वरितयोरिति किम् ? बैदी आशा बैद्याशा । शार्ङ्गरव्याशा । अनुदात्तयणादेशोऽयम् । अनुदात्तस्येति किम् ? कुमार्यत्र । किशोर्यत्र । अत्रेत्ययमाद्युदात्तो लित्स्वरेण ।।

</8-2-4>

एकादेश उदात्तेनोदात्तः ।। <8-2-5> ।।

उदात्तेन सहानुदात्तस्य य एकादेशः स उदात्तो भवति । `अनुदात्तस्य इति वर्तते । अग्नी । वायू । वृक्षैः । प्लक्षैः ।

उदात्तेनेति किम् ? पचन्ति । यजन्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः; पररूपे कर्तव्ये स्वरितस्यासिद्धत्वात् ।।

</8-2-5>

स्वरितो वाऽनुदात्ते पदादौ ।। <8-2-6> ।।

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवत्युदात्तो वा । सु + उत्थितः=सूत्थितः । वि + ईक्षते=वीक्षते । वसुकः + असि =वसुकोऽसि ।

सूत्थित इति---सुशब्दः सुः पूजायाम्(1-4-94/555) इति कर्मप्रवचनीयः, तस्य प्रादित्वात्समासे सति अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तः, शेषमनुदात्तमिति चानुदात्ते पदादावेकादेशो भवति ।

वीक्षते, वसुकोऽसीति---अत्रापि तिङ्ङतिङः(8-1-27/3935) इति निघाते कृतेऽनुदात्ते पदादावेकादेशः ।

स्वरितग्रहणं विस्पष्टार्थम् । उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव स्वरितो भविष्यतीति ।

अनुदात्त इति किम् ? देवदत्तोऽत्र । पदादाविति किम् ? वृक्षौ । वृक्षाः ।।

</8-2-6>

नलोपः प्रातिपदिकान्तस्य ।। <8-2-7> ।।

`पदस्य इति वर्तते । प्रातिपदिकस्य पदस्य योऽन्त्यो नकारस्तस्य लोपो भवति । राजा । राजभ्याम् । राजभिः । राजता । राजतरः । राजतमः । प्रातिपदिकग्रहणं किम् ? अहन्नहिम् । अन्तग्रहणं किम् ? राजा, राजानौ, राजनः । प्रातिपदिकग्रहणमसमस्तमेव सुपां सुलुक्(7-1-39/3521) इति षष्ठ्या लुका निर्दिष्टम् ।

- अह्नो नलोपप्रतिषेधो वक्तव्यः * (म.भा.3-394)। अहः । अहोभ्याम् । अहोभिः ।

रोऽसुपि(8-2-69/172), अहन्(8-2-68/443)---इति रेफरुत्वयोरसिद्धत्वाद् नलोपः प्राप्नोति, सावकाशं तदुभयं सम्बुद्धौ---हेऽहः, हे दीर्घाहो निदाघेति ? तत्र समाधिमाहुः---अहन्निति रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतलोपं तदावर्त्यते, तत्रैकयाऽऽवृत्या तदेव रूपं नलोपाभावार्थमन्वाख्यायते, द्वितीययापि तस्य रुर्विधीयते ।।
</8-2-7>
न ङिसम्बुद्ध्योः ।। <8-2-8> ।।
ङौ परतः सम्बुद्धौ च नकारलोपो न भवति । `आर्द्रे चर्मन्(तै.7-5-93) । लोहिते चर्मन् । सुपां सुलुक्(7-1-39/3561) इति ङेर्लुक् । सम्बुद्धौ---हे राजन् । हे तक्षन् ।
एतस्मादेव नलोपप्रतिषेधवचनाद् `अप्रत्ययः इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिध्यते---इति ज्ञाप्यते; भसंज्ञा च न भवतीति । तथा च---राज्ञः पुरुषो राजपुरुष इत्यत्र नलोपश्च भवति, अल्लोपश्च न भवति ।

- ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः * (म.भा.3-394)। चर्मणि तिला अस्य चर्मतिलः, हे राजवृन्दारक---इत्यत्र समुदायार्थसम्बोधनम्, न पूर्वपदार्थसम्बोधनं प्रतीयत इति सम्बुद्ध्यन्तं पूर्वपदं नैव समस्यते ।
- वा नपुंसकानामिति वक्तव्यम् * (म.भा.3-395)। हे चर्मन्, हे चर्म ।।

</8-2-8>
मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।। <8-2-9> ।।
मतोरिह कार्यित्वेनोपादानात् सामर्थ्यलब्धं प्रातिपदिकं तत् `मात् इति मकारावर्णाभ्यां विशिष्यते । मकारावर्णविशिष्टया चोपधया---इत्ययमर्थो भवति । मकारान्ताद् मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतोः `व इत्ययमादेशो भवति, यवादिभ्यस्तु परतो न भवति । मकारान्तात्---किंवान् । शंवान् । मकारोपधात्---शमीवान् । दाडिमीवान् । अवर्णान्तात्---वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । अवर्णोपधात्---पयस्वान् । यशस्वान् । भास्वान् ।
मादुपधायाश्चेति किम् ? अग्निमान् । वायुमान् । अयवादिभ्य इति किम् ? यवमान् । दल्मिमान् । ऊर्मिमान् ।
यव, दल्मि, उर्मि, भूमि, कृमि, क्रुञ्चा, वशा, द्राक्षा---एतेषाम् `मादुपधायाश्च इति प्राप्नोति । ध्रजि, ध्वजि, सञ्जि---इत्येतेषाम् छन्दसीरः(8-2-15/3600) इति । हरित, ककुत्, गरुत्---इत्येतेषाम् झयः(8-2-10/1898) इति । इक्षु, मधु, द्रुम, मण्ड, धूम---इत्येतेषाम् संज्ञायाम्(8-2-11/1899) इति । आकृतिगणश्च यवादिः ।
अकृतवत्वो मतुब् यवादिषु द्रष्टव्यः । यस्य सति निमित्ते मतुपो वत्वं न दृश्यते स यवादिषु द्रष्टव्यः ।
इह नृमत इदं नार्मतमिति बहिरङ्गलक्षणत्वादवर्णोपधस्य मतुपो वत्वं न भवति ।।
</8-2-9>
झयः ।। <8-2-10> ।।
झयन्तादुत्तरस्य मतोः `व इत्ययमादेशो भवति । अग्निचित्वान् ग्रामः । उदश्वित्वान्घोषः । विद्युत्वान्बलाहकः । `इन्द्रो मरुत्वान्(आ.श्रौ.8-16-1) । दृषद्वान् देशः ।।
</8-2-10>
संज्ञायाम् ।। <8-2-11> ।।
संज्ञायां विषये मतोः `व इत्ययमादेशो भवति । अहीवती । कपीवती । ऋषीवती । मुनीवती ।।
</8-2-11>
आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।। <8-2-12> ।।
आसन्दीवद्, अष्ठीवत्, चक्रीवत्, कक्षीवद्, रुमण्वत्, चर्मण्वती---इत्येतानि संज्ञायां निपात्यन्ते । वत्वं पूर्वेणैव सिद्धम्, आदेशार्थानि निपातनानि ।
आसन्दीवदिति---आसनशब्दस्यासन्दीभावो निपात्यते । आसन्दीवान् ग्रामः । आसन्दीवदहिस्थलम् । आसनवानित्येवान्यत्र ।
अपरे त्वाहुः---आसन्दीशब्दोऽपि प्रकृत्यन्तरमेवास्ति । तथा चोक्तम्---औदुम्बरी राजासन्दी भवतीति, तस्य संज्ञायाम्(8-2-11/1899) इति वत्वेन सिद्धम्, आसन्दीवदित्येतत्प्रपञ्चार्थमिह पठ्यते ।
अष्ठीवदिति---अस्थ्नोऽष्ठीभावः । अष्ठीवानिति शरीरैकदेशसंज्ञा । अस्थिमानित्येवान्यत्र ।
चक्रीवदिति---चक्रशब्दस्य चक्रीभावो निपात्यते । चक्रीवान् राजा । चक्रवानित्येवान्यत्र । चक्रीवन्ति
सदोहविर्धानानि भवन्ति---इत्येतत्तु छान्दसत्वाद् अनुगन्तव्यम् ।
कक्षीवदिति---कक्ष्यायाः सम्प्रसारणं निपात्यते । कक्षीवान्नाम ऋषिः । कक्ष्यावानित्येवान्यत्र ।
रुमण्वदिति---लवणशब्दस्य रुमण्भावो निपात्यते । लवणवानित्येवान्यत्र ।
अपरे त्वाहुः---रुमन्निति प्रकृत्यन्तरमस्ति, तस्यैतन्निपातनं नलोपाभावार्थम्, णत्वार्थं च । मतोर्वा नुडर्थमिति ।
चर्मण्वतीति---चर्मणो नलोपाभावः, णत्वं च निपात्यते । मतोर्वा नुडागमः । चर्मण्वती नाम नदी । चर्मवतीत्येवान्यत्र ।।
</8-2-12>
उदन्वानुदधौ च ।। <8-2-13> ।।
`उदन्वान् इत्युदकशब्दस्य मतावुदन्भावो निपात्यते उदधावर्थे, संज्ञायां च विषये । उदन्वान्नाम ऋषिः, यस्यौदन्वतः पुत्रः । उदधौ---उदन्वात्

। यस्मिन्नुदकं धीयते स एवमुच्यते ।
उदधाविति किम् ? उदकवान् घट इत्यत्र तु दधात्यर्थो न विवक्ष्यते, किं तर्हि ? उदकसत्तासम्बन्धसामान्यम् ।।
</8-2-13>
राजन्वान्सौराज्ये ।। <8-2-14> ।।
`राजन्वान् इति निपात्यते सौराज्ये गम्यमाने । शोभनो राजा यस्मिन्निति स राजन्वान् देशः । राजन्वती पृथ्वी । राजवानित्येवान्यत्र ।।
</8-2-14>
छन्दसीरः ।। <8-2-15> ।।
छन्दसि विषये इवर्णान्ताद्रेफान्ताच्चोत्तरस्य मतोर्वत्वं भवति । इवर्णान्तात्तावत्--`त्रिवती याज्यानुवाक्या भवति(काठ.11-1) । `हरिवो मेदिनं त्वा(तै.सं.4-7-14-4) । अधिपतिवती जुहोति । चरुरग्निवानिव । आरेवानेतु मा विशत् । `रयेर्मतौ इति सम्प्रसारणम् । `सरस्वतीवान् भारतीवान्(मै.3-10-6) । दधीवाँश्चरुः ।
`छन्दसि सर्वे विधयो विकल्प्यन्ते(पु.प.35) इतीह न भवति---सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्यं ते द्यावापृथिवीमन्तमिति ।
रेफान्तात्---गीर्वान् । धूर्वान् । आशीर्वान् ।।
</8-2-15>
अनो नुट् ।। <8-2-16> ।।
`छन्दसि इति वर्तते । अनन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषये । `अक्षण्वन्तः कर्णवन्तः सखायः(ऋ.10-71-7) । `अस्थन्वन्तं यदनस्था बिभर्ति(ऋ.1-164-4) । अक्षण्वता लाङ्गलेन । `शीर्षण्वती(अ.वे.10-1-2) । `मूर्धन्वती(तै.2-6-2-2) । नुटोऽसिद्धत्वात्तस्य च वत्वं न भवति, ततः परस्य च भवति ।।
</8-2-16>
नाद् घस्य ।। <8-2-17> ।।
नकारान्तादुत्तरस्य घसंज्ञकस्य नुडागमो भवति छन्दसि विषये । सुपथिन्तरः । दस्युहन्तमः ।

- भूरिदाव्नस्तुड् वक्तव्यः * (म.भा.3-398)। `भूरिदावत्तरः(ऋ.8-5-39) ।
- ईद्रथिनः * (म.भा.3-398)। रथिन ईकारान्तादेशो घ परतः । `रथीतरः(ऋ.1-84-5) । रथशब्दादेव वा मत्वर्थीयोऽयमीकारः `छन्दसीवनिपौ इति ।।

</8-2-17>
कृपो रो लः ।। <8-2-18> ।।
कृपेर्धातो रेफस्य लकारादेशो भवति । `रः इति श्रुतिसामान्यमुपादीयते । तेन यः केवलो रेफो यश्च ऋकारः, तयोर्द्वयोरपि ग्रहणम् । `लः इत्यपि सामान्यमेव; ततोऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते ।
ऋकारस्याप्येकदेशविकारद्वारेण लृकारः । एवं च लुटि च क्लृपः(1-3-93/2351) इत्येवमादयो निर्देशा
उपपद्यन्ते । कल्प्ता, कल्प्तारौ, कल्प्तारः । क्लृप्तः । क्लृप्तवान् ।
कृपा इत्येतत् `क्रपेः सम्प्रसारणं च(ग.सू.36) इति भिदादिषु पाठाद्भवति, तस्य हि कृतसम्प्रसारणस्य लाक्षणिकत्वात् इह कृप इति ग्रहणं नास्ति ।
कृपणकृपीटकर्पूरादयोऽपि क्रपेरेव द्रष्टव्याः । उणादयो बहुलम्(3-3-1/3169) इति वा कृपेरेव लत्वाभावः ।

- वालमूलघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम् * (म.भा.3-398)। बालः, बारः । मूलम्, मूरम् । लघु, रघु । असुरः, असुलः । अलम्, अरम् । अङ्गुलिः, अङ्गुरिः ।
- कपिलकादीनां संज्ञाछन्दसोर्वा रो लमापद्यत इति वक्तव्यम् *(म.भा.3-398) । कपिरकः, कपिलकः । तिल्पिलीकम्, तिर्पिरीकम् । लोमानि, रोमाणि । पांशुरम्, पांशुलम् । कर्म, कल्म । शुक्रः, शुक्लः ।

रलयोरेकत्वस्मरणमिति केचित् । किमिदमेकत्वस्मरणमिति ? समानविषयत्वमेव तयोः स्मर्यत इत्यर्थः ।।
</8-2-18>
उपसर्गस्यायतौ ।। <8-2-19> ।।
अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति । प्लायते । पलायते । अत्र योऽयमेकादेशः, तस्य स्थानिवद्भावादयतेः, उपसर्गस्य च विभागे सति यद्ययतिग्रहणं रेफस्य विशेषणम्, तदा `येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्(व्या.प.46) इति एकेन वर्णेन व्यवधानेऽपि सति लत्वं भवति । तथा च पल्ययते इत्यत्रापि भवति ।
उपसर्गविशेषणे त्वयतिग्रहणे सिद्धमेवैतत्सर्वं प्रतेरपि तु व्यवहितेऽपि प्राप्नोति । तत्र केषाञ्चिद्दर्शनं भवितव्यमेव प्लत्ययत इति ।
प्रथमपक्षदर्शनाभिनिविष्टास्तु प्रत्ययत इत्येव भवतीति मन्यन्ते । अपरे तु प्रतिशब्दोपसृष्टस्यायतेः प्रयोगमेव नेच्छन्ति ।
निस्, दुस्---इत्येतयोस्तु रुत्वस्यासिद्धत्वाल्लत्वेन नैव भवितव्यम् । निरयणम् । दुरयणम् ।।
</8-2-19>

ग्रो यङि ।। <8-2-20> ।।
`गॄ इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परतः । निजेगिल्यते, निजेगिल्येते, निजेगिल्यन्ते ।
भावगर्हायां ग्रो यङ्विहितः । केचित्--`ग्रः इति गिरेतेर्गृणातेश्च सामान्येन ग्रहणमिच्छन्ति । अपरे तु---गिरतेरेव न गृणातेः । गृणातेर्हि यङेव नास्ति; अनभिधानादिति ।
यङीति किम् ? निगीर्यते ।।
</8-2-20>
अचि विभाषा ।। <8-2-21> ।।
अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति । निगिरति, निगिलति । निगरणम्, निगलनम् । निगारकः, निगालकः ।
इयं तु व्यवस्थितविभाषा । तेन `गल इति प्राण्यङ्गे नित्यं लत्वं भवति; `गर इति विषे नित्यं न भवति । निगार्यते, निगाल्यत इति । णिलोपस्य स्थानिवद्भावाद् अचि विभाषा इति लत्वविकल्पः ।
`पूर्वत्रासिद्धे न स्थानिवत्(पु.वृ.112) इति एतदपि सापवादमेव; `तस्य दोषः संयोगादिलोपलत्वणत्वेषु इति । अन्तरङ्गत्वाद्वा कृते लत्वविकल्पे णिलोपो भविष्यति । गिरौ, गिर इत्यत्र `धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् इति लत्वं न भवति । गिरतिर्वा लत्वविधावधिकृतः; गृणातेरेतद्रूपम् ।।
</8-2-21>
परेश्च घाङ्कयोः ।। <8-2-22> ।।
परि इत्येतस्य यो रेफस्तस्य घशब्देऽङ्कशब्दे च परतो विभाषा लकार आदेशो भवति । परिघः, पलिघः । पर्यङ्कः। पल्यङ्कः ।
घ इति स्वरूपग्रहणमत्रेष्यते, न तरसमपौ इति ।

- योगे चेति वक्तव्यम् * (म.भा.3-400)। परियोगः, पलियोगः ।।

</8-2-22>
संयोगान्तस्य लोपः ।। <8-2-23> ।।
संयोगान्तस्य पदस्य लोपो भवति । गोमान् । यवमान् । कृतवान् । हृतवान् ।
इह श्रेयान्, भूयान्---इति रुत्वं परमप्यसिद्धत्वात् संयोगान्तस्य लोपं न बाधते ।
जश्त्वे तु नाप्राप्ते तदारभ्यत इति तस्य बाधकं भवति---यशः, पय इति ।
दध्यत्र, मध्वत्र---इत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् संयोगान्तलोपो न भवति ।।
</8-2-23>
रात्सस्य ।। <8-2-24> ।।
संयोगान्तपदस्य यो रेफस्तस्मादुत्तरस्यान्तस्य सकारस्य लोपो भवति । गोभिरक्षाः । `प्रत्यञ्चमत्साः(ऋ.10-28-4) । क्षरतेः, त्सरतेश्च लुङि सिचश्छान्दसत्वादीडभावः; बहुलं छन्दसि(7-3-97/3586) इति वचनात् । दीर्घे सति रूपमेतत् ।
मातुः, पितुरिति--ऋत उत्(6-1-111/279) इति उत्वे कृते रपरत्वे च सति `रात्सस्य इति सलोपः ।
सिद्धे सत्यारम्भो नियमार्थः---रात्सस्यैव लोपो भवति, नान्यस्येति । ऊर्जेः---क्विप्, ऊर्क् । मृजेर्लङि---अमार्ट् ।।
</8-2-24>
धि च ।। <8-2-25> ।।
धकारादौ प्रत्यये परतः सकारस्य लोपो भवति । अलविध्वम्, अलविढ्वम् । अपविध्वम्, अपविढ्वम् । यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च `विभाषेटः इति मूर्द्धन्याभावपक्षेऽपि न धकारः श्रूयेत ।
इतः प्रभृति सिचः सकारस्य लोप इष्यते । इह न भवति---चकाद्धि पलितं शिर इति । तथा पयो धावतीत्येवमादावपि न भवति । `सग्धिः(वा.सं.19-9), `बभ्धाम्(नि.5-12)इति छान्दसो वर्णलोपः ।
भाष्यकारस्त्वाह---चकाधीत्येव भवितव्यमिति । तेन पयो धावतीत्येवमादौ यत्नान्तरमास्थेयम् ।
`धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति ।।
सर्वमेवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ।।
घसिभसोर्न सिध्येत तस्मात्सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ।।(म.भा.3-403)
`निष्कर्तारमध्वरस्य(तै.4-2-7-3)इत्येवं प्राप्ते ।।
</8-2-25>
झलो झलि ।। <8-2-26> ।।
झल उत्तरस्य सकारस्य झलि परतो लोपो भवति । अभित्त, अभित्थाः । अच्छित्त । अच्छित्थाः ।
अवात्ताम्, अवात्त---इत्यत्र वा सिचः सकारलोपस्यासिद्धत्वात् सस्यार्धधातुके(7-4-49/2342) इति सकारस्य तकारः ।

झल इति किम् ? अमंस्त । अमंस्थाः । झलीति किम् ? अभित्साताम् । अभित्सत ।
अयमपि सिच एव लोपः, तेनेह न भवति---सोमसुत् स्तोता । दृषत्स्थानमिति ।।
</8-2-26>
ह्रस्वादङ्गात् ।। <8-2-27> ।।
ह्रस्वान्तादङ्गादुत्तरस्य लोपो भवति झलि परतः । अकृत, अकृथाः । अहृत, अहृथाः ।
ह्रस्वादिति किम् ? अच्योष्ट । अप्लोष्ट । अङ्गादिति किम् ? अलाविष्टाम् । अलाविषुः ।
`झलि इत्येव---अकृषाताम् । अकृषत ।
अयमपि सिच एव लोपः, तेनेह न भवति---द्विष्टराम्, द्विष्टमामिति । सुजन्ताद् द्विशब्दात्तरसमपौ, अद्रव्यप्रकर्षे आतिशयिकः आम् प्रत्ययः ।।
</8-2-27>
इट ईटि ।। <8-2-28> ।।
इट उत्तरस्य सकारस्य लोपो भवति ईटि परतः । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् ।
इट इति किम् ? अकार्षीत् । अहार्षीत् । ईटीति किम् ? अलाविष्टाम् । अलाविषुः ।।
</8-2-28>
स्कोः संयोगाद्योरन्ते च ।। <8-2-29> ।।
पदस्यान्ते यः संयोगः झलि परतो वा संयोगः, तदाद्योः सकारककारयोर्लोपो भवति । लस्जेः---लग्नः, लग्नवान् । साधुलक् । मस्जेः---मग्नः । ककारस्य, तक्षः---तट् । तष्टः, तष्टवान् । काष्ठतट् ।

- झलि सडीति वक्तव्यम् * । किमिदं सडीति ? सनः सप्रभृति महिङो ङकारेण प्रत्याहारः । इह मा भूत्--काष्ठशक्स्थातेति । थकारे झलि ककारस्य संयोगादेर्लोपः प्राप्नोति । तदत्र शकेः क्विबन्तस्य प्रयोग एव नास्तीत्याह---`काष्ठशगेव नास्ति, कुतोऽयं काष्ठशकि तिष्ठेत् इति !

वास्यर्थम्, काक्वर्थम्---इत्यत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न भवति ।
स्कोरिति किम् ? नर्नर्ति । वर्वर्ति । संयोगाद्योरिति किम् ? पयः शक् ।
</8-2-29>
चोः कुः ।। <8-2-30> ।।
चवर्गस्य कवर्गादेशो भवति झलि च परतः, पदान्ते च । पक्ता, पक्तुम्, पक्तव्यम्, ओदनपक् । वक्ता, वक्तुम्, वक्तव्यम्, वाक् ।
क्रुञ्चेत्यत्र सडीति वचनाद् ञकारस्य चकारे झलि कुत्वं न भवति, ---युजिक्रुञ्चां च(3-2-59/373) इति निपातनाद्वा ।
नकारोपधो वा धातुरयं रेफरहितश्च `क्रुञ्च कौटिल्याप्लीभावयोः(धा.पा.186) इति पठ्यते । नकारलोपे हि निकुचित इति दृश्यते । `युजिक्रुञ्चां च इति तस्यैव रेफोऽधिकः, नकारस्य लोपाभावश्चेति निपात्यते । तत्रानुस्वारस्य, परसवर्णस्य चासिद्धत्वात् ञकार एव नास्तीति कुत्वं न भविष्यति ।।
</8-2-30>
हो ढः ।। <8-2-31> ।।
हकारस्य ढकारादेशो भवति झलि परतः, पदान्ते च । सोढा, सोढुम्, सोढव्यम् । जलाषाट् । वोढा, वोढुम्, वोढव्यम् । प्रष्ठवाट् । दित्यवाट् ।।
</8-2-31>
दादेर्धातोर्घः ।। <8-2-32> ।।
दकारादेर्धातोर्हकारस्य धकारादेशो भवति झलि परतः, पदान्ते च । दग्धा, दग्धुम्, दग्धव्यम् । काष्ठधक् । दोग्धा, दोग्धुम्, दोग्धव्यम् । काष्ठधक् ।
दादेरिति किम् ? लेढा, लेढुम्, लेढव्यम् । गुडलिट् ।
`धातोः इति दादिसामानाधिकरणमेतन्न, किं तर्हि ? तद्विशेषणमवयवषष्ठ्यन्तम्---धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्येति । किं कृतं भवति ? अधोगित्यत्रापि घकारः सिद्धो भवति ।
कथं दोग्धा, दोग्धुमिति ? व्यपदेशिवद्भावात् ।
अथ वा---धातूपदेशे यो दादिरित्येवं विज्ञायते । तथा च---दामलिहमिच्छति दामलिह्यति, दामलिह्यतेः क्विप्प्रत्ययः, दामलिडित्यत्रापि न भवति ।।
</8-2-32>
वा द्रुहमुहष्णुहष्णिहाम् ।। <8-2-33> ।।
द्रुह, मुह, ष्णुह, ष्णिह--इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः, पदान्ते च । द्रुह्--द्रोग्धा, द्रोढा । मित्रध्रुक्, मित्रध्रुट् । मुह्---उन्मोग्धा, उन्मोढा । उन्मुक्, उम्मुट् । ष्णुह---उत्स्नोग्धा, उत्स्नोढा । उत्स्नुक्, उत्स्नुट् । ष्णिह---स्नेग्धा, स्नेढा । स्निक्, स्निट् ।
द्रुहेर्दादित्वाद् घत्वं नित्यं प्राप्तम्, इतरेषामप्राप्तमेव घत्वं विकल्प्यते ।।
</8-2-33>
नहो धः ।। <8-2-34> ।।
नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च । तद्धम्, नद्धुम्, नद्धव्यम् । उपानत् । परीणत् ।।

</8-2-34>
आहस्थः ।। <8-2-35> ।।
आहो हकारस्य थकारादेशो भवति झलि परतः । इदमात्थ । किमात्थ ।
आदेशान्तरकरणम्---झषस्तथोर्धोऽधः(8-2-40/280) इत्यस्य निवृत्त्यर्थम् ।
`झलि इत्येव---आह, आहतुः, आहुः ।

- हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम् * (म.भा.3-404)। `गर्दभेन सम्भरति(तै.सं.5-1-5-5) । ग्रभीता । जभ्रिरे । `उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्(तै.सं.1-1-13-1) ।।

</8-2-35>
व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।। <8-2-36> ।।
व्रश्च, भ्रस्ज, सृज, मृज, यज, राज, भ्राज---इत्येतेषाम्, छकारान्तानाम्, शकारान्तानां च षकार आदेशो भवति झलि परतः, पदान्ते च । व्रश्च---व्रष्टा, व्रष्टुम्, व्रष्टव्यम् । मूलवृट् । भ्रस्ज---भ्रष्टा, भ्रष्टुम्, भ्रष्टव्यम् । धानाभृट् । सृज्---स्रष्टा, स्रष्टुम्, स्रष्टव्यम् । रज्जुसृट् । मृज---मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम् । कंसपरिमृट् । यज---यष्टा, यष्टुम् , यष्टव्यम्, उपयट् । राज्---सम्राट् । स्वराट् । विराट् ।।
राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिराभ्यामिटा पर्यवपद्यते । केचित्तु---राष्टिः, भ्राष्टिरिति क्विन्नन्तमिच्छन्ति ।
छकारान्तानाम्, प्रच्छ---प्रष्टा, प्रष्टुम्, प्रष्टव्यम् । शब्दप्राट् ।
च्छ्वोः शूडनुनासिके च(6-4-19/2561) इत्यत्र `क्ङिति इत्यनुवर्तते---इति छग्रहणमिह क्रियते ।
शकारान्तानाम्, लिश्---लेष्टा, लेष्टुम्, लेष्टव्यम् । लिट् । विश्---वेष्टा, वेष्टुम्, वेष्टव्यम् । विट् ।।
</8-2-36>
एकाचो बशो भष् झषन्तस्य स्ध्वोः ।। <8-2-37> ।।
धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च ।
अत्र चत्वारो बशः स्थानिनः, भषादेशाश्चत्वार एव; तत्र संख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावाद् ढकारादेशो न भवति ? आन्तर्यतो व्यवस्था विज्ञास्यते ।।
बुध्---भोत्स्यन्ते । अभुद्ध्वम् । अर्थभुत् । गुह---निघोक्ष्यते । न्यघूढ्वम् । पर्णघुट् । दुह---धोक्ष्यते । अधुग्ध्वम् । गोधुक् ।
अजर्घाः--गृधेर्यङ्लुगन्तस्य लङि सिपि लघूपधगुणे कृते सिपो हल्ङ्यादिलोपे च धातोरवयवस्यैकाचो बशः स्थाने भष्भावः, ततो वकारस्य जश्त्वम्, दश्च(8-2-75/2468) इति रुत्वम्, रो रि(8-3-14/173) इति पूर्वरेफस्य लोपः, ढ्रलोपे पूर्वस्य दीर्घोऽणः(6-3-111/174) इति दीर्घत्वम् । गर्दभयतेरप्रत्ययः---गर्धप् ।
एकाच इति किम् ? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः, दामलिट् । असत्येकाज्ग्रहणे, `धातोः इत्येतद् बशो विशेषणं स्यात् ।
बश इति किम् ? क्रुध---क्रोत्स्यति । झषन्तस्येति किम् ? दास्यति । स्ध्वोरिति किम् ? बोद्धा, बोद्धुम्, बोद्धव्यम् । धकारस्य वकारोपसृष्टस्य ग्रहणं किम् ? दादद्धि । `दध धारणे(धा.पा.8)---इत्येतस्य यङ्लुकि लोटि हुझल्भ्यो हेर्धिः(6-4-101/2425) इति धिभावे सत्येतद्भवति ।
</8-2-37>
दधस्तथोश्च ।। <8-2-38> ।।
`दध इति दधातिः कृतद्विर्वचनो निर्दिश्यते । तस्य झलन्तस्य बशः स्थाने भष् आदेशो भवति तकारथकारयोः परतः, चकारात् स्ध्वोश्च परतः । धत्तः । धत्थः । धत्से । धत्स्व । धद्ध्वम् ।
वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति । अभ्यासजश्त्वस्य चासिद्धत्वम् ।
तथोरिति किम् ? आनन्तर्यात् स्ध्वोरेव विज्ञायेत । चकारस्तयोरनुवृत्त्यर्थः ।
`झषन्तस्य इत्येव---दधाति ।।
</8-2-38>
झलां जशोऽन्ते ।। <8-2-39> ।।
झलां जश आदेशा भवन्ति पदस्यान्ते वर्तमानानाम् । वागत्र । श्वलिडत्र । अग्निचिदत्र । त्रिष्टुबत्र ।
अन्तग्रहणं झलीत्येतस्य निवृत्त्यर्थम् । वस्ता । वस्तव्यम् ।।
</8-2-39>
झषस्तथोर्धोऽधः ।। <8-2-40> ।।
झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति, दधातिं वर्जयित्वा । लब्धा । लब्धुम् । लब्धव्यम् । अलब्ध । अलब्धाः । दुह---दोग्धा । दोग्धुम् । दोग्धव्यम् । अदुग्ध । अदुग्धाः । लिह---लेढा । लेढुम् । लेढव्यम् । अलीढ । अलीढाः । बुध्---बोद्धा । बोद्धुम् । बोद्धव्यम् । अबुद्ध । अबुद्धाः ।
अध इति किम् ? धत्तः । धत्थः ।।
</8-2-40>
षढोः कः सि ।। <8-2-41> ।।
षकारढकारयोः ककारादेशो भवति सकारे परतः । षकारस्य, पिष्--पेक्ष्यति । अपेक्ष्यत् । पिपक्षति। ढकारस्य, लिह--लेक्ष्यति । अलेक्ष्यत् ।

लिलक्षति ।
सीति किम् ? पिनष्टि । लेढि ।।
</8-2-41>
रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।। <8-2-42> ।।
रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकार आदेशो भवति पूर्वस्य च दकारस्य । रेफान्तात्तावत्---आस्तीर्णम् । विस्तीर्णम् । विशीर्णम् । निगीर्णम् । अवगूर्णम् । दकारात्---भिन्नः, भिन्नवान् । छिन्नः, छिन्नवान् ।
रदाभ्यामिति किम् ? कृतः, कृतवान् ।
`र इत्यत्र रश्रुतिसामान्यं नोपादीयते, किं तर्हि ? व्यञ्जनमात्रम् । रेफसामान्यनिर्देशेऽपि सति रेफात्परा याऽज्भक्तिस्तद्व्यवधानान्नत्वं न भवति ।
निष्ठेति किम् ? कर्ता, हर्ता । त इति किम् ? चरितम् । मुदितम् । पूर्वस्येति किम् ? परस्य मा भूत्---भिन्नवद्भ्याम् । भिन्नवद्भिः ।
इह कृतस्यापत्यं कार्तिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धत्वात् नत्वे कर्तव्ये रेफस्यासिद्धत्वम् ।।
</8-2-42>
संयोगादेरातो धातोर्यण्वतः ।। <8-2-43> ।।
संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । प्रद्राणः, प्रद्राणवान् । म्लानः, म्लानवान् ।
संयोगादेरिति किम् ? यातः, यातवान् । आत इति किम् ? च्युतः, च्युतवान् । प्लुतः, प्लुतवान् । धातोरिति किम्
? निर्यातः । निर्वातः । यण्वत इति किम् ? स्नातः, स्नातवान् ।।
</8-2-43>
ल्वादिभ्यः ।। <8-2-44> ।।
`लूञ् छेदने(धा.पा.1484)---इत्येतत्प्रभृति `वृञ् वरणे(धा.पा.1487) इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते । तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति । लूनः, लूनवान्, धूनः । धूनवान् । जीनः, जीनवान् ।

- ॠकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम् * (म.भा.3-407)। कीर्णिः । गीर्णिः । शीर्णिः । लूनिः । पूनिः ।।

- दुग्वोर्दीर्घश्चेति वक्तव्यम् * (म.भा.3-407)। दु--आदूनः । गु---विगूनः ।

पूञो विनाश इति वक्तव्यम् * (म.भा.3-407)। पूना यवाः । विनष्टा इत्यर्थः । विनाश इति किम् ? पूतं धान्यम् ।

- सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् * (म.भा.3-407)। सिनो ग्रासः स्वयमेव । ग्रासकर्मकर्तृकस्येति किम् ? सिता पाशेन सूकरी । ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्ता, तदा न भवति---सितो ग्रासो देवदत्तेनेति ।।

</8-2-44>
ओदितश्च ।। <8-2-45> ।।
ओकारेतो धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । ओलस्जी---लग्नः, लग्नवान् । ओविजी---उद्विग्नः, उद्विग्नवान् । `ओप्यायी वृद्धौ(धा.पा.488)---आपीनः, आपीनवान् ।
स्वादय ओदितः । षूङ्---सूनः, सूनवान् । दूङ्---दूनः, दूनवान् । दीङ्---दीनः, दीनवान् । डीङ्---डीनः, डीनवान् । धीङ्---धीनः, धीनवान् । मीङ्---मीनः, मीनवान् । रीङ्---रीणः, रीणवान् । लीङ्---लीनः, लीनवान् । व्रीङ्---व्रीणः, व्रीणवान् ।।
</8-2-45>
क्षियो दीर्घात् ।। <8-2-46> ।।
क्षियो धातोर्दीर्घादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । क्षीणाः क्लेशाः । क्षीणो जाल्मः । क्षीणस्तपस्वी । क्षियः निष्ठायामण्यदर्थे(6-4-60/3014), वाऽऽक्रोशदैन्ययोः(6-4-61/3081) इति दीर्घत्वं भवति ।
दीर्घादिति किम् ? अक्षितमसि मामेक्षेष्ठाः । अक्षितमिति क्तप्रत्ययो भावे, भावश्च ण्यदर्थ इति दीर्घाभावः ।
ह्रस्वस्यापि हि धात्वनुकरणस्य इह इयङा निर्देशः ।
क्षियः निष्ठायामण्यदर्थे(6-4-60/3014) इत्यत्र दीर्घग्रहणं क्रियते ।
विपरभ्यां जेः(1-3-19/2385) इत्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वात् जिरूपसामान्यानुकरणं द्रष्टव्यम् ।।
</8-2-46>
श्योऽस्पर्शे ।। <8-2-47> ।।
श्यायतेरुत्तरस्य निष्ठातकारस्यास्पर्शे नकार आदेशो भवति । शीनं घृतम् । शीनं मेदः । शीना वसा ।
अस्पर्श इति किम् ? शीतं वर्तते । शीतो वायुः ।
शीतमुदकम्---इत्यत्र गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति ।
गुणे च स्पर्शे प्रतिषेधोऽयम्, न रोगे, तेन प्रतिशीन इत्यत्र नत्वं भवत्येव ।।
</8-2-47>
अञ्चोऽनपादाने ।। <8-2-48> ।।

अञ्चतेरुत्तरपदस्य निष्ठातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति । समक्नौ शकुनेः पादौ । तस्मात्पशवो न्यक्नाः ।
अनपादान इति किम् ? उदक्तमुदकं कूपात् । व्यक्तमित्येतदञ्जे रूपम् ।।
</8-2-48>
दिवोऽविजिगीषायाम् ।। <8-2-49> ।।
दिव उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे । आद्यूनः । परिद्यूनः ।
अविजिगीषायामिति किम् ? द्यूतं वर्तते । विजिगीषया हि तत्राक्षपातनादि क्रियते ।।
</8-2-49>
निर्वाणोऽवाते ।। <8-2-50> ।।
`निर्वाणः इति निस्पूर्वाद् वातेरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते, न चेद्वाताधिकरणो वात्यर्थो भवति । निर्वाणोऽग्निः । निर्वाणः प्रदीपः । एष निर्वाणो भिक्षुः ।
अवात इति किम् ? निर्वातो वातः । निर्वातं वातेन ।
निर्वाणः प्रदीपो वातेन---इत्यत्र तु प्रदीपाधिकरणो वात्यर्थः, वातस्तु तस्य करणमिति भवत्येव नत्वम् ।।
</8-2-50>
शुषः कः ।। <8-2-51> ।।
शुषेर्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति । शुष्कः, शुष्कवान् ।।
</8-2-51>
पचो वः ।। <8-2-52> ।।
पचेर्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति । पक्वः, पक्ववान् ।।
</8-2-52>
क्षायो मः ।। <8-2-53> ।।
क्षै-धातोरुत्तरस्य निष्ठातकारस्य मकारादेशो भवति । क्षामः, क्षामवान् ।।
</8-2-53>
प्रस्त्योऽन्यतरस्याम् ।। <8-2-54> ।।
प्रपूर्वात् स्त्यायतेरुत्तरस्य निष्ठातकारस्यान्यतरस्यां मकारादेशो भवति । प्रस्तीमः, प्रस्तीमवान् । प्रस्तीतिः, प्रस्तीतवान् ।
यदा मत्वं नास्ति, तदा संयोगादेरातो धातोर्यण्वतः(8-2-43/3017) इत्यस्य पूर्वत्रासिद्धत्वात् सम्प्रसारणं प्रथमं क्रियते; तत्र कृते निमित्तव्याघातान्नत्वं न भवति ।।
</8-2-54>
अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ।। <8-2-55> ।।
फुल्ल, क्षीब, कृश, उल्लाघ---इत्येते निपात्यन्ते, न चेदुपसर्गादुत्तरा भवन्ति । फुल्ल इति---`ञिफला विशरणे(धा.पा.516) इत्येतस्माद्धात्तोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते । उत्वमिडभावश्च सिद्ध एव ।
क्तवत्वन्तस्याप्येतल्लत्वमिष्यते । फुल्लः, फुल्लवान् इति ।
क्षीबकृशोल्लाघा इति---क्षीविकृशिभ्यामुत्पूर्वाच्च लाघेः क्तप्रत्ययस्य तलोप इडभावश्च निपात्यते । कृते वा इटि इच्छब्दलोपः । क्षीबः । कृशः । उल्लाघः ।
अनुपसर्गादिति किम् ? प्रफुल्ताः सुमनसः । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः । लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यते ।

- उत्फुल्लसम्फुल्लयोरिति वक्तव्यम् * (म.भा.3-409)। उत्फुल्लः । सम्फुल्लः ।

परिकृश इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव---परिगतः कृशः परिकृश इति ।।
</8-2-55>
नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।। <8-2-56> ।।
नुद, विद, उन्दी, त्रा, घ्रा, ह्री---इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम् । नुद--- नुन्नः, नुत्तः । विद---विन्नः, वित्तः । उन्द---समुन्नः, समुत्तः । त्रा---त्राणः, त्रातः । घ्रा---घ्राणः, घ्रातः । ह्री---ह्रीणः, ह्रीतः ।
`ह्रो इत्येतस्याप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते ।
`विद विचारणे(धा.पा.1451) इत्यस्य विदेरिह ग्रहणमिष्यते । एवं ह्युक्तम्---
वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः ।। इति ।।
</8-2-56>
न ध्याख्यापृमूर्च्छिमदाम् ।। <8-2-57> ।।
ध्या, ख्या, पृ, मूर्च्छि, मद---इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति । ध्यातः, ध्यातवान् । ख्यातः, ख्यातवान् । पूर्तः, पूर्तवान् । मूर्तः, मूर्तवान् । मत्तः, मत्तवान् । रदाभ्याम्(8-2-42/3016), संयोगादेः(8-2-43/3017) इति च प्राप्तः प्रतिषिद्ध्यते ।।

</8-2-57>
वित्तो भोगप्रत्यययोः ।। <8-2-58> ।।
`वित्त---इति विदेर्लाभार्थादुत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये । वित्तमस्य बहु । धनमस्य बह्वित्यर्थः । धनं हि भुज्यत इति भोगोऽभिधीयते ।
प्रत्यये---वित्तोऽयं मनुष्यः । प्रतीत इत्यर्थः । प्रतीयत इति प्रत्ययः । भोगप्रत्यययोरिति किम् ? विन्नः ।।
</8-2-58>
भित्तं शकलम् ।। <8-2-59> ।।
`भित्तम् इति निपात्यते शकलं चेत्तद्भवति । भित्तं तिष्ठति । भित्ते प्रपतति । शकलपर्यायोऽयम् ।
अत्र भिदिः क्रिया शब्दव्युत्पत्तेरेव निमित्तम् । भिदिक्रियाविवक्षायां हि शकलविषये भिन्नं भित्तमित्येव भवति ।।
</8-2-59>
ऋणमाधमर्ण्ये ।। <8-2-60> ।।
`ऋणम् इति `ऋ इत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते आधमर्ण्यविषये ।
अधम ऋणे अधमर्णः, एतस्मादेव निपातनात्सप्तम्यन्तेनोत्तरपदेन समासः, तद्भाव आधमर्ण्यम् । यद्येवम्, उत्तमर्ण इति न सिध्यति ? नैष दोषः; कालान्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम् । तेन उत्तमर्ण इत्यपि हि भवति । ऋणं ददाति । ऋणं धारयति ।
आधमर्ण्ये इति किम् ? ऋतं वक्ष्यामि नानृतम् ।।
</8-2-60>
नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ।। <8-2-61> ।।
नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त---इत्येतानि छन्दसि विषये निपात्यन्ते । नसत्त--निषत्तेति---सदेर्नञ्पूर्वान्निपूर्वाच्च नत्वाभावो निपात्यते । नसत्तमञ्जसा । नसन्नमिति भाषायाम् । `निषत्तः(ऋ.1-58-3) । निषण्ण इति भाषायाम् ।
अनुत्तमिति--उन्देर्नञ्पूर्वस्य निपातनम् । `अनुत्तमा ते मघवन्(ऋ.1-165-9) । अनुन्नमिति भाषायाम् ।
प्रतूर्तमिति---त्वरतेः, `तुर्वी इत्येतस्य वा निपातनम् । `प्रतूर्तं वाजिनम्(तै.4-1-2-1) । प्रतूर्णमिति भाषायाम् ।
सूर्तमिति---`सृ इत्येतस्य उत्वं निपात्यते । सूर्ता गावः । सृता गाव इति भाषायाम् ।
गूर्तमिति---`गुरी इत्येतस्य नत्वाभावो निपात्यते । `गूर्ता अमृतस्य(वा.सं.6-34) । गूर्णमिति भाषायाम् ।।
</8-2-61>
क्विन्प्रत्ययस्य कुः ।। <8-2-62> ।।
पदस्य(8-1-16/401) इति वर्त्तते । क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते । क्विन्प्रत्ययो यस्माद्धातोः स क्विन्प्रत्ययः, तस्य पदस्यालोन्त्यस्य कवर्गादेशो भवति । स्पृशोऽनुदके क्विन्(3-2-58/432) । घृतस्पृक् । हलस्पृक् । मन्त्रस्पृक् ।
`क्विनः कुः इति वक्तव्ये प्रत्ययग्रहणं कृतम्(म.भा.3-411)---बहुव्रीहिविज्ञानार्थम् । क्विन्प्रत्ययो
यस्माद्विहितस्तस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात्---मा नो अस्राक् । मा नो अद्राक् । सृजिदृशिभ्यां हि क्विन्विहितः, तयोर्लुङि कुत्वमेतत् । माङ्योगेऽपि छान्दसत्वादडागमः । ईट् च न भवति---बहुलं छन्दसि(7-3-97/3586) इति ।
तथा दृग्भ्याम्, दृग्भिरिति---क्विबन्तस्यापि दृशेः कुत्वं भवति । एवं च सति रज्जुसृड्भ्यामित्यत्रापि कुत्वं प्राप्नोति ।
अथ तु नेष्यते ? प्रतिविधानं कर्तव्यमिति ।।
</8-2-62>
नशेर्वा ।। <8-2-63> ।।
`पदस्य इति वर्तते । नशेः पदस्य वा कवर्गादेशो भवति । सा वै जीवनगाहुतिः, `सा वै जीवनडाहुतिः(मै.1-4-13) । नशेरयं सम्पदादित्वाद् भावे क्विप् । जीवस्य नाशो जीवनक्, जीवनट् । षत्वे प्राप्ते कुत्वविकल्पः ।।
</8-2-63>
मो नो धातोः ।। <8-2-64> ।।
मकारान्तस्य धातोः पदस्य नकारादेशो भवति । प्रशान् । प्रतान् । प्रदान् । शमितमिदमादीनां क्विप्, अनुनासिकस्य क्विझलोः क्ङिति(6-4-15/2666) इति दीर्घत्वम् । नत्वस्यासिद्धत्वान्नलोपो न भवति ।
म इति किम् ? भित् । छित् । धातोरिति किम् ? इदम् । किम् ।
`पदस्य इत्येव---प्रतामौ । प्रतामः ।।
</8-2-64>
म्वोश्च ।। <8-2-65> ।।
मकारवकारयोश्च परतः मकारान्तस्य धातोर्नकारादेशो भवति । `अगम्न तमसः पारम्(वा.सं.12-73) । अगन्व । गमेर्लङि बहुलं छन्दसि(2-4-73/3400) इति शपो लुक् । जगन्वान् । विभाषा गमहनजनविदविशाम्(7-2-68/3099) इति क्वसाविडागमस्याभावः ।
अपदान्तार्थ आरम्भः ।।
</8-2-65>
ससजुषो रुः ।। <8-2-66> ।।

सकारान्तस्य पदस्य `सजुष् इत्येतस्य च रुर्भवति । सकारान्तस्य---अग्निरत्र । वायुरत्र । सजुषः---`सजूर्ऋषिभिः(ऋ.मै.2-8-1) । `सजूर्देवेभिः(ऋ.7-34-15) । जुषेः क्विपि सपूर्वस्य रूपमेतत् ।।
</8-2-66>
अवयाः श्वेतवाः पुरोडाश्च ।। <8-2-67> ।।
अवयाः, श्वेतवाः, पुरोडाः---इत्येते निपात्यन्ते । अवपूर्वस्य यजेः, श्वेतपूर्वस्य वहेः, पुरस्पूर्वस्य दाशतेः मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्(3-2-71/3414), अवे यजः(3-2-72/3415) इति ण्विनि कृते `श्वेतवहादीनां डस्पदस्य(वा.263) डस्प्रत्यये निपातनान्येतानि ।
किमर्थं तर्हि निपातनम्, यावता पूर्वेणैव रुः सिद्धः, दीर्घत्वमपि अत्वसन्तस्य चाधातोः(6-4-14/425)---इति ? सम्बुद्धौ दीर्घार्थमेते निपात्यन्ते । अत्वसन्तस्य चाधातोः(6-4-14/425)---इत्यत्र हि `असम्बुद्धौ इति वर्त्तते । हे अवयाः । हे श्वेतवाः । हे पुरोडाः ।
चकारोऽनुक्तसमुच्चयार्थः । हे उक्थशाः ।।
</8-2-67>
अहन् ।। <8-2-68> ।।
`अहन् इत्येतस्य पदस्य रुर्भवति । अहोभ्याम् । अहोभिः । नलोपमकृत्वा निर्देशो ज्ञापकः---नलोपाभावो यथा स्यादिति । दीर्घाहा निदाघः, हे दीर्घाहोऽत्रेति ।
अहन्---इत्यत्र तु लाक्षणिकत्वादहन्--शब्दस्य रुर्न भवति ।

- अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानं कर्त्तव्यम् *(म.भा.3-411) । अहोरूपम् । अहोरात्रः । अहो रथन्तरम् । रोऽसुपि(8-2-69/172) इत्यस्यापवादो रुत्वमुपसङ्ख्यायते ।

अपर आह---सामान्येन रेफादौ रुत्वं भवति । अहो रम्यम् । अहो रत्नानीति ।।
</8-2-68>
रोऽसुपि ।। <8-2-69> ।।
`अहन् इत्येतस्य रेफादेशो भवत्यसुपि परतः । अहर्ददाति । अहर्भुङ्क्ते ।
असुपीति किम् ? अहोभ्याम् । अहोभिः ।
ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति---अहर्ददाति, अहर्भुङ्क्ते इति ? नैतदस्ति; उक्तमेतत्---`अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवति(म.भा.3-412) इति, नायमहः शब्दः सुप्परो भवति ।
यत्र तु लोपशब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव, यथा---हे दीर्घाहोऽत्र, दीर्घाह निदाघ इति । अत्र हि हल्ङ्याब्भ्यः(6-1-68/252) इति लोपेन प्रत्ययस्य निवृत्तिः ।।
</8-2-69>
अम्नरूधरवरित्युभयथा छन्दसि ।। <8-2-70> ।।
अम्नस्, ऊधस्, अवस्---इत्येतेषां छन्दसि विषये उभयथा भवति---रुर्वा, रेफो वा । अम्नस्---`अम्न एव(मै.1-6-10), अम्नरेव । ऊधस्---`ऊधरेव(ऋ.10-100-11), `ऊध एव(काठ.7-5-20) । अवस्---अवरेव, `अव एव(अ.वे.20-25-2) । यदा रुत्वं तदा भोभगोअघोअपूर्वस्य योऽशि(8-3-17/167) इति यकारः ।

- छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम् * (म.भा.3-412)। `प्रचेता राजन्(ऋ.1-24-14), `प्रचेतो राजन्(तै.1-5-11-3) ।
- अहरादीनां पत्यादिषूपसंख्यानं कर्तव्यम् * (म.भा.3-412)। अहर्पतिः, अहः पति । गीर्पतिः । गीः पतिः । धूर्प्पतिः । धूः पतिः ।

विसर्जनीयबाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते ।।
</8-2-70>
भुवश्च महाव्याहृतेः ।। <8-2-71> ।।
`भुवस्---इत्येतत् महाव्याहृतेछन्दसि विषये उभयथा भवति---रुर्वा, रेफो वा । भुवरित्यन्तरिक्षम्, भुव इत्यन्तरिक्षम् ।
महाव्याहृतेरिति किम् ? `भुवो विश्वस्य भुवनेषु यज्ञियः(ऋ.10-50-4) ।
`भुवः इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ।।
</8-2-71>
वसुस्रंसुध्वंस्वनडुहां दः ।। <8-2-72> ।।
ससजुषोः(8-2-66/162) इत्यतः `स इति वर्तते, तेन सम्भवाद्व्यभिचाराच्च वसुरेव विशेष्यते, न स्रंसुध्वंसू; व्यभिचाराभावाद् । असम्भवाच्चानडुह्शब्दः । वस्वन्तस्य पदस्य सकारान्तस्य स्रंसु, ध्वंसु, अनडुह्---इत्येतेषां च दकारादेशो भवति । वसु---विद्वद्भ्याम्, विद्वद्भिः । पपिवद्भ्याम्, पपिवद्भिः । स्रंसु---उखास्रद्भ्याम्, उखास्रद्भिः । ध्वंसु---पर्णध्वद्भ्याम्, पर्णध्वद्भिः । अनडुह्---अनडुद्भ्याम्, अनडुद्भिः ।
स इत्येव---विद्वान्, पपिवान् ।
नकारस्य न भवति रुत्वे नाप्राप्ते इदमारभ्यत इति तद्बाध्यते । संयोगान्तलोपस्तु नैवमिति तेनैतदेव दत्वं बाध्यते ।
अनुडुहोऽपि ढत्वमनेन बाध्यते ।

नुमस्तु विधानसामर्थ्यान्न भवति---अनड्वान्, हे अनड्वन्निति । `पदस्य इत्येव---विद्वांसौ, विद्वांसः ।।
</8-2-72>
तिप्यनस्तेः ।। <8-2-73> ।।
तिपि परतः सकारान्तस्य पदस्य अनस्तेर्दकार आदेशो भवति । अचकाद् भवान् । अन्वशाद् भवान् ।
तिपीति किम् ? चकास्तेः क्विप्, चकाः । अनस्तेरिति किम् ? आप एवेदं सलिलं सर्वमाः । आ इत्यस्तेर्लङि तिपि बहुलं छन्दसि(7-3-97/3586) इति ईड् न कृतः ।।
</8-2-73>
सिपि धातो रुर्वा ।। <8-2-74> ।।
सिपि परतः सकारान्तस्य पदस्य धातोः `रुः इत्ययमादेशो भवति, दकारो वा । अचकास्त्वम्, अचकात्त्वम् । अन्वशास्त्वम्, अन्वशात्त्वम् । धातुग्रहणं चोत्तरार्थं रुग्रहणं च ।।
</8-2-74>
दश्च ।। <8-2-75> ।।
दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति, दकारो वा । अभिनत्त्वम्, अभिनस्त्वम् । अच्छिनत्त्वम्, अच्छिनस्त्वम् ।।
</8-2-75>
र्वोरुपधाया दीर्घ इकः ।। <8-2-76> ।।
रेफवकारान्तस्य धातोः पदस्य उपधाया इको दीर्घो भवति । गीः । धूः । पूः । आशीः ।
वकारग्रहणमुत्तरार्थम् । उपधाग्रहणं किम् ? अत्रैव प्रत्युदाहरणे भशब्दाकारस्य मा भूत् ।
`धातोः इत्येव---अग्निः, वायुः । `पदस्य इत्येव---गिरौ, गिरः ।।
</8-2-76>
हलि च ।। <8-2-77> ।।
हलि च परतः रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति । आस्तीर्णम् । विस्तीर्णम् । विशीर्णम् । वकारान्तस्य---दीव्यति । सीव्यति ।
`धातोः इत्येव---दिवमिच्छति दिव्यति । चतुर इच्छति चतुर्यति ।
`इकः इत्येव---स्मर्यते । भव्यम् ।
अपदान्तार्थोऽयमारम्भः ।।
</8-2-77>
उपधायां च ।। <8-2-78> ।।
`हलि इत्यनुवर्त्तते । धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दोर्घो भवति । हुर्छा---हूर्छिता । मुर्छा---मूर्छिता । उर्वी---ऊर्विता । धुर्वी---धूर्विता ।
`हलि इत्येव---चिरि, जिरि, चिरिणोति । जिरिणोति ।
इह कस्मान्न भवति---`री गतौ(धा.पा.1501)---रिर्यतुः, रिर्युः, `वी गत्यादिषु(धा.पा.1049)---विव्यतुः, विव्युरिति ? यणादेशस्य स्थानिवत्त्वात् असिद्धत्वाच्च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः ।
चतुर्यिता---इत्यत्रापि बहिरङ्गलक्षणत्वादतो लोपस्य(6-4-48/2308) धातोरुपधाभूतो रेफो न भवति ।
प्रतिदीव्ना---इत्यत्र तु हलि च(8-2-77/354) इति दीर्घत्वम्; दीर्घविधौ लोपाजादेशस्य स्थानिवद्भावप्रतिषेधात् । `असिद्धं बहिरङ्गमन्तरङ्गे(व्या.प.42) इत्येतत्तु नाश्रयितव्यम् ।
`उणादयोऽव्युत्पन्नानि प्रातिपदिकानि(है.प.103) इति जिव्रिः, किर्योः, गिर्योरित्येवमादिषु दीर्घो न भवति ।।
</8-2-78>
न भकुर्छुराम् ।। <8-2-79> ।।
रेफवकारान्तस्य भस्य कुर्, छुर्---इत्येतयोश्च दीर्घो न भवति । धुरं वहति धुर्यः । धुरि साधुर्धुर्यः । कुर्---कुर्यात् । छुर्---छुर्यात् । दिव्यम् ।
रेफवकाराभ्यां भविशेषणं किम् ? प्रतिदीव्ना । प्रतिदीव्ने ।।
</8-2-79>
अदसोऽसेर्दादु दो मः ।। <8-2-80> ।।
अदसोऽसकारान्तस्य वर्णस्य दात्परस्य अवर्णादेशो भवति दकारस्य च मकारः । अमुम्, अमू, अमून् । अमुना । अमूभ्याम् । `भाव्यमानेनाप्युकारेण सवर्णानां ग्रहणमिष्यते(पु.प.21)---इत्येकमात्रिकस्य मात्रिकः, द्विमात्रिकस्य द्विमात्रिक आदेशो भवति ।
असेरिति किम् ? अद इच्छति अदस्यति ।

- अदसोऽनोस्र इति वक्तव्यम् *(म.भा.3-414)। ओकाररेफयोरपि प्रतिषेधो यथा स्यादिति । अदोऽत्र । अदः कुलम् ।

तदर्थं केचित्सूत्रं वर्णयन्ति---अः सेर्यस्य सोऽयमसिः---यत्र सकारस्य अकारः क्रियत इति, तेन त्यदाद्यत्वविधाने एतद् अन्यत्र न भवतिव्यमेवेति ।
अद्र्यादेशे कथम् ?

`अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ।।(म.भा.3-414)
यैः `असे इति सकारस्य प्रतिषेधः क्रियते, `अनन्त्यविकारेऽन्त्यसदेशस्य(व्या.प.63) इति च परिभाषा नाश्रीयते; तेषामुभयोरपि मुत्वेन भवितव्यम्---अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्च इति; यथा---चलीक्लृप्यत इति लत्वम् ।
ये तु परिभाषामाश्रयन्ति, तेषामन्त्यसदेशस्यैव भवितव्यम्--- अदमुयङ्, अदमुयञ्चौ, अदमुयञ्च इति ।
येषां तु `त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम् इति दर्शनम्, तेषामत्र न भवितव्यम्---अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्च इति ।
दादिति किम् ? अलोऽन्त्यस्य मा भूत्---अमुया, अमुयोः ।।
</8-2-80>
एत ईद्बहुवचने ।। <8-2-81> ।।
अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारो बहुवचने=बहूनामर्थानामुक्तौ । अमी । अमीभिः । अमीभ्यः । अमीषाम् । अमीषु ।
`बहुवचने इत्यर्थनिर्देशोऽयम्, पारिभाषिकस्य हि बहुवचनस्य ग्रहणे अमी इत्यत्र न स्यात् ।
</8-2-81>
वाक्यस्य टेः प्लुत उदात्तः ।। <8-2-82> ।।
अधिकारोऽयम् । वाक्यस्य टेरिति, प्लुत इति च, उदात्त इति च---एतत्त्रयमप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य टेः, प्लुतः, उदात्तः---इत्येवं तद्वेदितव्यम् । वक्ष्यति---प्रत्यभिवादेऽशूद्रे(8-2-83/94) अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधिदेवदत्त3 ।
पदाधिकारोऽनुवर्तत एव ।
वाक्यग्रहणमनन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम् ।
टिग्रहणं व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यात्---अग्निचि3दिति ।।
</8-2-82>
प्रत्यभिवादेऽशूद्रे ।। <8-2-83> ।।
प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते, तत्राशूद्रविषये यद्वाक्यं वर्तते तस्य टेः प्लुत उदात्तो भवति । अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधि देवदत्त3 ।
अशूद्र इति किम् ? अभिवादये तुषजकोऽहम्, भो आयुष्मानेधि तुषजक ।

- स्त्रियामपि प्रतिषेधो वक्तव्यः * (म.भा.3-416)। अभिवादये गार्ग्यहम्, भो आयुष्मती भव गार्गि ।

असूयकेऽपि केचित् प्रतिषेधमिच्छन्ति---अभिवादये स्थाल्यहं भोः, आयुष्मानेधि स्थालिन् ! यावच्च तस्यासूयकत्वं
न ज्ञायते, तावदेव प्रत्यभिवादवाक्यम् । तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते प्रत्यभिवाद एव नास्ति, कुतः प्लुतः ! तथा चोक्तम्---असूयकस्त्वं जाल्म, न त्वं प्रत्यभिवादनमर्हसि, भिद्यस्व वृषल स्थालिन्निति ।
अभिवादनवाक्ये यत् सङ्कीर्तितं नाम, गोत्रं वा, तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुतिरिष्यते । इह न भवति---देवदत्त कुशल्यसि । देवदत्त आयुष्मानेधीति ।

- भोराजन्यविशां वेति वक्तव्यम् * (म.भा.3-416)। भो अभिवादये देवदत्तोऽहम्, आयुष्मानेधि देवदत्त भोः3, आयुष्मानेधि देवदत्त भोः । राजन्य---अभिवादये इन्द्रवर्माहं भोः, आयुष्मानेधीन्द्रवर्म3न्, आयुष्मानेधीन्द्रवर्मन् । विश्---अभिवादये इन्द्रपालितोऽहं भोः, आयुष्मानेधीन्द्रपालित3, आयुष्मानेधीन्द्रपालित ।।

</8-2-83>
दूराद्धूते च ।। <8-2-84> ।।
दूराद्धूते यद्वाक्यं वर्तते तस्य टेः प्लुतो भवति स चोदात्तः । आह्वानम्=हूतम्, शब्देन सम्बोधनम् । आगच्छ भो माणवक देवदत्त3 । आगच्छ भो माणवक यज्ञदत्त3 ।
दूरं यद्यप्यपेक्षाभेदादनवस्थितम्, तथापि हूतापेक्षं यत्तदाश्रीयते इति, यत्र प्राकृतात् प्रयत्नाद्यत्नविशेष आश्रीयमाणे शब्दः श्रूयते=तद् दूरम् ।
हूतग्रहणं च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम् । तेन यत्राप्याह्वानं नास्ति, तत्रापि प्लुतिर्भवति---सक्तून्पिब देवदत्त3 । पलायस्व देवदत्त3 इति ।
अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते ।
दूरादिति किम् ? आगच्छ भो माणवक देवदत्त ।
दूरादाह्वाने वाक्यस्यान्ते यत्र सम्बोधनपदं भवति तत्रायं प्लुत इष्यते । तेनेह न भवति---देवदत्त आगच्छ ।।
</8-2-84>
हैहेप्रयोगे हैहयोः ।। <8-2-85> ।।
हैहेप्रयोगे दूराद्धूते यद्वाक्यं वर्तते तत्र हैहयोरेव प्लुतो भवति । है3 देवदत्त, देवदत्त है3 । हे3 देवदत्त, देवदत्त हे3 ।
पुनर्हैहयोर्ग्रहणमनन्त्ययोरपि यथा स्यात् ।।

</8-2-85>
गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।। <8-2-86> ।।
प्रत्यभिवादेऽशूद्रे(8-2-83/94)---इत्येवमादिना यः प्लुतो विहितः, तस्यैवायं स्थानिविशेष उच्यते । ऋकारवर्जितस्य गुरोरनन्त्यस्य, अपिशब्दादन्त्यस्यापि टेरेकैकस्य सम्बोधने वर्तमानस्य प्लुतो भवति प्राचामाचार्याणां मतेन । दे3वदत्त, देवद3त्त, देवदत्त3 । य3ज्ञदत्त, यज्ञद3त्त, यज्ञदत्त3 ।
गुरोरिति किम् ? वकारात्परस्य मा भूत् । अनृत इति किम् ? कृष्णमि3त्र, कृष्णमित्र 3 ।
एकैकग्रहणं पर्यायार्थम् ।
प्राचामिति ग्रहणं विकल्पार्थम् । आयुष्मानेधि देवदत्त । तदनेन यदेतदुच्यते---`सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्यः(म.भा.3-420) इति, तदुपपन्नं भवति ।।
</8-2-86>
ओमभ्यादाने ।। <8-2-87> ।।
अभ्यादानम्=प्रारम्भः । तत्र य ओम्शब्दः तस्य प्लुतो भवति । ओ3म् `अग्निमीळे पुरोहितम्(ऋ.1-1-1) ।
अभ्यादाने इति किम् ? `ओमित्येतदक्षरमुद्गीथमुपासीत(छां.उ.1-1-1) ।।
</8-2-87>
ये यज्ञकर्मणि ।। <8-2-88> ।।
`ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति । ये3 यजमाहे ।
यज्ञकर्मणीति किम् ? `ये यजामह इति पञ्चाक्षरम्(तै.1-6-11-1)---इति स्वाध्यायकाले मा भूत् ।
ये यजामहे---इत्यत्रैवायं प्लुत इष्यते । इह हि न भवति---`ये देवासो दिव्येकादशस्थ(ऋ.1-139-91) इति ।।
</8-2-88>
प्रणवष्टेः ।। <8-2-89> ।।
`यज्ञकर्मणि इति वर्तते । यज्ञकर्मणि टेः प्रणव आदेशो भवति ।
क एष प्रणवो नाम ? पादस्य वा, अर्धर्चस्य वान्त्यमक्षरमुपसंगृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारम्, ओङ्कारं वा विदधति तं प्रणवमित्याचक्षते । `अपां रेतांसि जिन्वतो3म्(ऋ.8-44-16) । `देवान् जिगाति सुम्नयो3म्(ऋ.3-27-1) ।
टिग्रहणं सर्वादेशार्थम् । ओकारः सर्वादेशो यथा स्यात्, व्यञ्जनान्ते अन्तस्य मा भूदिति ।
`यज्ञकर्मणि इत्येव---`अपां रेतांसि जिन्वति(ऋ.8-44-16) ।।
</8-2-89>
याज्यान्तः ।। <8-2-90> ।।
याज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्राः, तेषामन्त्यो यष्टिः स प्लवते यज्ञकर्मणि । `स्तोमैर्विधेमाग्नये3(ऋ.8-43-11) । `जिह्वामग्ने चकृषे हव्यवाह3म्(तै.4-4-4-1) ।
अन्तग्रहणं किम् ? याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः; तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति; सर्वान्त्यस्यैवेष्यते, तदर्थमन्तग्रहणम् ।।
</8-2-90>
ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।। <8-2-91> ।।
ब्रूहि, प्रेष्य, श्रौषट्, वौषट्, आवह---इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि । `अग्नयेऽनुब्रू3हि(श.ब्रा.2-5-3-12) । प्रेष्य---अग्नये गोमयान्प्रे3ष्य । श्रोषट्---`अस्तु श्रौ3षट्(तै.1-6-11-1) । वौषट्--`सोमस्याग्ने वीहि3वौ3षट्(ऐ.ब्रा.4-5-4-6) । आवह---`अग्निमा3वह(तै.ब्रा.3-5-1-2) ।
`आवह देवान्यजमानाय(तै.ब्रा.3-5-3-2)---इत्येवमादावयं प्लुतो न भवति; `सर्वे विधयश्छन्दसि विकल्प्यन्ते(पु.प.35) इति ।।
</8-2-91>
अग्नीत्प्रेषणे परस्य च ।। <8-2-92> ।।
अग्नीधः प्रेषणम्=अग्नीत्प्रेषणम्, तस्मादेवादेः प्लुतो भवति परस्य च । `आ3 श्रा3वय(तै.1-6-11-2) । ओ3श्रा3वय ।
अत्रैवायं प्लुत इष्यते । तेनेह न भवति---`अग्नीदग्नीन्विहर बर्हिस्तृणीहि(तै.6-3-1-2)इति । तदर्थं केचिद्वक्ष्यमाणं `विभाषा इत्यभिसम्बध्नन्ति, सा च व्यवस्थितविभाषेति । अपर आह---`सर्व एव प्लुतः साहसमनिच्छता विभाषा विज्ञेयः(म.भा.3-420) इति ।
इह तु---उद्धर3 उद्धर, अभिहर3 अभिहरेति छान्दसः प्लुतव्यत्ययः ।
`यज्ञकर्मणि इत्येव---ओ श्रावय ।।
</8-2-92>
विभाषा पृष्टप्रतिवचने हेः ।। <8-2-93> ।।
पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति । अकार्षीः कटं देवदत्त ? अकार्षं हि3, अकार्षं हि । अलावीः केदारं देवदत्त ? अलाविषं हि3, अलाविषं हि ।
पृष्टप्रतिवचन इति किम् ? कटं करिष्यति हि । हेरिति किम् ? करोमि ननु ।।
</8-2-93>

निगृह्यानुयोगे च ।। <8-2-94> ।।
स्वमतात्प्रच्यावनम्=निग्रहः । अनुयोगः=तस्य मतस्याविष्करणम् । तत्र निगृह्यानुयोगे यद्वाक्यं वर्त्तते तस्य टेः प्लुतो भवति विभाषा । `अनित्यः शब्दः इति केनचित्प्रतिज्ञातम्, तमुपालिप्सुरुपपत्तिभिर्निगृह्य
साभ्यसूयमनुयुङ्क्ते---अनित्यः शब्द इत्यात्थ3, अनित्यः शब्द इत्यात्थ । अद्य श्राद्धमित्यात्थ3, अद्य श्राद्धमित्यात्थ । अद्यामावास्येत्यात्थ3, अद्यामावास्येत्यात्थ । अद्य अमावास्येत्येवं वादी युक्त्या प्रच्याव्य स्वमतादेवमनुयुज्यते ।।
</8-2-94>
आम्रेडितं भर्त्सने ।। <8-2-95> ।।
वाक्यादेरामन्त्रितस्य(8-1-8/2143) इति भर्त्सने द्विर्वचनमुक्तम्, तस्याम्रेडितं प्लवते । चौरचौर3, वृषलवृषल3, दस्योदस्यो3, घातयिष्यामि त्वा बन्धयिष्यामि त्वा ।

- भर्त्सने पर्यायेणेति वक्तव्यम् * । चौर3चौर । चौरचौर3 । तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति ।।

</8-2-95>
अङ्गयुक्तं तिङाकाङ्क्षम् ।। <8-2-96> ।।
`अङ्ग इत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने प्लवते । अङ्ग कूज3, अङ्ग व्याहर3, इदानीं ज्ञास्यसि जाल्म ।
तिङिति किम् ? अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षमिति किम् ? अङ्ग पच । नैतदपरमाकाङ्क्षति ।
`भर्त्सने इत्येव---अङ्गाधीष्व ओदनं ते दास्यामि ।।
</8-2-96>
विचार्यमाणानाम् ।। <8-2-97> ।।
प्रमाणेन वस्तुपरीक्षणम्=विचारः, तस्य विषये विचार्यमाणानां वाक्यानां टेः प्लुतो भवति । `होतव्यं दीक्षितस्य गृहा3इ(तै.6-1-4-5) । होतव्यं न होतव्यमिति विचार्यते । तिष्ठेद्यूपा3इ । अनुप्रहरेद्यूपा3इ । यूपे तिष्ठेत्, यूपे अनुप्रहरेदिति विचार्यते ।।
</8-2-97>
पूर्वं तु भाषायाम् ।। <8-2-98> ।।
भाषायां विषये विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु3 रज्जुर्नु3 । लोष्टो नु3 । कपोतो नु । प्रयोगापेक्षं पूर्वत्वम् ।
इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते ।।
</8-2-98>
प्रतिश्रवणे च ।। <8-2-99> ।।
प्रतिश्रवणम्=अभ्युपगमः, प्रतिज्ञानम् । श्रवणाभिमुख्यं च तत्राविशेषात् सर्वस्य ग्रहणम् । प्रतिश्रवणे यद्वाक्यं वर्तते तस्य टेः प्लुतो भवति । गां मे देहि भोः, अहं ते ददामि3 । नित्यः शब्दो भवितुमर्हति, देवदत्त भोः किमात्थ3 ।।
</8-2-99>
अनुदात्तं प्रश्नान्ताभिपूजितयोः ।। <8-2-100> ।।
अनुदात्तः प्लुतो भवति प्रश्नान्ते, अभिपूजिते च । अगम3: पूर्वा3न् ग्रामा3न् अग्निभूता3इ, पटा3 उ ?
अगनिभूते, पटो---इत्येतयोः प्रश्नान्ते वर्त्तमानयोरनुदात्तः प्लुतो भवति ।
`अगमः इत्येवमादीनां तु अनन्त्यस्यापि प्रश्नाख्यानयोः(8-2-105/3624) इति स्वरितः प्लुतो भवति ।
अभिपूजिते---शोभनः खल्वसि माणवक3 ।
</8-2-100>
चिदिति चोपमार्थे प्रयुज्यमाने ।। <8-2-101> ।।
`अनुदात्तम् इति वर्त्तते । `चित्---इत्येतस्मिन्निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवति । प्लुतोऽप्यत्र विधीयते, न गुणमात्रम् । अग्निचिद्भाया3त् । राजचिद्भायात्3 । अग्निरिव भायात्, राजेव भायादित्यर्थः ।
उपमार्थे इति किम् ? कथञ्चिदाहुः । प्रयुज्यमान इति किम् ? अग्निर्माणवको भायात् ।।
</8-2-101>
उपरिस्विदासीदिति च ।। <8-2-102> ।।
`अनुदात्तम् इति वर्त्तते । `उपरिस्विदासीत्---इत्येतस्य टेरनुदात्तः प्लुतो भवति । `अधः स्विदासी3त् उपरिस्विदासी3त्(तै.ब्रा.2-8-95) । अधः स्विदासीत्---इत्यत्र विचार्यमाणानाम्(8-2-97/3616) इत्युदात्तः प्लुतः । उपरिस्विदासीत्---इत्यत्र तु अनेनानुदात्तः ।।
</8-2-102>
स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ।। <8-2-103> ।।
स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायाम्, सम्मतौ, कोपे, कुत्सने च गम्यमाने । वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु(8-1-8/2143) इत् द्विर्वचनमुक्तम्, तत्रायं प्लुतविधिः ।
असूयायां तावत्---माणवक3माणवक अभिरूपक3अभिरूपक रिक्तं त आभिरूप्यम् ।

सम्मतौ---माणवक3माणवक अभिरूपक3अभिरूपक शोभनः खल्वसि ।
कोपे---माणवक3माणवक अविनीतक3अविनीतक इदानीं ज्ञास्यसि जाल्म ।
कुत्सने---शाक्तीक3शाक्तीक याष्टीक3याष्टीक रिक्ता ते शक्तिः ।

- असूयादिषु वावचनं कर्त्तव्यम् * (म.भा.3-420)। माणवक माणवक---इत्येवमाद्यपि यथा स्यात् ।।

</8-2-103>
क्षियाशीः प्रैषेषु तिङाकाङ्क्षम् ।। <8-2-104> ।।
`स्वरित इति वर्तते । क्षिया=आचारभेदः, आशीः=प्रार्थनाविशेषः, शब्देन व्यापारणम्=प्रैषः---एतेषु गम्यमानेषु तिङन्तमाकाङ्क्षं यत्तस्य स्वरितः प्लुतो भवति । आकाङ्क्षतीत्याकाङ्क्षम्, तिङन्तमुत्तरपदमाकाङ्क्षतीत्यर्थः ।
क्षियायां तावत्---स्वयं रथेन याति3 उपाध्यायं पदातिं गमयतीति । स्वयं ओदनं ह भुङ्क्ते 3 उपाध्यायं सक्तून्पाययति । पूर्वमत्र तिङन्तमुत्तरपदमाकाङ्क्षतीति साकाङ्क्षं भवति ।
आशिषि---सुताँश्च लप्सीष्ट3 धनं च तात । छन्दोऽध्येषीष्ट3 व्याकरणं च भद्र ।
प्रैषे---कटं कुरु3 ग्रामं च गच्छ । यवान् लुनीहि3 सक्तूंश्च पिब ।
आकाङ्क्षमिति किम् ? दीर्घं ते आयुरस्तु । अग्नीन्विहर ।।
</8-2-104>
अनन्त्यस्यापि प्रश्नाख्यानयोः ।। <8-2-105> ।।
पदस्येति वर्तते, स्वरितमिति च । अनन्त्यस्यापि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने, आख्याने च । अगम3ः पूर्वा3न् ग्रामा3न् अग्निभूत3इ । पट3उ । सर्वेषामेव पदानामेष स्वरितः प्लुतः । अन्त्यस्य अनुदात्तं प्रश्नान्ताभिपूजितयोः(8-2-100/3619) इति । अनुदात्तोऽपि पक्षे भवति ।
आख्याने---अगम3ः पूर्वा3न् ग्रामा3न् भोः3 ।।
</8-2-105>
प्लुतावैच इदुतौ ।। <8-2-106> ।।
दूराद्धूतादिषु प्लुतो विहितः, तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूताविदुतौ प्लुतौ । ऐ3तिकायन । औ3पमन्यव । अत्र यदेवर्णोवर्णयोः, अवर्णस्य च समविभागः, तदा इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते ।
`प्लुतौ इति हि क्रियानिमित्तोऽयं व्यपदेशः---इदुतौ प्लवेते, वृद्धिं गच्छत इत्यर्थः । तावती च सा प्लुतिर्भवति, यया तावेचौ त्रिमात्रौ सम्पद्येते । यदा त्वर्धमात्रावर्णस्याध्यर्धमात्रा इवर्णोवर्णयोः, तदा तावर्धतृतीयमात्रौ क्रियेते इति ।
भाष्ये तूक्तम्---`इष्यते एव चतुर्मात्रः प्लुतः(म.भा.3-421) इति । तत्कथम् ? समप्रविभागपक्षे इदुतोरनेन त्रिमात्रः प्लुतो विधीयते ।।
</8-2-106>
एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ।। <8-2-107> ।।
एचोऽप्रगृह्यस्यादूराद्धूते प्लुतविषयस्यार्धस्याकार आदेशो भवति स च प्लुतः, उत्तरस्येकारोकारावादेशौ भवतः ।
विषयपरिगणनं कर्त्तव्यम्---

- प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् * (म.भा.3-421)। प्रश्नान्ते---अगम3ः पूर्वा3न् ग्रामा3न् अग्निभूता3इ, पटा3उ । अभिपूजिते---भद्रं करोषि माणवक3 अग्निभूता3इ ,पटा3उ । विचार्यमाणे---`होतव्यं दीक्षितस्य गृहा3इ(तै.6-1-4-5) । प्रत्यभिवादे---आयुष्मानेधि अग्निभूता3इ ,पटा3उ । याज्यान्ते---`उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नया3इ(ऋ.8-43-11) ।

सोऽयमाकारः प्लुतो यथाविषयमुदात्तः, अनुदात्तः, स्वरितो वेदितव्यः । इदुतौ पुनरुदात्तावेव भवतः ।
परिगणनं किम् ? विष्णुभूते विष्णुभूते3 घातयिष्यामि त्वा । आगच्छ भो माणक विष्णुभूते ।
परिगणने च सति `अदूराद्धूते इति न वक्तव्यम् ।
पदान्तग्रहणं तु कर्त्तव्यम् । इह मा भूत्---भद्रं करोषि गौरिति ।
अप्रगृह्यस्येति किम् ? शोभने खलु स्तः खट्वे3 ।

- आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः * (म.भा.3-422)। `अग्ना3इ पत्नीव3ः(वा.सं.8-10) ।

</8-2-107>
तयोर्य्वावचि संहितायाम् ।। <8-2-108> ।।
तयोरिदुतोर्यकारवकारादेशौ भवतोऽचि संहितायां विषये ।
`संहितायाम् इत्येतच्चाधिकृतम् । इत उत्तरमाध्यायपरिसमाप्तेर्यद्वक्ष्यामः संहितायामित्येवं तद्वेदितव्यम् ।
अग्ना3याशा । पटा3वाशा । अग्ना3यिन्द्रम् । पटा3वुदकम् ।
अचीति किम् ? अग्ना3इ । पटा3उ ।

संहितायामिति किम् ? अग्ना3इ इन्द्रम् । पटा3उ । उदकम् ।
इदुतोरसिद्धत्वात् इको यणचि(6-1-77/47) इति न प्राप्नोतीत्ययमारम्भः ।
अथापि कथञ्चित्तयोः सिद्धत्वं स्यात् ? एवमपि सवर्णदीर्घत्व(6-1-101/85)निवृत्त्यर्थम्, शाकल(6-1-127/91)निवृत्त्यर्थं च वक्तव्यमेतत् ।
अथापि तन्निवृत्त्यर्थं यत्नान्तरमस्ति ? तथापि यण्स्वरनिवृत्त्यर्थमिदमारभ्यते । यणादेशस्यासिद्धत्वात् उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य(8-2-4/3657) इत्येष स्वरो न भवति ।।
`किं नु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ।।
इक्तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ।।(म.भा.3-423)
इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ
अष्टमाध्यायस्य द्वितीयः पादः
</8-2-108>

# काशिका/अष्टमोऽध्यायः/तृतीयः पादः

https://sa.wikisource.org/s/pc5
< काशिका | अष्टमोऽध्यायः

* अथ अष्टमाध्याये तृतीयः पादः *

मतुवसो रु सम्बुद्धौ छन्दसि ।। <8-3-1> ।।
`संहितायाम् इति वर्त्तते । मत्वन्तस्य वस्वन्तस्य च पदस्य `रुः इत्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये । मत्वन्तस्य तावत्---`इन्द्र मरुत्व इह पाहि सोमम्(तै.सं.1-4-18-1) । `हरिवो मेदिनं त्वा(तै.सं.4-7-14-4) । मरुतोऽस्य सन्ति, हरयोऽस्य सन्ति---इति मतुप्, सुप्सकारयोर्हल्ङ्यादिलोपे(6-1-68/252) संयोगान्तस्य लोपे(8-2-23/54) च कृते नकारस्य रुर्भवति ।
वस्वन्तस्य खल्वपि---`मीढ्वस्तोकाय तनयाय मृळ(ऋ.2-33-14) इन्द्र साह्वः । क्वसोर्निपातनम् दाश्वान् साह्वान् मीढ्वांश्च(6-1-12/3629) इति ।
मतुवसोरिति किम् ? ब्रह्मन्स्तोष्यामः । सम्बुद्धाविति किम् ? `य एवं विद्वानग्निमाधत्ते(मै.सं.1-5-7) । छन्दसीति किम् ? हे गोमन् । हे पपिवन् ।

- वन उपसंख्यानं कर्त्तव्यम् *(म.भा.3-424) । `यस्त्वायन्तं वसुना प्रातरेत्वः(ऋ.1-115-2) । इणः प्रातः पूर्वस्य छन्दसि क्वनिप् ।
- विभाषा भवद्भगवदघवतामोच्चावस्य *(म.भा.3-424) । छन्दसि भाषायां व भवाद्, भगवद्, अघवद्---इत्येतेषां विभाषा रुर्वक्तव्यः, अवशब्दस्य च ओकारादेशः । सामान्येन छन्दसि भाषायां चेदं वचनम् । भवत्---हे भोः, हे भवन् । भगवद्---हे भगोः, हे भगवन् । अघवत्---हे अघोः, हे अघवन् ।

निपातविज्ञानाद्वा सिद्धम् । अथ वा---भो इत्येवमादयो निपाता द्रष्टव्याः । असम्बुद्धावपि द्विवचनबहुवचनयोरपि दृश्यन्ते । भो देवदत्तयज्ञदत्तौ । भो देवदत्तयज्ञदत्तविष्णुमित्त्राः ।
तथा स्त्रियामपि च दृश्यन्ते---भो ब्राह्मणि ।
संहिताधिकार उत्तरत्रोपयुज्यते, यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ---नश्छव्यप्रशान्(8-3-7/140) इति ।।
</8-3-1>
अत्रानुनासिकः पूर्वस्य तु वा ।। <8-3-2> ।।
अधिकारोऽयम् । इत उत्तरं यस्य स्थाने रुर्विधीयते ततः `पूर्वस्य तु वर्णस्य वाऽनुनासिको भवति---इत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यति---समः सुटि(8-3-5/135) । सँस्कर्ता, सँस्कर्तुम्। सँस्कर्तव्यम् ।
अत्रग्रहणं रुणा सह सन्नियोगप्रतिपत्त्यर्थम् । अधिकारपरिमाणापरिग्रहे हि सति ढो ढे लोपः(8-3-13/2335) इत्यत्रापि पूर्वस्यानुनासिक आशङ्क्येत ।।
</8-3-2>
आतोऽटि नित्यम् ।। <8-3-3> ।।
अटि परतो रोः पूर्वस्याकारस्य स्थाने नित्यमनुनासिकादेशो भवति । दीर्घादटि समानपादे(8-3-9/3631) इति रुत्वं वक्ष्यति, ततः पूर्वस्यातोऽनुनासिकविकल्पे प्राप्ते, नित्यार्थं वचनम् । `महाँ असि(ऋ.3-46-2) । `महाँ इन्द्रो य ओजसा(ऋ.8-6-1) । `देवाँ अच्छा दीद्यत्(ऋ.3-1-1) ।
केचिदनुस्वारमधीयते, स च्छान्दसो व्यत्ययो द्रष्टव्यः ।
आत इति किम् ? `ये वा वनस्पतीरनु(वा.सं.13-7) । अटीति किम् ? भवांश्चरति, भवांश्छाययति ।
नित्यग्रहणं विस्पष्टार्थम् ।।
</8-3-3>
अनुनासिकात् परोऽनुस्वारः ।। <8-3-4> ।।
अन्यशब्दोऽत्राध्याहर्त्तव्यः । तदपेक्षया चेयम् `अनुनासिकात् इति पञ्चमी । अनुनासिकादन्यो यो वर्णः रोः पूर्वः, यस्यानुनासिको न कृतः, ततः परोऽनुस्वार आगमो भवति । वक्ष्यति---समः सुटि(8-3-5/135) । संस्कर्ता,
संस्कर्तव्यम् । पुमः खय्यम्परे(8-3-6/139)---पुंस्कामा । नश्छव्यप्रशान्(8-3-7/140)---भवांश्चरति ।
केचित्तु परशब्दमेवान्यार्थं वर्णयन्ति । अनुनासिकात्परः=अनुनासिकादन्योऽनुस्वारो भवति । यस्मिन्पक्षेऽनुनासिको नास्ति तत्रानुस्वारागमो भवति । स तु कस्यागमो भवति ? रोः पूर्वस्यैवेति वर्तते, व्याख्यानादादेशो न भवति ।।
</8-3-4>
समः सुटि ।। <8-3-5> ।।
रुर्वर्तते । `समः---इत्येतस्य रुर्भवति सुटि परतः संहितायां विषये । सँस्कर्ता, सँस्कर्तुम्, सँस्कर्तव्यम् । संस्स्कर्ता, संस्स्कर्तुम्, संस्स्कर्तव्यम् ।

अत्र रोर्विसर्जनीये कृते वा शरि(8-3-66/151) इति पक्षे विसर्जनीय एव प्राप्नोति । व्यवस्थितविभाषा द्रष्टव्या । तेनात्र नित्यं सकार एव भवति ।
अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते---`समः स्सुटि इति द्विसकारको निर्द्देशः ।
सम इति किम् ? उपस्कर्ता । सुटीति किम् ? संकृतिः ।
कश्चिदाह---

- संपुंकानां सो वक्तव्यः * (म.भा.3-424)। रुविधौ ह्यनिष्टप्रसङ्गः । संस्स्कर्ता । पुंस्स्कामा । कांस्स्कानिति ।।

</8-3-5>
पुमः खय्यम्परे ।। <8-3-6> ।।
पुमित्येतस्य रुर्भवति अम्परे खयि परतः । पुँस्कामा, पुंस्कामा । पुँस्पुत्रः, पुंस्पुत्रः । पुँस्फलम्, पुंस्फलम् । पुँश्चली, पुंश्चली ।
पुंस्कामेत्यत्र विसर्जनीयस्य कुप्वोः :क:पौ च(8-3-37/142) इति प्राप्नोति । तस्मादत्र सकार एवादेशो वक्तव्यः ।
द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्रात् `स इत्यनुवर्तते ।
रुत्वं त्वनुवर्तमानमपि नात्राभिसम्बध्यते । सम्बन्धानुवृत्तिस्तस्येति ।
खयीति किम् ? पुंदासः । पुंगवः । अम्पर इति किम् ? पुंक्षीरः । पुंक्षुरः । परग्रहणं किम् ? पुमाख्यः । पुमाचारः ।।
</8-3-6>
नश्छव्यप्रशान् ।। <8-3-7> ।।
`अम्परे इति वर्तते । नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवति अम्परे छवि परतः । भवाँश्छादयति, भवांश्चादयति । भवाँश्छादयति, भवांश्छादयति । भवांश्चिनोति, भवांश्चिनोति । भवाँष्टीकते, भवांष्टीकते । भवाँस्तरति, भवांस्तरति ।
छवीति किम् ? भवान्करोति । अप्रशानिति किम् ? प्रशाञ्छादयति । प्रशान् चिनोति ।
`अम्परे इत्येव---भवान् त्सरुकः ।।
</8-3-7>
उभयथर्क्षु ।। <8-3-8> ।।
पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते । नकारान्तस्य पदस्य छवि परतः अम्परे उभयथा ऋक्षु भवति---रुर्वा, नकारो वा । तस्मिंस्त्वा दधाति । तस्मिन्त्वा दधाति ।
ऋक्ष्विति किम् ? तांस्त्वं खाद सुखादितान् ।।
</8-3-8>
दीर्घादटि समानपादे ।। <8-3-9> ।।
`नः इत्यनुवर्तते । दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुर्भवत्यटि परतस्तौ चेन्निमित्तनिमित्तिनौ समानपादे भवतः । `ऋक्षु इति प्रकृतत्वाद् ऋक्पाद इह गृह्यते । `परिधीं रति(ऋ.1-107-19) । `देवां अच्छादीव्यत्(ऋ.3-1-1) । `महां इन्द्रो य ओजसा(ऋ.8-6-1) ।
दीर्घादिति किम् ? `अहन्नहिम्(ऋ.1-32-1) । अटीति किम् ? इभ्यान्क्षत्त्रियान् । समानपाद इति किम् ? यातुधानानुपस्पृशः ।
`उभयथा इत्येव---`आदित्यान् हवामहे(ऋ.8-67-1) ।।
</8-3-9>
नॄन्पे ।। <8-3-10> ।।
`नॄन् इत्येतस्य नकारस्य रुर्भवति पशब्दे परतः । अकार उच्चारणार्थः । नॄँःपाहि । नॄं : पाहि । नॄँ : प्रीणीहि । नॄं :प्रणीहि ।
पे इति किम् ? नॄन् भोजयति ।
उभयथेत्यपि केचिदनुवर्तयन्ति, नॄन्पाहीत्यपि यथा स्यात् ।
</8-3-10>
स्वतवान् पायौ ।। <8-3-11> ।।
`स्वतवान् इत्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः । `स्वतवाँ: पायुरग्ने(ऋ.4-2-6) ।
</8-3-11>
कानाम्रेडिते ।। <8-3-12> ।।
कानित्येतस्य नकारस्य रुर्भवति आम्रेडिते परतः । कांस्कानामन्त्रयते । कांस्कान्भोजयति ।
अस्य कस्कादिषु पाठो द्रष्टव्यः । तेन कुत्वोः :क:च(8-3-37/142) इति न भवति ।
समः सुटि(8-3-5/135) इत्यतो वा सकारोऽनुवर्तते, स एवात्र विधीयते ।
पूर्वेषु योगेषु सम्बन्धानुवृत्त्या गतस्य रोरत्रानभिसम्बन्धः । आम्रेडित इति किम् ? कान् कान्पश्यति । एकोऽत्र कुत्सायाम् ।।
</8-3-12>
ढो ढे लोपः ।। <8-3-13> ।।
ढकारस्य ढकारे लोपो भवति । सत्यपि पदाधिकारे तस्यासम्भवादपदान्तस्य ढकारस्यायं लोपो विज्ञायते । लीढम् । उपगूढम् ।
ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम् ।
श्वलिड्ढौकते---इत्यत्र तु जश्त्वे कृते कार्यं नास्तीति लोपाभावः । न च ढलोपो जश्त्वापवादो विज्ञातुं शक्यते; तस्य हि लोढादिर्विषयः सम्भवति ।

तत्र हि श्रुतिकृतमानन्तर्यमस्ति । शास्त्रकृतं तु यदा नानन्तर्यं ष्टुत्वस्यासिद्धत्वेन प्राप्तम्, तत्तु सूत्रकरणसामर्थ्याद्बाध्यते । श्वलिड् ढौकते---इत्यत्र तु न श्रुतिकृतमानन्तर्यम्, न शास्त्रकृतमिति अविषयोऽयं ढलोपस्य ।।
</8-3-13>
रो रि ।। <8-3-14> ।।
रेफस्य रेफे परतो लोपो भवति । नीरक्तम् । दूरक्तम् । अग्नीरथः । इन्दू रथः । पुना रक्तं वासः । प्राता राजक्रयः ।
`पदस्य इत्यत्र विशेषणे षष्ठी, तेन पदान्तस्यापि रेफस्य लोपो भवति । जर्गृधेः---अजर्घाः । पास्पर्धेः---अपास्पा इति ।
</8-3-14>
खरवसानयोर्विसर्जनीयः ।। <8-3-15> ।।
`र इति वर्तते । रेफान्तस्य पदस्य खरि परतोऽवसाने च विसर्जनीयादेशो भवति । वृक्षश्छादयति । प्लक्षश्छादयति । वृक्षस्तरति । प्लक्षस्तरति । अवसाने---वृक्षः । प्लक्षः ।
खरवसानयोरिति किम् ? अग्निर्नयति । वायुर्नयति ।
इह नृकुट्यां भवः नार्कुटः, नृपतेरपत्यं नार्पत्यः---इति वृद्धेर्बहिरङ्गलक्षणत्वात्तदाश्रयस्य रेफस्य `असिद्धं बहिरङ्गम्(व्या.प.42) इत्यसिद्धत्वाद् विसर्जनीयो न भवति ।।
</8-3-15>
रोः सुपि ।। <8-3-16> ।।
`रु---इत्येतस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति । पयःसु । सर्पिःषु । यशःसु ।
`सुपि---इति सप्तमीबहुवचनं गृह्यते । `सिद्धे सत्यारम्भो नियमार्थः(कात.प.62)---रोरेव सुपि विसर्जनीयादेशः, नान्यस्य । गीर्षु । धूर्षु ।।
</8-3-16>
भोभगोअघोअपूर्वस्य योऽशि ।। <8-3-17> ।।
भोर्, भगोर्, अघोर्---इत्येवम्पूर्वस्य अवर्णपूर्वस्य च रो रेफस्य यकारादेशो भवति अशि परतः । भो अत्र । भगो अत्र । अघो अत्र । भो ददाति । भगो ददाति । अघो ददाति । अवर्णपूर्वस्य---क आस्ते, कय् आस्ते । ब्राह्मणा ददति । पुरुषा ददति ।
भोभगोअघोअपूर्वस्येति किम् ? अग्निरत्र । वायुरत्र ।
अश्ग्रहणं किम् ? वृक्षः । प्लक्षः । नैतदस्ति; संहितायाम्(8-2-108/3627) इत्यनुवर्तते ? तर्हि अश्ग्रहणमुत्तरार्थम् । हलि सर्वेषाम्(8-3-22/171) इत्ययं लोपः अशि हलि यथा स्यात्, इह मा भूत्---वृक्षं वृश्चतीति वृक्षवृट्, तमाचष्टे यः स वृक्षवयति, वृक्षवयतेरप्रत्ययः---वृक्षव् करोति ।
अथ तत्रैव अश्ग्रहणं कस्मान्न कृतम् ? उत्तरार्थम्, मोऽनुस्वारः(8-3-23/122) इति हल्मात्रे यथा स्यात् । व्योर्लघुप्रयत्नतरः शाकटायनस्य(8-3-18/168), लोपः शाकल्यस्य(8-3-19/67) इत्येतच्च वृक्षव् करोतीत्यत्र मा भूदित्यश्ग्रहणम् ।
`रोः इत्येव---प्रातरत्र । पुनरत्र ।।
</8-3-17>
व्योर्लघुप्रयत्नतरः शाकटायनस्य ।। <8-3-18> ।।
वकारयकारयोर्भोभगोअघोअवर्णपूर्वयोः पदान्तयोर्लघुप्रयत्नतर आदेशो भवति अशि परतः शाकटायनस्याचार्यस्य मतेन । भगोयत्र, भगो अत्र । अघोयत्र, अघो अत्र । क आस्ते, कयास्ते । अस्मायुद्धर, अस्मा उद्धर । असावादित्यः, असा आदित्यः । द्वावत्र, द्वा अत्र । द्वावानय, द्वा आनय ।
लघुप्रयत्नतरत्वमुच्चारणे स्थान-करणशैथिल्यम् । स्थानम्=ताल्वादि । करणम्=जिह्वामूलादि । तयोरुच्चारणे शैथिल्यम्=मन्दप्रयत्नता ।।
</8-3-18>
लोपः शाकल्यस्य ।। <8-3-19> ।।
वकारयकारयोः पदान्तयोरवर्णपूर्वयोर्लोपो भवति शाकल्यस्याचार्यस्य मतेनाशि परतः । क आस्ते, कयास्ते । काक आस्ते, काकयास्ते । अस्मा उद्धर, अस्मायुद्धर । द्वावत्र, द्वा अत्र । असावादित्यः, असा आदित्यः ।
शाकल्यग्रहणं विभाषार्थम् । तेन यदापि लघुप्रयत्नतरो न भवत्यादेशः, तदापि व्योः पक्षे श्रवणं भवति ।।
</8-3-19>
ओतो गार्ग्यस्य ।। <8-3-20> ।।
ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्याचार्यस्य मतेन अशि परतः । भो अत्र । भगो अत्र । भो इदम् । भगो इदम् ।
नित्यार्थोऽयमारम्भः ।
गार्ग्यग्रहणं पूजार्थम् । योऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते । लघुप्रयत्नतरस्तु भवत्येव यकारः । भो अत्र, भोयत्र । भगो अत्र, भगोयत्र । अघो अत्र, अघोयत्र ।
केचित्तु सर्वमेव यकारमत्र नेच्छन्ति ।।
</8-3-20>
उञि च पदे ।। <8-3-21> ।।
अवर्णपूर्वयोः व्योः पदान्तयोर्लोपो भवति उञि च पदे परतः । `स उ एकविंशतिः(मै.2-7-20) । स उ एकाग्निः ।
पद इति किम् ? तन्त्र उतम्, तन्त्रयुतम् । वेञः सम्प्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुमिति ।
अथ `उञ् इत्येवंरूपो निपातः प्रतिपदोक्तोऽस्ति ? तदा लाक्षणिकत्वाद् वेञादेशस्य ग्रहणमिह नास्ति, उत्तरार्थं पदग्रहणं क्रियते ।।

</8-3-21>
हलि सर्वेषाम् ।। <8-3-22> ।।
?Bहलि परतो भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषामाचार्याणां मतेन । भो हसति । भगो हसति । अघो हसति । भो याति । भगो याति । अघो याति । वृक्षा हसन्ति ।
सर्वेषांग्रहणं शाकटायनस्यापि लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूदिति ।
</8-3-22>
मोऽनुस्वारः ।। <8-3-23> ।।
मकारस्य पदान्तस्यानुस्वार आदेशो भवति हलि परतः । कुण्डं हसति । वनं हसति । कुण्डं याति । वनं याति ।
हलीत्येव---त्वमत्र, किमत्र । पदान्तस्येत्येव--गम्यते, रम्यते ।।
</8-3-23>
नश्चापदान्तस्य झलि ।। <8-3-24> ।।
नकारस्य मकारस्य चापदान्तस्यानुस्वारादेशो भवति झलि परतः । पयांसि । यशांसि । सर्पींषि । धनूंषि । मकारस्य---आक्रंस्यते । आचिक्रंस्यते । अधिजिगांसते ।
अपदान्तस्येति किम् ? राजन्भुङ्क्ष्व । झलीति किम् ? रम्यते । गम्यते ।।
</8-3-24>
मो राजि समः क्वौ ।। <8-3-25> ।।
समो मकारस्य मकार आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः । सम्राट् । साम्राज्यम् ।
मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् ।
राजीति किम् ? संयत् । सम इति किम् ? किंराट् । क्वाविति किम् ? संराजिता । संराजितुम् । संराजितव्यम् ।।
</8-3-25>
हे मपरे वा ।। <8-3-26> ।।
हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति । किं ह्मलयति, किम् ह्मलयति । कथं ह्मलयति, कथम् ह्मलयति ।

- यवलपरे यवला वा * (म.भा.3-428)। यवलपरे हकारे मकारस्य यवला यथासंख्यं वा भवन्तीति वक्तव्यम् । कियँ ह्यः, किं ह्यः । किवँ ह्वलयति, किं ह्वलयति । किलँ ह्लायति । किं ह्लादयति ।।

</8-3-26>
नपरे नः ।। <8-3-27> ।।
नकारपरे हे परतः मकारस्य वा नकारादेशो भवति । किन् ह्नुते, किं ह्नुते । कथन् ह्नुते, कथं ह्नुते ।।
</8-3-27>
ङ्णोः कुक्टुक् शरि ।। <8-3-28> ।।
ङकारणकारयोः पदान्तयोः कुक्, टुक्---इत्येतावागमौ वा भवतः शरि परतः । प्राङ्क् शेते, प्राङ् शेते । प्राङ्क् षष्ठः, प्राङ् षष्ठः । प्राङ्क् साये, प्राङ् साये । णकारस्य---वण्ट् शेते, वण् शेते ।
पूर्वान्तकरणम्---प्राङ्क् छेते इत्यत्र छत्वार्थम् । शश्छोऽटि(8-4-63/120) इति हि पदान्ताज्झय इति तद्विज्ञायते । इह मा भूत्---`पुरा क्रूरस्य विसृपो विरप्शिन्(वा.सं.1-28) ।
प्राङ्क् साय इत्यत्रापि सात्पदाद्योः(8-3-111/2123) इति षत्वप्रतिषेधार्थं च ।
वण्ट् साय इत्यत्र च न पदान्ताट्टोरनाम्(8-4-42/114) इति ष्टुत्वप्रतिषेधार्थम् ।।
</8-3-28>
डः सि धुट् ।। <8-3-29> ।।
डकारान्तात् पदादुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति । श्वलिट्त्साये, मधुलिट्त्साये, श्वलिट् साये, मधुलिट् साये ।
परादिकरणम् न पदान्ताट्टोरनाम्(8-4-42/114) इति ष्टुत्वप्रतिषेधार्थम् ।।
</8-3-29>
नश्च ।। <8-3-30> ।।
नकान्तात्पदादुत्तरस्य सकारस्य वा धुडागमो भवति । भवान्त्साये, महान्त्साये; भवान्साये, महान्साये ।
धुटश्चर्त्वस्य चासिद्धत्वात् नश्छव्यप्रशान्(8-3-7/140) इति रुत्वं न भवति ।
</8-3-30>
शि तुक् ।। <8-3-31> ।।
नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति । भवाञ्च्छेते ।
पूर्वान्तकरणं छत्वार्थम् । यद्येवम्, कुर्वञ्छेते इत्यत्र नकारस्यापदान्तत्वाण्णत्वं प्राप्नोति ? तत्र समाधिमाहुः---स्तोः श्चुना श्चुः(8-4-40/111) इत्यत्र योगविभागः क्रियते---णत्वप्रतिषेधार्थम् `स्तोः श्चुना णकारो न भवतीति, ततः `श्चुः इति ।।

</8-3-31>
ङमो ह्रस्वादचि ङमुण्नित्यम् ।। <8-3-32> ।।
ह्रस्वात्परो यो ङम् तदन्तात्पदादुत्तरस्याचो ङमुडागमो भवति नित्यम् । ङणनेभ्यो यथासंख्यं ङणना भवन्ति । ङकारान्तान् ङुट्---प्रत्यङ्ङास्ते । णकारान्ताण्णुट्---वण्णास्ते । वण्णवोचत् । नकारान्तान्नुट्---कुर्वन्नास्ते, कुर्वन्नवोचत् । कृषन्नास्ते, कृषन्नवोचत् ।
ङम इति किम् ? त्वमास्से । ह्रस्वादिति किम् ? प्राङास्ते । भवानास्ते । अचीति किम् ? प्रत्यङ्करोति ।
इह परमदण्डिनौ, परमदण्डिनेति `उत्तरपदत्वे चापदादिविधौ(भो.सू.44) इति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं नास्तीति ङमुण्न भवति । अथ वा---उञि च पदे(8-3-21/170) इत्यतः सप्तम्यन्तम् `पदे इत्यनुवर्त्तते, तेन अजादौ पदे ङमुड् भवति ।।
</8-3-32>
मय उञो वो वा ।। <8-3-33> ।।
मय उत्तरस्य उञो वा वकारादेशो भवति अचि परतः । शमु अस्तु वेदिः, `शम्वस्तु वेदिः(वा.सं.23-44) । तदु अस्य परेतः, तद्वस्य परेतः । किमु आवपनम्, किम्वावपनम् ।
प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारो विधीयते । तस्यासिद्धत्वाद्धलीति मोऽनुस्वारः(8-3-23/122) न भवति ।।
</8-3-33>
विसर्जनीयस्य सः ।। <8-3-34> ।।
`खरि इत्यनुवर्त्तते । विसर्जनीयस्य सकार आदेशो भवति खरि परतः । वृक्षश्छादयति । प्लक्षश्छादयति ।
वृक्षष्ठकारः । प्लक्षष्ठकारः । वृक्षस्थकारः । प्लक्षस्थकारः । वृक्षश्चिनोति । प्लक्षश्चिनोति । वृक्षष्टीकते । प्लक्षष्टीकते । वृक्षस्तरति । प्लक्षस्तरति ।।
</8-3-34>
शर्परे विसर्जनीयः ।। <8-3-35> ।।
शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति । शशः क्षुरम् । पुरुषः क्षुरम् । अद्भिः प्सातम् । वासः क्षौमम् । पुरुषः त्सरुः । `घनाघनः क्षोभणश्चर्षणीनाम्(ऋ.10-103-1) ।
`न इति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेशविधानं विकारनिवृत्त्यर्थम्; तेन जिह्वामूलीयोपध्मानीयौ न भवतः ।।
</8-3-35>
वा शरि ।। <8-3-36> ।।
विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे । वृक्षः शेते, वृक्षश्शेते । प्लक्षः शेते, प्लक्षश्शेते । वृक्षः षण्डे, वृक्षष्षण्डे । वृक्षः साये, वृक्षस्साये ।।

- खर्परे शरि वा लोपो वक्तव्यः * (म.भा.3-431)। वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः ।।

</8-3-36>
कुप्वोः :क:पौ च ।। <8-3-37> ।।
कवर्गपवर्गयोः परतो विसर्जनीयस्य यथासंख्यं :क:प---इत्येतावादेशौ भवतः, चकाराद्विसर्जनीयश्च । वृक्षःकरोति, वृक्षः करोति । वृक्षःखनति, वृक्षः खनति । वृक्षःपचति, वृक्षः पचति, वृक्षःफलति, वृक्षः फलति ।
कपावुच्चारणार्थौ । जिह्वामूलीयोपध्मानीयावेतावादेशौ ।
विसर्जनीयस्य सः(8-3-34/138) इत्येतस्मिन्नाप्राप्ते इदमारभ्यते इत्येतस्य बाधकम् । शर्परे विसर्जनीयः(8-3-35/150) इत्येतत्तु न बाध्यते---वासः क्षौमम्, अद्भिः प्सातम्; `पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य(जै.प.67) इति शर्परे विसर्जनीयः(8-3-35/150) इत्येतदेव भवति ।
केचित्तु एतदर्थं योगविभागं कुर्वन्ति---`कुप्वोः शर्परयोः विसर्जनीयस्य विसर्जनीय आदेशो भवति । किमर्थमिदम् ? `:क:पौ च इति वक्ष्यति, तद्बाधनार्थमिति ।।
</8-3-37>
सोऽपदादौ ।। <8-3-38> ।।
सकार आदेशो भवति विसर्जनीयस्य कुप्वोरपदाद्योः परतः, पाशकल्पककाम्येषु । याप्ये पाशप्(5-3-57/1993)---पयस्पाशम् । ईषदसमाप्तौ कल्पप्(5-3-67/2022)---पयस्कल्पम्, यशस्कल्पम् । प्रागिवात्कः(5-3-70/2025)---पयस्कम्, यशस्कम् । काम्यच्च(3-1-9/2663)---पयस्काम्यति । यशस्काम्यति ।
अपदादाविति किम् ? पयःकामयते । पयःपिबति ।

- सोऽपदादावित्यनव्ययस्येति वक्तव्यम् * (म.भा.3-432)। इह मा भूत्---प्रातः कल्पम् । पुनः कल्पमिति ।
- रोः काम्ये नियमार्थम् * (म.बा.3-432)। रोरेव काम्ये, नान्यस्येति नियमार्थं वक्तव्यम् । पयस्काम्यति । यशस्काम्यति । इह मा भूत्---गीः काम्यति । धूः काम्यति ।

- उपध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम् * (म.भा.3-432)। किं प्रयोजनम् ? `उब्जिरुपध्मानीयोपधः पठ्यते इति दर्शने अभ्युद्गः, समुद्ग इति यथा स्यात् ।।

</8-3-38>
इणः षः ।। <8-3-39> ।।
`अपदादौ इति वर्त्तते । इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः, पाशकल्पककाम्येषु । पाश---सर्पिष्पाशम् । यजुष्पाशम् । कल्प---सर्पिष्कल्पम्, यजुष्कल्पम् । क---सर्पिष्कम्, यजुष्कम् । काम्य---सर्पिष्काम्यति, यजुष्काम्यति ।
`अपदादौ इत्येव---अग्निः करोति, वायुः करोति । अग्निः पचति, वायुः पचति । `कुप्वोः इत्येव---सर्पिस्ते,
यजुस्ते ।
इत उत्तरम् `सः इति, `इणः षः इति च वर्तते;तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवति, अन्यस्य सकारो भवति ।।
</8-3-39>
नमस्पुरसोर्गत्योः ।। <8-3-40> ।।
नमस्, पुरस्---इत्येतयोर्गतिसंज्ञकयोर्विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः । नमस्कर्ता । नमस्कर्तुम् । नमस्कर्तव्यम् ।
गत्योरिति किम् ? पूः, पुरौ, पुरः करोति ।।
</8-3-40>
इदुदुपधस्य चाप्रत्ययस्य ।। <8-3-41> ।।
इकारोपधस्य, उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः । निर्दुर्बहिराविश्चतुर्प्रादुस् । निस्---निष्कृतम्, निष्पीतम् । दुस्---दुष्कृतम्, दुष्पीतम् । बहिस्---बहिष्कृतम्, बहिष्पीतम् । आविस्---आविष्कृतम्, आविष्पीतम् । चतुष्---चतुष्कृतम्, चतुष्कपालम् । चतुष्कण्टकम्, चतुष्कलम् । प्रादुस्---प्रादुष्कृतम्, प्रादुष्पीतम् ।
अप्रत्ययस्येति किम् ? अग्निः करोति, वायुः करोति ।
मातुः करोत, पितुः करोति । अत्र रात्सस्य(8-2-24/280) इति सकारलोपे कृते रेफस्य यो विसर्जनीयः, तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति ? ९कस्कादिषु(8-3-48/144) तु भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य ।

- पुम्मुहुसोः प्रतिषेधो वक्तव्यः * (म.भा.3-434)। पुंस्कामा । मुहुःकामा । नैष्कुल्यम्, दौष्पुरुष्यम् । नि3ष्कुलम्, दु3ष्कुलम् । दु3ष्पुरुषः । बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्त्तते ।।

</8-3-41>
तिरसोऽन्यतरस्यात् ।। <8-3-42> ।।
तिरसो विसर्जनीयस्यान्यतरस्यां सकारादेशो भवति कुप्वोः परतः । तिरस्कर्ता । तिरस्कर्तुम्। तिरस्कर्तव्यम् । तिरः कर्ता । तिरः कर्तुम् । तिरः कर्तव्यम् ।
`गतेः इत्येव---तिरः कृत्वा काण्डं गतः ।।
</8-3-42>
द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।। <8-3-43> ।।
`षः इति सम्बद्ध्यते । द्विस्, त्रिस्, चतुर्---इत्येतेषां कृत्वोऽर्थे वर्त्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वोः परतः । द्विष्करोति, द्विः करोति । त्रिष्करोति, त्रिः करोति । चतुष्करोति, चतुः करोति । द्विष्पचति, द्विः पचति । त्रिष्पचति, त्रिः---पचति । चतुष्पचति, चतुः पचति ।
कृत्वोऽर्थ इति किम् ? चतुष्कपालम्, चतुष्कण्टकम् । पूर्वेण नित्यं षत्वं भवति ।
इदुदुपधस्य---(8-3-41/155)इत्यस्यानुवृत्तौ सत्यां कृत्वोऽर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे `द्विस्त्रिश्चतुरिति शक्यमकर्त्तुम् ।
कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा ।
षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण ।।
सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे ।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि ।।
एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति ।।
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तथा रेफस्य विसर्जनीयो हि ।।
तस्मिंस्तु क्रियमाणे युक्तं चतुरो विशेषणं भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ।।
एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुः शब्दस्य कृत्वोऽर्थेऽपि वर्तमानस्य पूर्वेणैव नित्यं षत्वं स्यात् । `पूर्वत्रासिद्धे नास्ति विप्रतिषेधः; अभावादुत्तरस्य(जै.प.67) ।।
इसुसोः सामर्थ्ये ।। <8-3-44> ।।

`षः इति सम्बद्ध्यते । इस्, उस्---इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः । सर्पिष्करोति, सर्पिः करोति । यजुष्करोति, यजुः करोति ।
सामर्थ्य इति किम् ? तिष्ठतु सर्पिः पिब त्वमुदकम् ।
सामर्थ्यमिह व्यपेक्षा; न पुनरेकार्थीभावः, उभयं वा ।।
</8-3-43>
नित्यं समासेऽनुत्तरपदस्थस्य ।। <8-3-45> ।।
`इसुसोः इति वर्तते । समासविषये इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यं षत्वं भवति कुप्वोः परतः । सर्पिष्कुण्डिका । धनुष्कपालम् । सर्पिष्पानम् । धनुष्फलम् ।
अनुत्तरपदस्थस्येति किम् ? परमसर्पिःकुण्डिका । परमधनुःकपालम् । पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति ।
एतदेव `अनुत्तपदस्थस्य इति वचनं ज्ञापकम्---इसुसोः `प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः(पु.प.24) इत्ययं नियमो न भवति । तेन वाक्येऽपि---परमसर्पिष्करोति, परमसर्पिः करोति इसुसोः सामर्थ्ये(8-3-44/158) इत्येतद् भवति । व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति ।।
</8-3-45>
अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।। <8-3-46> ।।
अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ, कमि, कंस, कुम्भ, पात्र, कुशा, कर्णी---इत्येतेषु परतः । कृ---अयस्कारः । पयस्कारः । कमि---अयस्कामः । पयस्कामः । कंस---अयस्कंसः । पयस्कंसः । कुम्भ---अयस्कुम्भः । पयस्कुम्भः । अयस्कुम्भी, पयस्कुम्भीत्यत्रापि भवति; `प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति(व्या.प.29) इति ।
पात्र---अयस्पात्रम् । पयस्पात्रम् । अयस्पात्री । पयस्पात्री । कुशा---अयस्कुशा । पयस्कुशा । कर्णी---अयस्कर्णी । पयस्कर्णी ।
शुनस्कर्ण इत्ययं तु कस्कादिषु द्रष्टव्यः ।
अत इति किम् ? गीः कारः । दूः कारः । तपरकरणं किम् ? भाः करणम् । भास्कर इत्ययं तु कस्कादिषु द्रष्टव्यः ।
अनव्ययस्येति किम् ? श्वः कारः । पुनः कारः ।
`समासे इत्येव---यशः करोति । यशः कामयते ।
`अनुत्तरपदस्थस्य इत्येव---परमपयः कारः । परमपयः कामः ।।
</8-3-46>
अधः शिरसी पदे ।। <8-3-47> ।।
अधस्, शिरस्---इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरपदस्थस्य सकार आदेशो भवति पदशब्दे परतः । अधस्पदम् । शिरस्पदम् । अधस्पदी । शिरस्पदी ।
`समासे इत्येव---अधः पदम् ।
`अनुत्तरपदस्थस्य इत्येव---परमशिरः पदम् ।
अधस्पदमिति मयूरव्यंसकादित्वात् समासः ।।
</8-3-47>
कस्कादिषु च ।। <8-3-48> ।।
`कस्क---इत्येवमादिषु च विसर्जनीयस्य सकारः, षकारो वा यथायोगमादेशो भवति कुप्वोः परतः । कस्कः । कौतस्कुतः । कुत आगतः---इत्यण् । भ्रातुष्पुत्रः शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । क्रीणातेरयं सम्पदादित्वात् क्विप्प्रत्ययः, तत्र भवः क्रतुः---साद्यस्क्रः । कांस्कान्---कानाम्रेडिते(8-3-12/143) इति रुत्वमत्र ।
सर्पिष्कुण्डिका, धनुष्कपालम्, बर्हिष्पूलम्, यजुष्पात्रमित्येषां पाठः---उत्तरपदस्थस्यापि षत्वं यथा स्यादिति । परमसर्पिः फलमित्येवमादिप्रत्युदाहरणादिति पारायणिका आहुः ।
भाष्ये, वृत्तौ च नित्यं समासेऽनुत्तरपदस्थस्य(8-3-45/159) इत्यत्र परमसर्पिः--कुण्डिकेत्येतदेव प्रत्युदाहरणम् । अयस्काण्डः । मेदस्पिण्डः । अविहित लक्षण उपचारः कस्कादिषु द्रष्टव्यः ।।
</8-3-48>
छन्दसि वाऽप्राम्रेडितयोः ।। <8-3-49> ।।
छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः, प्रशब्दमाम्रेडितं वर्जयित्वा । अयः पात्रम्, अयस्पात्रम् । विश्वतः पात्रम्, विश्वतस्पात्रम् । उरुणः कारः, उरुणस्कारः ।
अप्राम्रेडितयोरिति किम् ? `अग्निः प्रविद्वान्(अ.वे.5-26-1) । `परुषः परुषः परि(मै.2-7-15-214) ।
`सूर्यरश्मिर्हरिकेशः पुरस्तात्(ऋ.10-139-1), `स नः पावकः(ऋ.1-12-10)---इत्येवमादिषु `सर्वे विधयश्छन्दसि विकल्प्यन्ते(पु.प.35) इति सत्वं न भवति ।।
</8-3-49>
कः करत्करतिकृधिकृतेष्वनदितेः ।। <8-3-50> ।।
कः, करत्, करति, कृधि, कृत---इत्येतेषु परतः अनदितेर्विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये । कः---विश्वतस्कः । करत्---

विश्वतस्करत् । करति---पयस्करति । कृधि---`उरुणस्कृधि(ऋ.8-75-11) । कृत---सदस्कृतम् ।
अनदितेरिति किम् ? `यथा नो अदितिः करत्(ऋ.1-43-2) ।।
</8-3-50>
पञ्चम्याः परावध्यर्थे ।। <8-3-51> ।।
`छन्दसि इत्येव । पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतः अध्यर्थे । `दिवस्परि प्रथमं जज्ञे(ऋ.10-45-1) । `अग्निर्हिमवतस्परि(अ.वे.4-9-9) । `दिवस्परि(ऋ.1-121-10) । महस्परि ।
पञ्चम्या इति किम् ? `अहिरिव भोगैः पर्येति बाहुम्(ऋ.6-75-14) । पराविति किम् ? एभ्यो वा एतल्लोकेभ्यः प्रजापतिः समैरयत् ।
अध्यर्थ इति किम् ? `दिवः पृथिव्याः पर्योज उद्भृतम्(ऋ.6-47-27) ।
अत्र परिः सर्वतोभावे, अध्यर्थः उपरिभावः ।।
</8-3-51>
पातौ च बहुलम् ।। <8-3-52> ।।
पातौ च धातौ परतः पञ्चमीविसर्जनीयस्य बहुलं सकार आदेशो भवति छन्दसि विषये । `दिवस्पातु(ऋ.1-43-2) । राज्ञस्पातु ।
न च भवति---परिषदः पातु ।।
</8-3-52>
षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।। <8-3-53> ।।
षष्ठीविसर्जनीयस्य सकारादेशो भवति पति, पुत्र, पृष्ठ, पार, पद, पयस्, पोष---इत्येतेषु परतः छन्दसि विषये । `वाचस्पतिं विश्वकर्माणमूतये(ऋ.10-81-7) । पुत्र---`दिवस्पुत्राय सूर्याय(ऋ.10-37-1) । पृष्ठ---`दिवस्पृष्ठे धावमानं सुपर्णम्(अ.13-2-37) । पार---`अगन्म तमसस्पारम्(वा.सं.12-73) । पद---`इडस्पदे
समिध्यसे(ऋ.10-191-1) । पयस्--`सूर्यं चक्षुर्दिवस्पयः । पोष---`रायस्पोषं यजमानेषु धत्तम्(ऋ.10-122-8) ।
षष्ठ्या इति किम् ? मनुः पुत्रेभ्यो दायं व्यभजत् ।।
</8-3-53>
इडाया वा ।। <8-3-54> ।।
इडायाः षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतश्छन्दसि विषये । इडायास्पतिः, इडायाः पतिः । `इडायास्पुत्रः(ऋ.3-29-3), इडायाः पुत्रः । इडायास्पृष्ठम्, इडायाः पृष्ठम् । इडायास्पारम्, इडायाः पारम् । `इडायास्पदम्(वा.सं.4-22), `इडायाः पदम्(तै.सं.1-2-5-1) । इडायास्पयः, इडायाः पयः । इडायास्पोषम्, इडायाः पोषम् ।।
</8-3-54>
अपदान्तस्य मूर्धन्यः ।। <8-3-55> ।।
पदाधिकारो निवृत्तः । `अपदान्तस्य इति, `मूर्धन्यः इति चैतदधिकृतं वेदितव्यमापादपरिसमाप्तेः । वक्ष्यति---आदेशप्रत्यययोः(8-3-59/212) । सिषेव । सुष्वाप । अग्निषु । वायुषु । अपदान्तस्येति किम् ? अग्निस्तत्र, वायुस्तत्र ।
`ष इत्येवं सिद्धे मूर्धन्यग्रहणं ढकारार्थम्---अकृढ्वम्, चकृढ्वे ।।
</8-3-55>
सहेः साडः सः ।। <8-3-56> ।।
सहेर्धातोः साड्रूपस्य यः सकारस्तस्य मूर्धन्य आदेशो भवति । जलाषाट् । तुराषाट् । पृतनाषाट् ।
सहेरिति किम् ? सह डेन वर्तते सडः, तस्यापत्यं साडिः ।
साड्ग्रहणं किम् ? यत्रास्यैतद्रूपं तत्र यथा स्यात्, इह मा भूत्---जलासाहम् । तुरासाहम् ।
स इति किम् ? आकारस्य मा भूत् ।।
</8-3-56>
इण्कोः ।। <8-3-57> ।।
`इण्कोः इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः, इणः कवर्गाच्चेत्येवं तद्वेदितव्यम् । वक्ष्यति---आदेशप्रत्यययोः(8-3-59/212) । सिषेव । सुष्वाप । अग्निषु । वायुषु । कर्तृषु । गीर्षु । धूर्षु । वाक्षु । त्वक्षु । इण्कोरिति किम् ? दास्यति । असौ ।।
</8-3-57>
नुम्विसर्जनीयशर्व्यवायेऽपि ।। <8-3-58> ।।
नुम्व्यवायेऽपि, विसर्जनीयव्यवायेऽपि, शर्व्यवायेऽपि इण्कोरुतरस्य सकारस्य मूर्धन्यादेशो भवति । व्यवायशब्दः प्रत्येकमभिसम्बद्ध्यते । नुम्व्यवाये तावत्---सर्पींषि, यजूंषि, हवींषि । विसर्जनीयव्यवाये---सर्पिःषु, यजुःषु, हविःषु । शर्व्यवाये---सर्पिष्षु, यजुष्षु, इविष्षु ।
नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, न समस्तैः । तेनेह न भवति---निंस्से, निंस्स्व इति । `णिसि चुम्बने(धा.पा.1026)---इत्येतस्यैतद्रूपम् । अत्र हि नुमा, सकारेण, शरा च व्यवधानम् ।।
</8-3-58>
आदेशप्रत्यययोः ।। <8-3-59> ।।
`मूर्धन्यः इति वर्तते, `स इति च । `आदेशप्रत्यययोः इति षष्ठी भेदेन सम्बद्ध्यते । आदेशो यः सकारः, प्रत्ययस्य च यः सकारः इण्कोरुत्तरः,

तस्य मूर्धन्यो भवति आदेशः । आदेशस्य तावत्---सिषेव । सुष्वाप । प्रत्ययस्य---अग्निषु । वायुषु । कर्तृषु । हर्तृषु ।
इन्द्रो मा वक्षत्, `स देवान्यक्षत्(अ.वे.3-4-6)इति व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति । यजतेः, वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचने इकारलोपः, लेटोऽडाटौ(3-4-94/3427) इत्यट्, सिब्बहुलं लेटि(3-1-34/3425) इति सिप्, ततः सिद्धम्---यक्षत्, वक्षत्, इति ।।
</8-3-59>
शासिवसिघसीनां च ।। <8-3-60> ।।
शासि, वसि, घसि---इत्येतेषां च इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति । अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् । शिष्टः, शिष्टवान् । वसि---उषितः, उषितवान् । उषित्वा । घसि---जक्षतुः, जक्षुः । घसिभसोर्हलि च(6-4-100/3550) इत्युपधालोपः । `अक्षन्नमीमदन्त पितरः(वा.सं.19-36) ।
अनादेशार्थं वचनम् । घसिर्यद्यप्यादेशः, सकारस्त्वादेशो न भवति ।
`इण्कोः इत्येव---शास्ति । वसति । जघास ।।
</8-3-60>
स्तौतिण्योरेव षण्यभ्यासात् ।। <8-3-61> ।।
स्तौतेर्ण्यन्तानां च षभूते सनि परतः अभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति । तुष्टूषति । ण्यन्तानाम्---सिषेवयिषति । सिषञ्जयिषति । सुष्वापयिषति ।
`सिद्धे सत्यारम्भो नियमार्थः(का.प.62)---स्तौतिण्योरेव षण्यभ्यासाद्यथा स्यात्, अन्यस्य मा भूत्---सिसिक्षति । सुसूषति ।
एवकारकरणमिष्टतोऽवधारणार्थम् । स्तौतिण्योः षण्येव---इति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात् । इह च स्यादेव---सिसिक्षतीति ।
षणीति किम् ? अन्यत्र नियमो मा भूत्---सिषेच ।
को विनतेऽनुरोधः ? अविनते नियमो मा भूत्---सुषुप्सति (म.भा.3-441)। तिष्ठासति ।
कः सानुबन्धेऽनुरोधः ? षशब्दमात्रे नियमो मा भूत्---सुषुपिष इन्द्रम् ।
अभ्यासादिति किम् ? अभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोर्या प्राप्तिस्तस्या नियमो मा भूत्---प्रतीषिषति । अधीषिषति ।।
</8-3-61>
स स्विदिस्वदिसहीनां च ।। <8-3-62> ।।
स्विदि, स्वदि, सहि---इत्येतेषां ण्यन्तानां सनि षभूते परतोऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति । स्विदि---सिस्वेदयिषति । स्वदि---सिस्वादयिषति । सहि---सिसाहयिषति ।
सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम् ।।
</8-3-62>
प्राक्सितादड्व्यवायेऽपि ।। <8-3-63> ।।
`सेवसित इति वक्ष्यति । प्राक्सितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्व्यवायेऽपि मूर्धन्यो भवतीत्येवं तद्वेदितव्यम्, अपिशब्दादनड्व्यवायेऽपि । वक्ष्यति---उपसर्गात्सुनोतिसुवति(8-3-65/2270) इति षत्वम् । अभिषुणोति । परिषुणोति । विषुणोति । निषुणोति । अभ्यषुणोत् । पर्यषुणोत् । व्यषुणोत् । न्यषुणोत् ।।
</8-3-63>
स्थादिष्वभ्यासेन चाभ्यासस्य ।। <8-3-64> ।।
`प्राक् सितात् इति वर्तते । उपसर्गात्सुनोति---(8-3-65/2270) इत्यत्र `स्थासेनयसेध इति स्थादयः, तेषु स्थादिषु प्राक् सितसंशब्दनाद् अभ्यासेन व्यवाये मूर्धन्यो भवति, अभ्याससकारस्य च भवतीत्येवं वेदितव्यम् । अभ्यासेन व्यवाये---परितष्ठौ ।
अषोपदेशार्थं च---अभिषिषेणयिषति, परिषिषेणयिषति ।
अवर्णान्ताभ्यासार्थं च---अभितष्ठौ, परितष्ठौ।
षणि प्रतिषेधार्थं च---अभिषिषिक्षति, परिषिषिक्षति ।
`अभ्यासस्य इति वचनं नियमार्थम्---स्थादिष्वेवाभ्याससकारस्य मूर्धन्यो भवति, नान्यत्र । अभिसुसूषति, अभिसिषासति ।।
</8-3-64>
उपसर्गात् सुनोतिसुवतिस्यतिस्यौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ।। <8-3-65> ।।
`मूर्धन्यः इति वर्तते, `स इति च । उपसर्गस्थान्निमित्तादुत्तरस्य सुनोति, सुवति, स्यति, स्तौति, स्तोभति, स्था, सेनय, सेध, सिच, सञ्ज, स्वञ्ज---इत्येतेषां सकारस्य मूर्धन्यादेशो भवति ।
सुनोति---अभिषुणोति, परिषुणोति । अभ्यषुणोत्, पर्यषुणोत् ।
सुवति---अभिषुवति, परिषुवति । अभ्यषुवत्, पर्यषुवत् ।
स्यति---अभिष्यति, परिष्यति । अभ्यष्यत्, पर्यष्यत् ।
स्तौति---अभिष्टौति, परिष्टौति । अभ्यष्टौत्, पर्यष्टौत् ।
स्तोभति---अभिष्टोभते, परिष्टोभते । अभ्यष्टोभत, पर्यष्टोभत ।
स्था---अभिष्ठास्यति, परिष्ठास्यति । अभ्यष्ठात्, पर्यष्ठात् । अभितष्ठौ, परितष्ठौ ।

सेनय---अभिषेणयति, परिषेणयति । अभ्यषेणयत्, पर्यषेणयत् । अभिषिषेणयिषति, परिषिषेणयिषति ।
सेध---अभिषेधति परिषेधति । अभ्यषेधत्, पर्यषेधत् ।
सिच---अभिषिञ्चति, परिषिञ्चति । अभ्यषिञ्चत्, पर्यषिञ्चत् । अभिषिषिक्षति, परिषिषिक्षति ।
सञ्ज---अभिषजति, परिषजति । अभ्यषजत्, पर्यषजत् । अभिषिषङ्क्षति, परिषिषङ्क्षति ।
स्वञ्ज---अभिष्वजते, परिष्वजते । अभ्यष्वजत, पर्यष्वजत । अभिषिष्वङ्क्षते, परिषिष्वङ्क्षते ।
`सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्यर्थः ।
उपसर्गादिति किम् ? दधि सिञ्चति । मधु सिञ्चति ।
निर्गताः सेचका अस्माद् देशान्निःसेचको देश इति नायं सिचेरुपसर्गः । अभिसावकीयतीत्यत्रापि न सुनोतिं प्रति क्रियायोगः, किं तर्हि ? सावकीयं प्रति ।
अभिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगः, न सावयतिमिति षत्वं भवति ।।
</8-3-65>
सदिरप्रतेः ।। <8-3-66> ।।
सदेः सकारस्य उपसर्गस्थान्निमित्तादप्रतेरुत्तरस्य मूर्धन्य आदेशो भवति । निषीदति, विषीदति । न्यषीदत्, व्यषीदत् । निषसाद, विषसाद ।
अप्रतेरिति किम् ? प्रतिसीदति ।।
</8-3-66>
स्तन्भेः ।। <8-3-67> ।।
`उपसर्गात् इति वर्तते । स्तन्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्धन्य आदेशो भवति । अभिष्टभ्नाति, परिष्टभ्नाति । अभ्यष्टभ्नात्, पर्यष्टभ्नात् । अभितष्टम्भ, परितष्टम्भ ।
`अप्रतेः इत्येतदिह नानुवर्तते, तेनैतदपि भवति---प्रतिष्टभ्नाति, प्रत्यष्टभ्नात्, प्रतितष्टम्भ ।।
</8-3-67>
अवाच्चालम्बनाविदूर्ययोः ।। <8-3-68> ।।
अवशब्दादुपसर्गादुत्तरस्य स्तन्भेः सकारस्य मूर्धन्यादेशो भवति । आलम्बनेऽर्थे, आविदूर्ये च । आलम्बनम्=आश्रयणम् । अविदूरस्य भाव आविदूर्यम् । आलम्बने तावत्--अवष्टभ्यास्ते । अवष्टभ्य तिष्ठति । आविदूर्ये---अवष्टब्धा सेना । अवष्टब्धा शरत् ।
आलम्बनाविदूर्ययोरिति किम् ? अवस्तब्धो वृषलः शीतेन । अनिगर्थ आरम्भः ।।
</8-3-68>
वेश्च स्वनो भोजने ।। <8-3-69> ।।
वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति । विष्वणति, व्यष्वणत्, विषष्वाण । अवष्वणति, अवाष्वणत्, अवषष्वाण । अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति ।
भोजन इति किम् ? विस्वनति मृदङ्गः ।।
</8-3-69>
परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वन्जाम् ।। <8-3-70> ।।
परि, नि, वि---इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव, सित, सय, सिवु, सह, सुट्, स्तु, स्वन्ज---इत्येतेषां सकारस्य पूर्धन्य आदेशो भवति । परिषेवते, निषेवते, विषेवते । पर्यषेवत, न्यषेवत, व्यषेवत । परिषिषेविषते, विषिषेविषते, निषिषेविषिते ।
सित---परिषितः, विषितः, निषितः । सय---परिषयः, निषयः, विषयः ।
सिव्---परिषीव्यति, निषीव्यति, विषीव्यति । पर्यषीव्यत्, न्यषीव्यत्, व्यषीव्यत् । पर्यसीव्यत्, न्यसीव्यत्, व्यसीव्यत् ।
सह---परिषहते, निषहते, विषहते । पर्यषहत, न्यषहत, व्यषहत ।
सुट्---परिष्करोति । पर्यष्करोत् ।
स्तु---परिष्टौति, निष्टौति, विष्टौति । पर्यष्टौत्, न्यष्टौत्, व्यष्टौत् । पर्यस्तौत्, न्यस्तौत्, व्यस्तौत् ।
ष्वञ्ज---`दंशसञ्जस्वञ्जाम्(6-4-25/2396) इति नलोपः । परिष्वजते, विष्वजते, निष्वजते । पर्यष्वजत, पर्यस्वजत ।
पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात् ।।
</8-3-70>
सिवादीनां वाड्व्यवायेऽपि ।। <8-3-71> ।।
अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जाम्(8-3-70/2275) इति सिवादयः । सिवादीनामड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सकारस्य वा मूर्धन्यो भवति । तथा चैवोदाहृतम् ।।
</8-3-71>
अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।। <8-3-72> ।।
अनु, वि, परि, अभि, नि--इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति । अनुष्यन्दते, विष्यन्दते, परिष्यन्दते, अभिष्यन्दते तैलम्, निष्यन्दते । अनुस्यन्दते, विस्यन्दते, परिस्यन्दते, अभिस्यन्दते, निस्यन्दते ।
अप्राणिष्विति किम् ? अनुस्यन्दते मत्स्य उदके । प्राण्यप्राणिविषयस्यापि स्यन्दतेरयं विकल्पो भवति---अनुष्यन्देते मत्स्योदके, अनुस्यन्देते

।
`अप्राणिषु इति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः ।।
</8-3-72>
वेः स्कन्देरनिष्ठायाम् ।। <8-3-73> ।।
वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम् । विष्कन्ता, विस्कन्ता । विष्कन्तुम्, विस्कन्तुम् । विष्कन्तव्यम्, विस्कन्तव्यम् ।
अनिष्ठायामिति किम् ? विस्कन्नः ।।
</8-3-73>
परेश्च ।। <8-3-74> ।।
परिशब्दाच्चोत्तरस्य स्कन्देः सकारस्य वा मूर्धन्यो भवति । परिष्कन्ता, परिष्कन्तुम्, परिष्कन्तव्यम् । परिस्कन्ता, परिस्कन्तुम्, परिस्कन्तव्यम् ।
पृथग्योगकरणसामर्थ्यात् `अनिष्ठायाम् इत्येतन्नानुवर्तते---परिष्कण्णः, परिस्कन्नः ।।
</8-3-74>
परिस्कन्दः प्राच्यभरतेषु ।। <8-3-75> ।।
`परिस्कन्द इति मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु । पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते ।
परिस्कन्दः । अन्यत्र परिष्कन्दः । अचि निपातनम् । अथ वा---निष्ठातकारस्य लोपः ।
भरतग्रहणं प्राच्यविशेषणम् ।।
</8-3-75>
स्फुरतिस्फुलत्योर्निर्निविभ्यः ।। <8-3-76> ।।
स्फुरतिस्फुलत्योः सकारस्य निस्, नि, वि---इत्येतेभ्य उत्तरस्य वा मूर्धन्यादेशो भवति । स्फुरति---निष्ष्फुरति, निस्स्फुरति, निष्फुरति, निस्फुरति । विष्फुरति, विस्फुरति । स्फुलति---निष्ष्फुलति, निस्स्फुलति । निस्फुलति, निस्फुलति । विष्फुलति, विस्फुलति ।।
</8-3-76>
वेः स्कभ्नातेर्नित्यम् ।। <8-3-77> ।।
वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति । विष्कभ्नाति । विष्कम्भिता । विस्कम्भितुम् । विस्कम्भितव्यम् ।।
</8-3-77>
इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।। <8-3-78> ।।
`मूर्धन्य इति वर्तते । इणन्तादङ्गादुत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति । च्योषीढ्वम् । प्लोषीढ्वम् । लुङ्--अच्योढ्वम् । अप्लोढ्वम् । लिट्---चकृढ्वे, ववृढ्वे ।
इण्कोः(8-3-57/211) इति वर्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम् । पक्षीध्वम् । यक्षीध्वम् ।
षीध्वंलुङ्लिटामिति किम् ? स्तुध्वे । अस्तुध्वम् । अङ्गादिति किम् ? परिवेविषीध्वम् ।
अर्थवद्ग्रहणादपि सिद्धम् ? तत्तु नाश्रितम् ।।
</8-3-78>
विभाषेटः ।। <8-3-79> ।।
इणः परस्मादिट उत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति विभाषा । लविषीढ्वम्, लविषीध्वम् । पविषीढ्वम्, पविषीध्वम् । लुङ्---अलविढ्वम्, अलविध्वम् । लिट्---लुलुविध्वे, लुलुविढ्वे ।
इण इत्येव---आसिषीध्वम् ।
अथेह कथं भवितव्यम्---उपदिदीयिध्वे ? केचिदाहुः---इणन्तादङ्गादुत्तरस्य इट आनन्तर्यं युटा व्यवहितमिति न भवितव्यं ढत्वेनेति । <K.6.570> अपरेषां दर्शनम्---`अङ्गात् इति निवृत्तम्, `इणः इत्यनुवर्तते, ततश्च यकारादेव इणः परोऽनन्तर इडिति पक्षे भवितव्यं मूर्धन्येन इति ।।
</8-3-79>
समासेऽङ्गुलेः सङ्गः ।। <8-3-80> ।।
सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्धन्य आदेशो भवति समासे । अङ्गुलेः सङ्गः अङ्गुलिषङ्गः । अङ्गुलिषङ्गा यवागूः । अङ्गुलिषङ्गः गाः सादयति ।
समास इति किम् ? अङ्गुलेः सङ्गं पश्य ।।
</8-3-80>
भीरोः स्थानम् ।। <8-3-81> ।।
स्थानसकारस्य भीरोरुत्तरस्य मूर्धन्यादेशो भवति । भीरुष्ठानम् । समास इत्येव --- भीरोः स्थानं पश्य ।।
</8-3-81>
<K.6.571>

अग्नेः स्तुत्स्तोमसोमाः ।। <8-3-82> ।।
अग्नेरुत्तरस्य स्तुत्, स्तोम, सोम --- इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमः ।
`अग्नेर्दीर्घात्सोमस्येष्यते। तेनेह न भवति --- अग्निसोमौ माणवकौ । तथा च ज्योतिः = अग्निः, सोमः =
लताविशेषः --- अग्निसोमौ तिष्ठतः ।
समासे इत्येव --- अग्ने सोमः ।।
</8-3-82>
ज्योतिरायुषः स्तोमः ।। <8-3-83> ।।
ज्योतिस्, आयुस् --- इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे । ज्योतिष्टोमः । आयुष्टोमः ।
`समासे इत्येव --- ज्योतिः स्तोमं दर्शयति ।
</8-3-83>
<K.6.572>
मातृपितृभ्यां स्वसा ।। <8-3-84> ।।
मातृ, पितृ --- इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति । मातृष्वसा । पितृष्वसा ।
</8-3-84>
मातुःपितुर्भ्यामन्यतरस्याम् ।। <8-3-85> ।।
मातुर्, पितुर् --- इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्धन्यादेशो भवति समासे । मातुःष्वसा, मातुःस्वस्वा । पितुःष्वसा, पितुःस्वसा । मातुः पितुरिति रेफान्तयोरेतद्ग्रहणम् । एकदेशविकृतस्यानन्यत्वाद् विसर्जनीयान्तात् सकारान्ताच्च षत्वं भवति । <K.6.573> समास इत्येव --- वाक्ये मा भूत्; मातुः स्वसा इत्येव नित्यं भवति ।।
</8-3-85>
अभिनिसः स्तनः शब्दसंज्ञायाम् ।। <8-3-86> ।।
अभि, निस्--इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम् । अभिनिष्टानो वर्णः । अभिनिष्टानो विसर्जनीयः । अभिनिस्तानो वर्णः । अभिनिस्तानो विसर्जनीयः ।
शब्दसंज्ञायामिति किम् ? अभिनिस्तनति मृदङ्गः ।
`समासे इति अतः प्रभृति निवृत्तम् ।।
</8-3-86>
उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।। <8-3-87> ।।
उपसर्गस्थान्निमित्तात्प्रादुस्शब्दाच्चोत्तरस्य यकारपरस्याच्परस्य चास्तिसकारस्य मूर्धन्यो भवति । अभिषन्ति, निषन्ति, विषन्ति, प्रादुःषन्ति । अभिष्यात्, निष्यात्, विष्यात्, प्रादुःष्यात् ।
उपसर्गादिति किम् ? दधि स्यात् । मधु स्यात् ।
अस्तीति किम् ? अनुसृतम् । विसृतम् ।
अथासत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्ग आश्रीयते, प्रादुः शब्दस्य च कृभ्वस्तिष्वेव प्रयोग इत्यन्यत्राप्रसङ्गः ? तथाप्येतत् प्रत्युदाहर्तव्यम्---अनुसूते अनुसूः, अनुस्वोऽपत्यम् अनुसेयः । शुभ्रादित्वाड् ढक्(4-1-123/1126), ढे लोपेऽकद्र्वाः(6-4-147/1142) इत्युवर्णलोपः ।
यच्पर इति किम् ? निस्तः । विस्तः । प्रादुस्तः ।।
</8-3-87>
सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।। <8-3-88> ।।
सु, वि, निर्, दुर्--इत्येतेभ्य उत्तरस्य सुपि, सूति, सम---इत्येतेषां सकारस्य मूर्धन्यादेशो भवति । `सुपि इति स्वपिः कृतसम्प्रसारणो गृह्यते । सुषुप्तः । निःषुप्तः । दुःषुप्तः ।
`सूति इति स्वरूपग्रहणम् । सुषूतिः । विषूतिः । निःषूतिः । दुःषूतिः ।
सम---सुषमम्, विषमम्, निःषमम्, दुःषमम् ।
`सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न ।
हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ।।
स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ।।(म.भा.3-447)
`पूर्वत्रासिद्धीयमद्विर्वचने(पू.प.92) इति कृते षत्वे ततो द्विर्वचनम् ।।
</8-3-88>
निनदीभ्यां स्नातेः कौशले ।। <8-3-89> ।।
नि, नदी---इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशो भवति कौशले गम्यमाने । निष्णातः कटकरणे । निष्णातो रज्जुवर्तने । नद्यां स्नातीति नदीष्णः । सुपि स्थः(3-2-4/2916) इत्यत्र `सुपि इति योगविभागात्कप्रत्ययः ।

कौशल इति किम् ? निस्नातः । नद्यां स्नातो नदीस्नात इति ।।
</8-3-89>
सूत्रं प्रतिष्णातम् ।। <8-3-90> ।।
`प्रतिष्णातम् इति निपात्यते सूत्रं चेद्भवति । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । प्रतिस्नातमित्येवान्यत्र ।।
</8-3-90>
कपिष्ठलो गोत्रे ।। <8-3-91> ।।
`कपिष्ठलः इति निपात्यते गोत्रविषये । कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः ।
गोत्र इति किम् ? कपेः स्थलं कपिस्थलम् ।।
</8-3-91>
प्रष्ठोऽग्रगामिनि ।। <8-3-92> ।।
`प्रष्ठः इति निपात्यते अग्रगामिन्यभिधेये । प्रतिष्ठत इति प्रष्ठोऽश्वः । अग्रतो गच्छतीत्यर्थः ।
अग्रगामिनीति किम् ? प्रस्थे हिमवतः पुण्ये । प्रस्थो व्रीहीणाम् ।।
</8-3-92>
वृक्षासनयोर्विष्टरः ।। <8-3-93> ।।
`विष्टरः इति निपात्यते वृक्षे आसने च वाच्ये । विपूर्वस्य स्तृणातेः षत्वं निपात्यते । विष्टरो वृक्षः । विष्टरमासनम् ।
वृक्षासनयोरिति किम् ? औलपिवाक्यस्य विस्तरः ।।
</8-3-93>
छन्दोनाम्नि च ।। <8-3-94> ।।
<K.6.581>
`विष्टारः इति निपात्यते । विपूर्वात् `स्तृ---इत्येतस्माद्धातोः छन्दोनाम्नि च(3-3-34/3205)इत्येवं विहितो घञ् इति `विष्टरःइत्यपि प्रकृते `विष्टार इति विज्ञायते । विष्टारपङ्क्तिः छन्दः । विष्टारो बृहतीछन्दः ।
छन्दोनाम्नीति किम् ? पटस्य विस्तारः ।।
</8-3-94>
गवियुधिभ्यां स्थिरः ।। <8-3-95> ।।
गवियुधिभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो भवति । गविष्ठिरः । युधिष्ठिरः ।
गोशब्दादहलन्तादपि एतस्मादेव निपातनात्सप्तम्या अलुग्भवति ।।
</8-3-95>
विकुशमिपरिभ्यः स्थलम् ।। <8-3-96> ।।
वि, कु, शमि, परि --- इत्येतेभ्य उत्तरस्य स्थलसकारस्य मूर्धन्यादेशो भवति । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।।
</8-3-96>
अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।। <8-3-97> ।।
अम्ब, आम्ब, गो, भूमि, सव्य, अप, द्वि, त्रि, कु, शेकु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि,अग्नि---इत्येतेभ्य उत्तरस्य स्थशब्दसकारस्य मूर्धन्यादेशो भवति । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्येष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ।

- स्थास्थिन्स्थृणामिति वक्तव्यम् *(म.भा.3-448) । सव्येष्ठाः । परमेष्ठी । सव्येष्ठृसारथिः ।।

</8-3-97>
<K.6.584>
सुषामादिषु च ।। <8-3-98> ।।
सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवति । शोभनं साम यस्यासौ सुषामा ब्राह्मणः । दुष्षामा, निष्षामा । निष्षेधः, दुष्षेधः । सुशब्दस्य कर्मप्रवचनीयसंज्ञकत्वान्निर्दुर्शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे <K.6.585> सति पाठोऽयम् । सेधतेर्गतौ इति वा प्रतिषेधबाधनार्थः । सुषन्धिः । दुःषन्धिः । निषन्धिः । सुष्ठु । दुष्ठु । तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते । * गौरिषक्थः संज्ञायाम् * । ङ्यापोः संज्ञाछन्दसोर्बहुलम् इति पूर्वपदस्य ह्रस्वत्वम् । प्रतिष्णिका । प्रतिष्णाशब्दादयं कन्प्रत्ययः । <K.6.586> जलाषाहम् । नौषेचनम् । दुन्दुभिषेवणम् ।

- एति संज्ञायामगात् * । एकारपरस्य सकारस्य मूर्धन्यादेशो भवति इण्कोरुत्तरस्यागकारात्परस्य संज्ञायां विषये । हरिषेणः । वारिषेणः । जानुषेणी ।

एतीति किम् ? हरिसक्थम् । संज्ञायामिति किम् ? पृथ्वी सेना यस्य स पृथुसेनः राजा । अगादिति किम् ? विष्वक्सेनः । `इण्कोः इत्येव --- सर्वसेनः ।

- नक्षत्राद्वा *। नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायामगकाराद्, मूर्धन्यो भवति । रोहिणीषेणः, रोहिणीसेनः । भरणीषेणः, भरणीसेनः । <K.6.587> अगकारादित्येव --- शतभिषक्सेनः । अविहितलक्षणो मूर्धन्यः । सुषामादिषु द्रष्टव्यः ।।

</8-3-98>
ह्रस्वात्तादौ तद्धिते ।। <8-3-99> ।।
ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति तादौ तद्धिते परतः । तरप्, तमप्, तय, त्व, तल्, तस्, त्यप् --- एतानि प्रयोजयन्ति । तरप् -- सर्पिष्टरम्, यजुष्टरम् । तमप् --- सर्पिष्टमम्, यजुष्टमम् । तय --- चतुष्टये ब्राह्मणानां निकेताः । त्व --- सर्पिष्ट्वम्, यजुष्ट्वम् । तल् --- सर्पिष्टा, यजुष्टा । तस् --- सर्पिष्टः, यजुष्टः । त्यप् --- `आविष्ट्यः वर्द्धते। ह्रस्वादिति किम् ? गीस्तरा, धूस्तरा । तादाविति किम् ? <K.6.588> सर्पिस्साद्भवति । प्रत्ययसकारस्य सात्पदाद्योः इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात् ।
तद्धित इति किम् ? सर्पिस्तरति ।

- तिङन्तस्य प्रतिषेधो वक्तव्यः * । भिन्द्युस्तराम् । छिन्द्युस्तराम् ।।

</8-3-99>
निसस्तपतावनासेवने ।। <8-3-100> ।।
<K.6.589>
निसः सकारस्य मूर्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे । आसेवनम् = पुनः पुनः करणम् । निष्टपति सुवर्णम् । सकृदग्निं स्पर्शयतीत्यर्थः । अनासेवन इति किम् ? निस्तपति सुवर्णं सुवर्णकारः । पुनःपुनरग्निं स्पर्शयतीत्यर्थः । `निष्टप्तं रक्षो निष्टप्ता अरातयः इत्यत्र सदप्यासेवनं न विवक्ष्यते । छान्दसो वा वर्णविकारः ।
</8-3-100>
युष्मत्तत्ततक्षुःष्वन्तः पादम् ।। <8-3-101> ।।
युष्मत् तत्, ततक्षुस्---इत्येतेषु तकारादिषु परतः सकारस्य मूर्धन्यादेशो भवति से चेत् सकारोऽन्तः पादं भवति । युष्मदादेशाः---त्वम्, त्वाम्, ते, तव । अग्निष्ट्वं नामासीत्, । त्वा---अग्निष्ट्वा वर्धयामसि । ते---`अग्निष्टे
विश्वमानय(आप.गृ4-10-17) । तव---`अप्स्वग्ने सधिष्टव(ऋ.8-43-9) । तत्---`अग्निष्टद्विश्वमापृणाति(ऋ.10-2-4) । ततक्षुस्--- `द्यावापृथिवी निष्टतक्षुः(ऋ.10-31-7) ।
अन्तः पादमिति किम् ? `यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः(तै.सं.3-2-5-4) ।।
</8-3-101>
यजुष्येकेषाम् ।। <8-3-102> ।।
यजुषि विषये युष्मत्तत्ततक्षुःषु परत एकेषामाचार्याणां मतेन सकारस्य मूर्धन्यादेशो भवति । अर्चिभिष्ट्वम्, अर्चिभिस्त्वम् । अग्निष्टेऽग्रम्, `अग्निस्तेऽग्रम्(तै.3-5-6-2) । `अग्निष्टत्(तै.1-1-14-5), `अग्निस्तत्(तै.3-2-5-4) । अर्चिर्भिष्टतक्षुः । अर्चिर्भिस्ततक्षुः ।।
</8-3-102>
स्तुतस्तोमयोश्छन्दसि ।। <8-3-103> ।।
`एकेषाम् इति वर्तते । स्तुत, स्तोम---इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवति एकेषामाचार्याणां मतेन । त्रिभिष्टुतस्य, त्रिभिस्तुतस्य । `गोष्टोमं(तै.सं.7-4-11-1) षोडशिनम्, गोस्तोमं षोडशिनम्(आप.श्रौ.23-12-18) ।
`पूर्वपादत् इत्येव सिद्धे प्रपञ्चार्थमिदम् ।।
</8-3-103>
पूर्वपदात् ।। <8-3-104> ।।
`छन्दसि इति वर्तते, `एकेषाम् इति च । पूर्वपदस्थान्निमित्तादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति छन्दसि विषये एकेषामाचार्याणां मतेन । `द्विषन्धिः(मै.3-8-2), द्विसन्धिः । `त्रिषन्धिः(मै.3-8-2), त्रिसन्धिः । मधुष्ठानम्, मधुस्थानम् । `द्विषाहस्रं चिन्वीत(तै.5-6-8-2), द्विसाहस्रं चिन्वीत ।
असमासेऽपि यत्पूर्वपदं तदपीह गृह्यते । `त्रिः षमृद्धत्वाय(ऐ.ब्रा.2-16), त्रिः समृद्धत्वाय ।।
</8-3-104>
सुञः ।। <8-3-105> ।।
`सुञ इति निपात इह गृह्यते, तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य मूर्धन्यादेशो भवति छन्दसि विषये । `अभीषुणः सखीनाम्(ऋ.4-31-3) । `ऊर्ध्व ऊषुणः(ऋ.1-16-13) । इकः सुञि(6-4-134/3536) इति दीर्घः । नश्च धातुस्थोरुषुभ्यः(8-4-27/3649) इति णत्वम् ।।
</8-3-105>
सनोतेरनः ।। <8-3-106> ।।
सनोतेरनकारान्तस्य सकारस्य मूर्धन्यादेशो भवति । `गोषाः(ऋ.9-2-10) । `नृषाः(ऋ.9-2-10) ।
अन इति किम् ? `गोसनिं वाचमुदीरयन्(अ.वे.3-20-10) ।
`पूर्वपदात् इत्येव सिद्धे नियमार्थमिदम् । अत्र केचित् सवनादिपाठाद् गोसनिर्नियमस्य फलं न भवतीति सिसानयिषतीति प्रत्युदाहरन्ति । सिसनिषतेरप्रत्ययः । सिसनीरित्यपरे ।

</8-3-106>
सहेः पृतनर्ताभ्यां च ।। <8-3-107> ।।
पृतना, ऋत---इत्येताभ्यामुत्तरस्य सहिसकारस्य मूर्धन्यादेशो भवति । `पृतनाषाहम्(ऋ.6-72-5) । ऋतीषाहम् ।
केचिद् `सहः इति योगविभागं कुर्वन्ति---`ऋतीषहम्(ऋ.6-14-4)इत्यत्रापि यथा स्यात् । ऋतिशब्दस्य पूर्वपदस्य संहितायामेतद्दीर्घत्वम्, षत्वं च । अवग्रहे तु ऋतिसहमित्येव भवति । चकारोऽनुक्तसमुच्चयार्थः । तेन ऋतीषहमिति सिद्धम् ।।
</8-3-107>
न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।। <8-3-108> ।।
रेफपरस्य सकारस्य सृपि, सृजि, स्पृशि, स्पृहि, सवनादीनां च मूर्धन्यो न भवति । रपर---`विस्रंसिकायाः काण्डं जुहोति(मै.2-6-1) । विस्रब्धः कथयति । सृपि---`पुरा क्रूरस्य विसृपः(वा.सं.1-28) । सृजि---बाचो विसर्जनात् । स्पृशि---`दिविस्पृशम्(ऋ.1-142-8) । स्पृहि----निस्पृहं कथयति ।
सवनादीनाम्---सवने सवने । सूतेसूते । सामेसामे । सवनमुखेसवनमुखे । किं स्यतीति किंसंकिंसम् । अनुसवनमनुसवनम् । `गोसनिं(अ.वे.3-20-10) गोसनिम् । अश्वसनिमश्वसनिम् । पूर्वपदादिति प्राप्ते प्रतिषेधः ।
अश्वसनिग्रहणमनिणोऽपि षत्वमस्तीति ज्ञापनार्थम् । तेन जलाषाहम्, अश्वषाहमित्येतत्सिद्धं भवति ।
क्वचिदेवं गणपाठः---सवनेसवने । अनुसवनेऽनुसवने । संज्ञायां बृहस्पतिसवः । शकुनिसवनम् । सोमेसोमे । सूतेसूते । संवत्सरेसंवत्सरे । किंसंकिंसम् । बिसंबिसम् । मुसलंमुसलम् । गोसनिमश्वसनिम् । सवनादिः ।।
</8-3-108>
सात्पदाद्योः ।। <8-3-109> ।।
`सात् इत्येतस्य, पदादेश्च मूर्धन्यादेशो न भवति विभाषा साति कात्स्न्र्ये(5-4-52/2122) । प्रत्ययसकारत्वात् प्राप्तिः, पदादेश्चादेशसकारत्वात् ।
सात्--अग्निसात्, दधिसात्, मधुसात् । पदादेः---दधि सिञ्चति । मधु सिञ्चति ।।
</8-3-109>
सिचो यङि ।। <8-3-110> ।।
सिचः सकारस्य यङि परतो मूर्धन्यादेशो न भवति । परिसेसिच्यते । अभिसेसिच्यते ।
उपसर्गात्(8-3-65/2270) इति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेदधं बाधते, न `सिचो यङि इति । तस्मादयं प्रतिषेधः सर्वत्र भवति ।
यङीति किम् ? अभिषिषिक्षति ।।
</8-3-110>
सेधतेर्गतौ ।। <8-3-111> ।।
गतौ वर्तमानस्य सेधतेः सकारस्य मूर्धन्यादेशो न भवति । अभिसेधयति गाः । परिसेधयति गाः ।
गताविति किम् ? शिष्यमकार्यात् प्रतिषेधयति ।।
</8-3-111>
प्रतिस्तब्धनिस्तब्धौ च ।। <8-3-112> ।।
प्रतिस्तब्ध, निस्तब्ध---इत्येतौ मूर्धन्यप्रतिषेधाय निपात्येते । स्तन्भेः(8-3-67/2272) इति प्राप्तं षत्वं प्रतिषिध्यते । प्रतिस्तब्धः । निस्तब्धः ।।
</8-3-112>
सोढः ।। <8-3-113> ।।
सहिरयं सोड्भूतो गृह्यते, तस्य सकारस्य मूर्धन्यादेशो न भवति । परिसोढः, परिसोढुम्, परिसोढव्यम् ।
सोड्भूतग्रहणं किम् ? परिषहते ।।
</8-3-113>
स्तम्भुसिवुसहां चङि ।। <8-3-114> ।।
स्तम्भु, सिवु, सह---इत्येतेषां चङि परतः सकारस्य मूर्धन्यादेशो न भवति । स्तन्भेः(8-3-77/2272) इति परिनिविभ्यः(8-3-70/2275) इति च प्राप्तो मूर्धन्यः प्रतिषिध्यते । स्तम्भु--- पर्यतस्तम्भत्, अभ्यतस्तन्बत् । सिवु---पर्यसीषिवत्, न्यसीषिवत् । सह---पर्यसीषहत्, व्यसीषहत् ।

- स्तम्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम् * (म.भा.3-450)। उपसर्गाद्या प्राप्तिस्तस्या एव प्रतिषेधो यथा स्यात्, अभ्यासाद्या प्राप्तिस्तस्या मा भूदिति । तथा चैवोदाहृतम् ।।

</8-3-114>
सुनोतेः स्यसनोः ।। <8-3-115> ।।
सुनोतेः सकारस्य मूर्धन्यादेशो न भवति स्ये सनि च परतः । अभिसोष्यति । परिसोष्यति । अभ्यसोष्यत् ।
पर्यसोष्यत् ।
सनि किमुदाहरणम् ? अभिसुसूषति । नैतदस्ति प्रयोजनम्, तत्र स्तौतिण्योरेव षण्यभ्यासात्(8-3-71/2627) इति नियमान्न भविष्यति । इदं तर्हि---अभिसुसूषते ? एतदपि नास्ति; स्थादिष्वभ्यासेन चाभ्यासस्य(8-3-64/2277) इति नियमात् । इदं तर्ह्यभिसुसूषतेरप्रत्ययः

अभिसुसूरित्युदाहरणमिति ? अत्र हि सन्षभूतो न भवतीत्यभ्यासात् प्राप्तिरस्ति ।
स्यसनोरिति किम् ? सुषाव ।।
</8-3-115>
सदिस्वञ्ज्योः परस्य लिटि ।। <8-3-116> ।।
सदि, स्वञ्जि---इत्येतयोर्धात्वोर्लिटि परतः सकारस्य परस्य मूर्धन्यो न भवति । अभिषसाद, परिषसाद, निषसाद, विषसाद । परिषस्वजे, परिषस्वजाते, परिषस्वजिरे । अभिषस्वजे । स्वञ्जेः संयोगान्तादपि विभाषा लिटः कित्त्वमिच्छन्तीति पक्षेऽनुषङ्गलोपः ।।
</8-3-116>
निव्यभिभ्योऽड्व्यवाये वा छन्दसि ।। <8-3-117> ।।
नि, वि, अभि---इत्येतेभ्य उपसर्गेभ्य उत्तरस्य सकारस्याड्व्यवाये छन्दसि विषये मूर्धन्यादेशो न भवति वा । न्यषीदत्पिता नः, न्यसीदत् । व्यषीदत्पिता नः, व्यसीदत् । अभ्यषीदत्, अभ्यसीदत् ।
`सदिष्वञ्ज्योः इति, तदिह नानुवर्तते, सामान्येनैव तद्वचनम् । व्यष्टौत्, व्यस्तौत्; अभ्यष्टौत्, अभ्यस्तौत्---इत्येतदपि सिद्धं भवति ।।
इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ अष्टमाध्यायस्य तृतीयः पादः
</8-3-117>

# काशिका/अष्टमोऽध्यायः/चतुर्थः पादः

https://sa.wikisource.org/s/pc6
< काशिका | अष्टमोऽध्यायः

अथ अष्टमाध्याये चतुर्थः पादः

रषाभ्यां नो णः समानपदे ।। <8-4-1> ।।
रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेन्निमित्तनिमित्तिनौ भवतः । आस्तीर्णम्, विस्तीर्णम्, अवपूर्णम् । षकारात्--कुष्णाति, पुष्णाति, मुष्णाति । षग्रहणमुत्तरार्थम्; ष्टुत्वेनैव हि सिद्धमेतत् ।
समानपद इति किम् ? अग्निर्नयति । वायुर्नयति ।

- ऋवर्णाच्चेति वक्तव्यम् * (म.भा.3-452)। तिसृणाम् । चतसृणाम् । मातॄणाम् । पितॄणाम् ।

रश्रुतिसामान्यनिर्देशात्सिद्धम् । वर्णभक्त्या च व्यवधानेऽपि णत्वं भवतीति क्षुभ्नादिषु(8-4-39/792) नृनमन---तृप्नोतिग्रहणं ज्ञापकम् । अथ वा---ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते ।।
</8-4-1>
अट्कुप्वाङ्नुम्व्यवायेऽपि ।। <8-4-2> ।।
अट्, कु, पु, आङ्, नुम्---इत्येतैर्व्यवायेऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति । अड्व्यवाये तावत्---करणम्, हरणम् । किरिणा । गिरिणा । कुरुणा । गुरुणा ।
कवर्गव्यवाये---अर्केण । मूर्खेण । गर्गेण । अर्घेण ।
पवर्गव्ययाये--दर्पेण । रेफेण । गर्भेण । चर्मणा । वर्मणा ।
आङ्व्यवाये---पर्याणद्धम् । निराणद्धम् ।
`अड्व्यवाये इति सिद्धे आङ्ग्रहणम् पदव्यवायेऽपि(8-4-38/1057)---इत्यस्य प्रतिषेधस्य बाधनार्थम् ।
नुम्व्यवाये--बृंहणम् । बृंहणीयम् ।
नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम् । तेन तृंहणम्, तृंहणीयमित्यत्रानुस्वारव्यवाये नुमभावेऽपि णत्वं भवति । सत्यपि च नुमि यत्रानुस्वारो न श्रूयते, तत्र न भवति---प्रेन्वनम्, प्रेन्वनीयमिति ।
<K.6.606> व्यवायोपलक्षणार्थत्वादडादीनामिह व्यस्तैः समस्तैश्च व्यवायेऽपि णत्वं भवति ।।
</8-4-2>
पूर्वपदात्संज्ञायामगः ।। <8-4-3> ।।
<K.6.607>
पूर्वपदस्थान्निमित्तादुत्तरस्य गकारवर्जिताद् नकारस्य णकार आदेशो भवति संज्ञायां विषये । द्रुणसः । वार्ध्रीणसः । खरणसः । शूर्पणखा । संज्ञायामिति किम् ? चर्मनासिकः । अग इति किम् ? ऋगयनम् ।
<K.6.608> केचिदेतन्नियमार्थं वर्णयन्ति -- पूर्वपदात्संज्ञायामेव णत्वं नान्यत्रेति । समासेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति । स च नियमः पूर्वपदसम्बन्धादुत्तरपदस्थस्यैव णत्वं निवर्तयति --- चर्मनासिकः इति, न तद्धितपूर्वपदस्थस्य --- खारपायणः, मातृभोगीणः, करणप्रियः इति ।
<K.6.609> `अगः इति योगविभागेन णत्वप्रतिषेधः, न नियमप्रतिषेध इति ।
अपरे तु --- पूर्वसूत्रे `समानमेव यन्नित्यं पदं तत्समानपदम् इत्याश्रयन्ति; समानग्रहणात् । तेषामप्राप्तमेव णत्वमनेन विधीयते । समासे <K.6.610> हि पूर्वपदोत्तरपदविभागादसमानपदत्वमप्यस्तीति ।।
</8-4-3>
वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ।। <8-4-4> ।।
`पूर्वपदात्संज्ञायाम् इति वर्तते । पुरगा, मिश्रका, सिध्रका, शारिका, कोटरा, अग्रे --- इत्येतेभ्यः पूर्वपदेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये । पुरगावणम् । मिश्रकावणम् । <K.6.611> सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । `सिद्धे सत्यारम्भो नियमार्थः --- एतेभ्य एव परस्य
वनकारस्य णकारादेशो भवति, नान्येभ्य इति । कुबेरवनम् । शतधारवनम् । असिपत्रवनम् ।।
</8-4-4>
प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ।। <8-4-5> ।।
प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा --- इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि <K.6.612>

णकारादेशो भवति । प्र --- प्रवणे यष्टव्यम् । निर् --- निर्वणे प्रतिधीयते । अन्तर् --- अन्तर्वणे । शर --- शरवणम् । इक्षु --- इक्षुवणम् । प्लक्ष --- प्लक्षवणम् । आम्र --- आम्रवणम् । कार्ष्य --- कार्ष्यवणम् । खदिर --- खदिरवणम् । पीयूक्षा --- पीयूक्षावणम् ।।
</8-4-5>
विभाषौषधिवनस्पतिभ्यः ।। <8-4-6> ।।
`वनम् इत्येव । ओषधिवाचि यत्पूर्वपदं वनस्पतिवाचि च तत्स्थान्निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा । <K.6.613> ओषधिवाचिभ्यस्तावत् --- दूर्वावणम्, दूर्वावनम् । मूर्वावणम्, मूर्वावनम् । वनस्पतिभ्यः --- शिरीषवणम्, शिरीषवनम् । बदरीवणम्, बदरीवनम् ।

- द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् *। इह मा भूत् --- देवदारुवनम् । भद्रदारुवनम् ।
- इरिकादिभ्यः प्रतिषेधो वक्तव्यः * । इरिकावनम् । मिरिकावनम् ।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः । <K.6.614>
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ।।
(इति) सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम् ।
</8-4-6>
<K.6.615>
अह्नोऽदन्तात् ।। <8-4-7> ।।
अदन्तं यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति । पूर्वाह्णः । अपराह्णः ।
अदन्तादिति किम् ? निरह्नः । दुरह्नः । अह्नोऽह्न एतेभ्यः इत्यह्नादेशः । `अह्नः इत्यकारान्तग्रहणाद् दीर्घाह्नी शरद् इत्यत्र न भवति ।।
</8-4-7>
<K.6.616>
वाहनमाहितात् ।। <8-4-8> ।।
आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति । इक्षुवाहणम् । `शरवाहणम् । दर्भवाहणम् । वाहने यद् आरोपितमुह्यते तदाहितमुच्यते । आहितादिति किम् ? दाक्षिवाहनम् । दाक्षिस्वामिकं वाहनमित्यर्थः ।।
</8-4-8>
पानं देशे ।। <8-4-9> ।।
पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति । पीयते इति पानम् । कृत्यल्युटो बहुलम् इति कर्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणाः उशीनराः । <K.6.617> मनुष्याभिधानेऽपि देशाभिधानं गम्यते । सुरापाणाः प्राच्याः । सौवीरपाणाः बाह्लीकाः । कषायपाणाः गन्धाराः ।
देश इति किम् ? दाक्षीणां पानं दाक्षिपानम् ।।
</8-4-9>
वा भावकरणयोः ।। <8-4-10> ।।
भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थान्निमित्तादुत्तरस्य । क्षीरपाणं वर्तते, क्षीरपानम् । कषायपाणम्, कषायपानम् । सुरापाणम्, सुरापानम् । करणे --- क्षीरपाणः कंसः । क्षीरपानः । * वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् * । गिरिणदी, गिरिनदी । चक्रणदी, चक्रनदी । चक्रणितम्बा,
चक्रनितम्बा ।।
</8-4-10>
<K.6.618>
प्रातिपदिकान्तनुम्विभक्तिषु च ।। <8-4-11> ।।
`वा इति वर्तते । प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति। प्रातिपदिकान्ते तावत् --- माषवापिणौ, माषवापिनौ । नुमि --- माषवापाणि, माषवापानि । व्रीहिवापाणि, व्रीहिवापानि । विभक्तौ --- माषवापेण, माषवापेन । व्रीहिवापेण, व्रीहिवापेन ।
पुर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते । इह हि न भवति --- गर्गाणां भगिनी गर्गभगिनी । <K.6.619> यदा त्वेवं भवति -- गर्गाणां भगो गर्गभगः, गर्गभगोऽस्या अस्तीति गर्गभगिणी इति; तदा मातृभोगीणवत् नित्यमेव णत्वेन भवितव्यम् । माषवापिणी, माषवापिनी इत्यत्र तु `गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः इति कृदन्तेनैव समासे सति प्रातिपदिकस्य उत्तरपदस्यैव सतो नकारो भवति । तथात्र नुम्ग्रहणं कृतम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति ।
<K.6.620> * युवादीनां प्रतिषेधो वक्तव्यः * । आर्ययूना । क्षत्रिययूना । प्रपक्वानि । दीर्घाह्नी शरत् ।।
</8-4-11>
<K.6.621>
एकाजुत्तरपदे णः ।। <8-4-12> ।।

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति । वृत्रहणौ । वृत्रहणः । नुमि---क्षीरपाणि । सुरापाणि । विभक्तौ---क्षीरपेण । सुरापेण ।
`णः इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् ।।
</8-4-12>
कुमति च । <8-4-13> ।।
कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । वस्त्रयुगिणौ, <K.6.622> वस्त्रयुगिणः । स्वर्गकामिणौ । वृषगामिणौ । नुमि --- वस्त्रयुगाणि । खरयुगाणि । विभक्तौ --- वस्त्रयुगेण । खरयुगेण ।।
</8-4-13>
उपसर्गादसमासेऽपि णोपदेशस्य ।। <8-4-14> ।।
ण उपदेशे यस्यासौ णोपदेशः । णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति असमासेऽपि, समासेऽपि, प्रणमति, परिणमति । प्रणायकः, परिणायकः ।
उपसर्गादिति किम् ? प्रगता नायका अस्माद् देशात् प्रनायको देशः । असमासेऽपीति किम् ? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम् । णोपदेशस्येति किम् ? प्रनर्दति । प्रनर्दकः ।।
</8-4-14>
हिनुमीना ।। <8-4-15> ।।
हिनु, मीना---इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रहिणोति, प्रहिणुतः । प्रमीणाति, प्रमीणीतः ।
`हिनुमीनाग्रहणे विकृतस्यापि भवति(म.भा.3-458); अजादेशस्य स्थानिवत्त्वात् ।।
</8-4-15>
आनि लोट् ।। <8-4-16> ।।
`आनि इत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रवपाणि । प्रयाणि । परियाणि ।
लोडिति किम् ? प्रवपानि मांसानि ।।
</8-4-16>
नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।। <8-4-17> ।।
`नि इत्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद, नद, पत, पद, घु, मा, स्यति, हन्ति, याति, वाति, द्राति, प्साति, वपति, वहति, शम्यति, चिनोति, देग्धि---इत्येतेषु परतः । गद---प्रणिगदति, परिणिगदति । नद---प्रणिनदति, परिणिनदति । पत---प्रणिपतति, परिणिपतति । पद---प्रणिपद्यते, परिणिपद्यते । घु---प्रणिददाति, परिणिददाति । प्रणिदधाति, परिणिदधाति ।
माङ्---प्रणिमिमीते, परिणिमिमीते । मेङ्---प्रणिमयते, परिणिमयते । `मा इति माङ्मेङोर्ग्रहणमिष्यते ।
स्यति---प्रणिष्यति, परिणिष्यति । हन्ति---प्रणिहन्ति, परिणिहन्ति । याति---प्रणियाति, परिणियाति । वाति---प्रणिवाति, परिणिवाति । द्राति---प्रणिद्राति, परिणिद्राति । प्साति---प्रणिप्साति, परिणिप्साति । वपति---प्रणिवपति, परिणिवपति । वहति---प्रणिवहति, परिणिवहति । शाम्यति---प्रणिशाम्यति, परिणिशाम्यति । चिनोति---प्रणिचिनोति, परिणिचिनोति । देग्धि---प्रणिदेग्धि, परिणिदेग्धि ।
अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते । प्रण्यगदत्, परिण्यगदत् ।।
</8-4-17>
शेषे विभाषाऽकखादावषान्त उपदेशे ।। <8-4-18> ।।
`नः इति वर्त्तते, `उपसर्गात् इति च । अककारादिः, अखकारादिः, अषकारान्तश्च उपदेशे यो धातुः स शेषः; तस्मिन्परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति । प्रणिपचति, प्रनिपचति । प्रणिभिनत्ति, प्रनिभिनत्ति ।
अकखादाविति किम् ? प्रनिकरोति । प्रनिखादति । अषान्त इति किम् ? प्रनिपिनष्टि । उपदेशग्रहणं किम् ? इह च प्रतिषेधो यथा स्यात्---प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यतीति । इह च मा भूत्---विशेः प्रणिवेष्टा, प्रणिवेक्ष्यति ।।
</8-4-18>
अनितेः ।। <8-4-19> ।।
अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । पराणिति ।।
</8-4-19>
अन्तः ।। <8-4-20> ।।
`अनितेः इति वर्तते, उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । `पदान्तस्य इति प्रतिषेधस्यापवादोऽयम् । अन्तश्च पदापेक्षो गृह्यते ।
केचित्तु पूर्वसूत्र एवैतदन्तग्रहणँ सामीप्यार्थमभिसम्बध्नन्ति । निमित्तसमीपस्थस्यैकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात् । इह मा भूत्---पर्यनितीति । तैर्द्वितीयमपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव ।
येषां तु `प्रर्यणितीति भवितव्यम् इति दर्शनम्, तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणे न ।।
</8-4-20>
उभौ साभ्यासस्य ।। <8-4-21> ।।

साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति । प्राणिणिषति, प्राणिणत् । पराणिणिषति, पराणिणत् । `पूर्वत्रासिद्धीयमद्विर्वचने(पु.प.92) इत्येतस्मिन् सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम् ? एतत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते । तेन औजढदिति सिद्धं भवति ।।
</8-4-21>
हन्तेरत्पूर्वस्य ।। <8-4-22> ।।
अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति । प्रहण्यते, परिहण्यते । प्रहणनम्, परिहणनम् ।
अत्पूर्वस्येति किम् ? प्रघ्नन्ति । परिघ्नन्ति । तपरकरणं किम् ? चिणि---प्राघानि । पर्यघानि ।।
</8-4-22>
वमोर्वा ।। <8-4-23> ।।
`हन्तेः इति वर्तते । वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रहण्वः, परिहण्वः; प्रहन्वः, परिहन्वः । प्रहण्मः, परिहण्मः;प्रहन्मः, परिहन्मः ।।
</8-4-23>
अन्तरदेशे ।। <8-4-24> ।।
अन्तः शब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने । अन्तर्हण्यते । अतर्हणनं वर्तते ।
अदेशे इति किम् ? अन्तर्हननो देशः ।
`अत्पूर्वस्य इत्येव---अन्तर्घ्नन्ति ।
तपरकरणं किम् ? अन्तरघानि ।।
</8-4-24>
अयनं च ।। <8-4-25> ।।
`अन्तरदेशे इति वर्तते । अयननकारस्य चान्तः शब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । अन्तरयणं वर्तते । अन्तरयणं शोभनम् ।
`अदेशे इत्येव---अन्तरयनो देशः ।।
</8-4-25>
छन्दस्यृदवग्रहात् ।। <8-4-26> ।।
`पूर्वपदात् इति वर्तते । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । `नृमणाः(ऋ.1-167-5) । `पितृयाणम्(ऋ.10-2-7) ।
अत्र हि नृमणाः, पितृयाणमिति ऋकारोऽवगृह्यते ।
अवग्रहग्रहणं किमर्थमुच्यते, यावता `संहिताधिकार आ अध्यायपरिसमाप्तेः(8-2-108) इत्युक्तम् ? विषयोपलक्षणार्थमवग्रहग्रहणम् । अवगृह्यमाणाद्यथा स्याद्, अनवगृहमाणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ।।
</8-4-26>
नश्च धातुस्थोरुषुभ्यः ।। <8-4-27> ।।
`नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात्सुशब्दाच्च छन्दसि विषये । धातुस्थात्तावत्---`अग्नेरक्षा णः(ऋ.7-15-13) । `शिक्षा णो अस्मिन्(ऋ.7-32-26) । ऊरुशब्दात्--`ऊरुणस्कृधि(ऋ.8-75-11) । <K.6.636> षुशब्दात्---`अभीषु णः सखीनाम्(ऋ.4-31-3) । `ऊर्ध्व ऊषु ण ऊतये(ऋ.1-36-13) । अस्मदादेशोऽयं नस्शब्दः, बहुवचनस्य वस्नसौ(8-1-21/405) इति ।।
</8-4-27>
उपसर्गाद् बहुलम् ।। <8-4-28> ।।
उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्र णः शूद्रः । प्रणसः, प्र णः राजा । न च भवति --- प्र नः मुञ्चतम्। बहुलग्रहणाद्भाषायामपि भवति । प्रणसं मुखम् । उपसर्गाच्च इति नासिकाया नसादेशः ।।
</8-4-28>
कृत्यचः ।। <8-4-29> ।।
कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन, मान, अनीय, अनि, इनि,
निष्ठादेश---एते णत्वं प्रयोजयन्ति । अन---प्रयाणम्, परियाणम् । प्रमाणम्, परिमाणम् । मान---प्रयायमाणम्, परियायमाणम् । अनीय---प्रयाणीयम्, परियाणीयम्, अनिः---अप्रयाणिः, अपरियाणिः । इनि---प्रयायिणौ, परियायिणौ । निष्ठादेशः---प्रहीणः, परिहीणः; प्रहीणवान्, परिहीणवान् ।
अच इति किम् ? प्रमग्नः, परिभुग्नः । `भुजो कौटिल्ये(धा.पा.1418), अस्य निष्ठाप्रत्ययः ओदितश्च(8-2-45/3019) इति निष्ठानत्वम्, चोः कुः(8-2-30/378) इति कुत्वे सिद्धम्---परिभुग्न इति ।

- कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्त्तव्यम् * (म.भा.3-460)। निर्विण्णोऽस्मि खलसङ्गेन । निर्विण्णोऽहमत्र वासेन ।।

</8-4-29>
णेर्विभाषा ।। <8-4-30> ।।
ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रयापणम्, प्रयापनम् । परियापणम्, परियापनम् । प्रयाप्यमाणम्, प्रयाप्यमानम् । प्रयापणीयम् । प्रयापनीयम् । अप्रयापणिः, अप्रयापनिः । प्रयापिणौ, प्रयापिनौ । विहितविशेषणं किम् ? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति ।।
</8-4-30>
हलश्चेजुपधात् ।। <8-4-31> ।।
`कृत्यचः इति वर्त्तते । हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्यप्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम्, प्रकोपनम् । परिकोपणम्, परिकोपनम् ।
हल इति किम् ? प्रेहणम्, प्रोहणम् । इजुपधादिति किम् ? प्रवपणम्, परिवपणम् । `कृत्यचः इति नित्ये प्राप्ते विकल्पः ।
अच इत्येव---परिभुग्नः ।
इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ।।
</8-4-31>
इजादेः सनुमः ।। <8-4-32> ।।
`हलः इति वर्तते, तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्, तत्स्थस्य नकारस्योपर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम्, परेङ्गणम् । प्रोम्भणम्, परोम्भणम् ।
`सिद्धे सत्यारम्भो नियमार्थः(का.प.62)---इजादेरेव सनुमः, नान्यस्मादिति । प्रमङ्गनम्, परिमङ्गनम् ।
`हल इत्यधिकाराद् ण्यन्ते नित्यं विद्ध्यर्थमेतन्न भवति ।।
</8-4-32>
वा निंसनिक्षनिन्दाम् ।। <8-4-33> ।।
`उपसर्गात् इति वर्त्तते । निंस, निक्ष, निन्द---इत्येतेषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिंसनम्, प्रनिंसनम् । प्रणिक्षणम्, प्रनिक्षणम् । प्रणिन्दनम्, प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ।।
</8-4-33>
न भाभूपूकमिगमिप्यायीवेपाम् ।। <8-4-34> ।।
भा, भू, पू, कमि, गमि, प्यायी, वेप---इत्येतेषामुपसर्गस्थात् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति । भा---प्रभानम्, परिभानम् । भू---प्रभवनम्, परिभवनम् ।
पू---प्रपवनम्, परिपवनम् । पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव णत्वम्---प्रपवणं सोमस्येति ।
कमि---प्रकमनम्, परिकमनम् । गमि---प्रगमनम्, परिगमनम् । प्यायी---प्रप्यायनम्, परिप्यायनम् ।
वेप---प्रवेपनम्, परिवेपनम् ।

- ण्यन्तानां भादीनामुपसंख्यानं कर्तव्यम् *(म.भा.3-462) । प्रभापनम्, परिभापनम् ।।

</8-4-34>
षात् पदान्तात् ।। <8-4-35> ।।
षकारात्पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । यजुष्पानम् ।
षादिति किम् ? निर्णयः । पदान्तादिति किम् ? कुष्णाति । पुष्णाति ।
पदे अन्तः पदान्तः---इति सप्तमीसमासोऽयम्, तेनेह न भवति---सुसर्पिष्केण, सुयजुष्केण । शेषाद्विभाषा(5-4-154/891) इति कप् ।।
</8-4-35>
नशेः षान्तस्य ।। <8-4-36> ।।
`न इति वर्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः, परिनष्टः । षान्तस्येति किम् ? प्रणश्यति, परिणश्यति ।
<K.6.644> अन्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्---प्रनङ्क्ष्यति, परिनङ्क्ष्यति ।।
</8-4-36>
पदान्तस्य ।। <8-4-37> ।।
पदान्तो यो नकारस्तस्य णकारादेशो न भवति । वृक्षान्, प्लक्षान्, अरीन्, गिरीन् ।।
</8-4-37>
पदव्यवायेऽपि ।। <8-4-38> ।।
पदेन व्यवायः पदव्यवायः = पदव्यवधानम् । पदेन व्यवायेऽपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । <K.6.645> चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगान्नयामः । परिगान्नयामः ।

- पदव्यवायेऽतद्धित इति वक्तव्यम् * । इह मा भूत् --- आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीषे इति मयट् । स्वादौ पूर्वपदमिति गोशब्दः पूर्वपदम्, तेन व्यवायः ।।

</8-4-38>
क्षुभ्नादिषु च ।। <8-4-39> ।।
`न इति वर्तते । `क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । <K.6.646> नृनमनः । पूर्वपदात्संज्ञायाम् इति प्राप्तिः । छन्दस्यृदवग्रहात् इति च प्राप्नोति । नन्दिन्, नन्दन, नगर --- एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति ।
हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयति --- नरीनृत्यते । तृप्नु --- तृप्नोति ।
नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप --- एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम्, परिगहनम् इति, संज्ञायाम् --- पूर्वपदात्संज्ञायाम् इति प्राप्नोति । परिनन्दनम् इत्यत्र उपसर्गादसमासेऽपि इति प्राप्नोति । <K.6.647> शरनिवेशः । शरनिवासः । शराग्निः । दर्भानूपः । इत्येताः संज्ञाः । * आचार्यादणत्वं च *। आचार्यभोगीनः । आचार्यानी । * इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम् * । इरिका, तिमिर, कुबेर, हरि, कर्मार --- इत्युत्तरपदवनशब्दस्थस्य संज्ञायाम् । क्षुभ्नादिराकृतिगणः । अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ।।
</8-4-39>
स्तोः श्चुना श्चुः ।। <8-4-40> ।।
सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः । स्तोः श्चुनेति यथासंख्यमत्र नेष्यते । सकारस्य शकारेण, चवर्गेण, द्वाभ्यामपि सन्निपाते शकारो भवति । तवर्गस्यापि च शकारेण, चवर्गेण च सन्निपाते
चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते---सकारस्य शकारः , तवर्गस्य च चवर्ग इति ।
सकारस्य शकारेण सन्निपाते---वृक्षश्शेते । प्लक्षश्शेते । तस्यैव चवर्गेण---वृक्षश्चिनोति, प्लक्षश्चिनोति । वृक्षश्छादयति, प्लक्षश्छादयति ।
तवर्गस्य शकारेण---अग्निचिच्छेते, सोमसुच्छेते । तस्यैव चवर्गेण---अग्निचिच्चिनोति, सोमसुच्चिनोति । अग्निचिच्छादयति, सोमसुच्छादयति । अग्निचिज्जयति, सोमसुज्जयति । अग्निचिज्झकारम्, सोमसुज्झकारम् । अग्निचिञ्ञकारः, सोमसुञ्ञकारः । मस्जेः---मज्जति । भ्रस्जेः---भृज्जति व्रश्चेः---वृश्चति । यजः---यज्ञः । याचेः---याच्ञा ।
शात्(8-4-44/112) इति प्रतिषेधो ज्ञापकः---संख्यातानुदेशाभावस्य ।
`स्तोः श्चौ इति सप्तमीनिर्देशो न कृतः; पूर्वेण परेण च श्चुना सन्निपाते श्चुत्वं यथा स्यादिति ।।
</8-4-40>
ष्टुना ष्टुः ।। <8-4-41> ।।
`स्तोः इति वर्त्तते । सकारतवर्गयोः षकारटवर्गाभ्यां सन्निपाते षकारटवर्गावादेशौ भवतः । तत्रापि तथैव संख्यातानुदेशाभावः । षकारेण सकारस्य---वृक्षष्षण्डे । प्लक्षष्षण्डे । तस्यैव टवर्गेण---वृक्षष्टीकते, प्लक्षष्टीकते । वृक्षष्ठकारः, प्लक्षष्ठकारः ।
तवर्गस्य षकारेण---पेष्टा । पेष्टुम् । पेष्टव्यम् । कृषीष्ट । कृषीष्ठाः । तस्यैव टवर्गेण---अग्निचिट्टीकते, सोमसुट्टीकते । अग्निचिट्ठकारः, सोमसुट्ठकारः । अग्निचिड्डीनः, सोमसुड्डीनः । अग्निचिढ् ढौकते, सोमसुढ् ढौकेते । अग्निचिण्णकारः, सोमसुण्णकारः । अतट्--अट्टति । अद्ड्---अड्डति ।।
</8-4-41>
न पदान्ताट्टोरनाम् ।। <8-4-42> ।।
पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति `नाम् इत्येतद्वर्जयित्वा । श्वलिट्साये । मधुलिट् तरति ।
पदान्तादिति किम् ? `ईड स्तुतौ(धा.पा.1020)---ईट्टे । टोरिति किम् ? सर्पिष्टमम् । अनामिति किम् ? षण्णाम् ।
अत्यल्पमिदमुच्यते । * अनाम्नवतिनगरीणामिति वक्तव्यम् * (म.भा.3-463)। षण्णाम् । षण्णवतिः । षण्णवतिः । षण्णगरी ।।
</8-4-42>
तोः षि ।। <8-4-43> ।।
`न इति वर्तते । तवर्गस्य षकारे यदुक्तं तन्न भवति । अग्निचित्षण्डे । भवान्षण्डे । महान्षण्डे ।।
</8-4-43>
शात् ।। <8-4-44> ।।
`तोः इति वर्तते । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ।।
</8-4-44>
यरोऽनुनासिकेऽनुनासिको वा ।। <8-4-45> ।।
पदान्तग्रहणमनुवर्तते । यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति । वाग्नयति, वाङ्नयति । श्वलिण्नयति, श्वलिड् नयति । अग्निचिन्नयति, अग्निचिद् नयति । त्रिष्टुम्नयति, त्रिष्टुब्नयति ।
`पदान्तस्य इत्येव---वेद्मि । क्षुभ्नाति ।

- यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्तव्यम् * (म.भा.3-464)। वाङ्मयम् । त्वङ्मयम् । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ।।

</8-4-45>
अचो रहाभ्यां द्वे ।। <8-4-46> ।।
`यरः इति वर्तते । अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा ।

अपह्नुते ।
अच इति किम् ? किन् ह्नुते । किम् ह्मलयति ।।
</8-4-46>
अनचि च ।। <8-4-47> ।।
`अचः इति वर्तते, `यरः इति च । अनच्परस्य=अच उत्तरस्य यरो द्वे वा भवतोऽनचि परतः । दद्ध्यत्र । मद्ध्वत्र ।
अच इत्येव--स्मितम् । ध्मातम् ।

- यणो मयो द्वे भवत इति वक्तव्यम् * (म.भा.3-464)। केचिदत्र `यणः इति पञ्चमी, `मयः इति षष्ठीति व्याचक्षते । तेषामुल्क्का, वाल्म्मीक इत्युदाहरणम् । अपरे तु `यणः इति षष्ठी, `मयः इति पञ्चमीति, तेषां दध्य्यत्र, मध्व्वत्रेत्युदाहरणम् ।
- शरः खयो द्वे भवत इति वक्तव्यम् *(म.भा.3-464) । अत्रापि यदि `शरः इति पञ्चमी, `खयः इति षष्ठी; तदा स्त्थाली, स्त्थातेत्युदाहरणम् । अथ वा---खय उत्तरस्य शरो द्वे भवतः । वत्स्सः, इक्ष्षुः, क्ष्षीरम्, अप्स्सराः ।
- अवसाने च यरो द्वे भवत इति वक्तव्यम् * (म.भा.3-464)। वाक्क्, वाक् । त्वक्क्, त्वक् । षट्ट्, षट् । तत्, तत् ।।

</8-4-47>
नादिन्याक्रोशे पुत्त्रस्य ।। <8-4-48> ।।
आदिनिपरत आक्रोशे गम्यमाने पुत्त्रशब्दस्य न द्वे भवतः । अनचि च(8-4-47/48) इति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे ।
आक्रोश इति किम् ? तत्त्वकथने द्विर्वचनं भवत्येव---पुत्त्रानत्तीति पुत्त्रादिनी । शिशुमारी व्याघ्री ।

- तत्परे चेति वक्तव्यम् *(म.भा.3-464) । पुत्रपुत्रादिनी त्वमसि पापे ।
- वा हतजग्धपर इति वक्तव्यम् * (म.भा.3-464)। पुत्त्रहती, पुत्रहती । पुत्त्रजग्धी । पुत्रजग्धी ।
- चयो द्वितीयाः शरि पौष्करसादेः * (म.भा.3-465)। चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । तकारस्य थकारः--वथ्सः । ककारस्य खकारः---ख्षीरम् । पकारस्य फकारः---अफ्सराः ।

</8-4-48>
शरोऽचि ।। <8-4-49> ।।
`न इति वर्तते । शरोऽचि परतो न द्वे भवतः । अचो रहाभ्याम्(8-4-46/59) इति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः ।
अचीति किम् ? दश्शर्यते ।
</8-4-49>
त्रिप्रभृतिषु शाकटायनस्य ।। <8-4-50> ।।
त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राष्ट्रम् ।।
</8-4-50>
सर्वत्र शाकल्यस्य ।। <8-4-51> ।।
शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपह्नुते ।।
</8-4-51>
दीर्घादाचार्याणाम् ।। <8-4-52> ।।
दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ।
</8-4-52>
झलां जश्झशि ।। <8-4-53> ।।
झलां स्थाने जशादेशो भवति झशि परतः । लब्धा, लब्धुम्, लब्धव्यम् । दोग्धा, दोग्धुम्, दोग्धव्यम् । बोद्धा, बोद्धुम्, बोद्धव्यम् ।
झशीति किम् ? दत्तः । दत्थः । दध्मः ।।
</8-4-53>
अभ्यासे चर्च ।। <8-4-54> ।।
अभ्यासे वर्तमानानां झलां चरादेशो भवति, चकाराज्जश्च । चिखनिषति । चिच्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते ।
प्रकृतिचरां प्रकृतिचरो भवन्ति---चिचीषति । टिटीकिषते । तितनिषति ।
प्रकृतिजशां प्रकृतिजशो भवन्ति---जिजनिषते । बुबुधे । ददौ । डिड्ये ।।
</8-4-54>
खरि च ।। <8-4-55> ।।
खरि च परतो झलां चरादेशो भवति । झल्ग्रहणं नानुवर्तते; पूर्वसूत्रे चानुकृष्टत्वात् । भेत्ता, भेत्तुम्, भेत्तव्यम् । युयुत्सते । आरिप्सते । आलिप्सते ।।
</8-4-55>

वावसाने ।। <8-4-56> ।।
`झलाम्, `चर् इति वर्तते । अवसाने वर्तमानानां झलां वा चरादेशो भवति । वाक्, वाग् । त्वक्, त्वग् । श्वलिट्, श्वलिड् । त्रिष्टुप्, त्रिष्टुब् ।।
</8-4-56>
अणोऽप्रगृह्यस्यानुनासिकः ।। <8-4-57> ।।
अणोऽप्रगृह्यसंज्ञस्यावसाने वर्तमानस्य वाऽनुनासिकादेशो भवति । दधिँ, दधि । मधुँ, मधु । कुमारीँ, कुमारी ।
अण इति किम् ? कर्तृ । हर्तृ । अप्रगृह्यस्येति किम् ? अग्नी । वायू ।।
</8-4-57>
अनुस्वारस्य ययि परसवर्णः ।। <8-4-58> ।।
अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति । शङ्किता, शङ्कितुम्, शङ्कितव्यम् । उञ्छिता, उञ्छितुम्, उञ्छितव्यम् । कुण्डिता, कुण्डितुम्, कुण्डितव्यम् । नन्दिता, नन्दितुम्, नन्दितव्यम् । कम्पिता, कम्पितुम्, कम्पितव्यम् ।
इह कुर्वन्ति, वृषन्ति---इत्यत्र णत्वस्यासिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते, तस्यापि परसवर्णेन पुनर्नकार एव भवति, तस्याप्यसिद्धत्वात् पुनर्णत्वं न भवति । एवमनुस्वारीभूतो णत्वमतिक्रामतीति ।
ययीति किम् ? आक्रंस्यते । आचिक्रंस्यते ।।
</8-4-58>
वा पदान्तस्य ।। <8-4-59> ।।
पदान्तस्यानुस्वारस्य ययि परतो वा परसवर्णादेशो भवति । तङ्कथञ्चित्रपक्षण्डयमानन्नभः स्थम्पुरुषोऽवधीत्, तं कथं चित्रपक्षं डयमानं नभः स्थं पुरुषोऽवधीत् ।।
</8-4-59>
तोर्लि ।। <8-4-60> ।।
तवर्गस्य लकारे परतः परसवर्णादेशो भवति । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँल्लुनाति । महाँल्लुनाति ।।
</8-4-60>
उदः स्थास्तम्भोः पूर्वस्य ।। <8-4-61> ।।
`सवर्णः इति वर्तते । उद उत्तरयोः स्था, स्तम्भ---इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थाता, उत्थातुम्,
उत्थातव्यम् । स्तम्भेः खल्वपि---उत्तम्भिता, उत्तम्भितुम्, उत्तम्भितव्यम् ।
स्थास्तम्भोरिति किम् ? उत्स्नाता ।

- उत्पूर्वस्य स्कन्देश्छन्दस्युपसंख्यानम् * (म.भा.3-465)। अग्ने दूरमुत्कन्दः ।
- रोगे चेति वक्तव्यम् * (म.भा.3-465)। उत्कन्दको नाम रोगः । कन्दतेर्वा धात्वन्तरस्यैतद्रूपम् ।।

</8-4-61>
झयो होऽन्यतरस्याम् ।। <8-4-62> ।।
झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्घसति, वाग् हसति । श्वलिड् ढसति, श्वलिड् हसति । अग्निचिद्धसति, अग्निचिद् हसति । सोमसुद्धसति, सोमसुद् हसति । त्रिष्टुब्भसति । त्रिष्टुब् हसति ।
झय इति किम् ? प्राङ् हसति । भवान्हसति ।।
</8-4-62>
शश्छोऽटि ।। <8-4-63> ।।
`झयः इति वर्तते, `अन्यतरस्याम् इति च । झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम् । वाक्छेते, वाक् शेते । अग्निचिच्छेते, अग्निचित् शेते । सोमसुच्छेते, सोमसुत् शेते । श्वलिट् छेते, श्वलिट् शेते । त्रिष्टुप्छेते, त्रिष्टुप् शेते ।

- छत्वममीति वक्तव्यम् * (म.भा.3-465)।

किं प्रयोजनम् ? तच्छ्लोकेन, तच्छ्मश्रुणा---इत्येवमर्थम् ।।
</8-4-63>
हलो यमां यमि लोपः ।। <8-4-64> ।।
`अन्यतरस्याम् इति वर्तते । हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम् । शय्य्या इत्यत्र द्वौ यकारौ, क्रमजस्तृतीयः; तत्र मध्यमस्य वा लोपो भवति---शय्या, शय्य्या ।
अदितेरपत्यमादित्य इत्यत्र तकारात्पर एको यकारः, `यणो मय(वा.956) इति क्रमजो द्वितीयः, तत्र मध्यमस्य वा लोपो भवति । आदित्यः, आदित्य्यः । आदित्यो देवता अस्य स्थालीपाकस्येति आदित्य्यः, आदित्य इति । अत्रापि द्वौ यकारौ; क्रमजस्तृतीयः; तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति ।
हल इति किम् ? आन्नम् । यमामिति किम् ? अग्निः । अर्घ्यम् । यमीति किम् ? शार्ङ्गम् ।।
</8-4-64>

झरो झरि सवर्णे ।। <8-4-65> ।।
`हलः इति वर्तते, `अन्यतरस्याम् इति च । हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम् । प्रत्तम्, अवत्तमित्यत्र त्रयस्तकाराः, क्रमजश्चतुर्थः; तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति ।
मरुत्त इत्यत्र चत्वारस्तकाराः, क्रमजः पञ्चमः; तत्र मध्यमस्य मध्यमयोर्मध्यमानां वा लोपो भवति । मरुच्छब्दस्य हि उपसंख्यानसामर्थ्याद्(वा.67) अच उपसर्गात्तः(7-4-47/3078) इति तत्वं भवति ।
झर इति किम् ? शार्ङ्गम् । झरीति किम् ? प्रियपञ्च्त्रा । अल्लोपस्य च `पूर्वत्रासिद्धे न स्थानिवत्(पु.वृ.112) इति स्थानिवद्भावप्रतिषेधादत्र चकारस्य ञकारे लोपः स्यात् ।
सवर्ण इति किम् ? तर्प्ता, तर्प्तुम्, तर्प्तव्यम् । सवर्णग्रहणसामर्थ्यादिह सङ्ख्यातानुदेशो न भवति, सवर्णमात्रे लोपो विज्ञायते । तेन शिण्ढि, पिण्ढि इति ढकारे डकारस्य लोपो भवति ।।
</8-4-65>
उदात्तादनुदात्तस्य स्वरितः ।। <8-4-66> ।।
उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति । गार्ग्यः । वात्स्यः । पचति । पठति ।
अस्य स्वरितस्यासिद्धत्वाद् अनुदात्तं पदमेकवर्जम्(6-1-158/3650) इत्येतन्न प्रवर्तते । तेनोदात्तस्वरितावुभावपि श्रूयेते ।।
</8-4-66>
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।। <8-4-67> ।।
उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्य---काश्यप---गालवानां मतेन । उदात्त उदयो यस्मात्स उदात्तोदयः । उदात्तपर इत्यर्थः । एवं स्वरितोदयः ।
उदात्तोदयस्तावत्---गार्ग्यस्तत्र । वात्स्यस्तत्र । तत्रशब्द आद्युदात्तः, तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति ।
स्वरितोदयः---गार्ग्यः क्व । वात्स्यः क्व । क्वशब्दः स्वरितः, तस्मिन्परतोऽनुदात्तः स्वरितो न भवति ।
अगार्ग्यकाश्यपगालवानामिति किम् ? गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां हि मतेन स्वरितो भवत्येव ।
`उदात्तस्वरितपरस्य इति वक्तव्य उदयग्रहणं मङ्गलार्थम् । अनेकाचार्यसङ्गीर्तनं पूजार्थम् ।।
</8-4-67>
अ अ इति ।। <8-4-68> ।।
एकोऽत्र विवृतः, अपरः संवृतः, तत्र विवृतस्य संवृतः क्रियते । अकारो विवृतः संवृतो भवति । वृक्षः । प्लक्षः ।
इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातः, तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते ।
दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते । तेन तयोः संवृतो न भवति ।
संवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते । तेन सर्वगुणः प्रत्यापद्यते ।।
इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ।।
इति श्रीवामनाचार्यकृतायां काशिकावृत्तौ अष्टमाध्यायस्य तुरीयः पादः
</8-4-68>
****** काशिकावृत्तिरियं समाप्ता ******